# अनुष्ठानप्रकाशः

## (महानिबन्धः)

मुद्रक एवं प्रकाशकः

खेमराज श्रीकृष्णदास,™

अध्यक्ष : श्रीवेंकटेश्वर प्रेस,

खेमराज श्रीकृष्णदास मार्ग, मुंबई - ४०० ००४.

# भूमिका ।

अद्य खलु सकलभूतलनिवासिनामार्यजनानां पुरतः किंचिद्विज्ञापनं लिखितुमस्मदीयं मनोऽतितरामानन्दमाधत्ते प्रवर्तयति च सत्परिश्रमाभिनन्दनाय । तत्किमपि कथमपि वर्ण्यमानममुं प्रार्थनाञ्जलिं निजसपर्यायै समभिनन्दन्तु सभ्यजनाः । भोः विद्वांसो महाप्राज्ञाः भवतु विदितमेतद्यदस्मिन् भारतवर्षे स्वभावतो मनुष्यमात्रस्य चित्ते दुःखनिवृत्तिपूर्वकसुखोपलब्धिस्पृहा तिष्ठत्येव परञ्च सा महर्षिप्रणीतपरमपुनीतसिद्धान्तग्रन्थावगतिगम्याऽऽस्ते । यतः-' पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः । न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः ॥'' वयं सुखिनः स्यामेति सर्वेऽपि कामयन्तु किंतु तत्साधनभूतानि कर्माणि सर्वदैवोपेक्षन्ते । तत्सुकर्मविजिज्ञापयिषया भगवान् स्वयं वेदरूपेणाऽऽविर्भूय ब्राह्मणद्वारा प्रकाशितवान् । " एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता " या० व० ॥ " वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" इति स च भगवान् वेदः कर्मकांडोपासनाकांडज्ञानकाण्डभेद त्रिविधः । तत्र पूर्वाचार्यैः प्रथमं कर्मकांडस्य गणना विहिता । दृष्टान्तोऽप्यत्र यथैकं शुष्ककाष्ठं कारुयन्त्रकर्मद्वारा संस्कृतं सत्कांचित्संज्ञां प्राप्य बहुमूल्यं जायते तथैव कर्मकांडद्वारा संस्कृतशरीरः पुमानुपासनाकांडज्ञानकांडाधिकारी सम्पद्यते । यथा-" यः चत्रदेहं परितज्य टङ्कैः स गाधिपुत्रो गृहमभ्युपैति " इत्यादि ब्र० सू० शास्त्रयोनित्वात् १।१।२ ॥ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् १।३।३५ ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च १।३।३६ ॥ या० व० " मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ॥ ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥ १ ॥ निषेकादिश्मशानान्तो मंत्रैर्यस्योदितो विधिः ॥ तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित् ॥ २ ॥ " मानवे " राजा राजसूयेन स्वाराज्यकामो ज्योतिष्टोमेन यजेत " " कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे " " यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति इत्येव" यदेव विद्यया करोति श्रद्धोपनिषदा तदेव वीर्यवत्तरं भवति" छां० उ० ' जनको ह वै वैदेहो बहुदक्षिणेन यज्ञेनेजे" बृ० दा० ॥ छां० उ० "यक्षमाणो ह वै भगवन्तोहमस्मि" य० वे० ॥"तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" उल्लिखितकर्मकांडकर्तव्यताकसप्रमाणश्रुतिनियमानुसारेण कर्मकांडमावश्यकीयं बुद्ध्वा मुद्रितमुद्र्यमाणशांतिप्रकाशसंस्कारप्रकाशश्राद्धप्रकाशादिकर्मकांडनिबन्धनिर्माणरूपप्रयासो मयाऽन्वकारि । तदनन्तरमिदानीमुपासनाकांडमावश्यकीयं बुद्ध्वाऽयमनुष्ठानप्रकाशनामोपासना निबन्धनिर्माणरूपप्रयासोऽन्वकारि च 'तत्र च इतिहासः पुरावृत्तम्' इत्याभिधानिकवचनात्तंत्राणां पुरावृत्तत्वेनेतिहासत्वम् "इतिहासपुराणानि पंचमो वेद उच्यते" इत्यादिवचनकदम्बादितिहासत्वेन वेदत्वं च सिद्धमतः सर्वाण्यप्यनुष्ठानानि वैदिकानि विहितानि । यतः-' वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः । वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम " इति वचनस्य जागरूकत्वाद्वैदिकानुष्ठानानामेवोपासनाकांडत्वात्त्रिविधवेदस्य सिद्धिरित्यलम् ॥

सोऽयमनुष्ठानप्रकाशनिबंधो विचारकांडपद्धतिकांडपुरश्चरणकांडैस्त्रिधा विभक्तस्तत्रापि तत्प्रकरणैर्बहुधा विभक्तः सन् तत्तद्देवताऽनुष्ठानानि साङ्गोपाङ्गानि द्रढयति । अयं ग्रंथः श्रीवेङ्कटेश्वरभक्तिपरायणश्रीवैष्णवधर्मनिष्ठ-श्रीकृष्णदासात्मजखेमराजश्रेष्ठिना मुद्रणाय पार्थितः सन मयाऽपि सानन्देन सर्वाधिकारपुरस्सरं दत्तः । तेन च निजशास्त्रिगणद्वारा संशोध्य परिष्कृत्य च मुद्रयित्वा प्रकाशितः ।

अत्र अक्षरयोजकयोजिताक्षराणां विपर्यासादिजनितानामशुद्धानां मनुष्यनिष्ठनैसर्गिकभ्रमप्रमादयोर्दुष्परिहरत्वात्क्षन्तव्यः स्वल्पापराध इति प्रार्थयते रत्नगढनिवासिचतुर्थीलालशर्मा ।

विद्वत्कृपाभिलाषी—चतुर्थीलालशर्मा ।

श्रीः ।

# अथ अनुष्ठानप्रकाशस्याऽनुक्रमणिका ।


| विषय. | पृष्ठ. |
|---|---|
| ( अथ विचारकाण्डम् ) | |
| मंगलाचरणम् ... ... | १ |
| अनुष्ठानकालनियमः ... ... | ” |
| अनुष्ठानयोग्याचार्यः ... ... | ” |
| निंद्याचार्यः ... ... | २ |
| जपयोग्या ब्राह्मणाः ... ... | ” |
| निंदिता जापकाः ... ... | ” |
| अनुष्ठानयोग्या देशाः ... ... | ” |
| निषिद्धदेशाः ... ... | ३ |
| जपयोग्यासनानि ... ... | ” |
| निषिद्धासनानि ... ... | ३ |
| मालाविचारः ... ... | ” |
| मालामणिसंख्या ... ... | ” |
| कामनाभेदेनांगुलीनियमः ... | ४ |
| मालासंस्कारविचारः ... ... | ” |
| करमालाविचारः ... ... | ५ |
| जपे कर्तव्यता ... ... | ” |
| जपप्रशंसा ... ... | ” |
| जपकर्तॄणां नियमाः ... ... | ” |
| जपदशांशहवनादिविचारः ... | ७ |
| आह्निककृत्यविचारः ... ... | ७ |
| देवपूजाविचारः ... .... | ९ |
| कामनाभेदेन देवार्चनम् ... | ” |
| देवप्रतिमाविचारः ... ... | ” |
| पूजोपचाराः ... ... | ” |
| राजोपचाराः ... ... | ” |
| षोडशोपचाराः ... ... | १० |
| पुरुषसूक्तेन पूजाविचारः ... | ” |
| पंचामृतविचारः ... ... | ” |
| स्नानादिपात्रेषु प्रक्षेपणीयाः पदार्थाः | ” |
| पंचगव्यम् ... ... | १० |
| उद्वर्तनद्रव्याणि ... ... | ” |
| सौभाग्यद्रव्याणि ... ... | ” |
| कौतुकद्रव्याणि ... ... | ” |
| गंधविचारः ... ... | ” |
| देवभेदेन गंधाष्टकम् ... ... | ११ |
| गंधदाने अंगुलीविचारः ... | ” |
| गंधदाने मुद्रा ... ... | ” |
| गंधदानफलम् ... ... | ” |
| ग्राह्यपुष्पाणि ... ... | ” |
| देवभेदेन वर्ज्यपत्रतादीनि ... | १२ |
| धूपविचारः ... ... | ” |
| धूपद्रव्याणि ... ... | ” |
| षोडशांगधूपः ... ... | ” |
| दशांगधूपः ... ... | ” |
| धूपनिवेदने अंगुलीविचारः ... | ” |
| धूपादिस्थानम् ... ... | ” |
| दीपविचारः ... ... | ” |
| दीपपात्रम् ... ... | १३ |
| दीपस्नेहविचारः ... ... | ” |
| दीपमहिमा ... ... | ” |
| नैवेद्यविचारः ... ... | ” |
| नैवेद्यपात्राणि ... ... | ” |
| नैवेद्यकालः ... ... | ” |
| नैवेद्यस्थापनक्रमः ... ... | ” |
| नैवेद्यभक्षणविचारः ... ... | १३ |
| शिवनैवेद्ये विशेषः ... ... | ” |
| नैवेद्यशेषभागिनः ... ... | ” |
| देवनिर्माल्यत्यागे दोषः ... | १४ |
| तांबूलादिविचारः ... ... | ” |
| नीराजनप्रकारः ... ... | ” |
| साष्टांगनमस्कारप्रकारः ... | ” |
| नवधा भक्तिविचारः ... ... | ” |
| निर्माल्यग्रहणविचारः ... | ” |
| शिवलिंगनिर्माल्यविशेषः ... | ” |
| प्रदक्षिणाविचारः ... ... | ” |
| शिवस्य प्रदक्षिणात्रयं कार्यम् ... | ” |
| चंडसोमसूत्रादिसहितशिवेअर्द्धप्रदक्षिणा | ” |
| आसनाद्युपचारफलम् ... | ” |
| पंचामृतस्नानफलम् ... | १५ |
| महास्नाने पंचामृतप्रमाणम् ... | १५ |
| देवभेदेन वस्त्राणि ... ... | ” |
| देवभेदेन निषिद्धवाद्यानि ... | ” |
| होमविचारप्रकरणम् ... ... | ” |
| मंडपनिर्माणप्रकारः ... ... | ” |
| कुंडनिर्माणप्रकारः ... ... | ” |
| योनिकुंडरचनादीनि ... | १६ |
| चतुरस्रादिकुण्डफलम् ... | १७ |
| वर्णभेदेन कुंडप्रकारः ... ... | ” |
| कुण्डस्वरूपम् ... ... | ” |
| कुण्डाभावे स्थंडिलप्रकारः ... | ” |
| कुण्डाकारस्थंडिलप्रकारः ... | ” |
| कुण्डखाते फलविचारः ... | ” |
| वेदिदिग्विचारः ... ... | ” |
| भद्रविचारः ... ... | ” |
| मंडलकरणे प्रकारः ... ... | १८ |
| भद्रार्थे वर्णनिश्चयः ... | १८ |
| सर्वतोभद्रमंडलप्रकारः ... | ” |
| अष्टदलमंडलम् ... ... | ” |
| एकलिंगतोभद्रं गौरीतिलकं ... | ” |
| चतुर्लिङ्गतोभद्रप्रकारः ... | ” |
| अष्टलिंगतोभद्रप्रकारः ... | ” |
| हरिहरात्मकद्वादशलिंगतोभद्रप्रकारः | १९ |
| रुद्रयामलोक्तद्वादशलिंगतोभद्रप्रकारः | ” |
| सूर्यमंडलप्रकारः ... ... | ” |
| गणपतिमंडलप्रकारः... ... | २० |
| होमप्रयोगानुक्रमः ... ... | ” |
| सर्वकर्मोपयोगिसाधारणकर्माणि | ” |
| धौतवस्त्रविचारः ... ... | ” |
| अहतवस्त्रलक्षणम् ... ... | ” |
| निषिद्धवस्त्राणि ... ... | ” |
| त्रिकच्छलक्षणम् ... ... | २० |
| आसुरी कच्छा ... ... | २१ |
| स्नानप्रशंसा ... ... | ” |
| संध्यां विना निष्फलता ... | ” |
| प्रौढपादलक्षणम् ... ... | ” |
| पवित्रधारणविचारः ... ... | ” |
| वर्णभेदेनपवित्रेदर्भसंख्या ... | ” |
| हेमात्मकपवित्रम् ... ... | ” |
| त्रिपुंड्रतिलकप्रशंसा ... ... | ” |
| ऋषिछंदाद्यावश्यकता ... | २२ |
| आचमनविचारः ... .... | ” |
| नवग्रहमखविचारः ... ... | ” |
| नवग्रहमखभेदाः ... ... | ” |
| ग्रहमखप्रकारः ... ... | ” |
| ग्रहसमिधः ... ... | २३ |
| ग्रहमंत्राः ... ... | २३ |
| ग्रहदक्षिणाः ... ... | ” |
| ग्रहपूजावश्यकता ... ... | ” |
| अयुतहवनप्रकारः ... ... | २४ |

| विषय. | पृष्ठ. |
|---|---|
| लक्षहवनप्रकारः ... ... | " |
| कोटिग्रहहवनप्रकारः... | २५ |
| कुंडसंस्कारे पारस्करसूत्राणि... | " |
| कुशकंडिकाव्याख्या... ... | " |
| परिसमूहनविचारः... ... | २६ |
| समूहने दर्भसंख्या... ... | " |
| उपलेपनप्रकारः ... ... | " |
| उपलेपनयोग्यगोमयम्... ... | " |
| उल्लेखनप्रकारः ... ... | " |
| रेखात्रयदेवताः ... ... | " |
| पांसूद्धरणप्रकारः ... ... | " |
| अभ्युक्षणप्रकारः ... ... | २६ |
| अग्निस्थापनविचारः ... ... | २७ |
| उत्तमाद्यग्निविचारः .. ... | " |
| त्याज्याग्निविचारः ... ... | " |
| कर्मविशेषे अग्निनामानि... ... | " |
| अग्निजिह्वानामानि ... ... | " |
| जिह्वास्थानानि ... ... | " |
| ब्रह्मस्थापनादिविचारः ... ... | २८ |
| ब्रह्मलक्षणम् ... ... | " |
| प्रणीतालक्षणम् ... ... | " |
| परिस्तरणप्रकारः ... ... | " |
| परिस्तरणप्रयोजनम्... ... | " |
| परिस्तरणस्थानम् ... ... | " |
| बर्हिर्लक्षणम् ... ... ... | " |
| पदार्थासादनप्रकारः... ... | २९ |
| पवित्रलक्षणम् ... ... | २९ |
| पवित्रप्रयोजनम् ... ... | " |
| प्रोक्षणीविचारः ... ... | " |
| आज्यस्थालीविचारः... ... | " |
| चरुस्थालीविचारः ... ... | " |
| संमार्जनकुशविचारः... ... | " |
| समिल्लक्षणम् ... ... | " |

| विषय. | पृष्ठ. |
|---|---|
| ग्राह्याग्राह्यसमिधः ... ... | " |
| समिद्वृक्षाः ... ... ... | " |
| स्रुवलक्षणम् ... ... ... | " |
| स्रुवस्थितदेवताविचारः... ... | ३० |
| स्रुवधारणविचारस्तत्फलं च ... | " |
| आज्यविचारः ... ... | " |
| चरुविचारः ... ... ... | " |
| पूर्णपात्रविचारः ... ... | " |
| पवित्रच्छेदनप्रकारः ... ... | ३० |
| प्रोक्षणीसंस्कारः ... ... | " |
| आज्यसंस्कारः ... ... | ३१ |
| अग्निमुखादिस्थानानि ... ... | " |
| अग्नेर्मुखादिहोमे फलम्... ... | " |
| अन्वारंभविचारः ... ... | ३२ |
| अग्निपूजाविचारः ... ... | " |
| व्याहृतिहोमविचारः ... ... | " |
| अन्वाधानविचारः ... ... | " |
| अग्निधमनेविचारः ... ... | " |
| होममुद्राः ... ... | " |
| कामनाभेदेन होममुद्राः ... | " |
| शाकल्यप्रमाणम् ... ... | ३३ |
| द्रव्यभेदेन आहुतिप्रमाणम् | " |
| काम्यहोमादौ वह्निवासस्तत्फलंच | " |
| होमे खेटमुखे आहुतिविचारः | ३३ |
| दुर्गाहोमादौ ग्रहमुखाहुतिर्न द्रष्टव्या | " |
| पूर्णाहुतिविचारः ... ... | ३४ |
| ब्राह्मणभोजनसंख्या ... | " |
| दक्षिणादानप्रकारः ... .... | " |
| दक्षिणायां विलंबकरणे दोषः... | " |
| तंत्रोक्तपदार्थानां विचारः ... | " |
| सर्वमंत्रारंभे गायत्रीजपः ... | ३५ |
| भूतशुद्ध्यादिविचारः... ... | " |
| कूर्मचक्रप्रकारः ... ... | ३६ |

| विषय. | पृष्ठ. |
|---|---|
| कूर्मचक्रयंत्रम् ... .. | " |
| मंत्राणां दशसंस्काराः... ... | ३७ |
| कलौ सिद्धिप्रदा मंत्राः ... | " |
| आवाहनादिप्रकारः ... ... | ३८ |
| पद्मासनाद्यासनप्रकारः ... | ३९ |
| प्राणायामप्रकारः ... ... | ३९ |
| गायत्रीप्राणायामविचारः ... | " |
| तांत्रिकाग्निस्थापनादिप्रकारः ... | " |
| कुंडस्याष्टादशसंस्काराः ... | " |
| कुंडस्य चतुष्टयसंस्काराः ... | " |
| तन्त्रोक्ताग्निस्थापनादिप्रकारः ... | " |
| तन्त्रोक्तकुशकंडिकाविचारः ... | ४० |
| ( अथ पद्धतिकाण्डम् ) | |
| अनुष्ठानारंभादिनात्पूर्वदिनकृत्यम्... | ४३ |
| भस्माद्यष्टविधस्नानानि... ... | " |
| नद्यादिस्नानप्रयोगः ... ... | " |
| गृहस्नानप्रयोगः ... ... | ४५ |
| भस्मत्रिपुंड्रविधानम् ... ... | ४६ |
| ऊर्ध्वपुंड्रविधानम् ... ... | " |
| कलशस्थापनप्रयोगः ... ... | ४६ |
| अग्न्युत्तारणसूक्तम् ... .... | ४७ |
| पुरुषसूक्तेन पूजाप्रयोगः ... | ४८ |
| महापुरुषविद्यास्तोत्रम्... ... | ४९ |
| विष्णुश्राद्धम् ... ... | ५० |
| गोदानप्रयोगः ... ... | " |
| प्रायश्चित्तहोमप्रयोगः ... ... | ५१ |
| पंचगव्यविधानम् ... ... | " |
| प्राजापत्यचांद्रायणादिव्रतानि ... | ५२ |
| प्राजापत्यादिप्रत्याम्नायाः | " |
| गायत्री जपविधानम् ... ... | " |
| अनुष्ठानारंभादिकर्म ... ... | " |
| शांतिमन्त्राः ... ... | ५३ |
| प्रधानसंकल्पः ... ... | ५४ |

| विषय. | पृष्ठ. |
|---|---|
| गणपतिपूजाप्रयोगः ... | " |
| पुण्याहवाचनप्रयोगः ... ... | ५६ |
| षड्विनायकपूजाप्रयोगः ... | ५९ |
| षोडशमातृकापूजाप्रयोगः ... | " |
| सांकल्पिकनांदीश्राद्धप्रयोगः ... | ६० |
| आचार्यजापकवरणप्रयोगः ... | ६१ |
| द्वितीयं प्रकरणम् ( २ ) | |
| सर्वमन्त्रानुष्ठानोपयोगिजपक्रमः... | ६२ |
| द्वारपूजाविधानम् ... ... | " |
| तत्तद्देवानां द्वारपालाः... ... | " |
| आसनादिविधानम् ... ... | ६३ |
| कूर्मचक्रविधानम् ... ... | " |
| भूतशुद्धिप्रयोगः ... ... | ६४ |
| स्वप्राणप्रतिष्ठाविधानम् ... | ६५ |
| अन्तर्मातृकान्यासः ... ... | ६६ |
| बहिर्मातृकान्यासः ... ... | ६६ |
| पीठदेवतान्यासः ... ... | ६७ |
| तन्त्रोक्तार्घ्यपात्रादिस्थापनं तत्पूजनं च | ६८ |
| अग्न्युत्तारणसूक्तम् ... ... | ६९ |
| देवानां प्राणप्रतिष्ठाप्रयोगः ... | ७० |
| विस्तरतः सर्वदेवानां षोडशोप— चारपूजापद्धतिः ... ... | " |
| मालासंस्कारविधानं जपप्रकारश्च | ७५ |
| हवनप्रकरणम् ( ३ ) | |
| मंडपादिकरणविधानम् ... | ७७ |
| सामान्यतो गणेशादिपूजाविधानम् | ७८ |
| आचार्यर्त्विग्वरणप्रयोगः ... | ७९ |
| रक्षोघ्नसूक्तं दिग्रक्षणं च | ८० |
| पञ्चगव्यकरणम् ... ... | " |
| कुण्डपूजाप्रयोगः ... ... | ८१ |
| अग्न्यायतनप्रकारः ... ... | ८२ |
| अग्निस्थापनप्रकारः ... ... | " |
| ग्रहाणामावाहनादिप्रयोगः ... | ८३ |

| विषय. | पृष्ठ. |
|---|---|


अधिदेवतावाहनप्रयोगः ... ८४
प्रत्यधिदेवतावाहनप्रयोगः ... ८५
पंचलोकपालावाहनप्रयोगः ... ,,
दिक्पालावाहनप्रयोगः ... ,,
ग्रहस्तुतिः ... ... ८७
सर्वतोभद्रपूजापद्धतिः ... ,,
सर्वतोभद्रमंडलम् ... ... ९२
द्वादशलिंगतोभद्रपूजापद्धतिः ... ,,
द्वादशलिंगतोभद्रमंडलम् ... ,,
सूर्यानुष्ठाने सूर्यमंडलम् ... ९४
गणपतिमंडलम् ... ... ,,
एकलिंगतोभद्रमंडलम् ... ,,
चतुर्लिंगतोभद्रमंडलम् ... ९४
अष्टलिंगतोभद्रमंडलम् ... ,,
हरिहरात्मकद्वादशलिंगतोभद्रमंडलम् ,,
अग्न्युत्तारणमंत्राः ... ... ,,
प्रतिमायाः प्राणप्रतिष्ठा ... ,,
षोडशोपचारपूजामन्त्राः ... ,,
कुशकंडिका ... ... ,,
आघारावाज्यहोमः ... ... ९५
ग्रहाणां होममंत्राः ... ... ,,
अधिदेवानां होममन्त्राः ... ९६
प्रत्यधिदेवानां होममन्त्राः ... ९७
पञ्चलोकपालदेवताहोमः ... ,,
दिक्पालानां होममन्त्राः ... ,,
व्याहृतिवारुणहोमः... ... ९९
बलिदानप्रकारः ... ... ,,
पूर्णाहुतिहोममन्त्राः ... ... १०१
अभिषेकमन्त्राः ... ... १०३
आशीर्वादमन्त्राः ... ... १०४
देवताविसर्जनादिविधानम् ... १०५
तन्त्रोक्तहवनविधिः ... ... ,,
अग्नियन्त्रम् ... ... १०६
तन्त्रोक्त अग्निस्थापनादिविधानम् ,,

तन्त्रोक्तकुशकंडिका ... ... १०७
अग्निपूजाविधानम् ... ... ,,


( पुरश्चरणकांडस्य सूची )

( गणपतिमन्त्रपुरश्चरणप्रकरणम् )


गणेशादिकलामातृकान्यासः ... ११०
वक्रतुण्डगणेशमन्त्रपुरश्चरणप्रयोगः १११
गणपतियन्त्रम ... ... ११३
एकत्रिंशद्वर्णात्मकगणेशमन्त्रपुरश्चरणम् ,,
उच्छिष्टगणपतिमन्त्रविधानम्... ११४
उच्छिष्टगणपतेर्द्वितीयो मन्त्र. ... ११५
उच्छिष्टगणपतेस्तृतीयो मन्त्रः ... ११६
लक्ष्मीविनायकमन्त्रः ... ,,
त्रैलोक्यमोहनगणपतिमन्त्रः ... ११७
हरिद्रागणपतिमन्त्रः ... ... ,,
उच्छिष्टगणपतिकवचम्... ... ११८
हरिद्रागणेशकवचम् ... ... १२०
पार्थिवगणेशपूजाविधानम् ... ,,
पार्थिवगणेशपूजापद्धतिः ... १२१


( शिवमन्त्रानुष्ठानप्रकरणम् )


श्रीकण्ठादिकलामातृकान्यासः ... १२३
शिवपंचाक्षरमन्त्रपुरश्चरणम् ... १२५
अष्टाक्षरीशिवमन्त्रः ... ... १२७
शिवयंत्रम् ... ... १२८
त्र्यक्षरीमृत्युंजयपुरश्चरणम् ... ,,
त्र्यंबकमन्त्रपुरश्चरणम् ... १३०
त्र्यंबकयन्त्रम् ... ... १३१
महामृत्युंजयमंत्रपुरश्चरणम् ... १३२
महामृत्युञ्जययन्त्रम् ... .. १३४
वसिष्ठकल्पोक्तमहामृत्युञ्जयमन्त्रः १३६
मृत्युंजयकवचम् ... ... १३८
रुद्रविधानम् ... ... १३९
दशाक्षरीरुद्रमन्त्रविधानम् ... ,,
शिवसंकल्पसूक्तम् ... ... १४३

पुरुषसूक्तम् ... ... ,,
अप्रतिरथसूक्तम् ... ... १४४
विभ्राट्सूक्तम् ... ... १४५
शतरुद्रीविधानम् ... ... १४६
रुद्रयन्त्रम् ... ... १४८
रुद्रपीठपूजादिविधानम् ... ,,
रुद्रस्तोत्रम् ... ... १५०
पंचरुद्रनिर्णयः ... ... १५१
रुद्रमाहात्म्यम् ... ... ,,
पंचरुद्रविधानपद्धतिः ... ,,
रुद्राध्यायः ( नमकाध्यायः ) ... १५५
चमकाध्यायः ... ... १५९
शीर्षसंज्ञकानुवाकः ... १६१
रुद्रहोमप्रयोगः ... ... १६३
रुद्रहोमद्रव्याणि ... ... १७०
रुद्राभिषेकविधानम् ... १७१
चंडेश्वरमन्त्रविधानम् ... १७३
त्वरितरुद्रमन्त्रपुरश्चरणम् ... ,,
पार्थिवलिंगपूजापद्धतिः ... १७
शिवनीराजनार्तिः ... ... १८२
शिवस्तुतिः ... ... ,,
पार्थिवलिंगमाहात्म्यम् ... ... १८४
कामनाभेदेन लिंगसंख्या ... ,,
दक्षिणामूर्तिमन्त्रविधानम् ... १८५
दक्षिणामूर्तिमन्त्रो द्वितीयः ... १८६
दक्षिणामूर्तितन्त्रम् ... ... १८७
आपदुद्धारकबटुकभैरवमन्त्रानुष्ठानम् १८८
भैरवयन्त्रम् ... ... १८९
बटुकभैरवयन्त्रं सदैवं सबीजम् १९०
बटुकभैरवकवचम ... १९५
भैरवस्तवराजविधानम् ... १९६
भैरवस्तवराजस्तोत्रम् ... १९८
कुबेरमन्त्रद्वयपुरश्चरणम् ... १९९
शिवाथर्वशीर्षम् ( शिवोपनिषत ) २००


( देवीमंत्रानुष्ठानप्रकरणम् ३ )


देवीकलामातृकान्यासः ... २०३
नवार्णमन्त्रपुरश्चरणम् ... २०४
देवीयन्त्रम् ... ... २०८
अष्टाक्षरीदुर्गामन्त्रः ... ... २०९
दुर्गाकवचम् ( देवीरहस्योक्तम् ) २१०
नवरात्रदुर्गापद्धतिः ... ... २११
कलशस्थापनमन्त्राः ... ... २१२
देवीपूजामन्त्राः ( लक्ष्मीसूक्तं च ) २१४
दुर्गासप्तशतीपाठविधानम् ... २१८
कुमारीपूजाविधानम् ... २२०
कामनापरत्वेन चंडीपाठसंख्या ... २२१
आवृत्तिभेदविचारः ... ... ,,
मन्त्रसंपुटीकरणप्रकारः ... ,,
संपुटितहोमे मन्त्रसंख्या ... ,,
कवचाहुतिनिषेधः ... ... २२१
कामनाभेदेन दुर्गापाठसंपुटितमंत्राः २२२
शतचण्डीविधानम् ... ... ,,
सहस्रचंडीविधानम् ... ... २२४
शतचण्डीविधानपद्धतिः ... ,,
चंडिकायन्त्रम् ( तत्पूजाविधानं च) २२६
योगिनीपूजा ... ... २२८
कुमारीपूजा ... ... २२९
देवीबलिदानविधानम् ... २३०
देव्यथर्वशीर्षम् ( देव्युपनिषत )... २३१
लक्ष्मीमन्त्रानुष्ठानम् .. ... २३२
महालक्ष्मीमन्त्रानुष्ठानम् ... २३३
महालक्ष्मीयन्त्रम् ... ... २३६
महालक्ष्मीमंत्रो द्वितीयः... ... २३८
लक्ष्मीस्तोत्रम् ... ... २३९
लक्ष्मीकवचम् ... ... २४१
लक्ष्मीसूक्तविधानम् ... ... २४२
लक्ष्मीसूक्तम् ... ... २४३
सरस्वतीमन्त्रानुष्ठानम् ... २४४

| विषय. | पृष्ठ. |
|---|---|
| षोडशाक्षरीसरस्वतीमंत्रप्रयोगः... | २४५ |
| एकादशाक्षरीसरस्वतीस्तोत्रम् ... | २४६ |
| सरस्वतीयंत्रम् ... ... | ,, |
| सरस्वतीस्तोत्रम् ... ... | २४७ |
| अन्नपूर्णामन्त्रानुष्ठानम् ... | २४८ |
| अन्नपूर्णायन्त्रम् ... ... | २४९ |
| अन्नपूर्णाकवचम् ... ... | २५० |
| गंगामन्त्रपुरश्चरणम् ... ... | २५१ |
| गंगायन्त्रम् ... ... | ,, |
| गंगास्तोत्रम् ... ... | २५२ |
| शीतलामंत्रानुष्ठानम् ... ... | २५३ |
| शीतलास्तोत्रम् ... ... | २५३ |
| पृथ्वीमन्त्रपुरश्चरणम्... ... | २५४ |
| गायत्रीपुरश्चरणपद्धतिः ... | २५५ |
| गायत्रीयन्त्रम् ... ... | २५८ |
| गायत्रीकवचम् ... ... | २६२ |
| ( विष्णुमंत्रानुष्ठानप्रकरणम् ४ ) | |
| केशवादिकलामातृकान्यासः | २६३ |
| नारायणमन्त्रानुष्ठानविधानम् ... | २६६ |
| नारायणयन्त्रम् ... ... | २६७ |
| विष्णोर्द्वादशाक्षरमन्त्रपुरश्चरणम् | २६८ |
| लक्ष्मीनारायणमंत्रपुरश्चरणम् | २७० |
| दधिवामनमन्त्राः ... ... | ,, |
| राममन्त्रविधानम् ... ... | २७१ |
| श्रीरामयन्त्रम् ... ... | ,, |
| दशाक्षरीराममन्त्रः ... ... | २७२ |
| नृसिंहयन्त्रम् ... .... | २७४ |
| लक्ष्मीनृसिंहमन्त्रः ... ... | ,, |
| षडक्षरीनृसिंहमन्त्रः ... .. | २७५ |
| गोपालकृष्णमन्त्रविधानम् ... | २७६ |
| गोपालकृष्णयन्त्रम् ... ... | ,, |
| श्रीकृष्णमन्त्रः ... ... | २७८ |
| त्रैलोक्यमोहनविष्णुमन्त्रः ... | २७९ |
| संतानगोपालमन्त्रविधानम् ... | २८० |
| संतानगोपालयन्त्रम् ... ... | ,, |
| संतानगोपालमन्त्रो द्वितीयः ... | २८२ |
| सन्तानगोपालस्तोत्रम् ... | ,, |
| सन्तानोपायाः ... ... | २८५ |
| हरिवंशश्रवणविधानम् ... | २८६ |
| अभिलाषाष्टकं विश्वेश्वरस्तोत्रम् | २८८ |
| विष्णुयागविधानं ( प्रयोगश्च )... | २८९ |
| पुरुषसूक्तविधानम ... ... | २९२ |
| महापुरुषविद्यास्तोत्रम्... ... | ,, |
| गर्भिण्या गर्भस्रावहरोपायाः ... | २९५ |
| एकवस्त्रस्नानविधानम् ... | ,, |
| रुद्रस्नानप्रयोगः ... ... | २९७ |
| गरुडमन्त्रानुष्ठानम् ... ... | २९९ |
| हनुमन्मन्त्रानुष्ठानम् ... ... | ३०० |
| हनुमद्यन्त्रम् ... ... | ३०१ |
| अष्टादशाक्षरीहनुमन्मंत्रविधानम् | ३०२ |
| द्वादशाक्षरीहनुमन्मन्त्रः ... | ३०३ |
| हनुमद्वीरसाधनविधानम् ( चमत्कृतिकरणम् ) ... ... | ३०४ |
| एकमुखीहनुमत्कवचम् ... | ,, |
| हनुमत्स्तोत्रम् ... ... | ३०७ |
| वेदपारायणविधानम् ... ... | ३०७ |
| अष्टादशपुराणेतिहासानां पारायणविधानम् ... ... | ३०९ |
| श्रीमद्भागवतपारायणविधानम् ... | ,, |
| श्रीमद्भागवतसप्ताहविधानम् ... | ३१० |
| महाभारतश्रवणविधानम् ... | ३१२ |
| वाल्मीकीयरामायणविधानम् ... | ३१३ |
| अध्यात्मरामायणविधानम् ... | ३१७ |
| वेदव्यासमन्त्रानुष्ठानप्रयोगः ... | ३१८ |
| ( सूर्यमंत्रानुष्ठानप्रकरणम् ५ ) | |
| तन्त्रोक्ताष्टाक्षरीसूर्यमन्त्रानुष्ठानम् | ३२१ |
| तन्त्रोक्तसूर्ययन्त्रम ... ... | ३२१ |
| सूर्यार्घ्यविधानम् ... ... | ३२२ |
| तन्त्रोक्तत्र्यक्षरीसूर्यमन्त्रः ... | ,, |
| तन्त्रोक्तचन्द्रमन्त्रानुष्ठानम् ... | ३२३ |
| तन्त्रोक्तमंगलमन्त्रः ... ... | ३२४ |
| तन्त्रोक्तमंगलव्रतविधानम् ... | ३२५ |
| मंगलपूजान्यासश्च ... ... | ,, |
| मङ्गलयन्त्रम् ... ... | ३२६ |
| मंगलस्तोत्रम् ... ... | ,, |
| बृहस्पतिमन्त्रः ... ... | ३२७ |
| शुक्रमन्त्रः ... ... | ३२८ |
| वेदोक्तसूर्यमन्त्रानुष्ठानम् ... | ,, |
| वेदोक्तचन्द्रमन्त्रः ... ... | ३२९ |
| वेदोक्तमंगलमन्त्रः ... ... | ३३० |
| वेदोक्तबुधमंत्रः ... ... | ३३१ |
| वेदोक्तबृहस्पतिमंत्रः ... ... | ,, |
| वेदोक्तशुक्रमन्त्रः ... ... | ३३२ |
| वेदोक्तशनैश्चरमन्त्रः ... ... | ३३३ |
| वेदोक्तराहुमन्त्रः ... ... | ३३३ |
| वेदोक्तकेतुमंत्रः ... ... | ३३४ |
| सूर्यस्तोत्रम् ... ... | ३३५ |
| आदित्यहृदयस्तोत्रम् ( रामायणोक्तम् ) | ,, |
| सूर्याथर्वशीर्षम् ( सूर्योपनिषत् )... | ३३६ |
| (रोगशमनप्रकरणम् ६ ) | |
| सर्वरोगहराणि ... ... | ३३७ |
| ज्वरशमनविधानम् ... ... | ३३८ |
| ज्वरकर्मविपाकोपशमनवि० ... | ,, |
| जातवेदसमन्त्रानुष्ठानम् ... | ,, |
| ज्वरशमनमन्त्रविधानम् ... | ३४१ |
| अपामार्जनविष्णुस्तोत्रम् ... | ,, |
| महेश्वरकवचम् ... ... | ३४४ |
| सद्यआरोग्यकरसूर्यार्घ्यविधानम् | ३४५ |
| ज्वरस्तोत्रम् ... ... | ३४७ |
| ज्वरतर्पणम् ... ... | ३४७ |
| अच्युतानंतेतिमंत्रविधानम् ... | ,, |
| विष्णुसहस्रनामविधानम् ... | ,, |
| विष्णुसहस्रनामशापविमोचनम् | ,, |
| सहस्रनामस्तोत्रस्य न्यासादि ... | ३४८ |
| अतिसारकर्मविपाकोपशमनविधानम् | ,, |
| संग्रहणीकर्मविपाकोपशमनविधानम् | ३४९ |
| अर्शःकर्मविपाकोपशमनविधानम् | ,, |
| अजीर्णमंदाग्निकर्मविपाकोपशमनवि० | ,, |
| विषूचिकोपशमनविधानम् ... | ,, |
| पांडुरोगकर्मविपाकोपशमनवि० ... | ,, |
| रक्तपित्तकर्मविपाकोशमनवि० ... | ,, |
| क्षयरोगकर्मविपाकोपशमनवि० ... | ,, |
| श्वासकासादिकर्मविपाकोपशमनवि० | ३५० |
| वातरोगकर्मविपाकोपशमनवि० | ,, |
| शूलरोगकर्मविपाकोपशमनवि० | ३५० |
| गुल्मरोगकर्मविपाकोपशमनवि० | ,, |
| उदररोगकर्मविपाकोपशमनवि० ... | ,, |
| जलोदररोगकर्मविपाकोपशमनवि० | ,, |
| प्लीहरोगहरहनुमन्मन्त्रः ... | ३५१ |
| मूत्रकृच्छ्रादिकर्मविपाकोपशमनवि० | ,, |
| प्रमेहरोगकर्मविपाकोपशमनवि० | ,, |
| वृषरोगकर्मविपाकोपशमनवि० | ,, |
| कुष्ठरोगकर्मविपाकोपशमनविधानम् | ,, |
| शिरोरोगकर्मविपाकोपशमनवि० | ,, |
| नेत्ररोगकर्मविपाकोपशमनवि० | ३५२ |
| नेत्रोपनिषत् ... ... | ,, |
| नेत्ररोगहरतर्पणम् ... ... | ३५३ |

| विषय. | पृष्ठ. | विषय. | पृष्ठ. | विषय. | पृष्ठ. | विषय. | पृष्ठ. |
|---|---|---|---|---|---|---|---|
| कर्णरोगकर्मविपाकोपशमनवि० | ,, | भगव्रणकर्मविपाकोपशमनवि० ... | ३५४ | शीघ्रप्रसवोपाय: ... ... | ३५६ | वरुणमंत्रपुरश्चरणम् ... | ३५७ |
| मुखरोगकर्मविपाकोपशमनवि० | ३५४ | स्तनस्फोटकर्मविपाकोपशमनवि० | ,, | शीघ्रप्रसवयन्त्रम् ... ... | ,, | दृष्टिप्रदसूक्तविधानम् ... | ३५९ |
| अपस्मार ( मृगी ) रोगकर्मविपाकोपशमनविधानम् ... ... | ,, | वातरक्तकर्मविपाकोशमनवि० ... | ,, | बालानां रोगशमनोपाय: ... | ,, | सर्वरोगनाशकधर्मराजमन्त्रविधानम् | ३६० |
| भंगदरकर्मविपाकोपशमनवि० ... | ,, | स्त्रीणां प्रदरकर्मविपाकोपशमनवि० | ३५५ | बालरक्षा ... ... | ,, | चित्रगुप्तमंत्रानुष्ठानम् ... | ३६१ |
| व्रणरोगकर्मविपाकोपशमनवि० ... | ,, | गर्भिण्याः प्रतिमासं गर्भरक्षोपाय: | ,, | महामारीशमनविधानम् ... | ३५७ | ग्रंथसमाप्तिः ... ... | ,, |
| | | | | अनावृष्टिशमनविधानम् ... | ,, | ग्रंथकारवंशवर्णनम् ... ... | ३६२ |


( इत्यनुष्ठानप्रकाशस्यानुक्रमणिका समाप्ता । )

चित्र निरंक पृष्ठ १७

चतुष्कोणास्रंकुण्डम्




अर्द्धचन्द्रकुण्डम्




त्रिकोणकुण्डम्




वृत्तकुण्डम्




विषमषडस्रकुण्डम्




विषमअष्टास्रंकुण्डम्



चित्र निरंक पृष्ठ १७

पद्मकुण्डम्




समअष्टास्रकुण्डम्




समषडस्रकुण्डम्




योनिकुण्डम्



त्र्यंबकयन्त्रमिदम्. चित्र निरंक पृष्ठ १३१




॥ श्रीदक्षिणामूर्तिमंत्रयंत्रम् ॥ चित्र सांक पृष्ठ १८७




श्रीमहामृत्युंजययंत्रमिदम् ।
सांक पृष्ठ १३४

॥ अथाऽष्टादशरेखात्मकं चतुर्लिंगतोभद्रम् ॥

चित्र निरंक पृष्ठ १२



॥ सर्वतोभद्रमण्डलमिदम् ॥

चित्र सांक पृष्ठ १२



॥ रुद्रयामलोक्तं चतुस्त्रिंशद्रेखात्मकं द्वादशलिंगतोभद्रमिदम् ॥

चित्र निरंक पृष्ठ १२



तीनों चित्र निरंक पृष्ठ १९

॥ चतुर्विंशतिरेखात्मकमष्टलिंगतोभद्रमिदम् ॥२४॥



॥ अथ हरिहरात्मकं द्वादशलिंगतोभद्रं षट्त्रिंशद्रेखात्मकम् ॥ ३६ ॥



( एकलिंगतोभद्रं देवीमंत्रानुष्ठानयोग्यं गौरीतिलकमंडलमिदम् )



## ॥ गणपतियंत्रमिदम् ॥

चित्रनिरंक पृष्ठ ११३




## शिवयन्त्रमिदम् ।

चित्र सांक पृष्ठ १२८




## ॥ श्रीसूर्यमन्त्रानुष्ठानोपयोगिसूर्यभद्रमण्डलम् ॥



## ॥ गणपतिमन्त्रानुष्ठानोपयोगिगणपतिभद्रमण्डलम् ॥



दोनों चित्र-सांक पृष्ठ ८९

॥ चण्डिकायन्त्रमिदम् ॥

सांक पृष्ठ २२६




॥ श्रीमहालक्ष्मीयन्त्रम् ॥

निरंक पृष्ठ २३६




॥ श्रीगायत्रीपूजायन्त्रमिदम् ॥

सांक पृष्ठ २५८



॥ श्रीनारायणमन्त्रानुष्ठानपूजायन्त्रम् ॥

निरंक पृष्ठ २६७





॥ श्रीबटुकभैरवयन्त्रमिदम् ॥

चित्र सांक पृष्ठ १८९



॥ श्रीदेवीयन्त्रम् ॥

सांक पृष्ठ २०७




॥ श्रीरामयन्त्रमिदम् ॥

सांक पृष्ठ २७१




॥ श्रीनृसिंहयन्त्रमिदम् ॥

निरङ्क पृष्ठ २७६

## ॥ मंगलयंत्रमिदम् ॥

निरंकपृष्ठ ३२६



## ॥ श्रीगोपालयन्त्रमिदम् ॥

निरंक पृष्ठ २७६




## ॥ संतानगोपालमन्त्रपूजायन्त्रम् ॥

सांक पृष्ठ २८०




## ॥ श्रीहनुमन्मंत्रपूजायन्त्रमिदम् ॥

सांक पृष्ठ २०१




## ॥ श्रीसूर्ययन्त्रमिदम् ॥

निरंक पृष्ठ ३२१



॥ श्रीरुद्रयंत्रमिदम् ॥ ॐ शेषाय नमः १ पू. ॐ इन्द्राय नमः १ निरंक पृष्ठ १४८

ॐ कर्कोटकाय नमः ८
ॐ ऊर्ध्वलिंगाय नमः ४
ॐ ईशानाय नमः ८
( ईशान )

ॐ तक्षकाय नमः २
ॐ विरूपाक्षाय नमः १
ॐ अग्नये नमः २
( अग्नि )

ॐ कम्बलाय नमः ७ उ. ॐ कुबेराय नमः ७

ॐ यमाय नमः ३ द. ॐ अनन्ताय नमः ३



(पूज्यपूजकयोर्मध्ये-
प्राचीस्यायंत्रलेखने)

ॐ महापद्माय नमः ६
ॐ पशुपतये नमः ३
ॐ वायवे नमः ६
( वायव्य )

ॐ वासुकये नमः ४
ॐ विश्वरूपाय नमः २
ॐ निर्ऋतये नमः ४
( निर्ऋति )

ॐ वरुणाय नमः ५ (पश्चिम) ॐ शंखपालाय नमः ५

श्रीगणेशाय नमः ॥ ॥ अथानुष्ठानप्रकाशनिबन्धः प्रारभ्यते ॥ जगतः पितरं शम्भुं जगतो मातरं शिवाम् ॥ जगतो विघ्नहर्तारं नमामि गणनायकम् ॥ १ ॥ जगतः पालकं विष्णुं जगतः सुखदां रमाम् ॥ जगदारोग्यदं सूर्यं नमामि पितरौ निजौ ॥ २ ॥ कातीयपारस्करगृह्यसूत्रान्नानापुराणान्स्मृतिपद्धतीश्च ॥ तन्त्राण्यनेकानि विचार्य सम्यक् तनोम्यनुष्ठानविधिप्रकाशम् ॥ ३ ॥ शान्ति प्रतिष्ठाश्राद्धानां ज्योतिपोत्सर्गकर्मणाम् ॥ प्रोक्ताः पंच निबन्धाः प्राक् षष्ठोऽयमधुनोच्यते ॥ ४ ॥ ग्रन्थास्तु बहवः सन्ति प्राचीना श्चैव नूतनाः ॥ तथापि भूमिदेवानां प्रीतिदोऽयं भविष्यति ॥ ५ ॥ तत्राऽनुष्ठानं नाम शास्त्रविहितकर्त्तव्यादिसंपादनम् । तथा चोक्तं भवति—"शास्त्रस्य विहितं कर्म सम्यक्संपादनं तु यत् ॥ तद्धि ज्ञेयमनुष्ठानं नित्यनैमित्तकर्मसु ॥ १ ॥" अथ सामान्यतः सर्वमन्त्रानुष्ठानकालनियमः॥(वैशम्पायनसंहितायाम्) "मन्त्रस्यारम्भणं मेषे धनधान्यप्रदं भवेत् । वृषे मरणमाप्नोति मिथुनेऽपत्यनाश नम् ॥ कर्कटे सर्वसिद्धिः स्यात्सिंहे मेधाविनाशनम् । कन्या लक्ष्मीप्रदा नित्यं तुलायां सर्व्वसिद्धयः वृश्चिके स्वर्णलाभः स्याद्धनुर्मानविनाशनम् । मकरः पुण्यदः प्रोक्तः कुम्भो धनसमृद्धिदः ॥ मीनो दुःखप्रदो नित्यमेवं मासविधिक्रमः ॥" ( रुद्रयामले ) "कार्तिकाश्विनवैशाखमाघेऽथ मार्गशीर्षके । फाल्गुने श्रावणे मन्त्रपुरश्चर्य्या प्रशस्यते " ॥ ( कालोत्तरे ) "मुक्तिकामैः कृष्णपक्षे भूतिकामैः सिते सदा " ॥ ( स्मृतितत्त्वे ) "पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा । त्रयोदशी च दशमी प्रशस्ता सर्वकामदा ॥ या तिथिर्यस्य देवस्य तस्यां वा शुभदः स्मृतः ॥" ( पुरश्चरणदीपिकायाम् ) "मन्त्रारम्भो रवौ शुक्रे बुधे जीवे विशेषतः । शनौ मृत्युः क्षयो भौमे सोमे मध्यफलं स्मृतम् ॥" ( ज्योतिर्निबन्धे ) " पुनर्वसुद्वये स्वातौ त्र्युत्तरे श्रवणत्रये । रेवतीद्वितये हस्तेऽनुराधा रोहिणीद्वये ॥ शान्तिकं पौष्टिकं कर्म्म पुण्याहे कीर्त्तितं बुधैः ॥ " ( पुरश्चरणदीपिकायाम् ) "अश्विनीरोहिणीस्वातीविशाखाहस्त भेषु च । ज्येष्ठोत्तरात्रयेष्वेव कुर्य्यान्मन्त्राभिषेचनम् ॥ " ( तन्त्रसारे ) "आर्द्रायां कृत्तिकायां च मन्त्रारम्भः प्रशस्यते । यदीशस्य कृशानोर्वा मन्त्रारम्भो यथाक्रमम् ॥ स्थिरलग्ने विष्णुमन्त्रे शिवमन्त्रे चरं ध्रुवम् । द्विस्वभावगतं लग्नं शक्तिमन्त्रे प्रशस्यते॥"(दीक्षा तत्त्वे ) " पञ्चाङ्गशुद्धिदिवसे सोदये शशितारयोः । गुरुशुक्रोदये शुद्धलग्ने द्वादशशोधिते ॥ चन्द्रतारानुकूले च शस्यते मन्त्रकर्म्म च ॥ " ( अगस्त्यसंहितायाम् "त्रिषष्ठायगताः पापाः शुभाः केन्द्रत्रिकोणगाः । मन्त्रारम्भे शुभाः सर्व्वे बन्धुस्थाः सर्व्वनाशकाः" ( पुरश्चरणदीपिकायाम् ) "संध्यागर्जितनिर्घोषभूकम्पोल्कानिपातने । एतानन्यांश्च दिवसान्मृत्युक्तांश्च परित्यजेत् ॥" ( तन्त्रसारे ) "चन्द्रतारानुकूले च शुक्लपक्षे शुभे दिने । आरम्भे तु पुरश्चर्य्यां हरौ सुप्ते न चाचरेत् ॥" इति मन्त्रानुष्ठानकालः । अथानुष्ठानयो ग्याचार्यलक्षणम् ( शारदातिलके ) "मातृतः पितृतः शुद्धः शुद्धभावो जितेन्द्रियः । सर्वागमानां सारज्ञः सर्वशास्त्रार्थतत्त्ववित् ॥ परोपकारनिरतो जपपूजादितत्परः । अमोघवचनः शान्तो वेदवेदार्थपारगः ॥ योगमार्गानुसंधायी देवताहृदयंगमः । इत्यादिगुणसं पन्नो गुरुरागमसंमतः ॥ " ( पुरश्चरणदीपिकायाम् ) "श्रीगुरुः परमेशानि शुद्धवेषो मनोहरः ॥ सर्व्वलक्षणसंपन्नः सर्व्वावयवशो भितः ॥ अग्रगण्यो गभीरश्च पात्रापात्रविशेषवित । शिवविष्णुसमः साधुर्न च दर्शनदूषकः । नित्ये नैमित्तिके काम्ये रतः

कर्म्मण्यनिन्दिते । यदृच्छालाभसन्तुष्टो गुणदोषविभेदकः ॥ इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये" ( मत्स्यपुराणेऽपि )"सर्वा वयवसंपूर्णो वेदमन्त्रविशारदः । पुराणवेत्ता तत्त्वज्ञो दम्भलोभविवर्जितः ॥ कृष्णसारमये देशे उत्पन्नश्च शुभाकृतिः । शौचाचाररतो नित्यं पाखण्डकुलनिःस्पृहः ॥ समः शत्रौ च मित्रे च ब्रह्मोपेन्द्रहरप्रियः । ऊहापोहार्थतत्त्वज्ञो वास्तुशास्त्रविशारदः ॥ आचार्यश्च भवेन्नित्यं सर्व्वदोषविवर्ज्जितः ॥ " इत्याचार्यलक्षणम् । ( निन्द्याचार्य्यमाह क्रियासारे ) "श्वित्री चैव गलत्कुष्ठी नेत्ररोगी च वामनः। कुनखी श्यावदन्तश्च स्त्रीजितो ह्यधिकाङ्गकः ॥ हीनाङ्गः कपटी रोगी बह्वाशी बहुजल्पकः । एतैर्दोषैर्विहीनो यः स गुरुः शिष्यसं मतः " ( जपयोग्या ब्राह्मणाः ) "जापकाश्च द्विजाः शुद्धाः कुलीना ऋजवस्तथा । स्नानसंध्यारता नित्यं शौचाचारपरायणाः ॥ श्रोत्रियाः सत्यवाचश्च वेदशास्त्रार्थकोविदाः । अक्रोधनाः पुराणज्ञाः सततं ब्रह्मचारिणः ॥ देवध्यानरता नित्यं प्रसन्नमनसः सदा । इत्यादिगुणसंपन्ना जापका मन्त्रसिद्धिदाः ॥ " ( निन्दिता जापकाः पुरश्चरणदीपिकायाम् ) "नास्तिकान्भिन्नमर्यादान्कृतघ्नान्वेद निन्दकान् । स्नानसंध्याविहीनांश्च दूरतः परिवर्ज्जयेत्॥"( त्रिविक्रमपद्धतौ ) " व्यसनी । वामनः । खल्वाटः । कुब्जकः । कुनखी । शठः । चपलः । अधिकाङ्गः हीनाङ्गः । पापी । कुटिलः । व्याधितः । तार्किकः वार्द्धिकः । काकस्वरः । बकवृत्तिकः । गुरुदेव द्विजातिनिन्दकः । वृषलीपतिः । साहसिकः । अशुचिः । पण्यरङ्गोपजीवी । नास्तिकः । क्लीबः । धर्म्मवृत्तविवर्जितः । परदार रतः । निर्घृणी । दुर्हृदयः । अतिकृष्णः । अतिगौरः । केकराक्षः । कातरः । जडः । पशुशास्त्ररतः । कुण्डः । गोलकः । स्वयंभूः । शवश्राद्धभुक् । लम्बोष्ठकः । भग्नवक्त्रः । शिशुः । अतिवृद्धः । बधिरः । कपिलाङ्गः । व्यङ्गः । गर्वितः । स्तब्धः । कलिप्रियः । परापवादरतः । पिशुनः । असंस्कृतः । दीनः । दुश्चर्मा । सालस्यः । अतिस्थूलः । अतिकृशः । विषग्रन्थोपजीवी । अभिशस्तः । निष्ठीवनशीलः । कुवृत्तिकः । कुष्ठी । काणः । गारुडी । म्लेच्छदेशवासी । मांसभक्षी । तन्त्रशास्त्रविद्वेषकः । पुराणनिन्दकः । प्रतिमानि न्दकः । संध्योपासनरहितः । अनेककार्ययुक्तः । रोगी ।" इत्यादिदोषयुक्ता विशेषतो जपकर्म्मादिषु वर्ज्जनीयाः ॥ ( अनुष्ठानयोग्या देशाः शारदातिलके पुरश्चरणचंद्रिकायां च ) "पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम् । तीर्थप्रदेशाः सिंधूनां संगमः पावनं वनम् ॥ उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः। देवतायतनं कूलं समुद्रस्य निजं गृहम्॥साधनेषु प्रशस्यन्ते स्थानान्येतानि मन्त्रिणाम्॥" ( तन्त्रसारेऽपि ) "तुलसीकाननं गोष्ठं वृषसद्म शिवालयः । अश्वत्थामलकीमूलं गोशाला जलमध्यतः ॥ गृहे शतगुणं विद्या द्गोष्ठे लक्षगुणं भवेत् । कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ ॥ म्लेच्छदुष्टमृगव्यालशङ्कातङ्कादिवर्जिते । एकान्ते पावने निन्दार हिते भक्तिसंयुते ॥ सुदेशे धार्म्मिके राष्ट्रे सुभिक्षे निरुपद्रवे । रम्ये भक्तिजनस्थाने निवसेत्तापसप्रिये ॥ गुरूणां सन्निधाने च चित्तै काग्रस्थले तथा । एषामन्यतमं स्थानमाश्रित्य जपमाचरेत् ॥ यत्रग्रामे भवेन्मन्त्री तत्र कूर्म्मं विचिंतयेत् ॥" ( गौतमीये ) "पर्व्व ते सिंधुतीरे वा पुण्यारण्ये नदीतटे। यदि कुर्य्यात्पुरश्चर्य्यां तत्र कूर्म्मं न चिंतयेत् ॥ ग्रामे वा यदि वास्तौ वा गृहे तं च विचिन्तये त् ॥" ( पुरश्चरणदीपिकायां नारदीये च ) "शिवस्य सन्निधाने च सूर्याग्न्योर्वा गुरोरपि । दीपस्य ज्वलितस्यापि जपकर्म्म प्र

शस्यते ॥ गृहे जपं समं विद्याद्गोष्ठे शतगुणं भवेत् । नद्यां शतसहस्रं स्यादनन्तं शिवसन्निधौ ॥ समुद्रतीरे च ह्रदे गिरौ देवालयेषु च । पुण्याश्रमेषु सर्वेषु जपं कोटिगुणं भवेत् ॥ तत्पूर्वाभिमुखो वश्यं दक्षिणे चाभिचारिकम् । पश्चिमे धनदं विद्यादुत्तरे शान्तिदं भवेत् ॥ अग्रे पृष्ठे तथा वामे समीपे गर्भमन्दिरे । जपं प्रदक्षिणं होमं न कुर्याद्धि शिवालये" ॥ ॥ अथासनानि—"आसनं त्रिविधं तत्र चाद्यमास्तरणं स्मृतम् ॥ देहसाध्यं स्वस्तिकादि देवार्थं च तृतीयकम् " ॥ तत्र योग्यासनान्याह ( व्यासः ) "कौशेयं कम्बलं चैव ह्यजिनं पट्टमेव च । दारुजं तालपत्रं च आसनं परिकल्पयेत् " ॥ ( पुरश्चरणदीपिकायाम् ) "तूलकम्बलवस्त्राणि पट्टव्याघ्रमृगाजिनम् । कल्पयेदासनं धीमान्सौभाग्यज्ञानसिद्धिदम् ॥ कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि । बस्ताजिने व्याधिनाशः कम्बले दुःखमोचनम् ॥ अभिचारे नीलवर्णं रक्तं वश्यादिकर्म्मणि । शान्तिके कम्बलः प्रोक्तः सर्वस्मिन्नपि कम्बलः ॥स्यात्पौष्टिके च कौशेयं शान्तिके वेत्रविष्टरम् ॥ धवले शान्तिकं मोक्षः सर्वार्थश्चित्रकम्बले ॥ सर्वाभावे त्वासनार्थं कुशविष्टरमिष्यते।" अथ निषिद्धासनानि ( पुरश्चरणदीपिकायाम् ) " वंशासने तु दारिद्र्यं पाषाणे व्याधिसंभवः । धरण्यां दुःखसंभूतिर्दौर्भाग्यं छिद्रदारुजे ॥ तृणे धनयशोहानिः पल्लवे चित्तविभ्रमः " ( पुरश्चरणचंद्रिकायां विशेषः ) "सर्वसिद्धौ व्याघ्रचर्म ज्ञानसिद्धौ मृगासनम् । वस्त्रासनं रोगहरं वेत्रजं श्रीविवर्धनम् ॥ कौशेयं पौष्टिकं प्रोक्तं कम्बलं दुःखमोचनम् । स्तम्भने गजचर्म स्यान्मारणे माहिषं तथा । मेषीचर्म तथोच्चाटे खाड्गिनं वश्यकर्मणि । विद्वेषे जाम्बुकं प्रोक्तं भवेद्गोचर्म शान्तिके ॥ नादीक्षितो विशेत्कृष्णसाराजिनासने गृही। विशेद्यतिर्वनस्थश्च ब्रह्मचारी च स्नातकः " ॥ ॥ अथ मालाविचारः ( मन्त्रखण्डे ) "स्फाटिकी मौक्तिकी वापि प्रोक्तव्या सितसूत्रकैः । सर्वकर्म्मसमृद्ध्यर्थं जपेद्रुद्राक्षमालया ॥ धर्म्माऽर्थकाममोक्षार्थं जपेत्पद्माक्षमालया । अरिष्टपुत्रजीवैश्च शङ्खपद्मौ मणिस्तथा ॥ कुशग्रन्थिश्च रुद्राक्ष उत्तमं चोत्तरोत्तरम् । शतं चंदनशङ्खैश्च प्रवालैस्तु सहस्रकम् ॥ स्फाटिकैर्लक्षसाहस्रं मौक्तिकैर्लक्षमेव च । दशलक्षं राजताक्षैः सौवर्णैः कोटिरुच्यते ॥ कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितो भवेत् " ॥ तन्त्रसारेऽपि ) "रुद्राक्षशङ्खपद्माक्षपुत्रजीवकमौक्तिकैः।स्फाटिकैर्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा॥राजतैः कुशमूलैश्च गृहस्थस्याक्षमालिका । अङ्गुलीगणनादेकं पर्वण्यष्टगुणं भवेत् ॥ पुत्रजीवैर्दशगुणं शतं शङ्खैः सहस्रकम् । प्रवालैर्मणिरत्नैश्च दशसाहस्रकं स्मृतम् ॥ तदेव स्फाटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते । पद्माक्षैर्दशलक्षं स्यात्सौवर्णैः कोटिरुच्यते ॥ कुशग्रन्थ्या कोटिशतं रुद्राक्षैः स्यादनन्तकम् । सर्वैर्विरचिता माला नृणां भुक्तिफलप्रदा" ॥ ( कामनाभेदे तु कालिकापुराणे ) रुद्राक्षमालिका सूते जपेन स्वमनोरथान् । पद्माक्षैर्विहिता माला शत्रूणां नाशिनी मता ॥ कुशग्रंथिमयी माला सर्वपापप्रणाशिनी । पुत्रजीवफलैः क्लृप्ता कुरुते पुत्रसंपदम् ॥ निर्म्मिता रूप्यमणिभिर्जपमालेप्सितप्रदा। प्रवालैर्विहिता माला प्रयच्छेद्विपुलं धनम् ॥ हिरण्मयी विरचिता माला कामान्प्रयच्छति । सर्वैरेभिर्विरचिता माला स्यान्मुक्तये नृणाम् " ॥ ( तन्त्रराजे तु ) "वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे । त्रिपुराया जपे शस्ता रुद्राक्षै रक्तचन्दनैः" ॥ ( मालायां सूत्रविचारः सनत्कुमारीये ) "कार्प्पाससंभवं सूत्रं धर्म्मकामार्थमोक्षदम् । तच्च विप्रेन्द्रकन्याभिर्निर्म्मितं च

सुशोभनम् ॥ शुक्लं रक्तं तथा कृष्णं पट्टसुत्रमथापि वा । शान्तिवश्याभिचारेषु मोक्षैश्वर्य्यजपेषु च ॥ शुक्लं रक्तं तथा पीतं कृष्णं वर्णेषु च क्रमात् । सर्वेषामेव वर्णानां रक्तं सर्वेप्सितप्रदम् ॥ त्रिगुणं त्रिगुणीकृत्य ग्रथयेच्छिल्पशास्त्रतः । एकैकं मातृकावर्णं सतारं प्रजपन्सुधीः ॥ मणिमादाय सूत्रेण ग्रथयेन्मध्यमध्यतः । ब्रह्मग्रंथिं विधायेत्थं मेरुं च ग्रंथिसंयुतम् ॥ ग्रथयित्वा पुरो मालां ततः सं स्कारमाचरेत् " ॥ ( तन्त्रसारे गौतमीये च ) " मुखे मुखं तु संयोज्य पुच्छे पुच्छं नियोजयेत् । मेरुरूर्ध्वमुखः कार्यः प्रत्येकं नाग पाशकम् । गोपुच्छसदृशी माला यद्वा सर्प्पाकृतिः शुभा " ॥ ( मुखपुच्छनियमोऽपि तत्रैव ) "रुद्राक्षस्योन्नतं प्रोक्तं मुखं पृष्ठं च निर्म्मलम् । कमलाक्षस्य सूक्ष्मांशं सबिन्दुद्वितयं मुखम् ॥ सबिन्दुकस्य स्थूलांशं पृष्ठं श्लक्ष्णमिति स्मृतम् । तत्सजातीयमेकाक्षं मे रुत्वेनाग्रतो न्यसेत् ॥" कामनाभेदेन जपमालामणिसंख्या ( गौतमीये ) " पंचविंशतिभिर्मोक्षं त्रिंशद्भिर्द्धनसिद्धये । सर्वार्था सप्तविंशत्या पञ्चदश्यभिचारिके ॥ पंचाशद्भिः काम्यसिद्धिः स्यात्तथा चतुरुत्तरैः । अष्टोत्तरशतैः सर्व्वा सिद्धिरुक्ता मनीषिभिः ॥" कामनाभेदेनाङ्गुलिनियमः ( पुरश्चरणदीपिकायाम् ) " अङ्गुष्ठं मोक्षदं विद्यात्तर्ज्जनी शत्रुनाशिनी । मध्यमा धनदा शान्तिकरी ह्येषा ह्यनामिका ॥ कनिष्ठाऽऽकर्षणे शस्ता जपकर्म्मणि शोभने । अङ्गुष्ठेन जपं जप्यमन्यैर ङ्गुलिभिः सह ॥ अङ्गुष्ठेन विना कर्म्म कृतं तदफलं यतः । जप्त्वाऽक्षमालां सकलां भ्रामयेदाशिखामणिम् ॥ प्रदक्षिणं पुनर्वक्त्रे प्रार भ्यैवं समाचरेत् ॥ स्वयं वामेन हस्तेन जपमालां न संस्पृशेत् ॥ अदीक्षितो द्विजो वापि स्पृष्टश्चेच्छुद्धिमाप्नुयात् । न धारयेत्करे मूर्ध्नि कण्ठे च जपमालिकाम् ॥ जप काले जपं कृत्वा सदा शुद्धस्थले न्यसेत् । गुरुं प्रकाशयेद्धीमान्मन्त्रं नैव प्रकाशयेत् ॥ अक्ष मालां च मुद्रां च गुरोरपि न दर्शयेत् । कम्पनात्सिद्धिहानिः स्याद्धूननं बहुदुःखकृत् ॥ शब्दे जाते भवेद्रोगः करभ्रष्टा विनाशकृत । छिन्ने सूत्रे भवेन्मृत्युस्तस्माद्यत्नपरो भवेत् ॥ जपान्ते कर्णदेशे वा उच्चस्थानेऽथवा न्यसेत् । जपमालां विधायेत्थं ततः संस्कार माचरेत् " ॥ ( अथ मालासंस्काराः तन्त्रसारे पुरश्चरणदीपिकायां च ) "अश्वत्थपत्रनवकैः पद्माकारं तु कल्पयेत् । तन्मध्ये स्था पयेन्मालां मातृकामूलमुच्चरन् ॥ क्षालयेत्पंचगव्येन सद्योजातेन सज्जलैः । चन्दनागुरुकर्पूरैर्वामदेवेन घर्षयेत् । धूपयेत्तामघोरेण लिम्पेत्तत्पुरुषेण तु । मन्त्रयेत्पञ्चमेनैव प्रत्येकं तु सकृत् सकृत् ॥ मेरुं च पञ्चमेनैव ततो मन्त्रेण मन्त्रयेत् । तत्रावाह्य यजेद्देवं यथा विभवविस्तरैः संस्कृत्यैवं बुधो मालां तत्प्राणांस्तत्र स्थापयेत् । मूलमन्त्रेण तां मालां पूजयेद्द्विजसत्तम ॥ एवं या संस्कृता माला जपकर्म्मणि सर्व्वदा । अभीष्टफलदाऽत्यर्थं सा सर्वाघविनाशिनी ॥ मध्यमानामिकाङ्गुष्ठैरक्षमालामणीशतैः । एवं जपस्य चैकस्य क्रमोऽयं चालयेज्जपेत् ॥" मालासंस्कारस्य नित्यतामाह ( रुद्रयामले ) "अप्रतिष्ठितमालाभिर्मन्त्रं जपति यो नरः । सर्वं तद्विफलं विद्यात् क्रुद्धा भवति देवता ॥ " ( वैशम्पायनसंहितायाम् ) "अङ्गुष्ठमध्यमाभ्यां च चालयेन्मध्यमध्यतः । तर्जन्या न स्पृशेदेनां मुक्तिदो गणनक्रमः ॥ जीर्णे सूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् । प्रमादात्पतिता हस्ताच्छतमष्टोत्तरं जपेत् ॥ जपेन्निषिद्धसंस्पर्शे क्षालयित्वा यथोदितम् ॥" मालास्थापनार्थं गोमुखीमाह (आचारार्के वृद्धमनुः)–"वस्त्रेणाच्छादितकरं दक्षिणं यः सदा जपेत्।तस्य

स्यात्सफलं जाप्यं तद्धीनमफलं स्मृतम् ॥ भूतराक्षसवेतालाः सिद्धगन्धर्वचारणाः । हरन्ति प्रकटं यस्मात्तस्माद्गुप्तं जपेत्सुधीः"॥ अथा क्षमालाभावे करमालानिरूपणम् ( पुरश्चरणदीपिकायाम् ) "अलाभे जपमालायाः करशाखासु पर्वभिः । अनामिकाया यो मध्य स्तस्मादधः क्रमेण तु ॥ मध्याङ्गुल्यग्रपर्वादिप्रादक्षिण्यक्रमेण तु । तर्जन्यादौ जपान्तश्च अक्षमाला करे स्थिता ॥" ( सनत्कुमारसंहितायामपि ) "तर्जनी मध्यमाऽनामा कनिष्ठा चेति ताः क्रमात् । तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैकपर्विका ॥" पर्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत् । अनामामध्यमारभ्य कनिष्ठादित एव च ॥ तर्जनीमूलपर्य्यन्तं दशपर्वसु संजपेत् । अङ्गुलीर्न वियुञ्जीत किंचिदाकुञ्चिते तले ॥ अङ्गुलीनां वियोगाच्चच्छिद्रे च स्रवते जपः ॥ अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने । पर्वसंधिषु यज्जप्तं तत्सर्व्वं निष्फलं भवेत् ॥ गणनाविधिमुल्लङ्घ्य यो जपेत्तज्जपं यतः । गृह्णन्ति राक्षसास्तेन गणयेत्सर्वथा बुधः ॥ हृदये हस्तमारोप्य तिर्य्यक्कृत्वा कराङ्गुलीः । आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत् ॥" अथ जपे कर्त्तव्यतामाह ( योगियाज्ञवल्क्यः ) "जपस्याहं विधिं वक्ष्ये यथाकार्यं विधानतः ॥ न चङ्क्रमन्न प्रहसन्न पार्श्वमवलोकयन् ॥ नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा । न पदा पादमाक्रम्य न चैव हि तथा करौ ॥ नैवंविधं जपं कुर्य्यान्न च संश्रावयञ्जपेत् । तिष्ठंश्चेद्वीक्षमाणोऽर्कमासीनः प्राङ्मुखो जपेत् ॥ प्रागग्रेषु कुशेष्वेवमासीनश्चासने जपेत् । जपस्त्वेवं हि कर्त्तव्य एकाग्रमनसापि च ॥ धारयेन्मनसा मन्त्रान्न जिह्वोष्ठौ विचालयेत् । न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत् ॥ यक्षराक्षसभूतानि सिद्धविद्याधरास्तथा । हरन्ति प्रसभं यस्मात्तस्माद्गुप्तं समाचरेत्"॥ ( अग्निपुराणेऽपि ) "नोच्चैर्जपं बुधः कुर्य्यान्नीचैः कुर्य्यादतन्द्रितः । समाहितमनास्तूष्णीं मनसा वापि चिन्तयेत्"॥ ( अत्रिरपि ) "ध्वनिर्घोषविकारेण निःश्वासोपांशुलक्षणः । निर्विकारेण वक्त्रेण मनसा मानसः स्मृतः"॥ ( जपप्रशंसायां योगियाज्ञवल्क्यः ) "विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥ ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः । सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥" अथ पुरश्चरणादिषु जपकर्त्तॄणां भक्ष्यादिनियमाः ( तन्त्रसारे गौतमीये च ) "पुरश्चरणकृन्मन्त्री भक्ष्याभक्ष्यं विचारयेत् । अन्यथा भोजनाद्दोषात्सिद्धिहानिः प्रजायते ॥ शतान्नं च समश्नीयान्मन्त्रसिद्धिसमीहया ॥ तस्मान्नित्यं प्रयत्नेन शतान्नाशी भवेन्नरः ॥" ( शारदातिलकेऽपि ) "भैक्ष्यं हविष्यं शाकानि विहितानि फलं पयः । मूलं सक्तुर्यवोत्पन्नो भक्ष्याण्येतानि मन्त्रिणाम्" ॥ ( पुरश्चरणदीपिकायां गौतमीये च ) "चरुमूलफलक्षीरदधिभिक्षान्नसक्तवः । शाकश्चाष्टविधं चान्नं साधकस्योच्यते बुधैः" ॥ ( नारदीये ) मृदु सोष्णं सुपक्वं च कुर्याद्वै लघुभोजनम् । नेन्द्रियाणां विकारः स्यात्तथा भुञ्जीत साधकः॥ यद्वातद्वा परित्याज्यं दुष्टान्नं कुत्सितं फलम् । प्रशस्तान्नं समश्नीयान्मन्त्रसिद्धिसमीहया ॥ पयोव्रतस्य सिद्धिः स्याल्लक्षेणैव न संशयः ( ग्रन्थान्तरेऽपि ) "क्षीराहारः फलाशी वा शाकाशी वा हविष्यभुक् । भिक्षाशी वा जपेन्मन्त्रं कृच्छ्रचान्द्रायणादिकृत् ॥ श्रुतिस्मृतिविरोधं च जपं रात्रौ विवर्जयेत् । भूशय्या ब्रह्मचारित्वं मौनचर्यानसूयता ॥ लवणं क्षारमाम्लं च व्यञ्जनं कांस्यभोजनम् । ताम्बूलं च द्विभुक्तं च दुःसंवादं प्रमत्तताम् ॥ नित्यं त्रिषवणं स्नानं क्षुद्रकर्म्मविवर्जनम् । नित्यदानं नित्यपूजा देवतास्तुतिकीर्त्तनम् ॥

नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः। जपनिष्ठा द्वादशैते धर्माः स्युर्मन्त्रसिद्धिदाः॥ नित्यं सूर्यमुपस्थाय तस्य चाभिमुखो यजेत्। देवतां प्रतिमादौ वा वह्नौ वाऽभ्यर्च्य तन्मनाः॥ अनिर्वेदनया व्यग्रः शास्त्रोक्ताचारपालकः॥ स्नानपूजाजपध्यानहोमतर्पणतत्परः। निष्कामो देवतानां च सर्वकर्म्मनिवेदकः॥ एवमादींश्च नियमान् पुरश्चरणके चरेत्॥" (पुरश्चरणदीपिकायाम्) "क्षारं च लवणं मांसं गृञ्जनं कांस्यभोजनम्। माषाढकीमसूरांश्च कोद्रवांश्चणकानपि॥ अन्नं पर्युषितं चैव निःस्नेहं कीटदूषितम्। असद्भाषणमन्यायं वर्जयेदन्यपूजनम्। विना श्रमोचितं किंचिन्नित्यनैमित्तिकं चरेत्॥ स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम्। असत्यभाषणं चैव कौटिल्यं च परित्यजेत्॥ सद्भिरपि न भाषेत जपहोमार्चनादिषु। वाग्यतः कर्म्म निर्वर्त्य निःस्पृहो वर्त्तितादिषु॥ वर्जयेद्गीतकाव्यादिश्रवणं नृत्यदर्शनम्। परान्नं च परद्रव्यं तथैव तु प्रतिग्रहः॥ परस्त्रीं परनिन्दां च मनसापि विवर्जयेत्। जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात्। परस्त्रीभिर्मनो दग्धं मन्त्रसिद्धिः कथं भवेत्॥" (रामार्चनचंद्रिकायाम्) मैथुनं तत्कथालापं तद्गोष्ठीः परिवर्जयेत्। ऋतुकालं विनामन्त्री स्वस्त्रियं नैवगच्छति॥" (तथा) "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च॥ एतन्मैथुनमष्टाङ्गं प्रवदंति मनीषिणः। कौटिल्यं क्षौरमभ्यंगमनिवेदितभोजनम्। असंकल्पितकृत्यं च वर्जयेन्मर्दनादिकम्। स्नायाच्च पञ्चगव्येन केवलामलकेन वा। श्रुतिस्मृतिपुराणोक्तैर्मन्त्रैः स्नायान्निरन्तरम्॥ मन्त्रजपान्नपानीयैः स्नानाचमनभोजनम्। स्नानं त्रिषवणं प्रोक्तमशक्तो द्विः सकृत्तथा॥ अस्नातस्य फलं नास्ति न चातर्पयतः पितॄन्। अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा। प्रलपन्प्रजपेद्यावत्तावन्निष्फलमुच्यते"॥ (तन्त्रसारेऽपि) "सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत्। प्रोक्ते पारशवे शब्दे प्राणायामं सकृच्चरेत् बहुप्रलापी आचम्य न्यस्यांगानि ततो जपेत्। क्षुतेऽप्येवं तथाऽऽस्पृश्य स्थानानां स्पर्शनेन च॥ एवमादींश्च नियमान्पुरश्चरणकृच्चरेत्॥ विण्मूत्रोत्सर्गशङ्कादियुक्तः कर्म्म करोति यत्। जपार्चनादिकं सर्वमपवित्रं भवेत्प्रिये॥ मलिनांबरकेशादिमुखदौर्गन्ध्यसंयुतः॥ यो जपेत्तं दहत्याशु देवता गुप्तिसंस्थिता॥ आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम्। नीचांगस्पर्शनं कोपं जपकाले विवर्जयेत्॥ एवमुक्तविधानेन विलम्बत्वरितं विना। उक्तसंख्यं जपं कुर्यात्पुरश्चरणसिद्धये॥ देवतागुरुमन्त्राणामैक्यं सम्भावयन्धिया। जपेदेकमनाः प्रातःकालं मध्यंदिनावधि॥ यत्संख्यया समारब्धं तज्जप्तव्यं दिनेदिने। यदि न्यूनाधिकं कुर्याद्व्रतभ्रष्टो भवेन्नरः॥ कृते जपस्तु कल्पोक्तस्त्रेतायां द्विगुणो मतः। द्वापरे त्रिगुणः प्रोक्तश्चतुर्गुणजपः कलौ॥" (वैशम्पायनसंहितायाम्) "पतितानामन्त्यजानां दर्शने भाषणे श्रुते। क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत्॥ तथा तस्य च तत्प्राप्तौ प्राणायामं षडङ्गकम्। कृत्वा सम्यग्जपेच्छेषं यद्वा सूर्यादिदर्शनम्॥उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गणावृतः। अपवित्रकरोऽशुद्धः प्रलपन्न जपेत्क्वचित्॥" (तन्त्रसारे) "अनासनः शयानो वा गच्छन्भुञ्जान एव वा। अप्रावृतौ करौ कृत्वा शिरसा प्रावृतोऽपि वा॥ चिन्ताव्याकुलचित्तो वा क्षुब्धो भ्रान्तः क्षुधान्वितः। रथ्यायामशिवस्थाने न जपेत्तिमिरालये॥ उपानद्गूढपादो वा यानशय्यागतोऽपि वा। प्रसार्य्य न जपेत्पादावुत्कटासन

एव च ॥ न यज्ञकाष्ठे पाषाणे न भूमौ नासने स्थितः ॥ " (तत्रैव) "मनः संहृत्य विषयान्मन्त्रार्थगतमानसः। न द्रुतं न विलम्बं च जपेन्मौक्तिकपङ्क्तिवत् ॥ उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः। जिह्वोष्ठौ चालयेत्किंचिद्देवतागतमानसः ॥ किंचिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ॥ मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः। जिह्वाजपः शतगुणः साहस्रो मानसः स्मृतः। जिह्वाजपः स विज्ञेयः केवलं जिह्वया बुधः" ॥ (मन्त्रमहोदधौ) "आग्रध्याह्नं जपं कुर्य्यादुपांशु वाथ मानसम्। हविष्यं निशि भुंजीत त्रिः स्नाय्यभ्यङ्गवर्जितः ॥ व्यग्रताऽऽलस्यनिष्ठीवक्रोधपादप्रसारणम्। अन्यभाषान्त्यजेक्षे च जपकाले त्यजेत्सुधीः ॥ स्त्रीशूद्रभाषणं निन्दां तांबूलं शयनं दिवा। प्रतिग्रहं नृत्यगीते कौटिल्यं वर्जयेत्सदा ॥ भूशय्या ब्रह्मचर्य्यं च त्रिकालं देवतार्चनम्। नैमित्तिकार्चनं देवस्तुतिं विश्वासमाश्रयेत् ॥ प्रत्यहं प्रत्यहं तावन्नैव न्यूनाधिकं क्वचित्। एवं जपं समाप्यान्ते दशांशं होममाचरेत्" ॥ (पुरश्चरणचन्द्रिकायामपि) "ततो जपदशांशेन होमं कुर्य्याद्दिनेदिने। अथवा लक्षसंख्यायां पूर्णायां होममाचरेत्"॥ (गौतमीये तन्त्रसारे च) "जपान्ते प्रत्यहं मन्त्री होमयेत्तद्दशांशतः। तर्पणं चाभिषेकं च तत्तद्दशांशतो मुने ॥ प्रत्यहं भोजयेद्विप्रान्न्यूनाधिकप्रशान्तये। अथवा सर्वपूर्त्तौ च होमादिकमथाचरेत ॥ संपूर्णायां प्रतिज्ञायां तर्पणादिकमाचरेत् ॥" होमाद्यशक्तौ तु (सनत्कुमारसंहितायाम्)-"यद्यदङ्गं भवेद्भग्नं तत्संख्या द्विगुणो जपः। होमाभावे जपः कार्य्यो होमसंख्याचतुर्गुणः ॥ विप्राणां क्षत्रियाणां च रससंख्यागुणः स्मृतः। वैश्यानां वसुसंख्याकमेषां स्त्रीणामयं विधिः ॥" अत्राप्यशक्तश्चेत्तद्व्यवस्था (योगिनीहृदये) "होमकर्मण्यशक्तानां विप्राणां द्विगुणो जपः। इतरेषां तु वर्णानां त्रिगुणादिः समीरितः" ॥ (वासिष्ठे तु) "यद्यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः। कर्तव्यश्चाङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः ॥ विप्रभोजनमात्रेण व्यङ्गं साङ्गं भवेद्ध्रुवम्। यत्र भुङ्क्ते द्विजस्तस्मात्तत्र भुङ्क्ते हरिः स्वयम्॥" इति जपकृत्यविचारः॥ अथ स्मार्ताह्निककृत्यविचारः (दक्षस्मृतौ) "प्रातरुत्थाय कर्तव्यं यद्द्विजेन दिनेदिने। तत्सर्वं संप्रवक्ष्यामि द्विजानामुपकारकम् ॥" (बृहन्नारदीये) ब्राह्मे मुहूर्ते चोत्थाय परं ब्रह्म विचिंतयेत। ततो व्रजेन्नैर्ऋताशां बृहत्सोदकभाजनः ॥ ग्रामाद्दूरतरं गच्छेत्सदाचारस्य सेवकः ॥ दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ॥ अंतर्धाय तृणं भूमिं शिरः प्रावृत्य वाससा। वक्त्रान्नियम्य यत्नेन नो ष्ठीवेन्नोच्छ्वसेदपि। कुर्यान्मूत्रं पुरीषं च रात्रौ चेद्दक्षिणामुखः। छायायामन्धकारे वा रात्रावहनि वा द्विजः ॥ यथासुखं प्रकुर्वीत प्राणबाधाभयेषु च ॥ गृहीतशिश्नश्चोत्थाय गृहीतशुचिमृत्तिकः। गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ एका लिङ्गे गुदे पंच त्रिर्वामे दश चोभयोः। द्विसप्त पादयोश्चैव गार्हस्थ्यं शौचमुच्यते ॥ ततः षोडश गण्डूषान्प्रकुर्याद्द्वादशैव वा। मूत्रोत्सर्गे तु गण्डूषानष्टौ वा चतुरो गृही ॥ उत्थाय नेत्रे प्रक्षाल्य दन्तकाष्ठं समाहरेत्। आपामार्गं बादरं वा द्वादशाङ्गुलमव्रणम्॥कनिष्ठाङ्गुलिवत्स्थूलं पूर्वार्द्धे कृतकूर्चकम्। शुचिर्द्वादशगण्डूषैर्निषिद्धं भानुवासरे ॥ आचम्य प्रयतः सम्यक् प्रातःस्नानं समाचरेत्। स्नानादनन्तरं तावत्तर्पयेत्तीर्थदेवताः ॥ समुद्रगानदीस्नानमुत्तमं परिकीर्तितम्। वापीकूपतडागेषु मध्यमं कथितं बुधैः ॥ गृहे स्नानं तु

सामान्यं गृहस्थस्य प्रकीर्तितम् ॥ ततश्च वाससी शुद्धे शुक्ले च परिधाय च। उत्तरीयं सदा धार्यं ब्राह्मणेन विजानता ॥ उप
विश्य शुचौ देशे प्राङ्मुखो वा उदङ्मुखः। भूत्वा बद्धशिखः कुर्यादन्तर्जानु भुजद्वयम् ॥ सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रं तु भुक्त्वोच्छिष्टं तु वर्जयेत् ॥ आचम्य तिलकं कुर्याच्चन्दनेनाथ भस्मना । ऊर्ध्वं पुण्ड्रं त्रिपुण्ड्रं वा मध्ये छिद्रं
प्रकल्पयेत् ॥ निवसत्यूर्ध्वपुण्ड्रे तु श्रिया सह हरिः स्वयम् । त्रिपुण्ड्रे धूर्जटिः साक्षादुमया सह सर्वदा ॥ विना छिद्रं तु तत्पुण्ड्रं शुनः
पादसमं विदुः ॥ श्वेतं ज्ञानकरं प्रोक्तं रक्तं वश्यकरं नृणाम् । पीतं सर्वार्द्धिदं प्रोक्तमन्यत्तु परिवर्जयेत् ॥ प्राणायामं ततः कृत्वा संध्याव
न्दनमाचरेत् । पूर्वसंध्यां सनक्षत्रामुपासीत यथाविधि ॥ गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम् । सावित्रैरनघैर्मन्त्रैरुपस्थाय कृता
ञ्जलिः ॥ यस्तु संध्यामुपासीत श्रद्धया विधिवद्द्विजः । न तस्य किंचिद्दुष्प्राप्यं त्रिषु लोकेषु विद्यते ॥ दिवसस्यादिमे भागे कृत्य
मेतदुदीरितम् । ततोऽधिकनिमित्तं वै विष्णुपूजनमाचरेत् ॥ ततो माध्याह्निकीं संध्यां तिलतर्पणमाचरेत् । ततः पंचमहायज्ञान्कु
र्याद्भूतबलिं ततः ॥ द्वारावलोकनं कुर्यादतिथिग्रहणाय च । गोदोहकालमात्रं तु भाग्यात्प्राप्तेऽतिथौ यदि ॥ तोषयेत्परया भक्त्या
यथाशक्त्यन्नपानतः ॥ ततश्च भोजनं कुर्यात्प्राङ्मुखो मौनमास्थितः । प्रशस्तशुद्धपात्रे च भुञ्जीतान्नमकुत्सयन् ॥ भोजना
त्किंचिदन्नाग्र्यमादायैवं समुच्चरेत् । नमो भूपतये पूर्वं भुवनपतये नमः ॥ भूतानां पतये पश्चाद्धर्माय च ततो बलिम् । दत्त्वा च
चित्रगुप्ताय भूतेभ्य इदमुच्चरन् ॥ प्राणायापानसंज्ञाय व्यानाय च ततः परम् ॥ उदानाय ततो ब्रूयात्समानाय ततः परम् ॥ प्रणवं
पूर्वमुच्चार्य स्वाहा चान्ते घृतप्लुतम् । पञ्चकृत्वो ग्रसेदन्नं जिह्वया नतु दर्शयेत् ॥ ततश्च तन्मना भूत्वा भुञ्जीत मधुरं पुरः । लव
णाम्लौ तथा मध्ये कटुतिक्तौ ततः परम्॥प्राग् द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिनाशनम् । अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ॥
नाद्याच्छास्त्रविरुद्धं तु भक्ष्यं भोज्यादिकं द्विजः । अभोज्यं प्राहुराहारं शुष्कं पर्युषितं तथा ॥ सर्वं सशेषमश्नीयाद्घृतपायसवर्जितम्।
आचम्य पात्रमुत्सार्य किंचिद्द्रावेण पाणिना॥ततः. परं समुत्थाय बहिः स्थित्वा समाहितः । शोधयन्मुखहस्तौ च मृदा शुद्धजलेन
च ॥ कृत्वा षोडश गण्डूषान् शुद्धो भूत्वा सुखासनः । इमौ मन्त्रौ पठन्नेव पाणिनोदरमालभेत् ॥ अगस्त्यं कुम्भकर्णं च शनिं च वड
वानलम् । आहारपरिपाकार्थं स्मरेद्भीमं च पंचमम् ॥ आतापी मारितो येन वातापी च निपातितः समुद्रः शोषितो येन स
मेऽगस्त्यःप्रसीदतु ॥ भूयोऽप्याचम्य कर्तव्यं ततस्ताम्बूलभक्षणम् । भुक्तोपविष्टः श्रीकृष्णं परं ब्रह्म विचारयेत् ॥ सच्छास्त्रादिविनो
देन सन्मार्गाद्यविरोधिना । ततश्चाध्यात्मविद्यायाः कुर्वीत श्रवणं सुधीः ॥ सर्वथा वृत्तिहीनोऽपि मुहूर्त्तं स्वस्थमानसः । श्रुत्वा धर्म्मं
विजानाति श्रुत्वा पापं परित्यजेत् ॥ श्रुत्वा निवर्तते मोहः श्रुत्वा ज्ञानामृतं लभेत् ॥ नीचोऽपि श्रवणेनाशु श्रेष्ठत्व प्रतिपद्यते ॥
श्रेष्ठोऽपि नीचतां याति रहितःश्रवणेन च । व्यवहारं ततः कुर्याद्बहिर्गत्वा यथासुखम् ॥ सूर्येऽस्तशिखरं प्राप्ते तीर्थं गत्वाथवा गृहम्॥
सायंसन्ध्यामुपासीत धौताङ्घ्रिः सपवित्रकः ॥ यस्त्रिसंध्यमुपासीत ब्राह्मणः श्रद्धयान्वितः ॥ तत्तेजो वर्धते नित्यं घृतेनेव हुताशनः॥
सादित्यां पश्चिमां संध्यामर्द्धास्तमितभास्कराम् । प्रत्यङ्मुखोपविष्टस्तु वाग्यतः सुसमाहितः ॥ प्रणवव्याहृतियुतां गायत्रीं तु जपे

ततः । अक्षसूत्रं समादाय सम्यगातारकोदयात् ॥ उपास्य पश्चिमां संध्यां हुत्वाग्निमश्नीयात्ततः।सायंप्रातर्वैश्वदेवः कर्तव्यो बलिकर्म्म च ॥ अनश्नतापि सततमन्यथा किल्बिषी भवेत् । कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही ॥ गच्छेच्छय्यां ततो मृद्वीमुपधानसमन्विताम् । स्वगृहे प्राक्शिराः शेते श्वाशुरे दक्षिणाशिराः॥ प्रवासे पश्चिमशिरा न कदाचिदुदक्शिराः ॥ रात्रिसूक्तं जपेत्स्मृत्वा देवांश्च सुखशायिनः । नमस्कृत्वाऽव्ययं विष्णुं समाधिस्थं स्वपेन्निशि ॥ अगस्त्यो माधवश्चैव मुचुकुन्दो महाबलः । कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥ माङ्गल्यं पूर्णकुम्भं च शिरःस्थाने निधाय च॥ वैदिकैर्गारुडैर्मन्त्रै रक्षां कृत्वा स्वपेत्ततः ॥ ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा ॥ पर्ववर्ज्जं व्रजेदेनां तद्व्रती रतिकाम्यया ॥ प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पयेत् ॥ अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् । शमो दानं यथाशक्ति गार्हस्थ्यो धर्म उच्यते॥ परदारेष्वसंसर्गो धर्मस्त्रीपरिरक्षणम् । अदत्तादानविरमो मधुमांसविवर्जनम् ॥ एष पञ्चविधो धर्मो बहुशाखः सुखोदयः । देहिभिर्देहपरमैः कर्तव्यो देहसंभवः"॥(ब्रह्मपुराणे) "इत्येतदखिलं प्रोक्तमहोरात्राश्रितं मया । ब्राह्मणानां कृत्यमेतदपवर्गफलप्रदम् ॥ नास्तिक्यादथवाऽऽलस्याद्ब्राह्मणो न करोति यः । स याति नरकं घोरं पशुयोनौ च जायते" ॥ इत्याह्निककृत्यविचारः ॥ अथ देवपूजायां विशेषः । ( शारदातिलके) "विशेन्मृद्वासने मन्त्री प्राङ्मुखो वाप्युदङ्मुखः । बद्धपद्मासनो मौनी समाहितजितेंद्रियः ॥ स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि देशिकः"॥ ( भविष्यदेवीपुराणयोः )"शुचिः शुक्लवस्त्रधृक् प्राज्ञो मौनी ध्यानपरायणः।गतकामभयद्वन्द्वो रागमात्सर्य्यवर्जितः॥आत्मानं पूजयित्वा च सुगन्धसितवाससा । सुमुहूर्त्ते यजेद्देवान्स्वकीयासनसंस्थितान्" ॥ इति। सुमुहूर्ते पूर्वाह्णादिकाले । 'पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम्' इति मनुवाक्यात्॥ ( कामनाभेदेन देवार्चनं मत्स्यपुराणे ) आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् । ज्ञानं च शंकरादिच्छेन्मुक्तिमिच्छेज्जनार्दनात् " ॥ कालविशेषे देवतापूजा ( स्कान्दे ) " ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः । द्वापरे भगवान्विष्णुः कलौ देवो महेश्वरः॥"देवार्चनकालः ( मात्स्ये )"प्रातर्मध्यंदिने सायं देवपूजां समारभेत् । अशक्तौ विस्तरेणैव प्रातः संपूज्य केशवम् ॥ मध्याह्ने चैव सायं च पुष्पाञ्जलिमपि क्षिपेत् ॥" देवताप्रतिमाविचारो (मात्स्ये) "सौवर्णी राजती वापि ताम्री रत्नमयी तथा। शैली दारुमयी वापि लोहसंवमयी तथा ॥(लोहसंवमयी मिलितपंचधातुमयी) "अङ्गुष्ठपर्वादारभ्य वितस्तिं यावदेव तु। गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः॥" पूजोपचाराः ( प्रपंचसारे ) "आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्। मधुपर्काचमनस्नानवसनाभरणानि च ॥ सुगंधिसुमनोधूपदीपनैवेद्यवन्दनम् । प्रयोजयेदर्चनायामुपचारांश्च षोडश ॥ अर्घ्यपाद्याचमनकमधुपर्कांचमनान्यपि । गन्धादयो निवेद्यान्ता उपचारा दश क्रमात्॥गन्धादयो निवेद्यान्ताः पूजाः पंचोपचारिकाः । उपचारैर्यथाशक्ति देवतामन्वहं यजेत् ॥"( कर्मप्रदीपेऽपि ) "आवाहनासनं पाद्यमर्घ्यमाचमनीयकम् । स्नानं वस्त्रोपवीतं च गन्धमाल्यान्यनुक्रमात् ॥ धूपं दीपं च नैवेद्यं ताम्बूलं च प्रदक्षिणा । पुष्पाञ्जलिरिति प्रोक्ता उपचारास्तु षोडश॥फलेन सुफलावाप्तिः सांगता दक्षिणार्पणात्॥गन्धपुष्पे धूपदीपौ नैवेद्य मिति पञ्चकम्॥पञ्चोपचारमाख्यातं पूजने तत्त्वविद् बुधैः॥" राजोपचाराः-'ततः पञ्चामृताभ्यङ्गमङ्ग

स्योद्वर्तनं तथा । मधुपर्कं परिमलद्रव्याणि विविधानि च ॥ पादुकान्दोलनादर्शं व्यजनं छत्रचामरे ॥ वाद्यार्तिक्यं नृत्यगीतशय्या राजोपचारकाः ॥ " पुरुषसूक्तेन षोडशोपचारपूजामन्त्राः ( बृहत्पाराशरसंहितायाम् )–"आद्ययाऽवाहयेद्देवमृचा तु पुरुषोत्तमम् । द्वितीययासनं दद्यात्पाद्यं चैव तृतीयया ॥ अर्घ्यश्चतुर्थ्या दातव्यः पञ्चम्याऽचमनं तथा । षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रधौतकम् ॥ यज्ञोपवीतं चाष्टम्या नवम्या गन्धमेव च । पुष्पं देयं दशम्या तु एकादश्या च धूपकम् ॥ द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनम् । चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणा ॥ षोडश्योद्वासनं कुर्याच्छेषकर्मणि पूर्ववत् । तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमेव च ॥ " ( योगियाज्ञवल्क्यः )–" दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥ " पञ्चामृतपूजामन्त्राः ( शिवपुराणे )–"पूजयेत्परया भक्त्या ह्युपचारैरनेकशः । प्रयोगादि विधायैव कामनां विनियुज्य च ॥ पञ्चद्रव्यैश्च प्रथमं पूजनीयो महेश्वरः । दुग्धं दधिमधुसर्पिःशर्कराणां क्रमेण च ॥ तस्य तस्य च मन्त्रेण तत्तद्द्रव्यं समर्पयेत् ॥ " इति । तस्य तस्य मन्त्रेण पयः पृथिव्याम् इत्यादिदुग्धादिमन्त्रेण इत्यर्थः । स्नानादिपात्रेषु प्रक्षेपणीयाः पदार्थाः ( मन्त्रतन्त्रप्रकाशे ) " अक्षता गन्धपुष्पाणि स्नानपात्रे तथा त्रयम् । द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः ॥" पाद्यपात्रम् ( शारदातिलके ) " दूर्वां च विष्णुक्रान्तां च श्यामाकं पद्ममेव च । पाद्याङ्गानि च चत्वारि कथितानि समासतः ॥" अर्घ्यद्रव्याणि ( तत्रैव )"गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः । सदूर्वैः सर्वदेवानामेतदर्घ्यमुदीरितम् ॥ " ( भविष्येऽपि ) " आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा । यवाः सिद्धार्थकाश्चैव अर्घ्योऽष्टाङ्गः प्रकीर्तितः ॥ " आचमनीयद्रव्याणि–"कर्पूरमगुरुं पुष्पं दद्याज्जातीफलं मुने । लवङ्गमपि कङ्कोलं शस्तमाचमनीयके ॥" मधुपर्कद्रव्याणि–"सुधाणुना ततः कुर्यान्मधुपर्कं मुखाम्बुजे । आज्यं दधिमधून्मिश्रमेतदुक्तं मनीषिभिः ॥ तेनैव मनुना कुर्यादद्भिराचमनीयकम् ॥ " पञ्चाऽमृतम्–"गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । एकत्र मिलितं ज्ञेयं दिव्यं पञ्चामृतं परम् ॥ " पञ्चगव्यम्–"पञ्चगव्यं पवित्रं तु आहरेत्ताम्रभाजने । गायत्र्या चैव गोमूत्रं गन्धद्वारेण गोमयम् ॥ आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि । तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ॥ एभिश्च पञ्चद्रव्यैस्तु पञ्चगव्यं प्रचक्षते ॥ " ( विष्णुधर्मे ) " गोमूत्रं भागतश्चार्द्धं शकृत्क्षीरस्य च त्रयम् । द्वयं दध्नो घृतस्यैकमेकश्च कुशवारिजः ।"स्नानम्–"गन्धाद्भिः कारयेत्स्नानं वाससी परिधापयेत् । दद्याद्दिव्योपवीतं च हाराद्याभरणैः सह ॥"उद्वर्तनद्रव्याणि "रजनी सहदेवी च शिरीषं लक्ष्मणापि च । सहभद्रा कुशाग्राणि उद्वर्तनमिहोच्यते ॥" सौभाग्यद्रव्याणि–"हरिद्रा कुङ्कुमं चैवसिन्दूरादिसमन्वितम् । कज्जलं कंठसूत्रादि सौभाग्यद्रव्यमुच्यते ॥" कौतुकद्रव्याणि ( भविष्ये ) "दूर्वा यवाङ्कुराश्चैव बालकं चूतपल्लवाः । हरिद्राद्वयसिद्धार्थं शिखिपत्रोरगत्वचः ॥ कङ्कणौषधयश्चैताः कौतुकाख्या दश स्मृताः ॥ " गन्धानुलेपनविचारः (कालिकापुराणे) " चूर्णीकृतो वा घृष्टो वा दाहकर्षित एव वा । रसः संमर्दजो वापि प्राण्यङ्गोद्भव एव वा ॥ गन्धः पञ्चविधः प्रोक्तो देवानां प्रीतिदा

१ सर्षपाः । २ अमृतबीजेन । ३ गोमयम् । ४ हरिद्रा । ५ ह्रीवेरम् । ६ आम्रपल्लवाः । ७ सर्षपम् । ८ मयूरपिच्छम् । ९ सर्पकञ्चुकी । १० कस्तूरी ।

यकः ।"( गंधलक्षणानि ) गंधचूर्णं गंधपत्रचूर्णं सुमनसां तथा । प्रशस्तगंध उक्तानि पत्रचूर्णानि यानि च ॥ तानि गंधाह्वयानि स्युः स गन्धः प्रथमः स्मृतः ॥ घृष्टो मलयजो गन्धः सरलश्च नमेरुणा । अगुरुप्रभृतिश्चापि यस्य पङ्कः प्रदीयते ॥ घृष्ट्वा स घृष्टो गन्धोऽयं द्वितीयः परिकीर्तितः ॥ देवदार्वगुरुब्रह्मसालसारान्तचन्दनाः । प्रियादीनां च यो दग्ध्वा गृह्यते दाहजो रसः ॥ स दाहकर्षितो गन्धस्तृतीयः परिकीर्तितः ॥ स गन्धः कौरवी बिल्वं गन्धिनी तिलकं तथा । प्रभृतीनां रसो योऽसौ निष्पीड्य परिगृह्यते ॥ स संमर्दोद्भवा गन्धः संमर्दज इतीर्यते ॥ मृगनाभिसमुद्भूतस्तत्कोशोद्भव एव च । गन्धः प्राण्यङ्गजः प्रोक्तो मोददः स्वर्गवासिनाम् ॥ सर्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः । तस्मात्सर्वप्रयत्नेन दद्यान्मलयजं सदा ॥"देवभेदेन गन्धास्तत्रैव–"कृष्णागुरुः सकर्पूरः सहितो मलयोद्भवैः । वैष्णवप्रीतिदो गन्धः कामाख्यायाश्च भैरवे ॥ कुङ्कुमागुरुकस्तूरीचन्द्रभागैः समीकृतैः । त्रिपुराप्रीतिदो गन्धस्तथा चण्डचाश्च शम्भुना ॥" (शारदातिलके तु) "गन्धाष्टकं तत्त्रिविधं शक्तिविष्णुशिवात्मकम् । चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः ॥ जटामांसीकपियुताः शक्तेर्गन्धाष्टकं विदुः ॥ चन्दनागुरुह्रीवेरकुष्ठकुङ्कुमसेव्यकाः । जटामांसी मुरमिति विष्णोर्गन्धाष्टकं विदुः ॥ चन्दनागुरुकर्पूरतमालजलकुङ्कुमम् । कुशीतं कुष्ठसंयुक्तं शैवं गन्धाष्टकं विदुः" गन्धदाने अङ्गुलीविचारः–"अनामिकया च देवस्य ऋषीणां च तथैव च । गन्धानुलेपनं कार्यं प्रयत्नेन विशेषतः ॥ पितॄणामर्पयेद्गन्धं तर्जन्या च सदैव हि । तथैव मध्यमाङ्गुल्या धार्यो गन्धः स्वयं बुधैः ॥" गन्धादिदाने मुद्रा–"मध्यमानामिकाङ्गुष्ठैरङ्गुल्यग्रेण पार्वति । दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः ॥ अङ्गुष्ठतर्जनीभ्यां च पुष्पं देवे निवेदयेत् । मध्यमानामिकाभ्यां तु मध्यपर्वणि देशिकः ॥ अङ्गुष्ठाग्रेण देवेशि धृत्वा धूपं निवेदयेत् । उत्तोलनं त्रिधा कृत्वा गायत्र्या मूलयोगतः ॥ तत्त्वाख्यमुद्रया देवि नैवेद्यं विनिवेदयेत् । मूलेनाचमनं दद्यात्तांबूलं तत्त्वमुद्रया ॥" गन्धदाने फलम्–"गन्धेन लभते कामं गन्धो धर्मप्रदः सदा । अर्थानां साधको गन्धो गन्धे मोक्षः प्रतिष्ठितः ॥" (भविष्येऽपि) "चन्दनेन विलिप्यार्चामग्निष्टोमफलं लभेत् । विलिप्य कृष्णागुरुणा वाजपेयफलं लभेत् ॥ " ग्राह्याणि पुष्पाणि ( शारदातिलके ) "कमले करवीरे द्वे कुमुदे तुलसीद्वयम् । जातीद्वयं केतकी द्वे कह्लारं चम्पकोत्पले ॥ कुन्दमन्दारपुन्नागपाटलानागचम्पकम् । आरग्वधं कर्णिकारं पारन्ती नवमालिका ॥ सौगन्धिकं सकोरण्टं पलाशाशोकमल्लिकाः । धत्तूरं सर्जकं बिल्वमर्जुनं मुनिपत्रकम् ॥ अन्यानपि सुगन्धीनि पत्रपुष्पाणि देशिकैः । उपदिष्टानि पूजायामाददीत विचक्षणः ॥ मलिनं भूमिसंस्पृष्टं कृमिकेशादिदूषितम् । अङ्गस्पृष्टं समाघ्रातं त्यजेत्पर्युषितं गुरुः ॥ " ( ग्रन्थान्तरे ) "पङ्कजं पञ्चरात्रं स्याद्दशरात्रं च बिल्वकम् । एकादशाहं तुलसी नैव पर्युषिता भवेत् ॥ जातीशमीकुशाः कङ्कुः मल्लिका करवीरजम् । नागपुन्नागकाशोकरक्तनीलोत्पलानि च ॥ चम्पकं बकुलं चैव पद्मबिल्वं पवित्रकम् । एतानि सर्वदेवानां संग्राह्याणि समानि च ॥ पत्रं वा यदि वा पुष्पं फलं वापि तथैव च । केशवार्थे शिवार्थे वा यथोत्पन्नं तथार्पयेत् ॥ मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत् । अङ्गुष्ठतर्जनीभ्यां तु निर्माल्यमपनोदयेत् ॥ " बिल्वपत्रे विशेषः

१ देवदारु । २ पारसपीपल । ३ सौंफ । ४ तालीसपत्र । ५ कचूर । ६ गोरोचन । ७ रक्तचंदन । ८ उशीर ।

( पटले ) "त्रिजटापत्रकैकेन हेरम्बं हरिमर्चयेत् । कैवल्यं तस्य तेनैव शक्तिपूजा विशेषतः ॥ पत्रं वा यदि वा पुष्पं फलं नेष्टम घोमुखम् । यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम् ॥" देवभेदेन वर्ज्याक्षता नि–"नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपम् ॥ न दूर्वया यजेद्देवीं बिल्वपत्रैर्न भास्करम् ॥ उन्मत्तमर्कपुष्पं च विष्णोर्वर्ज्यं सदा बुधः । फलं च कृमिसंयुक्तं प्रयत्नात्तद्विवर्जयेत् ॥" ( मन्त्रमहोदधौ ) "अक्षतानर्कधत्तूरौ विष्णौ नैवार्पयेत्सुधीः । बन्धूकं केतकीं कुन्दं केशरं कुटजं जपाम् ॥ शंकरे नार्पयेद्विद्वान्मालतीं यूथिकामपि । शक्तौ दूर्वार्कमन्दारान्मालूरं तगरं रवौ ॥ विनायके तु तुलसीं नार्पयेज्जातुचिद्बुधः ॥" ( आह्निकतत्त्वे ) "वर्ज्यं पर्युषितं तोयंवर्ज्यं पर्य्युषितं दलम् । न वर्ज्यं जाह्नवीतोयं न वर्ज्यं तुलसीदलम् ॥ शिवे विवर्जयेत्कुन्दमुन्मत्तं च हरौ तथा । देवी नामर्कमन्दारौ सूर्यस्य तगरं तथा ॥" ( लघुहारीतः ) "स्नानं कृत्वा च ये केचित्पुष्पं गृह्णन्ति वै द्विजाः । देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत्" इति । एतत्तु द्वितीयस्नानाभिप्रायकमिति रत्नाकरः ॥ तथा च ( मत्स्यसूक्तेपि ) "स्नात्वा मध्याह्नसमये न च्छिन्द्यात्कुसुमं नरः । तत्पुष्यस्यार्चने देवि रौरवे परिपच्यते ॥ धूपविचारः ( विष्णुधर्मोत्तरे ) "धूपदः सर्वमाप्नोति दीपदः सर्व मश्नुते ॥" धूपद्रव्याणि ( शारदातिलके ) "अगरूशीरगुग्गुलुशर्करामधुचन्दनैः धूपयेदाज्यसमिश्रैर्नीचैर्देवस्य देशिकः ॥"(ग्रन्थान्तरे) "अगुरु तगरु कुष्ठं शैलजं शर्करा स्यादुभयघनपुरस्ताच्चन्दनैलांश्च साक्षात् । त्वचनखरमुशीरं मांसिकर्पूरतालीसदलजलकचोरं जाति युग् धूपराजः ॥" (तन्त्रसारे) "गुग्गुलुः सरलं दारु पत्रं मलयसंभवम् । ह्रीबेरमगुरुं कुष्ठं गुडं सर्जरसं घनम् ॥ हरीतकीं नखीं लाक्षां जटामांसीं च शैलजम् । षोडशाङ्गं विदुर्धूपं दैवे पित्र्ये च कर्मणि ॥" ( अन्यच्च ) "चन्दनोभयकुष्ठं च नखसर्जः कचोरकः । एतद्गुड समानेन धूपं भवति चोत्तमम् ॥ शर्करा नखगन्धं च जटामांसीलघुः समम् । क्षौद्रेण सह संमिश्रं धूपं भवति चोत्तमम् ॥" ( दशाङ्ग धूपो मदनरत्ने ) "षड्भागकुष्ठं द्विगुणो गुडश्च लाक्षात्रयं पञ्च नखस्य भागाः । हरीतकीसर्जरसं समांशं भागैकमेकं त्रिलवं शिलाजम् । घनस्य चत्वारि पुरस्य चैको धूपो दशाङ्गः कथितो मुनीन्द्रैः ॥" (वामनपुराणे) "रुहिकाख्यं कणं दारु सिह्लकं सागुरुं सितम् । शङ्खं जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै ॥" धूपनिवेदने अङ्गुलीविचारः (तन्त्रसारे) "मध्यमानामिकाङ्गुल्योर्मध्यपर्वणि देशिकः । अङ्गुष्ठाग्रेण देवेशि धृत्वा धूपं निवेदयेत् ॥ ततः समर्प्पयेद्धूपं घण्टावाद्यजयस्वनैः । न भूमौ वितरेद्धूपं नासने न घटे तथा । यथा तथाधारगतं कृत्वा तं विनिवेदयेत् ॥" धूपादिस्थानं ( यामले ) "निवेदयेत्पुरोभागे गन्धं पुष्पं च भूषणम् । दीपं दक्षिणतो दद्यात्पुरतो वा न वामतः ॥ वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे । नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः ॥ धूपदीपौ शुभोज्यं च देवताग्रे निवेदयेत् ॥" दीपविचारः (शारदातिलके) "वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा । आरोप्य दर्शयेद्दीपानुच्चैःसौरभशालिनः ॥" (कालिकापुराणे) "न मिश्रीकृत्य दद्यात्तु दीपं स्नेहे घृतादिकम् ॥ घृतेन दीपकं नित्यं तिलतैलेन वा पुनः ॥ ज्वालयेन्मुनिशार्दूल

१ मोथा । २ एलची । ३ तज । ४ नखनखी । ५ जटामांसी । ६ हावूबेर । ७ कचूर । ८ जावन्त्री । ९ देवदारु । १० कृष्णागरु ।

सन्निधौ जगदीशितुः । कार्पासवर्तिका ग्राह्या न दीर्घा न च सूक्ष्मिका॥'' (आह्निकतत्त्वे) ''सर्वंसहा वसुमती सहते न त्विदं द्वयम् । अकार्य्यपादघातं च दीपतापं तथैव च ॥'' ( कालिकापुराणे ) ''सुवृत्तवर्तिसस्नेहपात्रेऽभग्ने सुदर्शने । मृन्मये वृक्षकोटौ तु दीपं दद्यात्प्रयत्ननः ॥ तैजसं दारवं लौहं मार्त्तिक्यं नारिकेलजम् । तृणध्वजोद्भवं चापि दीपपात्रं प्रशस्यते ॥ नैव निर्वापयेद्दीपं देवार्थमुपकल्पितम् । दीपहर्ता भवेदन्धः काणो निर्वापको भवेत् ॥'' ( वाराहपुराणे ) ''दीपं स्पृष्ट्वा तु यो देवि मम कार्याणि कारयेत । तस्यापराधाद्वै भूमे पापं प्राप्नोति मानवः ॥'' ( यामले ) ''दीपं घृतयुतं रक्षेत्तैलयुक्तं च वामतः ॥ दक्षिणे च सितां वर्तिं वामतो रक्तवर्तिकाम् ॥'' दीपमहिमा-''पुरश्चरणकृत्ये च दीपं शृणिवह भैरव। दीपेन लोकाञ्जयति दीपस्तेजोमयः स्मृतः॥ चतुर्वर्गप्रदो दीपस्तस्माद्दीपैर्यजेच्छ्रिये ॥'' ( विष्णुधर्मोत्तरे ) '' यावदक्षिनिमेषाणि दीपो देवालये ज्वलेत् । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ '' नैवेद्यविचराः ( शारदातिलके ) ''स्वादूपदंशं विमलं पायसं सहशर्करम् । कदलीफलसंयुक्तं साज्यं मन्त्री निवेदयेत् ॥ तत्र तत्र जलं दद्यादुपचारान्तरान्तरम् ॥'' नैवेद्यलक्षणम्-''निवेदनीयं यद्द्रव्य प्रशस्तं प्रयतं तथा ॥ तद्भक्ष्याहं पञ्चविधं नैवेद्यमिति कथ्यते ॥ भक्ष्यं भोज्य च लेह्यं च पेयं चूष्यं च पञ्चमम् ॥ सर्वत्र चैतन्नैवेद्यमाराध्यास्यै निवेदयेत् ॥'' पात्राणि-''तैजसेषु च पात्रेषु सौवर्णे राजते तथा। ताम्रे वा प्रस्तरे वापि पद्मपत्रेऽथ वा पुनः ॥ यज्ञदारुमये वापि नैवेद्यं स्थापयेद्बुधः । सर्वाऽभावे च माहेये स्वहस्तघटिते यदि '' नैवेद्यकालः-''अर्वाग्विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते । विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात् ॥'' ( नैवेद्यस्थापनक्रमो गौतमीये ) '' नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः। दक्षिणं तु परित्यज्य वामे चैव निधापयेत ॥ अभोज्यं तद्भवेदन्नं पानीयं च सुरोपमम् ॥'' ( आह्निकतत्त्वे ) ''तृषार्ताः पशवो रुद्राः कन्यका च रजस्वला। देवता च सनिर्माल्या हन्ति पुण्यं पुरा कृतम् ॥'' ( देवलः ) ''चाण्डालेन शुना वापि दृष्टं हविरयाज्ञिकम् । विडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत् ॥'' ( पद्मपुराणे ) ''हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम् । नैवेद्यं देवदेवाय यावकं पायसं तथा । नैवेद्यवस्त्वलाभे तु फलानि च निवेदयेत् । फलानामप्यलाभे तु तोयान्यपि निवेदयेत् ॥'' नैवेद्यभक्षणविचारः ( कालिकापुराणे ) ''यो यद्देवार्चनरतः स तन्नैवेद्यभक्षकः । केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत ॥ समानं त्वन्यनैवेद्यं भक्षयेदन्यदैवतः ॥ '' शिवनैवेद्ये विशेषः ( भविष्ये ) ''शालग्रामोद्भवे लिंगे वाणलिङ्गे स्वयंभुवि । रसलिंगे तथार्षे च सुप्रसिद्धप्रतिष्ठिते॥हृदये चन्द्रकान्ते च स्वर्णरौप्यादिनिर्मिते । चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम् ॥ लिङ्गे स्वयंभुवे वाणे रत्नजे रसनिर्मिते । सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत् ॥ यत्र चण्डाधिकारोऽस्ति तद्भोक्तव्यं न मानवैः । चण्डाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः ॥'' ( हेमाद्रौ परिशिष्टे ) ''अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलासंगात्सर्वं याति पवित्रताम् ॥ '' ( पुरश्चरणचंद्रिकायाम् ) ''सुषुम्नावर्त्मना पुष्पमाघ्रायोद्वासयेत्सुधीः । निर्माल्यं मस्तके धार्यं सर्वांगेष्वनुलेपनम् ॥ नैवेद्यं चोपभुञ्जीत दत्त्वा तद्भक्तिशालिने ॥'' इति । भक्तिशालिने विष्वक्सेनायेत्यर्थः । तथा च ( गौतमीये ) ''गणेशे वक्रतुण्डाय सूर्ये चंडांशवे

ऽर्पयेत् । विष्णौ तु विष्वक्सेनाय शिवे चण्डेश्वराय च ॥ शक्त्युच्छिष्टं शेसिकायै दद्यादर्चनसिद्धये । अन्यथा नैव सिद्धिः स्यादर्चको नरकं व्रजेत् ॥ " देवनिर्माल्यत्यागे दोषः ( रुद्रयामले ) "निवेदितं च यद् द्रव्यं भोक्तव्यं तद्विधानतः । तन्न चेद्भुज्यते मोहाद्गोलुमायान्ति देवताः ॥" ताम्बूलादिविचारः ( नारदीयपुराणे ) " भोजनानन्तरं देयमद्भिः कर्पूरवासितैः । मध्यमाचमनं मध्ये पानीयं करमार्जनम् ॥ फलं ताम्बूलसहितं दक्षिणां कनकान्विताम् । पुष्पाञ्जलिं ततः कुर्याद्भक्त्याऽऽदर्शं प्रदर्शयेत् ॥ नीराजनं ततः कार्यं कार्पूरं विभवे सति । समर्प्य मुकुटादीनि भूषणं छत्रचामरे॥प्रसादसुमुखं ध्यात्वा कुर्याच्चैव प्रदक्षिणाः। नमस्कारं ततः कुर्यात्साष्टाङ्गं भक्तिपूर्वकम् ॥" नीराजनकरणप्रकारः ( कालोत्तरतन्त्रे ) "पञ्चनीराजनं कुर्य्यात्प्रथमं दीपमालया । द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा ॥ चूताश्वत्थादिपत्रैश्च चतुर्थं परिकीर्त्तितम् । पञ्चमं प्रणिपातेन साष्टाङ्गेन यथाविधि ॥ " ( हरिभक्तिविलासे ) "आदौ चतुष्पादतले च विष्णोर्द्वौ नाभिदेशे मुखमण्डलैकम् । सर्वेषु चाङ्गेष्वपि सप्तवारानारार्त्तिकं भक्तजनस्तु कुर्य्यात् ॥"साष्टाङ्गनमस्कारः–"उरसा शिरसा दृष्ट्या मनसा वचसा तथा। पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग उच्यते॥" नवधा भक्तिः ( भागवते ) "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम्॥ इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा। क्रियते भगवत्यद्धा सोऽपि याति परां गतिम् ॥" निर्माल्यग्रहणविचारः (आह्निकतत्त्वे) "पादोदकं च निर्माल्यं नैवेद्यं च विशेषतः । महाप्रसाद इत्युक्त्वा ग्राह्यं विष्णोः प्रयत्नतः ॥" ( पद्मपुराणे ) " ये पिबन्ति नरा नित्यं शालग्रामशिलोदकम् । प्रक्षालयन्त्यसंदिग्धं ब्रह्महत्यादिपातकम् ॥" (पुलस्त्यः) "शालग्रामशिलावारि सोमपानं दिनेदिने । पात्रान्तरेण संग्राह्यं न करेण कदाचन ॥" शिवलिङ्गे विशेषः ( निर्णयसिन्धौ ) "स्नापयित्वा विधानेन यो लिङ्गस्नापनोदकम् । त्रिःपिबेत्त्रिविधं पापं तस्येहाशु विनश्यति ॥ लिङ्गस्नापनवार्भिर्यः कुर्यान्मूर्ध्न्यभिषेचनम् । गङ्गास्नानफलं तस्य जायतेऽत्र विपाप्मनः ॥ बाणलिङ्गानि राजेन्द्र ख्यातानि भुवनत्रये । न प्रतिष्ठा न संस्कारो न च निर्माल्यकल्पना ॥"प्रदक्षिणाविचारः ( लिङ्गार्चनचन्द्रिकायाम्) "एकां चण्ड्यां रवौ सप्त तिस्रो दद्याद्विनायके । चतस्रो विष्णवे दद्याच्छिवे तिस्रः प्रदक्षिणाः ॥ " शिवप्रदक्षिणायां विशेषः (शिवरहस्ये) "प्रदक्षिणात्रयं कुर्यात्तथा पञ्चदशाथवा । अष्टौ द्वादश वा कार्य्या ह्यधिका वापि शक्तितः ॥ नैकां प्रदक्षिणां कुर्य्यात्साम्बस्य परमात्मनः । एकां प्रदक्षिणां कृत्वा शम्भोः पुण्यात्प्रहीयते ॥ प्रदक्षिणत्रयान्न्यूनं नैव कार्य्यं महेश्वरे । पूजां कृत्वा तु यः शम्भोर्न करोति प्रदक्षिणाम् ॥ सा पूजा निष्फला तस्य पूजकः स च दाम्भिकः ॥ भक्त्या करोति यः सम्यक् केवलं तु प्रदक्षिणाम् । पूजा सर्वा कृता तेन स सम्यक् शिवपूजकः॥"चण्डसोमसूत्रादिसहितशिवपूजायां प्रदक्षिणाविचारः–"एका चण्ड्या रवेः सप्त तिस्रः कार्य्या विनायके । हरेश्चतस्रः कर्तव्याःशिवस्यार्द्धा प्रदक्षिणा ॥ वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम् । चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषम् ॥ ॥ अपसव्यं यतीनां तु सव्यं तु ब्रह्मचारिणाम् । सव्यापसव्यं गृहिणामेवं शम्भोः प्रदक्षिणा ॥ सव्यं व्रजेत्ततोऽसव्यं प्रनालं नैव लङ्घयेत् ॥" आसनाद्युपचारफलम् ( शैवरत्नाकरे ) "आवाहनं तु यो दद्यात्स च क्रतुफलं लभेत्। आसनं रुचिरं दत्त्वा शतक्रतुत्व

माप्नुयात ॥ पाद्येन पातकं हन्यादर्घ्येणाप्नोत्यनर्घताम् । ततश्चाचमनं दत्त्वा सुचित्तः सुखितां व्रजेत ॥ स्नानं व्याधिभयं हन्या द्वस्त्रेणायुष्यवर्द्धनम् । उपवीतं तु यो दद्याद्ब्रह्मवेत्तृत्वमेव च ॥ भूषणानि च यो दद्यादनापद्यमवाप्नुयात् । गन्धेन लभते काममक्षते रक्षतं भवेत् ॥ नानापुष्पप्रदानेन स्वर्गे राज्यमवाप्नुयात ॥ धूपो दहति पापानि दीपो मृत्युविनाशनः ॥ सर्वमानस्तु नैवेद्यं दत्त्वा तृप्तिरतो भवेत् । मुखवासनदानेन कीर्त्तिमान्भवति ध्रुवम् ॥ नीराजनेन शुद्धात्मा दर्पणेन प्रकाशयेत् । फलदः पुत्रवान्मर्त्यस्ताम्बूलात्स्वर्गमाप्नुयात ॥ प्रदक्षिणां तु यः कुर्य्यात्पापं हन्ति पदेपदे । दण्डप्रणामं यः कुर्याद्देवमुद्दिश्य सन्निधौ ॥ वर्षाणि वसते स्वर्गे देहान्ते रेणुसंख्यया ॥ स्तोत्रेण दिव्यदेहोऽपि वाग्मी भवति तत्क्षणात् । पुराणपठनेनैव सर्वपापक्षयो भवेत ॥ " पञ्चामृतस्नानफलम् ( बृहन्नारदीये )"पयःस्नानं प्रकुर्वन्ति ये नरा मम मूर्द्धनि । शताश्वमेधजं पुण्यं बिन्दुना बिन्दुना स्मृतम्॥क्षीरस्नानेन सौभाग्यं दध्ना मिष्टान्नभोजनम् । घृतेन स्नापयेद्यो मां नरो मम पुरं व्रजेत् ॥ स्नानं शर्करया यस्तु कारयेद्वस्त्रपूतया । स राजा जायते लोके पुनः स्वर्गादिह च्युतः ॥ कारयेन्मधुना स्नानं भक्त्या वै मम मूर्द्धनि । गजाश्वरथसंकीर्णं स राज्यं लभते भुवि ॥ स्नापयेद्युर्वेदमन्त्रैर्यै मां पञ्चामृतेन तु । न जातु जननीगर्भे प्रविशन्ति च ते नराः ॥ शङ्खे तीर्थोदकं कृत्वा यः स्नापयति मां नरः । धारया बिन्दुना वापि स्वकुलं तारयेद्धि सः ॥ " ( स्कान्देपि ) " अर्घ्यं कृत्वा तु शङ्खेन यः करोति प्रदक्षिणम् ॥ प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा " इति । एतद्विष्णुपूजायां ज्ञेयम् ॥ महास्नाने पञ्चामृतप्रमाणम् ( हेमाद्रौ शिवधर्मे ) "स्नानं पलशतं ज्ञेयमभ्यङ्गः पञ्चविंशतिः । पलानां द्वे सहस्रे तु महास्नानं प्रकीर्त्तितम् ॥ पञ्चविंशपलं लिङ्गे अभ्यङ्गं कारयेदथ । शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन च ॥ तावता मधुना चैव दध्ना चैव ततः पुनः । तावतैव च क्षीरेण गव्येनैव भवेत्ततः ॥ भूयः सार्द्धसहस्रेण पलानामैक्षवेण च । रसेन कारयेत्स्नानं भक्त्या चोष्णाम्बुना ततः । पुनः शीताम्बुना दत्त्वा वस्त्रपूतेन मन्त्रवित् । स्नापयेद्भक्तितो भूयो गन्धपात्रस्थितेन तु ॥"विष्णवादौ तु ( स्कान्दे ) " क्षीराद्दशगुणं दध्ना घृतेनैव दशोत्तरम् । घृताद्दशगुणं क्षौद्रं क्षौद्राच्चैक्षवजं तथा ॥ " पञ्चगव्यस्नानम् (कालिकापुराणे ) "कपिलापञ्चगव्येन कुशवारियुतेन च । स्नापयेन्मन्त्रपूतेन ब्राह्मं स्नानं तदुच्यते ॥ एकाहमपि यो लिङ्गे ब्राह्मं स्नानं समाचरेत् । विधूय सर्वपापानि रुद्रलोके महीयते ॥ " वस्त्राणि ( जयसिंहकल्पद्रुमे ) " पीतकौशेयवसनं विष्णुप्रीत्यै प्रकीर्तितम् । रक्तं शक्त्यर्कविघ्नानां शिवस्य च सितं प्रियम् ॥ मलहीनं तथाऽच्छिद्रं क्षौमं कार्पासमेव वा ॥" देवभेदेन निषिद्धवाद्यानि–"शिवागारे झल्लकं च सूर्यागारे तु शंखकम् । दुर्गागारे वंशवाद्यं मधुरीं च न वादयेत् ॥"(तत्रैव)"वादित्राणामभावे तु पूजाकाले च सर्वदा । घंटाशब्दो नरैः कार्यः सर्ववाद्यमयी यतः ॥ स्नाने धूपे तथा दीपे नैवेद्ये भूषणे तथा । घण्टानादं प्रकुर्वीत तथा नीराजनेऽपि च ॥" इति पूजाविचारप्रकरणम् ॥ अथ होमविचारप्रकरणम् । तत्र तावन्मण्डपकुण्डादिनिर्म्माणप्रकारः ( शारदातिलके ) " नक्षत्रराशिवाराणामनुकूले शुभेऽहनि । ततो भूमितले शुद्धे तुषाङ्गारविवर्जिते ॥ १ ॥ पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम् । पञ्चभिः सप्तभिर्हस्तैर्नवभिर्वा मितान्तरम् ॥ २ ॥ षोडशस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः । अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशामितः ॥३॥ पञ्चहस्तप्रमाणास्ते

विच्छिद्रा ऋजवः शुभाः तत्पञ्चमांशं निखनेन्मेदिन्यां तन्त्रवित्तमः ॥ ४ ॥ नारिकेलदलैर्वंशैश्छादयेत्तत्समंततः । द्वारेषु तोरणा
नि स्युः क्रमात्क्षीरमहीरुहाम् ॥ ५ ॥ स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक् । दशाङ्गुलप्रमाणेन तत्परीणाह ईरितः ॥६॥
तिर्यक् फलकमानं स्यात्स्तम्भानामर्द्धमानतः । शूलानि कल्पयेन्मध्ये तोरणे हस्तमानतः ॥ ७ ॥ दिक्षु ध्वजान्निबध्नीयाल्लोकपालस
मप्रभान् । वितानादर्शमालाद्यैरलंकुर्वीत मण्डपम् ॥ ८ ॥ तत्रिभागमिते क्षेत्रेऽरत्निमात्रसमन्विताम् । चतुरस्रां ततो वेदिं मण्डलाय
प्रकल्पयेत् ॥ ९ ॥ प्राक् प्रोक्ते मण्डपे विद्वान्वेदिकाया बहिस्त्रिधा । क्षेत्रं विभज्य मध्यांशे पूर्वादि परिकल्पयेत् ॥ १० ॥ अष्टा
स्वाशासु कुण्डानि रम्याकाराण्यनुक्रमात् । चतुरस्रं योनिमर्द्धचन्द्रं त्र्यस्रं सुवर्तुलम् ॥११॥ षडस्रं पङ्कजाकारमष्टास्रं तानि नामतः ।
आचार्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोः ॥ १२ ॥ हस्तमानमितां भूमिं पूर्ववत्परिकल्पयेत् । समन्तात्कुण्डमेतत्स्याच्चतुरस्रं
शुभावहम् ॥ १३ ॥ चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः । कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः ॥ १४ ॥ मध्यस्य दीर्घ
मानेन मानाङ्गुलमुदीरितम् । यवानामष्टभिः क्लृप्तं मानाङ्गुलमुदीरितम् ॥१५॥ ( योनिकुण्डरचना ) चतुरस्रीकृतं क्षेत्रं पञ्चधा विभ
जेत्सुधीः ॥ न्यसेत्पुरस्तादेकांशं कोणार्द्धार्द्धप्रमाणतः ॥१६॥ भ्रामयेत्कोणमानेन तथान्यदपि मन्त्रवित् । सूत्रयुग्मं ततो दद्यात्कुण्डं
योनिनिभं भवेत् ॥१७॥ (अर्द्धचन्द्राकारकुण्डरचना) चतुरस्रीकृतं क्षेत्रं दशधा विभजेत्पुनः । एकमेकं त्यजेदंशमध ऊर्ध्वं च तन्त्र
वित् ॥ १८ ॥ ज्यासूत्रं पातयेदग्रे तन्मानाद्भ्रामयेत्ततः। अर्द्धचन्द्रनिभं कुण्डं रमणीयमिदं भवेत् ॥१९॥ ( त्र्यस्रकुण्डरचना ) चतुर्द्धा
भेदिते क्षेत्रे न्यसेदुभयपार्श्वयोः । एकैकमंशं तन्मानादग्रतो लाञ्छयेत्ततः । सूत्रयुग्मं ततः कुर्यात्त्र्यस्रं कुण्डमुदाहृतम् ॥ २० ॥ (वृत्त
कुण्डम् ) । अष्टादशांशे क्षेत्रे च न्यसेदेकं बहिर्बुधः । भ्रामयेत्तेन मानेन वृत्तं कुण्डमनुत्तमम् ॥२१॥ ( षडस्रकुण्डम्) अष्टधा विभजे
त्क्षेत्रं मध्यसूत्रस्य पार्श्वयोः । भागं न्यसेदेकमेकं भागेनानेन मध्यतः ॥२२॥ कुर्यात्पार्श्वद्वये मत्स्यचतुष्कं तन्त्रवित्तमः । सूत्रषट्कं
ततो दद्यात्षडस्रं कुण्डमुत्तमम् ॥ २३ ॥ (पद्मकुण्डम्) चतुरस्रीकृतं क्षेत्रं विभज्याष्टादशांशतः । एकं भागं बहिर्न्यस्य भ्रामयेत्तेन
वर्तुलम् ॥२४॥ वृत्तानि कर्णिकादीनां बहिस्त्रीणि प्रकल्पयेत् । पद्मकुण्डमिति प्रोक्तं विलोचनमनोहरम् ॥२५॥ ( चतुरस्रकुण्डम् )
पूर्ववद्विभजेत्क्षेत्रं चतुर्विंशतिभागतः । एकं भागं बहिर्न्यस्य चतुरस्रं प्रकल्पयेत् ॥२६॥ (अष्टास्रकुण्डम्) अन्तःस्थचतुरस्रस्य कोणा
र्द्धप्रमाणतः । बाह्यस्य चतुरस्रस्य कोणाभ्यां परिकल्पयेत् ॥ २७ ॥ दिशं प्रति यथान्यासमष्टौ सूत्राणि पातयेत् । अष्टास्रं
कुण्डमेतद्धि तन्त्रविद्भिरुदाहृतम् ॥२८॥ यावत्कुण्डस्य विस्तारः खननं तावदीरितम् ॥ कुण्डानां यादृशं रूपं मेखलानां च तादृशम्
॥ २९ ॥ कुण्डानां मेखलास्तिस्रो मुष्टिमात्रे तु ताः क्रमात् । उत्सेधायामतो ज्ञेया द्व्येकार्द्धाङ्गुलसंमिताः ॥ ३० ॥ अरत्निमात्रे
कुण्डे स्युस्तास्त्रिद्व्येकाङ्गुलात्मिकाः । एकहस्तमिते कुण्डे वेदाग्निनयनाङ्गुलाः ॥३१॥ मेखलानां भवेदन्तः परितो नेमिरङ्गुलात् ।
एकहस्तस्य कुण्डस्य वर्द्धयेत्तत्क्रमात्सुधीः ॥ ३२ ॥ दशहस्तान्तमन्येषामर्द्धाङ्गुलवशात्पृथक् । कुण्डे द्विहस्ते ता ज्ञेया रसवेदगुणा
ङ्गुलाः ॥ ३३ ॥ चतुर्हस्तेषु कुण्डेषु वसुतर्कयुगाङ्गुलाः ॥ कुण्डे रसकरे ताः स्युर्दशाष्टत्वङ्गुलान्विताः ॥ ३४ ॥ वसुहस्तमिते

कुण्डे भानुपङ्क्त्यष्टकान्विताः । दशहस्तमिते कुण्डे भानुभानुदशाङ्गुलाः ॥३५॥ विस्तारोत्सेधतो ज्ञेया मेखला सर्वतो बुधैः। होतु रग्रे योनिराशाम्रुपर्यश्वत्थपत्रवत् ॥ ३६ ॥ मुष्टचरत्न्येकहस्तानां कुण्डानां योनिरीरिता । षट्चतुर्व्यङ्गुलायामविस्तारोन्नतिशालिनी ॥३७॥ एकाङ्गुलं तु योन्यग्रं कुर्यादीषदधोमुखम् । एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्द्धयेत् ॥ ३८ ॥ यवयवक्रमेणैव योन्य ग्रमपि वर्द्धयेत् । स्थलादारभ्य नालं स्याद्योन्या मध्यं सरन्ध्रकम्॥३९॥नार्पयेत्कुण्डकोणेषु योनिं तां तन्त्रवित्तमः । कुण्डानां कल्प येदन्तर्नाभिमम्बुजसन्निभाम् ॥ ४० ॥ तत्तत्कुण्डानुरूपं वा मानमस्य निगद्यते । मुष्टचरत्न्येकहस्ताभ्यां नाभिरुत्सेधतारतः ॥४१॥ द्वित्रिवेदाङ्गुलोपेता कुण्डेष्वन्येषु वर्द्धयेत् । यवद्वयक्रमेणैव नाभिं पृथगुदारधीः ॥ ४२ ॥ योनिकुण्डे योनिमब्जकुण्डे नाभिं विवर्ज येत् ॥ नाभिक्षेत्रं त्रिधा भित्त्वा मध्ये कुर्वीत कर्णिकाम् ॥ ४३ ॥ बहिरंशद्वयेनाष्टौ पत्राणि परिकल्पयेत् ॥ * ॥ ( होमप्रमाणेन कुण्डप्रमाणम् ) मुष्टिमात्रमितं कुण्डं शतार्द्धे संप्रचक्षते । शतहोमेऽरत्निमात्रं हस्तमात्रं सहस्रके ॥ ४४ ॥ द्विहस्तमयुते लक्षे चतुर्हस्तमुदीरितम् ॥ दशलक्षे तु षड्हस्तं कोटचामष्टकरं स्मृतम् ॥ ४५ ॥ ( चतुरस्रादिकुण्डफलम् ) सर्वसिद्धिकरं कुण्डं चतुरस्रमुदाहृतम् । पुत्रप्रदं योनिकुण्डमर्द्धेन्द्वाभं शुभप्रदम् ॥ ४६ ॥ शत्रुक्षयकरं त्र्यस्रं वर्तुलं शान्तिकर्मणि ॥ छेदमारणयोः कुण्डं षडस्रं पद्मसन्निभम् ॥ ४७ ॥ वृष्टिदं रोगशमनं कुण्डमष्टास्रमीरितम्॥(वर्णभेदेन कुण्डप्रकारः) विप्राणां चतुरस्रं स्याद्राज्ञां वर्तुलमिष्यते ॥४८॥ वैश्यानामर्द्धचन्द्राभं शूद्राणां त्र्यस्रमीरितम् ॥ चतुरस्रं तु सर्वेषां केचिदिच्छन्ति तान्त्रिकाः ॥४९॥ ( कुण्डस्वरूपम् ) कुण्डरूपं तु जानीयात्परमं प्रकृतेर्वपुः । प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः॥५०॥ उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमे ॥ ( कुण्डाभावे स्थण्डिलं कार्यम् ) नित्यं नैमित्तिकं काम्यं स्थण्डिले वा समाचरेत्॥५१॥हस्तमात्रेण तत्कुर्या द्वालुकाभिः सुशोभनम् । अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समंततः ॥ ५२ ॥ बौधायनमते तु कुण्डाकारं स्थण्डिलमुक्तम्–"कुण्डवन्मेख लां कृत्वा योनिं कृत्वा ततः परम् । बौधायनमते प्रोक्तं स्थण्डिलं चतुरस्रकम् ॥ कुण्डाभावे तु होमाथ स्थण्डिलं पीठमेव वा॥१॥" कुण्डखाते फलविचारः ( हेमाद्रौ ) "खातेऽधिके भवेद्रोगी हीने धेनुधनक्षयः वक्रकुण्डे तु संतापो मरणं भिन्नमेखले॥मेखलारहिते। शोकोऽप्यधिके वित्तसंक्षयः । भार्याविनाशनं प्रोक्तं कुण्डे योन्या विना कृते ॥ अपत्यध्वंसनं प्रोक्तं कुण्डं यत्कण्ठवर्जितम् ॥" अथायुतहोममधिकृत्य वेदिदिग्विचारः ( मत्स्यपुराणे )"गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृताम् । वप्रद्वयकृतां वेदिं वितस्त्युच्छ्राय संयुताम् । संस्थापनाय देवानां चतुरस्रामुदक्प्लवाम् ॥" ( स्कान्दे तु ) "तस्माच्चोत्तरपूर्वेण स्थण्डिलं हस्तमात्रकम् । त्रिवप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितम्' इति वेदेस्त्रिमेखलात्वमुक्तम् । ( व्रतराजेऽपि ) "बाहुमात्रायतां वेदिं कुर्याच्छुद्धमृदा बुधः । तद्वेद्यां सर्व तोभद्रमण्डलं विलिखेत्ततः॥" भद्रविचारः–"शैवव्रतं विना सर्वव्रतोद्यापनकर्मसु । कार्यं सुशास्त्रदृष्टचा च सर्वतोभद्रमण्डलम् ॥ गणपतिव्रते प्रोक्तं भद्रं वैनायकाभिधम् । देव्या व्रते गौरीभद्रं सूर्ये सूर्यस्य मण्डलम् ॥ शैवे च लिङ्गतोभद्रं सर्वतोभद्रकं हरेः ।

* अत्रत्यानि दश कुण्डानि ग्रन्थादौ पृथक् मुद्रयित्वा योजितानि सन्ति ॥ अतस्तत्र द्रष्टव्यानि ॥

स्वस्वभद्रालाभके तु कार्यं वै हरिमण्डलम् " मंडलकरणे प्रकारः–"निम्नतोत्तुङ्गताहीने सुश्लक्ष्णे वेदिकातले। ईशानादिप्लवेनार्द्धे विलिप्ते गोमयेन च॥ देवाराधनमन्त्रेण मन्त्रितात्पञ्चगव्यतः। अभ्युक्षितेऽस्त्रमन्त्रेण कृत्वा दिक्साधनं ततः॥खटिकामानसूत्रं च गन्धाद्यैरपि पूजयेत ॥ " भद्रार्थे वर्णनिश्चयः(पञ्चरात्रे)"रजांसि पञ्चवर्णानि मण्डलार्थं हि कारयेत्।शालितण्डुलजं शुक्लं रक्तं कौसुम्भसिन्दुरम्॥हरितालोद्भवं पीतं कृष्णं दग्धयवोद्भवम्। हरितं बिल्वपत्रोत्थमथवा कृष्णपीतजम्॥"वर्णपरत्वे धान्यानि–"श्वेतत्वे तण्डुलाःप्रोक्ताश्चणकान्नं तु पीतके। रक्तवर्णे मसूराश्च गोधूमा वा स्मृता बुधैः॥ अथवा रक्तवर्णे तु कुङ्कुमाक्ताक्षताः स्मृताः। हरिद्वर्णे च मुद्गान्नं माषान्नं कृष्णवर्णके " अथ सर्वकार्येषु प्रधानभूतसर्वतोभद्रमण्डलप्रकारः ( हेमाद्रौ स्कान्दे ) " प्रागुदीच्यायता रेखाः कुर्यादेकोनविंशतिम्। खण्डेन्दुस्त्रिपदैः कोणे शृङ्खला पञ्चभिः पदैः॥ एकादशपदा वल्ली भद्रं तु नवभिः पदैः। चतुर्विंशत्पदा वापी परिधिर्विंशतिः पदैः॥ मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम्। श्वेतेन्दुःशृङ्खला कृष्णा वल्ली नीलेन पूरयेत्॥ भद्रारुणा सिता वापी परिधिः पीतवर्णकः। बाह्यान्तरदला श्वेता कर्णिका पीतवर्णिका॥ परिध्यावेष्टितं पद्मं बाह्ये सत्त्वरजस्तमः तन्मध्ये स्थापयेद्देवान्ब्रह्माद्यांश्च सुरेश्वरान्॥" इति। अथ सर्वतोभद्राशक्तौ अष्टदलाख्यं पद्मम्। उक्तं च–"भद्रेण पूजनाशक्तौ कार्यमष्टदलं शुभम्।गोधूमान्नेन तत्कार्यं तण्डुलेनाथवा शुभम्॥"मण्डलप्रकारः–"आद्यात्तृतीयं तृतीयाच्च भूतं भूताद्द्वितीयं द्वितीयाच्चतुर्थम्।तस्मात्तथाद्यं पुनरेव कृत्वा दलाष्टकं तण्डुलपूरितं च " ॥ १ ॥ अथ शिवमन्त्रानुष्ठानेषु प्रधानभूतलिङ्गतोभद्ररचनाप्रकारः। तत्र तावदेकलिङ्गतोभद्रं गौरीतिलकमण्डलं ( रुद्रयामले ) "तिर्यगूर्ध्वगता रेखाः कार्याः स्निग्धास्त्रयोदश। कोणेन्दुस्त्रिपदः कार्यः शृङ्खलास्त्रिपदाः स्मृताः॥ वल्ली तु त्रिपदा नीला भद्रं रक्तं प्रकल्पयेत्। पदैर्द्वादशभिः स्पष्टमुत्तरे पूर्वदक्षिणे॥ पश्चिमायां महारुद्रमष्टाविंशतिकोष्ठकैः। लिङ्गपार्श्वे तथा मूर्ध्नि अष्टौ कोष्ठाः सुपीतकाः॥ लिङ्गमेकं तथा गौर्यास्तिस्रः स्युरत्र मण्डले। पूजयेन्मण्डलं चैतत्तस्य गौरी प्रसीदति॥" अथ चतुर्लिङ्गभद्रमण्डलम् ( लिङ्गपुराणे ) "रेखास्त्वष्टादश प्रोक्ताश्चतुर्लिङ्गसमुद्भवे। कोणेन्दुस्त्रिपदः श्वेतस्त्रिपदैः कृष्णशृङ्खला॥ वल्ली सप्तपदा नीला भद्रं रक्तं चतुष्पदम्। भद्रपार्श्वे महारुद्रं कृष्णमष्टादशैः पदैः॥ शिवस्य पार्श्वतो वापीं कुर्यात्पञ्चपदां सिताम्। एकं पदं तथा पीतं भद्रवाप्योस्तु मध्यतः॥ शिरसि शृङ्खलायाश्च कुर्यात्पीतं पदत्रयम्। लिङ्गानां स्कन्दतः कोष्ठा विंशती रक्तवर्णकाः॥ परिधिः पीतवर्णस्तु पदैः षोडशभिः स्मृतम्। पदैस्तु नवभिः पश्चाद्रक्तं पद्मं सकार्णिकम् " इति॥ ( अथाष्टलिङ्गतोभद्रमग्निपुराणे ) " चतुर्विंशतिरालेख्या रेखाः प्राग्दक्षिणायताः। कोणेषु शृङ्खलाः पञ्चपदा वल्ल्यस्तु पार्श्वतः॥ पदैर्नवभिरालेख्याश्चतुर्भिर्लघुशृङ्खलाः। लघुवल्ल्यः पदैः षड्भिस्ततोऽष्टादशभिः पदैः। कृत्वा लिङ्गानि वाप्यः स्युस्त्रयोदशभिरन्तरा। ततो वीथिद्वयेनैव पीठं कुर्याद्विचक्षणः॥ तस्य पादाः पञ्चपदैर्द्वाराण्यपि तथैव च। एकाशीतिपदं मध्ये पद्मं स्वस्तिकमुच्यते॥ कोणेषु शृङ्खलाः कार्याः पदैस्त्रिभिरतः परम्। पदैश्चतुर्भिर्दिक्षु स्युर्भद्राण्येषां समन्ततः॥ एकादशपदा वल्ल्यो मध्येऽष्टदलमालिखेत्। पद्मं नवपदं ह्येवं लिङ्गतोभद्रमुच्यते॥ शृङ्खलाः कृष्णवर्णेन वल्लीर्नीलेन पूरयेत्। रक्तेन शृङ्खला लघ्वीर्वल्लीः पीतेन पूर

येत् ॥ लिङ्गानि कृष्णवर्णानि श्वेतेनाप्यथ वापिकाः । पीठं सपादं श्वेतेन पीतेन द्वारपूरणम् ॥ मध्ये स्युः शृङ्खला रक्ता वल्ली नीलेन पूरयेत् । भद्राणि पीतवर्णानि पीता पङ्कजकर्णिका ॥ दलानि श्वेतवर्णानि यद्वा चित्राणि कल्पयेत् । तिस्रो रेखा बहिः कार्याः सितरक्तासिताः क्रमात्" इति ॥ ॥ अथ हरिहरात्मकं द्वादशलिङ्गतोभद्रमण्डलम् ( लिङ्गपुराणे ) "प्रागुदीच्यायता रेखाः षट्त्रिंशद्धि प्रकल्पयेत् । पदानि द्वादशशतं पञ्चविंशतिरेव च ॥ खण्डेन्दुस्त्रिपदः कोणे शृङ्खला षट्पदैः स्मृता । त्रयोदश पदा वल्ली भद्रं तु नवभिः पदैः ॥ त्रयोदशपदा वापी लिङ्गमष्टादशैः स्मृतम् । लिङ्गत्रयस्य पङ्क्तौ तु शोभाकोष्ठाश्चतुर्दश ॥ तेषा मुपरि पङ्क्तौ तु कोष्ठाः सप्तदशैव तु । पूजापङ्क्तिस्तु विज्ञेया परितः परिकल्पिता ॥ पूजापङ्क्त्यन्तरापङ्क्तौ कोष्ठा द्व्यशीतिसंख्यया । परिधिः स तु विज्ञेयोऽन्तरा मण्डलयोर्द्वयोः ॥ परिध्यन्तरकोष्ठेषु सर्वतोभद्रमालिखेत् । विशेषश्चात्र विज्ञेयः शृङ्खला षट्पदा भवेत् ॥ त्रयोदशपदा वल्ली भद्रं तु नवभिः पदैः । पञ्चविंशत्पदा वापी परिधिः षोडशात्मकः ॥ मध्ये नवपदं पद्मं कर्णिका केसरान्वितम् । सत्त्वं रजस्तमो वर्णाः परितो मण्डलस्य तु ॥ त्रयः परिधयः कार्यास्तत्र द्वाराणि कारयेत् । सितेन्दुः शृङ्खला कृष्णा वल्ली नीला प्रकीर्त्तिता ॥ भद्रं चैवारुणं ज्ञेयं वापी स्याच्छ्वेतवर्णिका । लिङ्गानि कृष्णवर्णानि पार्श्वतो द्वादशैव तु ॥ परिधिः पीतवर्णः स्यात्कमलं पञ्चवर्णकम्" इति ॥ * ॥ अथ द्वितीयं द्वादशलिङ्गतोभद्रम् ( रुद्रयामले ) "रुद्र उवाच । उद्धारं कथयिष्येऽहं मदर्चार्थं तव प्रिये । चतुस्त्रिंशत्समा रेखाः कुर्यात्पूर्वोत्तराः शुभाः ॥ मध्ये वृत्तं समालेख्य तन्मध्ये च दशारकम् । बहिरष्टदलं पद्मं ततः षोडशपत्रकम् ॥ चतुर्विंशतिपत्राढ्यं द्वात्रिंशत्पत्रकं तथा । चत्वारिंशत्पत्रकं तु वृत्तं सूर्यसमप्रभम् ॥ खण्डेन्दुस्त्रिपदैः कोणे शृङ्खला दशकोष्ठिका । एकविंशत्पदा वल्ली भद्रं तु षट्पदैस्तथा ॥ अष्टादशपदं लिङ्गं भद्रं चाष्टपदं तथा । त्रयोदशपदा वापी कुर्याल्लिङ्गस्य सन्निधौ ॥ पूज्योपर्यपि भद्राणि भवन्ति नवभिः पदैः । एवं द्वादशलि ङ्गाढ्यं वापीषोडशकान्वितम् ॥ षट्पदाष्टकभद्राढ्यं पूज्यं द्वादशकात्मकम् । मध्ये विंशतिभद्रं तु कथितं पूर्वसूरिभिः ॥ वर्णक्रम मथो वक्ष्ये मण्डलस्य च सिद्धये । घृष्टतण्डुलपिष्टेन कृष्णवर्णेन निर्मितम् ॥ लिङ्गजातं सितेन्दुः स्याद्वल्ली बिल्वदलप्रभा । शृङ्खला कृष्णवर्णा च पीतं भद्रद्वयं भवेत् । सिता वाप्यस्तथा पूज्यो मध्यभद्रे त्वयं क्रमः ॥ पूज्योपर्यरुणे भद्रे सिते द्वे मध्यमं सितम् । सत्त्वं रजस्तमश्चैव बाह्यतः परिधित्रयम् ॥ एवं सुशोभितं कार्यं मण्डलं शिवपूजने ॥" इति ॥ ॥ अथ सूर्यमन्त्रानुष्ठानेषु सूर्यमण्ड लम् । "रेखाविंशतिसंयुक्तं भीमरथ्यास्तु मण्डलम् ॥ सूर्यपूजासु सर्वासु शस्यते मण्डलं त्विदम् ॥ खण्डेन्दुस्त्रिपदः कार्यः शृङ्खला षट्पदा मता । त्रयोदशपदैर्वल्ली भद्रं तु त्रिपदं मतम् ॥ सूर्यत्रयं प्रकुर्वीत सप्तविंशतिभिः पदैः । सूर्यत्रयं चतुष्कोणे पदमर्धसितं भवेत् ॥ पदैस्तु नवभिः कृत्वा भवेत्सूर्यत्रयं ततः । सूर्योपरि भवेद्भद्रं पदद्वादशसंमितम् ॥ ऊर्ध्वमिन्दुं प्रकुर्वीत चतुर्भिस्तु सितैः पदैः । परिधिः षोडशपदा पद्मं नवपदं ततः ॥ सत्त्वं रजस्तम इति रेखाः स्युर्मण्डलाद्बहिः । कृष्णा च शृङ्खला ज्ञेया वल्ली नीला

* अत्रत्यानि चत्वारि भद्रचित्राणि ग्रन्थादौ द्रष्टव्यानि ॥

प्रकीर्त्तिता ॥ भद्रान्पीतान्प्रकुर्वीत रवीन्रक्तान्प्रकारयेत् । पीतश्च परिधिः प्रोक्तः पद्मं रक्तं तथैव च ॥" इति ॥ अथ गणेशानुष्ठानेषु
गणपतिभद्रम्–"अथातः संप्रवक्ष्यामि मण्डलं सर्वसिद्धिदम् । नाम्ना च विघ्नमर्दाख्यं विनायकव्रते हितम्॥तिर्यगूर्ध्वं सप्तदश रेखाः
कार्याः सुशोभनाः । खण्डेन्दुस्त्रिपदः कोणे शृङ्खला च चतुष्पदैः ॥ कार्या नवपदा वल्ली भद्रं रक्तं चतुष्पदम् ॥ ततो विंशतिको
णेषु कार्यो गणपतिः शुभः । कोष्ठद्वयेन मुकुटं गणेशस्य च कारयेत् ॥ पीतश्च परिधिः कार्यः पदैर्विंशतिभिस्तथा । मध्ये षोड
शकोष्ठेन पद्मं कार्यं सुशोभनम् ॥ सर्वतोभद्रदेवान् वै विशेषेणात्र योजयेत् ॥ ' इति गणपतिभद्रम् ॥ ॥ अथ सर्वमन्त्रानुष्ठानयोग्य
शांतिहोमप्रयोगानुक्रमः ॥ ( संस्कारभास्करे ) "नारदीये वसिष्ठे च वाराहे च विशेषतः । कात्यायनोक्तग्रन्थेषु शान्तयस्त्रिविधाः
स्मृताः ॥ शान्तिकर्मं प्रवक्ष्यामि नारदेन यथोदितम् । गणेशं पूजयेदादौ स्वस्तिपुण्याहवाचनम्॥मातॄणां पूजनं कार्यं नान्दीश्राद्धमतः
परम् । आचार्यं वरयित्वाथ ब्रह्माणं गाणपत्यकम् ॥ सदस्यमृत्विजश्चैव जापकान्वरयेत्ततः । दिग्रक्षणं ततः कार्यं पञ्चगव्यं यथाविधि॥
भूमिं संपूज्य विधिवत्तत्र संस्कारपञ्चकम । स्थण्डिलेऽग्निं प्रतिष्ठाप्य कलशान्स्थापयेत्क्रमात् ॥ मूर्त्यग्न्युत्तारणं प्राणप्रतिष्ठा स्थापना
र्चनम । ग्रहादीन्स्थापयित्वाथ स्थापयेद्रुद्रकुम्भकम् ॥ ब्रह्मासनं ततो दत्त्वा कारयेत्कुशकण्डिकाम् । लिङ्गोक्तैर्नाममन्त्रैर्वा यथाविधि
यथाक्रमम् ॥ देवताग्रहहोमं च यथासंख्यपुरःसरम् । पूजास्विष्टं नवाहुत्यो बलिं पूर्णाहुतिस्तथा ॥ संस्रवादिविमोकान्तं
होमशेषं समापयेत् ॥ श्रेयः संपाद्य दानं च ह्यभिषेको विसर्ज्जनम् । विप्राशिषः प्रगृह्णीयात्तान्मिष्टान्नेन भोजयेत्"॥ इति यजुर्वेदि
नां होमप्रयोगानुक्रमः ॥ अथ सर्वकर्मोपयोगित्वात्साधारणं किंचिदुच्यते ( वराहपुराणे )–"सुस्नातः सम्यगाचान्तः कृतसंध्या
दिकक्रियः । जितेंद्रियः सत्यवादी सर्वकर्म्मसु शस्यते ॥ अधौतकारुधौते च परिदध्यान्न वाससी । अहतं तु परिदध्यात्सर्वकर्म
णि संयतः ॥" ( कात्यायनः ) "ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ स्वयं धौतेन
कर्त्तव्याः क्रिया धर्म्मा विपश्चिता । न तु रजकधौतेन नोपभुक्तेन वा क्वचित्"॥(शातातपः )–"अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयं
भुवा । शस्तं तन्माङ्गलिकेषु तावत्कालं न सर्वदा" ॥ (मार्कण्डेयः ) "अन्यदेव भवेद्वासः शयनीये नराधिप । अन्यद्रथ्यासु देवा
नामर्चायामन्यदेव हि ॥ अन्यच्च लोकयात्रायामन्यदीश्वरदर्शने । अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ॥ कुतपं योगपट्टं वा
द्विवासा येन नो भवेत् ॥" ( विष्णुपुराणे ) "होमदेवार्चनाद्यासु क्रियास्वाचमने तथा । नैकवस्त्रः प्रवर्त्तेत द्विजवाचनके जपे ॥ "
( शातातपः ) "सव्यदेशात्परिभ्रष्टं कटिदेशे धृतांबरम् । एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् ॥" (व्याघ्रपादः)–"काषायं कृष्णव
स्त्रं च मलिनं केशदूषितम् । जीर्णं च संधितं वापि पारक्यं मैथुने धृतम् ॥ छिन्नाग्रमुपवस्त्रं च कुत्सितं धर्मतो विदुः ॥ "
इति ॥ अयं च निषेधः सति संभवे बोध्यः । ( आपस्तम्बः )–आर्द्रवासास्तु यः कुर्याज्जपहोमपरिग्रहान् । सर्वं तद्राक्षसं विद्याद्ब
हिर्जानु च यत्कृतम् ॥ यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा । जपहोमस्तथा दानं तत्सर्वं निष्फलं भवेत्" ॥ ( संग्रहे ) "वामे
पृष्ठे तथा नाभौ कच्छत्रयमुदाहृतम् । त्रिभिः कच्छैः परिज्ञेयो विप्रो यः स शुचिर्भवेत् ॥ आदौ कच्छस्ततो नीवी नाभिमध्ये च

वाससी । नीवी दक्षिणतः स्थाप्या एतत्रिकच्छलक्षणम् ॥ शयनं चार्द्रपादेन शुष्कपादेन भोजनम् । नोत्तरीयमधः कुर्याद्रात्रि वासस्तथा दिवा । कटिवेष्टचं तु यद्वस्त्रं पुरीषो येन वा कृतः । मूत्रमैथुनकृद्वस्त्रं धर्मकार्ये विवर्जयेत् ” ॥ ( हेमाद्रौ गौतमः) स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि । बध्नीयान्नासुरीं कक्षां शेषकाले यथारुचि॥(तत्रैव याज्ञवल्क्यः )“परिधानाद्बहिः कक्षा निबद्धा चासुरी मता । धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥ ” ( हेमाद्रौ प्रचेताः ) “ स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि । पवित्राङ्गस्तथा जाप्ये दाने च विधिचोदिते ” ॥ ( आग्नेये )“स्नानानामपि सर्वेषां वारुणेन च मानवः । कर्तुमर्हति कर्माणि विधिवत्सर्वदा द्विजः॥”संध्यां विना कर्मकरणे निष्फलता तत्रैव—“संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलमश्नुते ॥” ( मार्कण्डेयः ) “इक्षुरापः पयो मूलं ताम्बूलं फलमौषधम् । भक्षयित्वापि कर्तव्याः स्नानदानादिकाःक्रियाः॥” एतदाप द्विषयकम् ॥“कुशपाणिः सदा तिष्ठेद्ब्राह्मणो दम्भवर्जितः । स नित्यं हन्ति पापानि तूलराशिमिवानलः” ॥ ( विश्वामित्रः ) “यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि । तृतीयमुत्तरीयार्थं वस्त्राऽभावे तदिष्यते ॥” ( कात्यायनः) “पित्र्यमन्त्रानुद्रवणे आत्मालम्भेऽधमेक्षणे । अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसंभवे । निमित्तेष्वेषु सर्व्वेषु कर्म्म कुर्व्वन्नपः स्पृशेत् ॥ यत्र दिङ्नियमो नास्ति जपादिषु कथंचन । तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्यापराजिता ॥ आसीनः प्रह्व ऊर्ध्वो वा नियमो यत्र नेदृशः । तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥ स्नानमाचमनं होमं भोजनं देवतार्चनम् । प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम्॥”प्रौढपादलक्षणम् “ आसनारूढपादस्तु जानुनोर्वाथ जङ्घयोः । कृतावसक्थिको यश्च प्रौढपादःस उच्यते”॥ ( प्रयोगपारिजाते ) “ स्नाने होमे जपे दाने स्वाध्याये पितृकर्मणि । करौ सदर्भौ कुर्वीत तथा संध्याभिवादने ॥” ( अत्रिस्मृतौ ) “ अनामिकामूलदेशे पवित्रं धारयेद्द्विजः” । पवित्रे दर्भसंख्यामाह ( मार्कण्डेयः ) “चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् । एकैकन्यूनमुद्दिष्टं वर्णेवर्णे यथाक्रमम् ॥ सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रथितं न वा । चतुर्भिः शान्तिके कार्यं पौष्टिके पञ्चभिस्तथा । पैतृके तु त्रिदर्भाश्च द्वौ दर्भौ नित्यकर्मणि ॥ ” इति ॥ (हेमाद्रौ नागाह्निके च ) “अन्यान्यपि पवित्राणि कुशदूर्वामयानि च । हेमात्मकपवित्रस्य कलां नार्हन्ति षोडशीम् ॥ माषाणां षोडशादूर्ध्वं कुर्याद्धेमपवित्रकम् । तेभ्यः स्वल्पतरं न्यूनं न कुर्वीत कदाचन ॥ ” ( शारदातिलके तु ) “ ताम्रतारसुवर्णानामर्कषोडशखेन्दुभिः । कृता त्रिशक्तिमुद्रेयं तीव्रदारिद्र्यनाशिनी ॥ ” ( प्रयोगरत्ने हारीतः ) “ जपहोमहरा ह्येते असुरा दिव्यरूपिणः । पवित्रकृतहस्तस्य विद्रवन्ति दिशो दश ॥ यथा वज्रं सुरेन्द्रस्य यथा चक्रं हरेस्तथा । त्रिशूलं च त्रिनेत्रस्य ब्राह्मणस्य पवित्रकम् ” ॥ ( कात्यायनः ) “ श्राद्धे यज्ञे जपे होमे वैश्वदेव सुरार्चने । धृतत्रिपुण्ड्रः पूतात्मा मृत्युं जयति मानवः ॥ ऊर्ध्वपुण्ड्रं मृदा कुर्याद्भस्मना तु त्रिपुण्ड्रकम् । उभय चन्दनेनैव अभ्यङ्गोत्सवरात्रिषु॥” तथा ।“सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्” ॥ (भारद्वाजः) “दक्षिणं बाहुमुद्धृत्य वामस्कन्धे निवेशितम् । यज्ञोपवीतमित्युक्तं देवकार्येषु शस्यते ॥ ” ( विष्णुधर्मोत्तरे ) “ तिलकं कुङ्कुमेनैव सदा मङ्गलकर्मणि ।

कारयित्वा सुमतिमान्न श्वेतचन्दनं मृदा" ॥ ऋषिच्छन्दआद्यावश्यकतामाह ( याज्ञवल्क्यः ) "आर्षं छन्दश्च दैवत्यं विनियोग स्तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥ अविदित्वा तु यः कुर्याद्याजनाध्ययनं जपम् । होममन्तर्जलादीनि तस्य चाल्पफलं भवेत" ॥ आर्षादिलक्षणानि ( हेमाद्रौ ) "ऋषिणा येन यद् दृष्टं सिद्धिः प्राप्ता च येन वै । मन्त्रेण तस्य तत्प्रोक्तमृषेर्भाव स्तदार्षकम् ॥ छन्दसा छन्द उद्दिष्टं वाससी इव चाकृतेः । आत्मा संछादितो देवैर्मृत्योर्भीतैस्तु वै पुरा ॥ आदित्यैर्वसुभी रुद्रैस्तेन च्छन्दांसि तानि वै ॥ यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या । तदाकारं भवेत्तस्य देवत्वं देवतोच्यते॥पुरा कल्पे समुत्पन्ना मन्त्रा कर्म्मार्थ एव च । अनेन चेदं कर्त्तव्यं विनियोगः स उच्यते ॥ नैरुक्तं यत्र मन्त्रस्य विनियोगप्रयोजनम् । प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते ॥ एवं पञ्चविधं योगं जपार्थं गृह्णन्नुस्मरेत् । होमे चान्तर्जले योगे स्वाध्याये याजने तथा ॥ " अत्रापवादः ( कृष्णभट्टीये ) " न च स्मरेदृषिं छन्दः श्राद्धे वैतानिके मखे ।" अन्यच्च । "अग्निहोत्रे वैश्वदेवे विवाहादिविधौ तथा ॥ होमकाले न दृश्यन्ते प्रायश्छन्दर्षिदेवताः ॥ शान्तिकादिषु कार्येषु मन्त्रपाठजपादिषु ॥ होमे नैव प्रकर्त्तव्याः कदाचिदृषिदेवताः ॥"(कात्यायनः) " स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं च यः । कर्त्तुमिच्छति दुर्म्मेधा मोघं तत्तस्य यत्फलम् ॥ यन्नाम्नातं स्वशाखायां पारक्यम विरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत् ॥ बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥ प्रवृत्तमन्यथा कुर्याद्यदि मोहात्कथंचन । यतस्तदन्यथाभूतं तत एव समापयेत् ॥" प्रवृत्तम् आरब्धम् । अन्यथा भूतम् क्रमाद्यन्यत्वेन यद्वैपरीत्यमापन्नमित्यर्थः।"समाप्ते यद्विजानीयान्मयैतदन्यथा कृतम् । तावदेव पुनः कुर्य्यान्नावृत्तिःसर्वकर्म्मणः॥" ( याज्ञवल्क्यः ) "रौद्रपित्र्यासुरान्मन्त्रांस्तथा दैवाभिचारिकान् । व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वान्यदाचरेत् ॥" ( हेमाद्रौ बौधा यनः ) 'कर्म्मयुक्तो नाभेरधः स्पर्शं वर्जयेत् ॥' ( याज्ञवल्क्यः ) " यदि वाग्यमलोपः स्याज्जपादिषु कथंचन । व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥" (मनुस्मृतौ) "चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च । रजस्वला च षण्ढश्च नेक्षेरन्नश्नतो द्विजान्॥ होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते। दैवे हविषि पित्र्ये वा तद्गच्छत्ययथातथम् ॥" अथ सर्वकर्मोपयोगित्वान्नवग्रहमख विचार उच्यते ( मात्स्ये याज्ञवल्क्ये च ) " श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् । वृष्ट्यायुःपुष्टिकामो वा तथैवा भिचरन्पुनः ॥ ग्रहशान्तिं प्रवक्ष्यामि पुराणश्रुतिचोदिताम् । पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् ग्रहान्ग्रहाधिदेवांश्च स्थाप्य होमं समाचरेत् । ग्रहयज्ञास्त्रयः प्रोक्ताः पुराणश्रुतिभाषिताः ॥ गर्त्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृताम् । वप्रद्वयवृतां वेदिं वितस्त्युच्छ्रायसंयुताम् ॥ संस्थापनाय देवानां चतुरस्रामुदक्प्लुताम् । अग्निप्रणयनं कृत्वा तस्यामावाहयेत्सुरान् ॥ देवताश्च ततः स्थाप्या विंशतिर्द्वादशाधिकाः । सूर्यः सोमस्तथा भौमो बुधजीवसितार्कजाः ॥ राहुः केतुरिति प्रोक्ता ग्रहा लोकहितावहाः । संस्मरेद्रक्तमादित्यमङ्गारकसमन्वितम् ॥ सोमशुक्रौ तथा श्वेतौ बुधजीवौ च पिङ्गलौ । मन्दो राहुस्तथा कृष्णौ धूम्रान्केतुगणान्विदुः ॥ ग्रहवर्णानि देयानि वासांसि कुसुमानि च । धूपोऽत्र सुरभिर्देय उपविष्टाद्वितानकम् ॥ शोभनं

स्थापयेत्प्राज्ञः फलपुष्पसमन्वितम् । गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम् ॥ अङ्गारकाय संयावं बुधाय क्षीरषाष्टिकम् । दध्योदनं तु जीवाय शुक्राय च घृतौदनम् ॥ शनैश्चराय कृसरमाजमांसं च राहवे । चित्रौदनं तु केतुभ्यः सर्वभक्ष्यैरथार्चयेत् ॥ प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितम् । चूतपल्लवसंछन्नं फलवस्त्रयुगान्वितम् ॥ पञ्चरत्नसमायुक्तं पञ्चभङ्गसमन्वितम् । स्थापयेदव्रणं कुम्भं वरुणं तत्र विन्यसेत् ॥ गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ॥ गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् । मृदमानीय विप्रेन्द्र सर्वौषधिसमन्विताम् ॥ स्नानार्थं विन्यसेत्तत्र यजमानस्य धर्मवित् । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ एवमावाहयित्वा तानमरान्मुनिसत्तम । होमं समाचरेत्सर्पिर्यवव्रीहितिलादिना ॥"(समिधः)"अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः । उदुम्बरः शमी दूर्वा कुशाश्च समिधस्त्विमाः॥एकैकस्याष्टशतकमष्टाविंशति वा पुनः । होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः ॥ प्रादेशमात्राः समिधः सरला अपलाशिनीः । समिधः कल्पयेत्प्राज्ञः सर्वकर्मसु सर्वदा ॥ देवानामपि सर्वेषामुपांशु परमार्थवित् । स्वेन स्वेनैव मन्त्रेण होतव्याः समिधः पृथक् ॥ होतव्यं च घृताद्युक्तं चरुभक्ष्यादिकं पुनः । मन्त्रैर्दशाहुतीर्हुत्वा होमं व्याहृतिभिस्ततः ॥ उदङ्मुखाः प्राङ्मुखावा कुर्युर्ब्राह्मणपुङ्गवाः । मन्त्रवन्तश्च कर्त्तव्याश्चरवः प्रतिदैवतम् ॥ हुत्वौदनं चरुं सम्यक् ततो होमं समारभेत्"॥ अथ होममन्त्राः ( याज्ञवल्क्ये ) "आकृष्णेन इमं देवा अग्निर्मूर्धादिवः ककुत् उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्त्तिताः॥ बृहस्पतेअतियदर्यस्तथैवान्नात्परिश्रुतः। शन्नोदेवीस्तथा काण्डात्केतुं कृण्वन्निमांस्तथा । कयानश्चित्रआभुवदिति राहोरुदाहृतः॥"इति॥ (मात्स्ये पाठः) "पूर्णाहुतिं तु मूर्धानं दिव इत्यभिपातयेत् । अथाभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ॥ यजमानस्य कर्त्तव्यं चतुर्भिः स्नापनं द्विजैः । ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः॥सर्वौषधैः सर्वगन्धैः स्नापितो वेदपुङ्गवैः । यजमानः सपत्नीकः सार्त्विजस्तु समाहितः॥दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः। सूर्याय कपिलां धेनुं शङ्खं दद्यात्तथेन्दवे । रक्तं धुरन्धरं दद्याद्भौमाय ककुदान्वितम् ॥ बुधाय जातरूपं तु गुरवे पीतवाससी । श्वेताश्वं गुरवे दद्यात्कृष्णां गामर्कसूनवे ॥ आयसं राहवे दद्यात्केतुभ्यश्छागमुत्तमम् । सुवर्णेन समाः कार्या यजमानेन दक्षिणाः । सर्वेषामथवा गावो दातव्या हेमभूषिताः ॥ सुवर्णमथवा दद्याद्गुरुर्वा येन तुष्यति । एवं संपूजयेद्भक्त्या वित्तशाठ्येन वर्जितः ॥ वस्त्रकाञ्चनरत्नाद्यैर्धूपमाल्यानुलेपनैः । अनेन विधिना यस्तु ग्रहपूजां समाचरेत् । सर्वान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥ यस्तु पीडाकरो नित्यमल्पवित्तस्य च ग्रहः।स तं यत्नेन संपूज्य शेषानप्यर्चयेन्नरः"॥अथ नवग्रहपूजावश्यकता (स्कन्दपुराणे) 'विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु । निर्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगाद्भुतेषु च॥ वश्यकर्माभिचारादि तथैवोच्चाटनादिकम् । नवग्रहमखं कृत्वा ततः काम्यं समाचरेत् ॥ अन्यथा फलदं पुन्सां न काम्यं जायते क्वचित् । तस्मादयुतहोमस्य विधानं तु समाचरेत् ॥ देवदानवगन्धर्वा यक्षराक्षसकिन्नराः । पीड्यन्ते ग्रहपीडाभिः किं पुनर्भुवि मानवाः ॥ शनैश्चरेण सौदासो नरमांसे नियोजितः । राहुणा पीडितो राजा नलो भ्रान्तो महीतले ॥ अङ्गारकविरोधेन रामो राज्याद्विवासितः । अष्टमेन शशाङ्केन हिरण्यकशिपुर्मृतः ॥ रविणा सप्तमस्थेन

रावणो विनिपातितः । गुरुणा जन्मसंस्थेन हतो राजा सुयोधनः ॥ पाण्डवा बुधपीडायां विकर्मणि वियोजिताः षष्ठेनोशनसा युद्धे हिरण्याक्षो निपातितः ॥ एते चान्ये च बहवो ग्रहदोषैस्तु पीडिताः । वृष्ट्यायुःपुष्टिकामो वा ग्रहयज्ञं समाचरेत् ॥" तथा । "अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः । यजमानमदक्षिण्यो नास्ति यज्ञसमो रिपुः ॥ अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च । नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥ ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः । पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः ॥ ग्रहाणामिदमातिथ्यं कुर्यात्संवत्सरादपि । आरोग्यबलसंपन्नो जीवेच्च शरदां शतम् ॥ " अथायुतहोमादिग्रहमखलक्षणानि तद्विधिश्च (मात्स्ये शान्तिरत्ने च) स चतुर्धा केवलः अयुतहोमो लक्षहोमः कोटिहोमश्चेति । तत्राऽऽद्यो याज्ञवल्क्याद्यैरुक्तः त्रयो मात्स्ये उक्ताः । "ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिकोविदैः । प्रथमोऽयुतहोमः स्याल्लक्षहोमस्ततः परम् ॥ तृतीयः कोटिहोमस्तु सर्वकामफलप्रदः" ॥ ते द्विविधाः नैमित्तिकाः काम्याश्च । तत्राऽयुतहोमो मात्स्योक्तः पूर्व एव वर्णितः । अधुना लक्षहोमकोटिहोमौ वक्ष्यामि । तदुक्तम् ( मत्स्यपुराणे ) "अयुतेनाहुतीनां च नवग्रहमखः स्मृतः । कथितोऽयुतहोमोऽयं लक्षहोममतः शृणु ॥ सर्वकामाप्तये यस्माल्लक्षहोमं विदुर्बुधाः । ग्रहताराबलं लब्ध्वा कृत्वा ब्राह्मणवाचनम् । गृहस्योत्तरपूर्वेण मण्डपं कारयेद्बुधः ॥ रुद्रायतनभूमौ वा चतुरस्रमुदङ्मुखम् दशहस्तमथाष्टौ वा हस्तान्कुर्याद्विधानतः ॥ प्रागुदक्प्लवनां भूमिं कारयेद्यत्नतो बुधः । प्रागुत्तरं समासाद्य प्रदेशं मण्डपस्य तु ॥ शोभनं कारयेत्कुण्डं यथावल्लक्षणान्वितम् । चतुरस्रं समंतात्तु योनिवक्त्रं समेखलम् । चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता । प्रागुदक्प्लवना कार्या सर्वतः समवस्थिता ॥ शान्त्यर्थं सर्वलोकानां नवग्रहमखः स्मृतः । मानहीनाधिकं कुण्डमनेकभयदं भवेत् ॥ यस्मात्तस्मात्सुसंपूर्णं शान्तिकुण्डं विधीयते । अस्माद्दशगुणः प्रोक्तो लक्षहोमः स्वयंभुवा ॥ आहुतीभिः प्रयत्नेन दक्षिणाभिस्तथैव च ॥ द्विहस्तविस्तृतं तद्वच्चतुर्हस्तायतं पुनः । लक्षहोमे भवेत्कुण्डं योनिवक्त्रं त्रिमेखलम् ॥ तस्य चोत्तरपूर्वेण वितस्तित्रयसंस्थितम् । प्रागुदक्प्लवनं तच्च चतुरस्रं समंततः ॥ विष्कम्भार्द्धोच्छ्रितं प्रोक्तं स्थण्डिलं विश्वकर्मणा । संस्थापनाय देवानां वप्रत्रयसमावृतम् ॥ द्व्यङ्गुलो ह्युच्छ्रितो वप्रः प्रथमः स उदाहृतः । अङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि ॥ त्र्यङ्गुलस्य च विस्तारः सर्वेषां कथ्यते बुधैः । दशाङ्गुलोच्छ्रिता भित्तिः स्थण्डिले स्यात्तथोपरि ॥ तस्मिन्नावाहयेद्देवान् पूर्ववत्पुष्पतण्डुलैः । आदित्याभिमुखाः सर्वाः साधिप्रत्यधिदेवताः । स्थापनीया मुनिश्रेष्ठ नोत्तरेण पराङ्मुखाः ॥ पूर्ववत्कुम्भमामन्त्र्य तद्वद्धोमं समाचरेत् । सहस्राणां शतं कृत्वा समित्संख्याधिकं पुनः ॥ घृतकुम्भवसोर्धारां पातयेदनलोपरि । औदुम्बरीं तथा चार्द्रामृज्वीं कोटरवर्जिताम् ॥ बाहुमात्रां स्रुचं कृत्वा ततः स्तम्भद्वयोपरि । घृतधारां तथा सम्यगग्नेरुपरि पातयेत् ॥ श्रावयेत्सूक्तमाग्नेयं वैष्णवं रुद्रमैन्दवम् । महावैश्वानरं साम ज्येष्ठसाम च वाचयेत् ॥ स्नानं च यजमानस्य पूर्ववत्स्वस्तिवाचनम् । दातव्या यजमानेन पूर्ववद्दक्षिणाः पृथक् ॥ कामक्रोधविहीनेन ऋत्विग्भ्यःशान्तचेतसा । नवग्रहमखे विप्राश्चत्वारो वेदवेदिनः ॥ अथवा ऋत्विजौ शान्तौ द्वावेव श्रुतिकोविदौ । कार्यावयुतहोमे तु न प्रसज्येत विस्तरे ॥ तद्वच्च दश चाष्टौ च लक्षहोमे तु ऋत्विजः । कर्त्तव्याः शक्तितस्तद्वच्चत्वारो वा विमत्सराः ॥ नवग्रहमखात्सर्वं लक्षहोमे

दशोत्तरम् । भक्ष्यान्दद्यान्मुनिश्रेष्ठ भूषणान्यपि शक्तितः ॥ शयनानि सवस्त्राणि हैमानि कटकानि च । स्वर्णाङ्गुलिपवित्राणि कण्ठसूत्राणि शक्तिमान् ॥ न कुर्याद्दक्षिणाहीनं वित्तशाठ्येन मानवः । अददल्लोभतो मोहात्कुलक्षयमवाप्नुयात् ॥ अन्नदानं यथाशक्ति कर्त्तव्यं भूतिमिच्छता ॥ अन्नहीनः कृतोयस्माद्दुर्भिक्षफलदो भवेत् । लक्षहोमस्तु कर्त्तव्यो यथावित्तं भवेद्बहु ॥ यतः सर्वानवाप्नोति कुर्वन्कामान्विधानतः ॥" इति लक्षहोमः ॥ अथ कोटिहोमोऽपि (मात्स्ये) "अस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयंभुवा । आहुतिभिः प्रयत्नेन दक्षिणाभिः फलेन च ॥ पूर्ववद्ग्रहदेवानामावाहनविसर्ज्जने । होममन्त्रास्त एवोक्ताः स्नाने दाने तथैव च ॥ कुण्डमण्डपवेदीनां विशेषोऽयं निबोध मे ॥ कोटिहोमे चतुर्हस्तं चतुरस्रं तु सर्वतः ॥ योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम् ॥ द्व्यङ्गुलाभ्युच्छ्रिता कार्या प्रथमा मेखला बुधैः ॥ त्र्यङ्गुलाभ्युच्छ्रिता तद्वद्द्वितीया परिकीर्त्तिता ॥ उच्छ्रायविस्तराभ्यां च तृतीया चतुरङ्गुला । द्व्यङ्गुलश्चेति विस्तारः पूर्वयोरेव शस्यते ॥ वितस्तिमात्रा योनिः स्यात्षट्सप्ताङ्गुलविस्तृता । कूर्म्मपृष्ठोन्नता मध्ये पार्श्वयोश्चाङ्गुलोच्छ्रिता ॥ गजोष्ठसदृशी तद्वदायता छिद्रसंयुता । एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते ॥ वेदिश्च कोटिहोमे स्याद्वितस्तीनां चतुष्टयम् । चतुरस्रा समन्ताच्च त्रिभिर्वप्रैस्तु संयुता ॥ वप्रप्रमाणं पूर्वोक्तं वेदीनां च तथोच्छ्रयः । तथा षोडशहस्तः स्यान्मण्डपश्च चतुर्मुखः ॥ पूर्वद्वारे च संस्थाप्य बह्वृचं वेदपारगम् । यजुर्विदं तथा याम्ये पश्चिमे सामवेदिनम् ॥ अथर्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः । अष्टौ तु होमकाः कार्य्या वेदवेदाङ्गवेदिनः ॥ एवं द्वादश विप्रांस्तु वस्त्रमाल्यानुलेपनैः । पूर्ववत्पूजयेद्भक्त्या वस्त्राभरणभूषणैः ॥ रात्रिसूक्तं च रौद्रं च पवमानं सुमङ्गलम् । पूर्वतो बह्वृचः शान्तिं पठन्नास्ते ह्युदङ्मुखः ॥ शान्तं शाक्रं च सौम्यं च कौष्माण्डं शान्तिमेव च । पाठयेद्दक्षिणद्वारि यजुर्वेदिनमुत्तमम् । सुपर्णमथ वैराजमाग्नेयं रुद्रसंहिताम् । ज्येष्ठसाम तथा शान्तिं छन्दोगः पश्चिमे जपेत् ॥ शान्तिसूक्तं च सौरं च तथा शाकुनकं शुभम् । पौष्टिकं च महाराज्यमुत्तरेणाप्यथर्ववित् ॥ पञ्चभिः सप्तभिर्वापि होमः कार्योऽत्र पूर्ववत् । स्नाने दाने च मन्त्राः स्युस्त एव ऋषिसत्तम ॥ अनेन विधिना यस्तु कोटिहोमं समाचरेत् । सर्व्वान्कामानवाप्नोति ततो विष्णुपदं व्रजेत् " ॥ इति । ब्राह्मणभोजनसंख्या ( मदनरत्ने ) । "एकमेकाहुतौ विप्रं होमं त्वन्नेन भोजयेत् । अत्यर्थो मध्यमश्चापि विप्रमेकं शताहुतौ ॥ सहस्रस्याहुतेर्वैकं जघन्योऽपि प्रभोजयेत् । अन्यथा दहति क्षिप्रं तद्राष्ट्रं नात्र संशयः ॥ अतो दातुमशक्तो यो दक्षिणां चान्नमेव वा । जपैः प्रणामैः स्तोत्रैश्च तोषयेत्तर्पयेद्गुरून् ॥" इति । अथाग्निकर्म, तत्र तावत्कुण्डसंस्कारादि ( पारस्करगृह्यसूत्रे )" परिसमुह्योपलिप्योल्लिख्योद्धृत्याऽभ्युक्ष्याऽग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरूप्याज्यमधिश्रित्य पर्यग्नि कुर्यात् । स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यादाज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनकुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयादेष एव विधिर्यत्र क्वचिद्धोमः" । इति ॥ अथ पारस्करगृह्योक्तकुशकण्डिकासूत्राणां हरिहरभाष्यनानास्मृतिकारिकाभिर्व्याख्या लिख्यते । तत्र तावत्कर्ता सुस्नातः शुचिः शुक्लाम्बरधरस्सोत्तरीयः कर्मस्थानमागत्य वारणादियज्ञियवृक्षोद्भवासने प्रागग्रानुदगग्रान् वा कुशानास्तीर्य तत्र प्राङ्मुख उपविश्य

आचम्य प्राणानायम्य देशकालौ स्मृत्वा "अमुककर्माङ्गतया पञ्चभूसंस्कारान् करिष्ये" इति संकल्पं कुर्यात् । तथा च (कात्यायन) "संकल्प एव मुख्यः स्यात्स्नानदानादिकर्मसु । कर्म संकल्परहितं तत्सर्वं निष्फलं भवेत् ॥" इति । ततः शुद्धायां भूमौ चतुर्विंशत्यङ्गुलायतं स्थण्डिलं परिकल्पयेत् । तथा चोक्तम् "स्थण्डिलं मृन्मयं कार्यं चतुर्विंशाङ्गुलायतम् । द्व्यङ्गुलं भवेत्कण्ठं व्यासस्य वचनं यथा॥" (कर्मप्रदीपे विशेषः) "अष्टाङ्गुलसमुत्सेधं चतुर्विंशाङ्गुलायतम् । पन्नगास्तत्र सीदंति तदर्थं स्थण्डिलं भवेत्"॥ अथ परिसमूहनादिविचारः।'परिसमुह्य' इति सूत्रम्।'त्रिभिर्दर्भैः पांसूनपसार्य' इति हरिहरभाष्यम्।(बादरायणोऽपि) "कृमिकीटपतङ्गाश्च विचरंति महीतले । तेषां संरक्षणार्थाय परिसमुह्येति कथ्यते ॥" दर्भसंख्या (कारिकायाम्) "धृत्वाङ्गुष्ठकनिष्ठाभ्यां मूलैः साग्रैः कुशत्रयम् । तदग्रैस्तस्य रजसां पूर्वस्यामपसर्पणम् ॥ 'उपलिप्य' इति सूत्रम् । 'गोमयोदकेन' इति हरिहरः । (कारिकायाम्) पुरा इन्द्रेण वज्रेण हतो वृत्रो महासुरः । व्यापिता मेदसा पृथ्वी तदर्थमुपलेपनम् ॥ गोमये वसते लक्ष्मीः पवित्रा सर्वमङ्गला । यज्ञार्थे संस्कृता भूमिस्तदर्थमुपलेपम् ॥" गोमयलक्षणम् (कल्पवल्ल्याम्) "रुग्णा वृद्धा प्रसूता च वन्ध्या संधिन्यमेध्यभुक् । मृतवत्सा च नैतासां ग्राह्यं मूत्रं शकृत्पयः ॥ स्वच्छं तु गोमयं ग्राह्यं स्थाने च पतिते शुचौ । उपर्य्यधः परित्यज्य आर्द्रं जन्तु विवर्जितम् ॥ 'त्रिरुल्लिख्य' इति सूत्रम् । 'त्रिः खादिरेण हस्तमात्रेण खड्गाकृतिनास्फ्येन उल्लिख्य प्रागग्रा उदक्संस्थाः स्थण्डिल परिमाणास्तिस्रो रेखाः कृत्वा' इति हरिहरः । (कल्पवल्ल्यामपि) "उल्लेखनं ततः कुर्यादस्थिकण्टकमेव च । तेषामुद्धरणार्थाय उल्लेखः कथितो बुधैः॥" (कुशकण्डिकाभाष्येऽपि) "रेखात्रयमुदक्संस्थं प्रागग्रं स्थण्डिलावधि । अथवा तत्र कुर्वीत द्वादशाङ्गुलमानतः॥" (संग्रहेऽपि) "फलेन फलमाप्नोति पुष्पेण श्रियमृच्छति । पत्रेण धनलाभं च दीर्घमायुः कुशेन तु ॥ भवेन्नखेन कुनखी कीलेन व्याधिमृच्छति । भस्मना हुतनाशः स्यान्मृन्मयेन कलिर्ध्रुवम् ॥ तस्मात्फलेन पत्रेण कुशेन कुसुमेन वा । प्राग्लेखोल्लेखने विप्र सिद्धिः कर्मसु सर्वदा ॥" इति । (प्रयोगचिन्तामणौ) "प्रथमा सात्त्विकी ज्ञेया द्वितीया राजसी मता । तृतीया तामसी तासां देवा ब्रह्माच्युतेश्वराः ॥ 'उद्धृत्य' इति सूत्रम् । 'अनामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो लेखाभ्यः पांसूनुद्धृत्य' इति हरिहरः । (कर्मप्रदीपेऽपि) "अङ्गुष्ठोपकनिष्ठाभ्यामग्निकार्ये तथोत्करम् । रेखाभ्यः समुपादायारत्निमात्रे निधापयेत्॥" (कारिकायाम्) "ये भ्रमन्ति पिशाचाद्या आकाशपथगामिनः । तेषां संरक्षणार्थाय उद्धृत्य कथितं बुधैः ॥ 'अभ्युक्ष्य' इति सूत्रम् । 'मणिकाद्भिरभ्युक्ष्याभिषिच्य' इति हरिहरः। (कारिकायामपि) "आपो देवगणाः सर्वे आपः पितृगणाः स्मृताः । तेनैवाभ्युक्षणं प्रोक्तमृषिभिर्वेदवादिभिः ॥" (संग्रहे विशेषः) "उत्तानेन तु हस्तेन कर्त्तव्यं प्रोक्षणं बुधैः । अवाचीनेन हस्तेन कर्त्तव्यं तदवेक्षणम् । मुष्टीकृतेन हस्तेन चाभ्युक्षणमुदाहृतम् ॥" एते पञ्च भूसंस्काराः । अनन्तरं कुशकण्डिकाविचारः क्रियते । 'अग्निमुपसमाधाय' इति सूत्रम् । 'कर्मसाधनभूतं लौकिकं स्मार्तं श्रौतं वाग्निम् आत्माभिमुखं स्थापयित्वा' इति हरिहरः । तथा च (प्रयोगरत्ने अत्रिः) "पात्रान्तरेणापिहितं ताम्रपात्रादिके शुभे । अग्निप्रणयनं कुर्याच्छरावे तादृशेऽपि वा ॥" (प्रयोगपारिजाते) "शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बु

धः । तस्याभावे शरावेण नवेनापि दृढेन च ॥" ( संस्कारभास्करे ) "शरावे भिन्नपात्रे वा कपाले चोल्मुकेऽपि वा । नाग्निप्रणयनं कुर्याद्व्याधिहानिभयावहम्॥" इत्यत्र शरावनिषेधकं वचनं मुख्यपात्राऽसंभवे वेदितव्यम् । कपालं खर्परम् । उल्मुकं ज्वलदग्नेरेकदेशमित्यर्थः । ( कल्पवल्ल्याम् ) "संपुटेनाग्निमानीय स्थाप्याग्नेर्दिशि कुण्डतः । आमक्रव्यभुजौ तस्मात्त्यक्त्वा कुण्डे विनिक्षिपेत्॥" ( कुशकण्डिकाभाष्ये ) " अग्निमानीय पात्रे तु प्रक्षिपेदक्षतोदकम् । यद्येवं नैव कुर्वीत यजमानभयावहम् ॥" (कल्पवल्ल्यामपि)" आनीतपात्रयोरेव प्लावनं तत्क्षणे भवेत् । नो चेत्कर्तुर्मनस्तापः स्यात्संतापस्तयोरपि ॥ " अग्निनियमः ( प्रयोगरत्ने संग्रहे च ) "उत्तमोऽरणिजन्योऽग्निर्मध्यमः सूर्यकान्तजः । उत्तमः श्रोत्रियागारान्मध्यमःस्वगृहादिजः ॥ " ( शारदातिलकेऽपि ) "सूर्यकान्तादिसंभूतं यद्वा श्रोत्रियगेहजम् । आनीय चाग्निं पात्रेण क्रव्यादांशं परित्यजेत् ॥ " ( मन्त्रमहोदधौ ) "सूर्यकान्तादरणितः श्रोत्रियागारतोऽपि वा । पात्रेण पिहिते पात्रे वह्निमेवानयेत्ततः ॥ अस्त्रेणादाय तत्पात्रं वर्मणोद्घाटयेत्तु तम् । अस्त्रमन्त्रेण नैर्ऋत्ये क्रव्यादांशं ततस्त्यजेत् । मूलेन पुरतो धृत्वा संस्कारांश्च ततश्चरेत्॥" त्याज्याग्निमाह ( देवलः ) "चाण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित् । पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः॥" अथ कर्मविशेषे अग्निनामानि ( प्रयोगरत्ने संग्रहे च ) "पावको लौकिके ह्यग्निः प्रथमः संप्रकीर्तितः । अग्निस्तु मारुतो नाम गर्भाधाने विधीयते ॥ ततः पुंसवने ज्ञेयः पावमानस्तथैव च । सीमन्ते मङ्गलो नाम प्रबलो जातकर्मणि ॥ नाम्नि वै पार्थिवो ह्यग्निः प्राशने तु शुचिः स्मृतः । सभ्यो नाम स चौले तु व्रतादेशे समुद्भवः ॥ गोदाने सूर्यनामाग्निर्विवाहे योजको मतः । आवसथ्ये द्विजो ज्ञेयो वैश्वदेवे तु रुक्मकः ॥ प्रायश्चित्ते विटश्चैव पाकयज्ञेषु पावकः । देवानां हव्यवाहश्च पितॄणां क्रव्यवाहनः ॥ शान्तिके वरदः प्रोक्तः पौष्टिके बलवर्धनः । पूर्णाहुत्यां मृडो नाम क्रोधाग्निश्चाभिचारके ॥ वश्यार्थे कामदो नाम वनदाहे तु दूषकः । कुक्षौ तु जाठरो ज्ञेयः क्रव्यादो मृतदाहके ॥ वह्निनामा लक्षहोमे कोटिहोमे हुताशनः । वृषोत्सर्गेऽध्वरो नाम शुचये ब्राह्मणः स्मृतः ॥ समुद्रे वाडवो ह्यग्निः क्षये संवर्तकस्तथा । ब्रह्मा वै गार्हपत्यश्च ईश्वरो दक्षिणस्तथा ॥ विष्णुराहवनीयः स्यादग्निहोत्रे त्रयोऽग्नयः । ज्ञात्वैवमग्निनामानि गृह्यकर्म समाचरेत् ॥" ग्रहहोमे विशेषः ( स्कान्दे ) "आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते । धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः ॥ गुरौ चैव शिखी नाम शुक्रे भवति हाटकः । शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः ॥ " अथाग्निजिह्वानामानि-"याभिर्हव्यं समश्नाति हुतं सम्यग् द्विजोत्तमैः ॥ काली कराली च मनोजवा च सुलोहिता चैव सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुचिस्तथा च चलायमाना इति सप्त जिह्वाः ॥ एताश्चोक्ता विशेषेण ज्ञातव्या ब्राह्मणेन तु । आहूय चैव होतव्यो यो यत्र विहितो विधिः ॥ अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः । न हुतं न च संस्कारो न तु यज्ञफलं भवेत् " इति ॥ अन्यत्र जिह्वैककरणमुक्तम् । " जिह्वैककरणं प्रोक्तं सप्तानामेकया ऋचा । समुद्रादूर्मिरनया होतव्यं कर्मसिद्धये "॥ जिह्वास्थानानि ( वसिष्ठकल्पे ) " कुण्डस्य पूर्वदिग्भागे काली जिह्वा प्रकीर्तिता । आग्नेये तु कराल्याख्या दक्षिणे तु मनोजवा ॥ सुलोहिता नैर्ऋते च धूम्रवर्णा तु वारुणे । स्फुलिङ्गिनी तु वायव्ये सौम्ये विश्वरुचिस्तथा ॥ काल्यां कराल्यां वा कुर्याच्छान्तिकं

पौष्टिकं तथा। मनोजवायां जिह्वायामभिचारोऽभिधीयते॥ सुलोहित यां जिह्वायां तस्यामुच्चाटनं विदुः। सर्वार्थसिद्धिकां विश्वरुचि मन्त्रविदो विदुः॥ अपरे वसुधारेति जिह्वां पूर्वोदितां जगुः। उपजिह्वेति सा प्रोक्ता लक्ष्मीस्तत्र प्रतिष्ठिता॥ कुण्डस्य मध्यमं पार्श्वमग्नेरास्यं प्रकीर्तितम्। तस्मिन्सर्वाणि कार्याणि साधनीयानि नित्यशः" ॥ (संग्रहे विशेषः) "विवाहे वारुणी जिह्वा मध्यमा यज्ञकर्मसु। उत्तरा चोपनयने दक्षिणा पितृकर्मसु॥ प्राचीना सर्वकार्येषु ह्याग्नेयी सर्वकर्मसु। ऐशानी चोग्रकार्येषु बुध्येत्तद्धोमलक्षणम्" इति॥ 'दक्षिणतो ब्रह्मासनमास्तीर्य' इति सूत्रम्। "तस्याग्नेर्दक्षिणस्यां दिशि ब्रह्मणे आसनं वारणादियज्ञियदारुनिर्मितं पीठमास्तीर्य कुशैः स्तीर्त्वा तत्र वरणाभरणाभ्यां पूर्वसंपादितं कर्मसु तत्त्वज्ञं ब्राह्मणं तदभावे पञ्चाशत्कुशनिर्मितमुपवेश्य इति हरिहरभाष्यम्॥" तथा चोक्तम् (कारिकायाम् "अग्नेर्दक्षिणतो ब्रह्मासनं कृत्वा कुशास्तृतम्। ब्रह्माणं वरयेदग्निमुत्तरेण गुणान्वितम्॥ आसनं ब्रह्मणः कार्यं वारणं वा विकङ्कतम्। चतुरस्रं हस्तमात्रं मूलदण्डसमन्वितम्॥ द्विषडङ्गुलसंख्यातो मूलदण्डो विकंकतात। करिष्येऽमुककर्माहं ब्रह्मा त्वं तत्र मे भव॥ ब्रह्मा भवामि चेत्युक्त्वा गच्छेदग्रेस्तु पूर्वतः। अपरेणाथवा कुर्यादासनस्येक्षणं ततः॥ एकदेशं तृणस्यापि स्वासने चोपवेशयेत्॥" (त्रिकारिकायाम्) "उत्तरे सर्वपात्राणि प्रणीतादीन्यनुक्रमात्। पूर्वेपैव द्विजाः सर्वे ब्रह्मा किमुत दक्षिणे॥ दक्षिणे दानवाः प्रोक्ताः पिशाचोरगराक्षसाः। तेषां संरक्षणार्थाय ब्रह्मा तिष्ठति दक्षिणे॥" ब्रह्मलक्षणम् (प्रयोगचिन्तामणौ व्यासः) वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम्। स्वशाखाढ्यमनालस्यं विप्रं कर्तारमीप्सितम्॥" इति। ब्रह्मवरणार्थमलंकारमाह (तत्रैव) "वस्त्रयुग्मं तथाप्पूरं केयूरं कर्णभूषणम्। अङ्गुलीभूषणं चैव मणिबन्धस्य भूषणम्॥कण्ठाभरणयुक्तानि प्रारम्भे सर्वकर्मणि॥" विप्राभावे दर्भवटुमाह (कुशकंडिकाभाष्ये हारीतः) "कुशग्रन्थिमयं विप्रं ब्रह्माणमुपवेशयेत्" इति। तल्लक्षणम् (परिशिष्टे) "पञ्चाशता भवेद्ब्रह्मा तदर्द्धेन तु विष्टरः। ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः॥ दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः॥" 'प्रणीय' इति सूत्रम्। 'अप' इति शेषः। तद्यथा-अग्नेरुत्तरतः प्रागग्रं कुशैरासनद्वयं कल्पयित्वा वारणं द्वादशाङ्गुलदीर्घं चतुरङ्गुलविस्तारं चतुरङ्गुलखातं चमसं सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रस्थोदकेन पूरयित्वा पश्चिमासने निधायालभ्य पूर्वासने स्थापयित्वा' इति हरिहरभाष्यम्॥ (कर्मप्रदीपेऽपि) "द्वादशाङ्गुलदीर्घेण चतुरस्रः सगर्तकः प्रस्थमात्रोदकग्राही प्रणीताचमसो भवेत्" इति 'परिस्तीर्य॥' इति सूत्रम्। अग्निं बर्हिर्मुष्टिमादाय ईशानादिप्रागग्रैर्बर्हिर्भिरुदक्संस्थमग्नेः परिस्तरणं कृत्वा' इति हरिहरभाष्यम्॥परिस्तरणप्रयोजनम् (कारिकायाम्) "वेदिका दर्भहीना तु विनग्ना प्रोच्यते बुधैः। परिधानं ततः कुर्याद्दर्भेणैव विशेषतः" स्थाननियमः (नारदपञ्चरात्रे) "एकमेखलके कुण्डे मेखलाधः परिस्तरेत्। द्विमेखले द्वितीयायां तृतीयायां त्रिमेखले॥" दर्भसंख्या (कारिकायाम्) अग्निं षोडशभिर्दर्भैः परिस्तीर्य दिशं प्रति। प्रागादीशानपर्यंतमुदक्संस्था परिस्तृतिः" इति॥ एकैकस्यां दिशि चत्वारि एवं षोडश। तच्च प्रागुदगग्रैः दक्षिणतः प्रागग्रैः,प्रत्यगुदगग्रैः, उत्तरतः प्रागग्रैरिति संस्कारभास्करे॥बर्हिर्लक्षणम् (हेमाद्रौ) कात्यायनेनोक्तम्) 'कुशा दीर्घाश्च बर्हिषः' इति। "उपमूललूनबर्हिषां मुष्टिर्बर्हिः" इति

कुशकण्डिकाटीकाकारः ॥ 'अर्थवदासाद्य' इति सूत्रम् । 'यावद्भिः पदार्थैरर्थः प्रयोजनं तावतः पदार्थान् द्वन्द्वं प्राक्संस्थान् उदगग्रानग्नेरुत्तरतः पश्चाद्वा आसाद्य' इति हरिहरः ॥ (कारिकायाम्) "अग्नेरुत्तरतस्तानि आसाद्योदग्बिलानि च। प्रागग्राणि यदा पश्चात्सादयेत्प्राग्बिलानिच॥आसादनंतुपात्राणांप्रादेशान्तरके बुधः । अङ्गुलद्वयमानेन द्वन्द्वं द्वन्द्वान्तरे न्यसेत्"इति॥उत्तरतश्चेदुदक्संस्थम् असंभवे प्राक्संस्थं पश्चिमसंस्थमुदक्संस्थमपीतिदेवयाज्ञिकभाष्ये॥पवित्रलक्षणम् (छन्दोगपरिशिष्टे) "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ तदेव दर्भपिञ्जूल्या लक्षणं समुदाहृतम् । आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥" पवित्रप्रयोजनम् (लघुकारिकायाम्) "इन्द्रवज्रं हरेश्चक्रं त्रिशूलं शंकरस्य च । दर्भरूपेण ते त्रीणि पवित्रच्छेदनानि च ॥ पुरा वृत्रवधे प्राप्ते रक्तपूर्णा वसुन्धरा । द्वौ दर्भौ देवता त्रीणि पवित्रच्छेदनानि च"॥ प्रोक्षणीविचारः (कर्मप्रदीपे) "वारणं पाणिपात्रं च द्वादशाङ्गुलविस्तृतम् । पद्मपत्राकृतिर्वापि प्रोक्षणीपात्रमीरितम् ॥" आज्यस्थाली–"आज्यस्थाली कांस्यमयी यद्वा ताम्रमयी तथा । प्रादेशमात्रदीर्घा सा ग्रहीतव्याऽव्रणा शुभा" ॥ (कर्मप्रदीपे) "आज्यस्थाली च कर्तव्या तैजसी द्रव्यसंभवा । महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च ॥ आज्यस्थालीप्रमाणं च यथाकामं तु कारयेत् । सुदृढामव्रणां भद्रामाज्यस्थालीं प्रचक्षते " चरुस्थाली–(रत्नमालायाम्) "दृढा प्रादेशमात्रोर्ध्वं तिर्यङ् नातिबृहन्मुखी । मृन्मयौदुम्बरी वापि चरुस्थाली प्रशस्यते ॥" संमार्जनकुशानाह (बादरायणः) "स्रुवसंमार्जनार्थाय पञ्च वाथ त्रयोऽपि वा । प्रादेशमात्रान्गृह्णीयात्संमार्जकुशसंज्ञकान् ॥ उपयमनकुशाः सप्त पञ्च वाथ त्रयोऽपि वा" ॥ समिल्लक्षणम् (छन्दोगपरिशिष्टे) "नाङ्गुष्ठादधिका ग्राह्या समित्स्थूलतया क्वचित् । न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ प्रादेशान्नाधिका नोना न तथा स्याद्विशाखिका । न सपर्णा न निर्वीर्य्या होमेषु च विजानता ॥" (हेमाद्रौ मरीचिः) "प्रागग्राः समिधो ग्राह्या अखर्वा नोष्ठपाटिताः । काम्येषु वश्यकर्मादौ विपरीता जिघांसति ॥ विशीर्णा विदला ह्रस्वा वक्रा बहुशिराः कृशाः । दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशकाः ॥ होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण संयुताः । प्रादेशमात्राः समिधा अशाखा अपलाशिनीः ॥" (आगमे तु विशेषः) " विशीर्णा द्विदला ह्रस्वा वक्रा स्थूला कृशा द्विधा । कृमिविद्धा च दीर्घा च निस्त्वक्च परिवर्जिता ॥" वर्ज्यसमिद्धोमे फलं तत्रैव–"विशीर्णाऽऽयुःक्षयं कुर्याद् द्विदला व्याधिसंभवम् । ह्रस्वया मृत्युमाप्नोति वक्रा विघ्नकरी तथा ॥ स्थूलया ह्रियते लक्ष्मीः कृशया जायते क्षयः । द्विधया नेत्ररोगः स्यात्कीटदष्टार्थनाशिनी ॥ द्वेषं प्रकुर्वते दीर्घाः प्राणघ्ना निस्त्वचः स्मृताः । सक्षीरा नाधिका नोनाः समिधः सर्वकामदाः ॥ आर्द्रा सत्वक् समाविद्धा तर्जन्यङ्गुलवर्तुला । ईदृशीं होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम् ॥ श्रौते स्मार्ते च ताः प्रोक्ताः समिधः परिकीर्तिताः ॥" समिद्वृक्षानाह (मरीचिः) "पलाशः खदिरोऽश्वत्थः शमी वट उदुम्बरः । अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुः " ॥ (ब्रह्मपुराणेऽपि) "शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः । अश्वत्थोदुम्बरौ बिल्वश्चन्दनस्सरलस्तथा ॥ सालश्च देवदारुश्च खदिरश्चैव यज्ञियाः ॥" स्रुवलक्षणम् (संस्कारभास्करे) " खादिरादेः स्रुवः कार्यो हस्तमात्रप्रमाणतः ।

अङ्गुष्ठपर्वखातं तत्रिभागं दीर्घपुष्करम् ॥ ( संग्रहे विशेषः ) "शमीमयः स्रुवः कार्यस्तदलाभेऽन्यवृक्षजः । खादिरस्तु स्रुवः
कार्यः सर्वकामार्थसिद्धये" अन्यच्च । "खादिरो वाथ वार्णो वा द्विवितस्तिः स्रुवः स्मृतः । स्रुवोऽन्तश्चतुर्विंशः स्यात्षड्देवास्तत्र
संस्थिताः अग्निरुद्रौ यमश्चैव विष्णुः शक्रः प्रजापतिः । मूले चतुरङ्गुलेऽग्निर्द्वितीये रुद्रदैवतम् ॥ तृतीये यमनो देवश्चतुर्थे
विष्णुदेवता । पञ्चमे शक्रदेवः स्यात्षष्ठे चैव प्रजापतिः ॥ यममग्निं परित्यज्य शक्रं रुद्रं प्रजापतिम् । विष्णुस्थेन च हूयेत
एवं कर्म शुभप्रदम् ॥" इति ॥ ( कारिकायाम् ) "अग्रे धृत्वा तु वैधव्यं मध्ये धृत्वा प्रजाक्षयः मूले च म्रियते होता स्रुवस्थानं कथं
भवेत् ॥ अग्रान्मध्यस्तु यन्मध्यं मूलान्मध्यस्तु मध्यमम् । स्रुवं च धारयेद्विद्वानायुरारोग्यदं सदा ॥ अरत्निमात्रकः स्रुवः अङ्गुष्ठ
वृत्तपुष्कलः।अग्निः सूर्यश्च सोमश्च विरिञ्चिरनिलो यमः॥एते वै षड् देवाश्च चतुरङ्गुलभागिनः।अग्निभागेऽर्थनाशाय सूर्ये व्याधिकरो
भवेत् ॥ सोमे च निष्फलो धर्मो विरिञ्चिः सर्वकामदः। अनिले रोगमाप्नोति यमे मृत्युः प्रजायते ॥" ( शौनकेन विशेष उक्तः "खादि
रेण स्रुवः कार्यः पालाशेन जुहूर्भवेत् । तदभावे पलाशस्य पर्णाभ्यां हूयते हविः ॥ पलाशपर्णाभावे तु पर्णैर्वा पिप्पलोद्भवैः ॥"
पलाशपर्णं मध्यमं ग्राह्यम् 'मध्यमेन पर्णेन जुहोति' इति श्रुतेः ॥ (स्रुचि विशेषः) "षट्त्रिंशाङ्गुलं स्रुचं कारयेत्खादिरादिभिः।कर्दमे
गोपदाकारं पुष्करं तद्वदेव हि।।पुष्कराग्रं षडंशं तु खातं द्व्यङ्गुलविस्तृतम् । अङ्गुष्ठैकं स्थूलतरं दण्डे तस्य च कङ्कणम्।।" इति।।(स्रुग
धारणे कारिका ) "अग्निः सोमो हरिर्ब्रह्मा वायुः कीनाश एव च । षडङ्गुलविभागेन स्रुचि देवा व्यवस्थिताः ॥ " आज्यविचारः
( पिङ्गलामते ) "उत्तमं गोघृतं प्रोक्तं मध्यमं महिषीभवम् । अधमं छागलीजातं तस्माद्गव्यं प्रशस्यते ॥ " चरुविचारः ( रेणु
कारिकायाम् ) "त्रिभिः प्रक्षालितं दैवे सकृत्पित्र्ये च कर्मणि । पात्रासादनकाले च तेषां प्रक्षालनं भवेत् ॥ हविष्येषु यवा मुख्या
स्तदनु व्रीहयः स्मृताः । यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत् ॥ यवानामिव गोधूमा व्रीहीणामिव शालयः । अभावे व्रीहि
यवयोर्दध्ना वा पयसापि वा ॥" पूर्णपात्रविचारः (कारिकायाम्)"अकृते पूर्णपात्रे च छिद्रयज्ञः प्रजायते । पूर्णपात्रे च संपूर्णे सर्वं
संपूर्णता भवेत् ॥ अष्टमुष्टिर्भवेत्किंचित्किंचिदष्टौ च पुष्कलम् । पुष्कलानि च चत्वारि पूर्णपात्रं प्रचक्षते ॥ " ( गदाधरभाष्ये )
"यावतान्नेन भोक्तुस्तु तृप्तिः पूर्णैव जायते । तद्वरार्थमतः कुर्य्यात्पूर्णपात्रमिति स्थितिः ॥ यवैर्वा व्रीहिभिः पूर्णं भवेत्तत्पूर्णपात्र
कम् । वराभिलषितं द्रव्यं सारभूतं तदुच्यते ॥" अन्यच्च–"गौर्वरिष्ठतमा विप्रैर्वेदेष्वपि निगद्यते । न ततोऽन्यद्वरं यस्मात्तस्माद्गौर्वर
उच्यते ॥ आसां गवामभावे तु दक्षिणा त्वभिधीयते । वरस्तत्र भवेद्दानमपि वाच्छादयेद्गुरुम्" इति ॥ पवित्रे कृत्वा' इति सूत्रम् ।
'प्रथमं त्रिभिः कुशतरुणैरग्रतः प्रादेशमात्रं विहाय द्वे कुशतरुणे प्रच्छिद्य' इति हरिहरः ॥ ( रेणुकारिकायामपि ) "एवमास
दनं कृत्वा पवित्रच्छेदनैः कुशैः । अङ्गुष्ठाङ्गुलिपर्वभ्यां छिन्द्यात्प्रादेशसंमितम् ॥ " इति ॥ अङ्गुलिरनामिकापर्व । 'प्रोक्षणीः सं
स्कृत्य' इति सूत्रम् ॥ 'प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय
पवित्रे प्रोक्षणीषु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकं दक्षिणेनोच्छाल्य प्रणीतोदकेन प्रोक्ष्य'

इति हरिहरभाष्यम् । 'अर्थवत्प्रोक्ष्य' इति सूत्रम् । 'अर्थवन्ति प्रयोजनवन्ति आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि प्रोक्षणीभिरद्भिरासादनक्रमेणैकैकशः प्रोक्ष्य असंचरे प्रणीताग्न्योरन्तराले प्रोक्षणीपात्रं निधाय' इति हरिहरभाष्यम् ॥ ( कारिकायामपि ) "पात्राणि क्रमशः प्रोक्ष्य निदध्यात्तामसंचरे । असंचरः प्रणीताग्न्योरन्तरेण प्रकीर्तितः ॥ स्वालम्भान्निर्वपेदापमाज्यं स्थाल्यां यथार्हतः ॥" 'निरूप्याज्यम्' 'इति सूत्रम् ।' आसादितमाज्यम् आज्यस्थाल्यां पश्चादग्नेर्निहितायां प्रक्षिप्य चरुश्चेच्चरुस्थाल्यां प्रणीतोदकमासिच्य आसादितांस्तण्डुलान्प्रक्षिप्य' इति हरिहरभाष्यम् । 'अधिश्रित्य' इति सूत्रम् । तत्राज्यं ब्रह्माधिश्रयति तदुत्तरतः स्वयं चरुमेवं युगपदग्नावारोप्य' इति हरिहरभाष्यम् ॥ 'पर्यग्नि कुर्यात्' इति सूत्रम् । 'ज्वलदुल्मुकं प्रदक्षिणमाज्यचर्वोः समन्ताद्भ्रामयेत् अर्द्धश्रिते चरौ' इति हरिहरभाष्यम् ॥ श्रपणलक्षणम् ( कारिकायाम् ) "अन्वर्थः श्रपितः स्विन्नो ह्यदग्धोऽकठिनः शुभः । न चातिशिथिलः पच्यो न चरुश्चारसस्तथा । द्वयोः पर्यग्निकरणं कर्तव्यं ज्वलदग्निना ॥" इति 'स्रुवं प्रतप्य संमृज्य' इति सूत्रम् ॥ 'दक्षिणेन हस्तेन स्रुवमादाय प्राञ्चमधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन संमार्गाग्रैर्मूलतोऽग्रपर्यन्तं मूलेऽग्रमारभ्य अधस्तान्मूलपर्यन्तम् ।' इति हरिहरः ॥ 'पुनः प्रतप्य निदध्यात्' इति सूत्रम् ॥ 'पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात ।' इति हरिहरः ॥ 'आज्यमुद्वास्य' इति सूत्रम् । आज्यमुत्थाप्य चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय चरुं चानीय आज्यस्योत्तरतो निधाय' इति हरिहरभाष्यम् ॥ 'उत्पूय' इति सूत्रम् ॥ 'ऊर्द्धं पूर्ववत् पवित्राभ्याम् ।' इति हरिहरः ॥ 'अवेक्ष्य' इति सूत्रम् ॥ 'अवलोक्याज्यं तस्मादपद्रव्यनिरसनम् ।' इति हरिहरः । "प्रोक्षणीश्च पूर्ववत्" इति सूत्रम् ॥ 'पवित्राभ्यामुत्पूय पूर्ववत् ।' इति हरिहरः । 'उपयमनान्कुशानादाय' इति सूत्रम् ॥ 'दक्षिणपाणिना गृहीत्वा सव्ये निधाय' इति हरिहरः ॥ ( कारिकायामपि ) "यथा चक्रायुधं विष्णोर्यथा शूलं हरस्य च । यथा वज्रं सुरेन्द्रस्य तथा विप्रकरे कुशाः ॥" 'समिधोऽभ्याधाय' इति सूत्रम् ॥ 'तिष्ठन्समिधः प्रक्षिप्य' इति हरिहरः ॥ (कारिकायामपि) "लाजहोमे समिद्धोमे ऊर्ध्वहोमे तथैव च । तिष्ठतैव हि कर्त्तव्याः स्वाहाकारा अपि ध्रुवम्" ॥ 'पर्युक्ष्य जुहुयात्' इति सूत्रम् ॥ ' प्रोक्षण्युदकेन सर्वेण सपवित्रेण दक्षिणचुलुकेन गृहीतेन अग्निमीशानादि उदगपवर्गं परिषिच्य जुहुयात् आघारादीन् संस्रवधारणार्थं पात्रं प्रणीताग्न्योर्मध्ये निदध्यात् । इति हरिहरभाष्यम् ॥ ( कारिकायामपि ) " अधोमुख ऊर्ध्वपादः प्राङ्मुखो हव्यवाहनः । तिष्ठत्येव स्वभावेन आहुतिः कुत्र दीयते ॥ सपवित्राम्बुहस्तेन वह्नेः कुर्यात्प्रदक्षिणाम् । हव्यवाट् सलिलं दृष्ट्वा बिभेति संमुखो भवेत् ॥" ( त्रिकारिकायाम् ) "आघारौ नासिका ज्ञेया आज्यभागौ च चक्षुषी । वक्त्रश्चोदरकुक्षी च कटी व्याहृतिभिः स्मृता ॥ शिरो हस्तौ च पादौ च पञ्च वारुणकाः स्मृताः । प्रजापतिः स्विष्टकृतं श्रोत्रे द्वे परिकीर्तिते ॥" ( शारदातिलके) "सधूमोऽग्निः शिरो ज्ञेयो निर्धूमश्चक्षुरेव च । ज्वलत्कृशो भवेत्कर्णः काष्ठमग्नेर्मनस्तथा ॥ अग्निर्ज्वालायतेयत्रशुद्धस्फटिकसन्निभः । तन्मुखं तस्य विज्ञेयं चतुरङ्गुलमानतः ॥ प्रज्वलोऽग्निस्तथा जिह्वा एतदेवाग्निलक्षणम् । आस्यान्तर्जुहुयादग्नेर्विपश्चित्सर्वं

कर्मसु ॥ कर्णहोमे भवेद्व्याधिर्नेत्रेऽन्धत्वमुदाहृतम् । नासिकायां मनःपीडा मस्तके च धनक्षयः ॥" (कारिकायामपि) "अग्निकर्णे हुतं दद्याद्दुर्भिक्षं मरणं ध्रुवम् । नासिकायां मनोदुःखं नेत्रे ग्रामो विनश्यति ॥" (संस्कारभास्करे) "अन्वारम्भे कृते होमे ब्रह्मणा दक्षिणे करे । बहुकाष्ठैः समिन्धीयादर्चिष्मन्तं क्रियाक्षमम् ॥ स्रुवेणाज्यं गृहीत्वाग्नेः प्रत्यगुत्तरदेशतः । आरभ्य दिशमाग्नेयीमाज्यधारामृजुं हरेत् ॥ मनसा संस्मरेत्स्वाहायुक्तं चैव प्रजापतिम् । नैर्ऋतिं दिशमाश्रित्य ऐशानीं पूर्ववत्क्षिपेत् ॥ तत्रेन्द्राय पदं स्वाहायुक्तं चोपांशुकं भवेत् । स्वाहेत्याघारयेदेतावाघाराविति भाषितौ ॥ प्राच्यौ वा जुहुयादेतावृजू संततमेव च । जुहुयादग्नये स्वाहा सोमायेति तथापरम् ॥ प्रथमेशानकोणाग्रे द्वितीयाग्नेयकोणगा । सुसमिद्धेऽथ वा वह्नौ होतव्ये चोत्तराहुतिः ॥ भूरादिनवसु स्विष्टकृते चाद्यचतुष्टये । अन्वारम्भो भवेत्तेषु सोऽन्वारम्भः कुशेन वै ॥" अग्निपूजाविचारः (विष्णुधर्मोत्तरे) "मध्येऽपि गन्धपुष्पादीन्दद्यादग्नेर्न संशयः । बहिर्नैवेद्यमात्रं तु दातव्यमिति निश्चयः ॥" इति ॥ व्याहृतिहोमविचारः (कारिकायाम्) "आज्येन व्याहृतीर्हुत्वा भूर्भुवः स्वरिति क्रमात् । पञ्चवारुणकं तद्वदन्ते चैव प्रजापतिः ॥" "प्राङ् महाव्याहृतिभिः स्विष्टकृदन्यच्चेदाज्याद्धविः" इति पारस्करसूत्रम् । अस्यार्थः (हरिहरभाष्ये) 'यत्र होमे आज्यादन्यद्धविः स्यात् । अत्र हविःशब्देन चरुरेव हविः । यत्र चरुः स्यात्तत्र महाव्याहृतिभिः प्राक् स्विष्टकृद्भवति । अन्यत्रान्तेऽपीति भाष्यकारः । स्विष्टकृद्धोमः सर्वहोमद्रव्यैःकार्यः ॥' अन्वाधानविचारः—यद्यपि यजुषामन्वाधानं गोभिलहरिहरगदाधरादिभिर्नोक्तत्वात्स्मार्ते कर्मणि नान्वाधानं तथापि शिष्टाचारप्राप्तत्वात्सर्वहोमे प्रत्याहुति त्यागस्य कर्तुमशक्यत्वादन्वाधानं कार्यम् ॥ अग्निप्रज्वलनमाह (आपस्तम्बः) "न कुर्यादग्निधमनं कदाचिद्व्यजनादिना । मुखेनैव धमेदग्निं धमन्या वेणुजातया" (देवलोऽपि) "जुहूतश्चाथ पर्णेन पाणिशूर्पपटादिना । न कुर्यादग्निधमनं तथा च व्यजनादिना ॥ पर्णेनैव भवेद्व्याधिः शूर्पेण धननाशनम् । पाणिना मृत्युमाप्नोति पटेन विफलं भवेत् ॥ व्यजनेनातिदुःखाय आयुःपुण्यं मुखाद्धमात् । मुखेन धमयेदग्निं मुखादग्निरजायत ॥ अग्निं मुखेनेति तु यल्लौकिके योजयेच्च तत् । वेणोरग्निप्रसूतित्वाद्वेणुरग्नेश्च पातनः ॥ तस्माद्वेणुधमन्यैव धमेदग्निं विचक्षणः' ॥" (छन्दोगपरिशिष्टे) "योऽनार्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः । मन्दाग्निश्चामयावी च दरिद्रश्चैव जायते ॥ तस्मात्समिद्धे होतव्यं नासमिद्धे कथंचन । आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीं पराम् ॥" अथ होममुद्रालक्षणम् (कारिकायाम्) "होममुद्रा त्रिधा ज्ञेया मृगी हंसी च सूकरी । सूकरी सर्वाङ्गुलीभिर्हंसी मुक्तकनिष्ठिका ॥ मृगी कनिष्ठतर्जन्योर्मुद्रात्रयमुदाहृतम् । यज्ञे शान्तिककल्याणे मृगी हंसी प्रकीर्तिता ॥ अभिचारादिके होमे सूकरी कथिता बुधैः ॥" पञ्चमुद्राः कथिताः (कुशकण्डिकाभाष्ये) "मयूरी कुक्कुटी हंसी सूकरी च मृगी तथा । पञ्चमुद्रा विजानीयाद्धोमद्रव्यग्रहे बुधैः ॥ न्युब्जेन पाणिना द्रव्यं तर्जनीरहितेन यत् । क्रियते हवनं विप्रैर्मयूरीं तां विदुर्बुधाः ॥ अङ्गुष्ठयन्त्रिताः सर्वा अङ्गुल्यो त्तानलक्षिताः । हवनं क्रियते याभिः कुक्कुटी सा प्रकीर्तिता ॥ विकनिष्ठिका तु हंसी मुकुलाभा च सूकरी । मध्यमानामिकाङ्गुष्ठैर्मृगी चैवोपलक्षिता ॥ फलमूलयजौ ज्ञेया मुद्रा श्रेष्ठा शिखण्डिनी । जारमारणकर्तव्ये कुक्कुटी तु प्रकीर्तिता ॥

वश्योच्चाटनपूर्वाणां कर्मणां सूकरी मता । शान्तिके पौष्टिके कार्ये मृगी हंसी तथोत्तमा ॥ " शाकल्यप्रमाणम् ( महार्णवे ) " तिलास्तु द्विगुणाः प्रोक्ता यवेभ्यश्चैव सर्वदा । अन्ये सौगन्धिकाः स्निग्धा गुग्गुलादियवैः समाः ॥ " ( त्रिकारिकायाम् ) " आयुःक्षयं यवाधिक्यं यवसाम्यं धनक्षयम् । सर्वकामसमृद्ध्यर्थं तिलाधिक्यं सदैव हि ॥ " अथ द्रव्यभेदेनाहुतिप्रमाणम् ( शारदातिलके ) "अथात्र होमद्रव्याणां प्रमाणमभिधीयते । कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ॥ उक्तानि पञ्चगव्यानि तत्समानि मनीषिभिः । तत्समं मधु दुग्धान्नमक्षमात्रमुदाहृतम् ॥ दधि प्रसृतिमात्रं स्याल्लाजाः स्युर्मुष्टिसंमिताः । पृथुकास्तत्प्रमाणाः स्युः सक्तवोऽपि तथा मताः ॥ गुडं पलार्द्धमानं स्याच्छर्करापि तथा मता । ग्रासार्द्धं चरुमानं स्यादिक्षुः पर्वावधिर्मतः ॥ एकैकं पत्रपुष्पाणि तथाऽपूपानि कल्पयेत् । कदलीफलनारङ्गफलान्येकैकशो विदुः ॥ मातुलुङ्गं चतुःखण्डं पनसं दशधा कृतम् । अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः ॥ त्रिधा कृतं फलं बिल्वं कपित्थं खण्डितं त्रिधा । उर्वारुकफलंहोमेचोदितं खण्डितं त्रिधा ॥ फलान्यन्यानि खण्डानि समिधः स्युर्दशाङ्गुलाः । दूर्वात्रयं समुद्दिष्टं गुडूची चतुरङ्गुला ॥ व्रीहयो मुष्टिमात्राः स्युर्मुद्गमाषा यवा अपि । तण्डुलाः स्युस्तदर्द्धांशाः कोद्रवा मुष्टिसंमिताः ॥ गोधूमा रक्तकलमा विहिता मुष्टिमानतः ॥ तिलाश्चुलुकमात्राः स्युःसर्षपास्तत्प्रमाणकाः ॥ शुक्तिप्रमाणं लवणं मरीचान्येकविंशतिः । पुरं बदरमानं स्याद्रामठं तत्समं स्मृतम् ॥ चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमानि च । तिन्तिडीबीजमानानि समुद्दिष्टानि देशिकैः ॥ " अथ काम्यहोमादौ वह्निवासस्तत्फलंच(मुहूर्त्तचिन्तामणौ) "सैका तिथिर्वारयुता कृताप्ता शेषेगुणे२ऽभ्रे०भुविवह्निवासः । सौख्याय होमेशशि१युग्म२शेषेप्राणार्थनाशो दिविभूतले च ॥" होमे खेटाहुतिफलमपि (तत्रैव) सूर्यभात्त्रित्रिभे चान्द्रे सूर्यविच्छुक्रपङ्गवः । चन्द्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले" ॥ (ग्रन्थान्तरे) "अग्नेः स्थापनवेलायां पूर्णाहुत्यामथापि वा । आहुतिर्वह्निवासश्च विलोक्यौ शान्तिकर्मणि" इति ॥ अस्यापवादः(ज्योतिर्निबन्धे संस्कारभास्करे च) दुर्गाहोमविधौ विवाहसमये सीमन्तपुत्रोत्सवे गर्भाधानविधौ च वास्तुसमये विष्णोः प्रतिष्ठादिषु ॥ मौञ्जीबन्धनवैश्वदेवकरणे संस्कारनैमित्तिके होमे नित्यभवे न दोषकथनं चक्रं च वह्नेरपि" इति ॥ (शान्तिसारेऽपि) "संस्कारेषु विचारोऽस्य न कार्यो नापि वैष्णवे ॥ नित्ये नैमित्तिके कार्यो न चाब्दे मुनिभिः स्मृतः" इति ॥ संस्कारेषु गर्भाधानादिषोडशसंस्कारेषु; वैष्णवे विष्णुप्रतिष्ठादिषु, नित्ये नित्यहोमे, नैमित्तिके मूलशान्त्यादौ, आब्दिके युगादिनिमित्तहोमे इत्यर्थः ॥ जपाद्यङ्गहोमेऽपि न दिनं शोध्यं तस्य स्वतन्त्रकालत्वाभावात् ॥ इति ॥ दैवाद्धोमकरणे शान्तिः (विष्णुधर्मोत्तरे) "क्रूरग्रहमुखे चैव संजाते हवने शुभे । शान्तिं विधाय गां दद्याद्ब्राह्मणाय कुटुम्बिने ॥ आयसीं प्रतिमां कृत्वा निक्षिपेत्तामधोमुखीम् । गोमूत्रमधुगन्धाद्यैरर्चितां प्रतिमां ततः ॥ अग्रे निधाय संपूज्य तत्र होमो विधीयते ॥ " इति ॥ होमारम्भे प्रथमतो गणपतये ह्याहुतिर्देया ॥ तथा च । ( भविष्योत्तरे ) "गणाधिपतये देया प्रथमा तु वराहुतिः । अन्यथा विफलं विप्र भवतीह न संशयः ॥ आघारावाज्यभागौ तु आज्येनैव यथाक्रमम् । एकैकस्याहुतिं हुत्वा अन्यहोमं ततः परम् ॥ केवलं ग्रहयज्ञं च सर्वशान्त्यादिकेषु च । प्रणवादिश्च तल्लिङ्गः स्वाहाकारान्त एव च ॥ जुहुयात्सर्वदेवानां

वेद्यां ये चोपकल्पिताः॥"( संस्कारभास्करे शौनकः) "अन्ते पूर्णाहुतिं हुत्वा समुद्राद्भूर्मिसूक्ततः । सन्तताभाज्यधारान्तां पूर्णाहुतिम थाचरेत्"॥ ( मात्स्येऽग्निपुराणे च ) "मूर्द्धानं दिवमन्त्रेणावशेषघृतधारया । दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचन"॥ (ग्रहकल्प वल्ल्याम् । " शुक्रज्योत्यनुवाकेन घृतेनाच्छिन्नधारया । होमान्ते सर्वकल्याणी देया पूर्णाहुतिः सदा " ॥ इति ॥ पूर्णाहुतावाज्यवि चारः ( कारिकायाम् ) "अन्यदाज्यं समानीयाधिश्रिते स्रुक्स्रुवावुभौ । तौ प्रतप्य च संमार्गकुशैः संमृज्य सिञ्चयेत्॥ पुनः प्रतप्य याम्यायां निदध्यात्स्रुक्स्रुवौ च तौ । आज्यमुद्रास्य चोत्पूयाऽवेक्ष्यापद्रव्यनिष्कृतिः॥चतुर्गृहीतमाज्यं तद्गृहीत्वा स्रुचि मध्यतः ॥ वस्त्रताम्बूलपूगादिफलपुष्पसमन्विताम् । अधोमुखस्रुवच्छन्नां गन्धाक्षतसमन्विताम् ॥ पूर्वं दक्षिणहस्तेन पश्चाद्वामेन पाणिना ॥ अग्रमध्यममध्यस्थं मूलमध्यममध्यतः ॥ पाणिद्वयेन होतव्यं पाणिरेको निरर्थकः ॥ गृहीत्वाथ स्रुचं कर्ता शंखसन्निभमुद्रया । वामस्तनान्तमानीय नाभिमूलात्स्रुचं ततः॥सप्ततेत्यनुवाकान्ते मखे सूक्तान्विशेषतः । श्रावयेत्सूक्तमाग्नेयं वैष्णवं रौद्रमैन्दवम्॥महा वैश्वानरं चापि चमकानि ततःपठेत् । केचित्कर्मसु पूर्णाहुतिहोमो न कर्त्तव्यः तदुक्तम् ( प्रयोगरत्ने )"विवाहादिक्रियायां च शालायां वास्तुपूजने । नित्यहोमे वृषोत्सर्गे न पूर्णाहुतिमाचरेत् ॥ " होमान्ते बलिदानम् ( हेमाद्रौ ) ''होमावसाने कृततूर्यनादो गुरुर्गृही त्वा बलिपुष्पधूपम् ॥ आवाहयेल्लोकपतीन् क्रमेण मन्त्रैरमीभिर्यजमानयुक्तः ॥ " ( प्राचीनहोमपद्धतौ ) "पूर्णाहुतिमथो हुत्वा बर्हिर्होमादिकं चरेत् " इति ॥ "बर्हिर्हुत्वा प्राश्नाति" इति सूत्रम् । 'सर्वहोमं हुत्वा शेषप्राशनमिति कात्यायनोक्तेः सर्वेषामा हुतीनां होमद्रव्यं स्रुवेऽवशेषितं संस्रवत्वेन प्रसिद्धं पात्रान्तरे प्रक्षिप्यते तत्प्राशनम् ।' इति हरिहरः॥( शान्तिरत्ने ) "ऐशान्यामाहरे द्भस्म स्रुचा वाथ स्रुवेण वा । अङ्कनं कारयेत्तेन शिरःकण्ठांसकेषु च " इति ॥ ( नारदः ) "श्रेयः संपाद्य दानं च अभिषेको विसर्जनम् । विप्राशिषः प्रगृह्णीयात्तान्मिष्टान्नेन भोजयेत् ॥" ब्राह्मणभोजनसंख्या ( मन्त्रमहोदधौ ) शान्तौ वक्ष्ये भोजयेत होमाद्वि प्रान् दशांशतः । उत्तमं तद्भवेत्कर्म तत्त्वांशेन तु मध्यमम् ॥ होमाच्छतांशतो विप्रभोजनं त्वधम तु तत् । शान्तेर्द्विगुणितं विप्र भोजनं स्तम्भने मतम् ॥ त्रिगुणं द्वेषणोच्चाटे मारणे होमसंमितम् "। दक्षिणाविचारः ( ब्रह्मवैवर्त्ते )"यज्ञो दक्षिणया सार्द्धं पुत्रेण च फलेन च । कर्म्मिणां फलदाता चेत्येवं वेदविदो विदुः ॥ कृत्वा कर्म च तस्यैव तूर्णं दद्याच्च दक्षिणाम् । तत्कर्मफलमाप्नोति वेदैरुक्त मिदं मुने ॥ मुहूर्त्ते समतीते तु भवेच्छतगुणा च सा । त्रिरात्रे तद्दशगुणा सप्ताहे द्विगुणा ततः ॥ मासे लक्षगुणा प्रोक्ता ब्राह्म णानां च वर्द्धते । संवत्सरे व्यतीते तु सा त्रिकोटिगुणा भवेत् ॥ कर्म्म तद्यजमानानां सर्वं च निष्फलं भवेत् । स ब्रह्मस्वापहारी च न कर्मार्होऽशुचिर्नरः ॥ " इति श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनगरनिवासिना गौडवंशोद्भवश्रीवासिष्ठगोत्रश्रीरामकृष्णपौत्रेण श्रीकस्तूरीचन्द्रसूनुना श्रीमहादेवभक्तशुक्लयजुर्वेदीयमाध्यंदिनवाजसनेयीशाखानुयायिना वैद्यपण्डितश्रीचतुर्थीलालशर्मणा विरचिते अनुष्ठानप्रकाशे महानिबन्धे विचारकाण्डे स्मार्तहवनविचारप्रकरणं समाप्तम् ॥ ॥ अथ तन्त्रोक्तमन्त्रानुष्ठानविचारः । ( पुरश्चरण चंद्रिकायाम् ) "पुण्यक्षेत्रादिकं गत्वा कुर्य्याद्भूमिपरिग्रहम् । तथा ह्यमुकमन्त्रस्य पुरश्चरणसिद्धये ॥ मयेयं गृह्यते भूमिर्मन्त्रो मे

सिध्यतामिति। भूमेः परिग्रहं कृत्वा परिमाणं च सर्वतः ॥ ग्रामक्रोशमितं स्थानं नद्यादौ स्वेच्छया मितम्। नगरादावथ क्रोशं क्रोशयुग्ममथापि वा ॥ आहारादिविहारार्थं तावतीं भूमिमाक्रमेत्। क्षीरवृक्षोद्भवान्कीलान् स्वस्वमन्त्राभिमन्त्रितान्। निखनेद्दशदिग्भागे तेष्वङ्गं च प्रपूजयेत् ॥ क्षेत्रे चाकीलिते मन्त्री निर्विघ्नैः परिभूयते। क्षेत्रपालादिकं तत्र पूजयेद्विधिवत्ततः ॥ दिक्पतिभ्यो बलिं दत्त्वा ततः क्षेत्रं समाश्रयेत्। क्षेत्रमध्य समाश्रित्य कूर्मचक्रं विचिन्तयेत् ॥" (मन्त्रमहोदधौ) "चिकीर्षुर्देवतोपास्तिमादौ भावि विचारयेत्। स्नानदानादिकं कृत्वा स्मृत्वा हरिपदाम्बुजम् ॥ शयीत कुशशय्यायां प्रार्थयेद्वृषभध्वजम्। भगवन्देवदेवेश शूलभृद्वृषवाहन ॥ इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वतः। इत्यादिभिः शिवं प्रार्थ्य निद्रां कुर्य्यान्निराकुलः ॥ स्वप्नं दृष्टं निशि प्रातर्गुरवे विनिवेदयेत्। तमन्तरेण मन्त्रस्य स्वयं स्वप्नं विचारयेत्॥" अनन्तरकृत्यम्(देवीभागवते) "आदौ कुर्य्याद्व्रतं मन्त्री देहशोधनकारकम्। पुरश्चर्यां ततः कुर्य्यात्समस्तफलभाग्भवेत् ॥ पुरश्चरणमादौ च कर्मणां सिद्धिकारकम्। स्वाध्यायाभ्यसनस्यादौ प्राजापत्यं चरेद्द्विजः ॥ केशश्मश्रुलोमनखान् वापयित्वाऽऽप्लुतः शुचिः। तिष्ठेदहनि रात्रौ तु शुचिरासीत वाग्यतः ॥ यस्य कस्यापि मन्त्रस्य पुरश्चरणमारभेत्। व्याहृतित्रयसंयुक्तां गायत्रीं चायुतं जपेत् ॥ नृसिंहार्कवराहाणां तान्त्रिकं वैदिकं तथा। विना जप्त्वा तु गायत्रीं तत्सर्वं निष्फलं भवेत् ॥" ऋग्विधाने (शौनकः) "निष्कृतिर्नेहि वेदानां मन्त्राणां कलिदोषतः। कलिदोषनिवृत्त्यर्थं गायत्रीमाश्रयेद्द्विजः ॥ गायत्रीमन्त्रसिद्ध्यर्थं गायत्र्यायुतं जपेत्। सर्वेषां वेदमन्त्राणां सिद्ध्यर्थं लक्षकं जपेत् " ॥ (शारदातिलके मन्त्रमहोदधौच) "प्रातरुत्थाय शिरसि ध्यात्वा गुरुपदाम्बुजम्। आवश्यकं विनिर्वर्त्य स्नातुं यायात्सरित्तटे ॥ देशिको विधिवत्स्नात्वा कृत्वा पौर्वाह्णिकीः क्रियाः। यायादलंकृतो मौनी यागार्थं यागमण्डपम्॥ गृहद्वारंसथागत्य द्वारपूजां समाचरेत्। द्वारमस्त्राम्बुना प्रोक्ष्य गणेशं चोर्ध्वतो यजेत्। महालक्ष्मीं दक्षभागे वामभागे सरस्वतीम् ॥ पुनर्दक्षे यजेद्विघ्नं गङ्गां च यमुनामपि। पुनर्वामे क्षेत्रपालं स्वःसिन्धुयमुने अपि ॥ पुनर्दक्षे तु धातारं विधातारं तु वामतः। तद्वन्निधी शङ्खपद्मौ ततोऽष्टौद्वारपालकान् ॥ द्वारपूजां विधायेत्थं प्रविश्यार्चनमन्दिरम्। विशेन्मृद्वासने मन्त्री प्राङ्मुखो वाप्युदङ्मुखः ॥ बद्धपद्मासनो मौनी समाहितजितेंद्रियः। स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि देशिकः ॥ सुवासिताम्बुसंपूर्णं सव्ये कुम्भं सुशोभनम्। प्रक्षालनाय करयोः पश्चात्पात्रं निवेशयेत् ॥ घृतप्रज्वालितान्दीपान्स्थापयेत्परितः शुभान्। दर्पणं चामरं छत्रं तालवृन्तं मनोहरम् ॥ मङ्गलाङ्कुरपत्राणि स्थापयेद्दिक्षु देशिकः। कृताञ्जलिपुटो भूत्वा वामदक्षिणपार्श्वयोः॥नत्वा गुरुं गणेशानं भूतशुद्धिं समाचरेत्। भूतशुद्धिं विधायैव प्राणस्थापनमाचरेत्॥" (रामतापन्याम्) "देवो भूत्वा यजेद्देवं नादेवो देवमर्चयेत्। देवार्चायोग्यताप्राप्त्यैभूतशुद्धिं समाचरेत् ॥ भूतशुद्धिं विधायैव प्राणस्थापनमाचरेत्। भूतशुद्धिविहीनेन कृता पूजाऽभिचारवत् ॥ विपरीतफलं दद्यादभक्त्या पूजनं यथा ॥" मन्त्रमहोदधौ) "भूतशुद्धिं तथा प्राणप्रतिष्ठां मातृकास्थितिम्। पञ्चधोक्तां प्रकुर्वीत ततोऽन्यां मातृकां चरेत् ॥ श्रीकण्ठाद्यान्शम्भुभक्तो वैष्णवः केशवादिकान्। गणेशाद्यांस्तु तत्सेवी शक्तिभाङ्मातृकाः कलाः ॥ उक्ता कला मातृकैवं तत्तद्भक्तः

समाचरेत् । ततः स्वमूलमन्त्रस्य न्यासान्कल्पोदितांश्चरेत ॥ ऋषिच्छन्दोदैवतानि मूर्ध्नि वक्त्रे हृदि न्यसेत् । बीजं गुह्ये पदोः शक्तिमङ्गानि करयोरपि ॥ अङ्गुष्ठादिष्वङ्गुलीषु करस्य तत्त्वपृष्ठयोः । अङ्गुष्ठाभ्यां तर्जनीभ्यां नम इत्यादिकं वदेत् ॥ हृदयादिष्वथाङ्गानि जातियुक्तानि विन्यसेत् ॥ स्वस्वमुद्राभिरधुना प्रोच्यन्ते जातयश्च ताः । हृदयाय नमश्चेति शिरसे स्वाहया युतम् ॥ शिखायै वषडङ्गं च कवचाय हुमित्यपि । नेत्रत्रयाय वौषट् स्यादस्त्राय फडितीरितम् ॥ जातिषट्कं द्विनेत्रे तु नेत्राभ्यां वौषडुच्चरेत । पश्चाङ्गे नेत्रसंत्यागो मुद्राऽङ्गानामथोच्यते॥" (मुद्रालक्षणमपि तत्रैव) "प्रसारितमनङ्गुष्ठं तर्जन्यादिचतुष्टयम् । हृदि मूर्ध्नि हि चाङ्गुष्ठहीनो मुष्टिः शिखातले । स्कन्धमारभ्य नाभ्यन्ता दशाङ्गुल्यस्तु वर्मणि । तर्जन्यादित्रयं नेत्रत्रये. नेत्रद्वये द्वयम् ॥ प्रसारिताभ्यां हस्ताभ्यां कृत्वा तालत्रयं सुधीः । तर्जन्यङ्गुष्ठयोरग्रे स्फालयन् बन्धयेद्दिशः ॥ एषाऽस्त्रमुद्रा श्रीविष्णोरङ्गमुद्रा उदीरिता । हृद्यङ्गुलित्रयं न्यस्येत्तर्जन्यादिद्वयं तु के ॥ शिखाप्रदेशेऽथाङ्गुष्ठं दशाङ्गुल्यस्तु वर्मणि । हृद्वन्नेत्रं पूर्वमस्त्रं शक्तेरङ्गस्य मुद्रिकाः ॥ मुष्टी विनिर्गताङ्गुष्ठौ संयुक्तौ हृदि विन्यसेत्, निस्तर्जनी तादृशौ तु शिरस्यथ शिखातले ॥ निरङ्गुष्ठकनिष्ठौ तौ निरङ्गुष्ठप्रदेशिनी मुष्टी पृथक्कृतौ स्कन्धाद्धृदन्तं वर्मणि स्मृतौ ॥ तर्जन्यादित्रयं नेत्रे तलास्फोटोऽस्त्र ईरितः । शैवी षडङ्गमुद्रोक्ता वर्णन्यासमथो चरेत् । जप्ता अप्यफला मन्त्रा विघ्नदा न्यासमन्तरा । पीठस्य देवतान्यासाद्देहे पीठं प्रकल्पयेत् । ततो देहमये पीठे ध्यायेत्स्वाभीष्टदेवताम् । तत्तन्मुद्रां प्रदर्श्याथ कुर्यान्मानसपूजनम् ॥ मनसा पूजयित्वैव क्षणं तद्गतमानसः । स्थित्वा मूलमनुं विद्वान् जपेदष्टोत्तरं शतम् ॥ जपं निवेद्य देवाय स्थापयेदर्घ्यमुत्तमम् । अन्तर्यागं विधायेत्थं बाह्यपूजनमाचरेत् ॥ अन्तर्यागबहिर्यागौ गृहस्थः सर्वदाचरेत् । आद्यमेव ब्रह्मचारी वानप्रस्थो यतिस्तथा॥" ( बहिर्यागविचारोऽपि तत्रैव ) "वर्द्धिन्यां प्रक्षिपेत्किंचिदर्घोदकमनन्यधीः । प्राणानायम्य मूलेन वामे गुरुत्रयं नमेत् ॥ दक्षिणे च गणेशानं पीठपूजामथाचरेत् ॥ स्वर्णादिनिर्मिते यन्त्रे यद्वा चन्दननिर्मिते । मण्डूकात्परतत्त्वान्तं दिङ्मध्ये पीठशक्तयः॥शालग्रामे मणौ यन्त्रे नित्यपूजां समाचरेत् । हेमादिप्रतिमायां वा स्थापितायां यथाविधि ॥ लिङ्गं वा लक्षणोपेतं तत्रावाहनमाचरेत् । शालग्रामे स्थिरायां वा नावाहनविसर्जने ॥ एवं संपूज्य देवेशं जपारम्भणमाचरेत् ॥" इति तन्त्रोक्तभूतशुद्ध्यादिविचारः ॥ अथ गृहादिषु जपकरणे कूर्म्मचक्रे दीपस्थानविचारः ( शारदातिलके ) "दीपस्थानं समाश्रित्य कृतं कर्म्म फलप्रदम्।चतुरस्रां भुवं भित्त्वा कोष्ठानां नवकं लिखेत् ॥ पूर्वकोष्ठादि विलिखेत्सप्त वर्गाननुक्रमात् । लक्षावीशे मध्यकोष्ठे स्वरान्युग्मक्रमाल्लिखेत् ॥ दिक्षु पूर्वादितो यत्र ग्रामस्याद्याक्षरं भवेत् । मुखं तत्तस्य जानीयाद्धस्तावुभयतः स्थितौ ॥ कोष्ठे कुक्षी

कूर्मचक्रमिदम् ।

| | | |
|---|---|---|
| ई.<br>ल. क्ष. | पू.<br>क ख ग घ ङ | आ.<br>च छ ज झ ञ |
| उ.<br>श ष स ह | अं अः \| अ आ \| इ ई<br>ओ औ \| \| उ ऊ<br>ए ऐ \| ऌ ॡ \| ऋ ॠ | द.<br>ट ठ ड ढ ण |
| य र ल व<br>वा. | प फ ब भ म<br>प. | त थ द ध न<br>नै. |

१ इडभाव आर्षः ।

उभे पादौ द्विशिष्टं पुच्छमीरितम् । क्रमेणाऽनेन विभजेन्मध्यस्थमपि आगतः । मुखस्थो लभते सिद्धिं करस्थः स्वल्पभोगभाक् । कुक्षिस्थित उदासीनः पादस्थो दुःखमाप्नुयात् ॥ पुच्छस्थः पीड्यते मन्त्री बन्धनोच्चाटनादिभिः । कूर्मचक्रमिदं प्रोक्तं मन्त्राणां सिद्धिसाधनम् ॥ " ( बालार्चनकौस्तुभ्याम् ) " दीपस्थानं मया प्रोक्तं त्रिषु लोकेषु दुर्लभम् । दीपस्थानं पुरा पश्येद्ग्रामे वा विषयेऽपि वा ॥ यत्रकुत्रापि वा पश्येत्कार्यसिद्धिर्भवेत्प्रिये । क्षेत्राधिपस्य नाम्ना हि दीपस्थानं विचारयेत् ॥ दीपस्थाने जपं कुर्य्याद्धोमादस्य फलं लभेत् ॥ " ( तन्त्रराजेऽपि ) " कूर्म्मस्थितिं सुविज्ञाय यो जपेदवधिस्थितः । स प्राप्नोति फला न्युक्तान्यन्यथा नाशमेति च ॥ तस्माकूर्म्मविभागं तु विज्ञायाखिलमाचरेत् । स चतुर्धा स्थितो लोके तत्प्रकारं शृणु प्रिये ॥ प्रथमस्तु पुरः कूर्म्मस्ततो देशगतस्तथा । ग्रामगो गृहगश्चेति चतुर्धा तद्व्यवस्थितिः ॥ देशं ग्रामं गृहं वापि नवधा विभजेत्ततः । क्षेत्रसाधकमन्त्राणमेकामेवाद्यमक्षरम् ॥ यदि स्यात्स ध्रुवो मन्त्रः क्षिप्रमेव सुसिध्यति ॥ " कूर्मपरिहारः ॥ ( देवीपुराणे ) "कुरुक्षेत्रे प्रयागे च गङ्गासागरसंगमे । महाकाले च काश्यां च कूर्म्मस्थानं न चिन्तयेत् ॥" (विश्वामित्रकल्पेऽपि) "काशीपुरी च केदारो महाकालोऽथ नासिकम् । त्र्यम्बकं च महाक्षेत्रं पञ्च दीपा इमे भुवि॥एतेषु सर्व्वतो दीपाःकूर्मासनमितस्ततः॥" ( गौतमीये ) "पर्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे । यदि कुर्यात्पुरश्चर्य्यां तत्र कूर्म्मं न चिन्तयेत ॥ ग्रामे वा यदि वा वास्तौ गृहे तं च विचिन्तयेत् ॥ " इति ॥ एतत्कूर्म्मचक्रं तन्त्रोक्तमन्त्रेषु द्रष्टव्यं न वैदिकेष्विति शान्तिकमलाकरे ॥ इति कूर्म्मचक्र विचारः॥अथ मन्त्राणां दश संस्काराः(शारदातिलके)"मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः ।जननं जीवनं पश्चात्ताडनं बोधनं तथा ॥ अथाभिषेको विमलीकरणाप्यायने पुनः । तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ॥"तेषां स्वरूपम्(तत्रैव)"मन्त्राणां मातृकायन्त्रादुद्धारो जननं स्मृतम् । प्रणवान्तरितान्कृत्वा मन्त्रवर्णाञ्जपेत्सुधीः ॥ एतज्जीवनमित्याहुर्मन्त्रतन्त्रविशारदाः । मन्त्रवर्णान्समालिख्य ताडयेच्चन्दनाम्भसा॥ प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम् । विलिख्य मन्त्रं तं मन्त्री प्रसूनैः करवीरजैः॥ तन्मन्त्राक्षरसंख्यातैर्हन्याद्रातेन बोधनम् । स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया ॥ अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद्विशुद्धये । संचिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत्॥मन्त्रे मलत्रय मन्त्री विमलीकरणं त्विदम्॥तारं व्योमाग्निमनयुग्दण्डो ज्योतिर्मनुर्मतः॥ कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः । तेन मन्त्रेण विधिवदेतदाप्यायनं मतम् । मन्त्रेण वारिणा मन्त्रतर्पणं तर्पणं स्मृतम् । तार मायारमायोगे मनोर्दीपनमुच्यते । जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् । संस्कारा दश संप्रोक्ताः सर्वतन्त्रेषु गोपिताः ॥ यान्कृत्वा संप्रदायेन मन्त्री वाञ्छितमश्नुते ॥"इति मन्त्राणां दश संस्काराः॥अथोत्कीलनम्(मन्त्रमहोदधौ)"शिवेन कीलिता विद्या तदुत्कीलनमुच्यते।मायां तारपुटां मन्त्री जपेदष्टोत्तरं शतम्॥मन्त्रस्यादौ तथा वान्ते भवेत्सिद्धिप्रदा तु सा।एष नूनं विधिर्गोप्यःसिद्धिकामेन मन्त्रिणा॥"अथ कलौ सिद्धिप्रदा मन्त्राः(मन्त्रमहोदधौ)"सिद्धिप्रदाःकलियुगे ये मन्त्रास्तान्वदाम्यतः।त्र्यर्णएकाक्षरोऽनुष्टुप्त्रिविधो नरकेसरी॥एकाक्षरोऽर्जुनोनुष्टुप् द्विविधस्तुरगाननः॥चिन्तामणिःक्षेत्रपालो भैरवो यक्षनायकः॥गोपालो गजवक्त्रश्च चेटका यक्षिणी तथा।

मातङ्गी सुन्दरी श्यामा तारा कर्णपिशाचिनी॥शबर्य्येकजटा वामा काली नीलसरस्वती।त्रिपुरा कालरात्रिश्च कलाविघ्नप्रदा इमे॥" इति ॥ ( अथ शापरहिता मन्त्राः)"भीष्मपर्वणि या गीता सा प्रशस्ता कलौ युगे। विष्णोः सहस्रनामाख्यं स्तोत्रं पापप्रणाशनम् ॥ गजेन्द्रमोक्षणं चैव तथा कारुण्यकः स्तवः। नारसिंह तथा स्तोत्रं स्तोत्रं श्रीरामसञ्ज्ञकम् ॥ देव्याः सप्तशतीस्तोत्रं तथा नामसहस्रकम्। श्लोकाष्टकं नीलकण्ठं शैवं नामसहस्रकम् ॥ त्रिपुरायाः प्रसादाख्यं सूर्य्यस्य स्तवराजकम्। पैत्रो रुचिस्तवो यश्च इन्द्राक्षी स्तोत्रमेव च ॥ वैष्णवं च महालक्ष्म्याः स्तोत्रमिन्द्रेण भाषितम्। भार्गवाख्येन रामेण शप्तान्यन्यानि कारणात् ॥ " कलौ तन्त्रोक्तमन्त्रैणैव सिद्धिः। तथा च (तन्त्रसारे) "आगमोक्तविधानेन कलौ मन्त्रं जपेत्सुधीः। न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः कृते श्रुत्युक्तमार्गः स्यात्त्रेतायां स्मृतिसंभवः। द्वापरे तु पुराणोक्तः कलावागमसंभवः ॥ " अथावाहनादिमुद्रालक्षणानि ( शारदातिलके ) "आवाहनादिका मुद्राः प्रवक्ष्यामि यथाक्रमम्। याभिर्विरचिताभिस्तु मोदन्ते सर्वदेवताः॥ सम्यक्संपूरितःपुष्पैः कराभ्यां कल्पितोऽञ्जलिः। आवाहनी समाख्याता मुद्रा देशिकसत्तमैः ॥ अधोमुखी कृता सैव प्रोक्ता स्थापनकर्मणि। आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका ॥ सन्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः। अङ्गुष्ठगर्भिणी सैव सन्निरोधे समीरिता ॥ उत्तानौ द्वौ कृतौ मुष्टी संमुखीकरणी स्मृता देवताङ्गे षडङ्गानां न्यासः स्यात्सकलीकृतिः सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी। अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ॥ अन्योन्याभिमुखाश्लिष्टकनिष्ठानामिका पुनः। तथा च तर्जनीमध्या धेनुमुद्रा समीरिता ॥ अमृतीकरणं कुर्यात्तया देशिकसत्तमः अन्योन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुली ॥ महामुद्रेयमुदिता परमीकरणे बुधैः " ( तन्त्रसारे ) " योजनात्सर्वदेवानां द्रावणात्पापसंहतेः। तस्मान्मुद्रेति सा ख्याता सर्वकामार्थसाधिनी ॥ " कुम्भमुद्रा—"दक्षाङ्गुष्ठे पराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन च। सावकाशामेकमुष्टिं कुर्यात्सा कुम्भमुद्रिका ॥ " कूर्ममुद्रा—"वामहस्ते च तर्जन्यां दक्षिणस्य कनिष्ठिका। तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ॥ उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः। अङ्गुलीर्योजयेत्पृष्ठे दक्षिणस्य करस्य च ॥ वामस्य पितृतीर्थेन मध्यमानामिके तथा। अधोमुखे च ते कुर्याद्दक्षिणस्य करस्य च ॥ कूर्मपृष्ठसमं कुर्याद्दक्षपाणिं च सर्वतः॥ कूर्ममुद्रेयमाख्याता देवताध्यानकर्मणि॥" अस्त्रमुद्रा—"दक्षस्य तर्जनीमध्ये सव्ये करतले क्षिपेत्। अभिघातेन शब्दःस्यादस्त्रमुद्रा समीरिता॥"मत्स्यमुद्रा—"दक्षपाणेः पृष्ठदेशे वामपाणितलं न्यसेत्॥अङ्गुष्ठौ चालयेत्सम्यङ् मुद्रेयं मत्स्यरूपिणी॥" धेनुमुद्रा—"दक्षानामासमायुक्ता वामहस्तकनिष्ठिका। वामानामासमायुक्ता दक्षपाणिकनिष्ठिका॥ दक्षस्य मध्यमाक्रान्ता वामहस्तस्य तर्जनी। वाममध्यमयाक्रान्ता दक्षहस्तस्य तर्जनी ॥ संयुतौ कारयेद्विद्वानङ्गुष्ठावुभयोरपि। धेनुमुद्रा निगदिता गोपिता साधकोत्तमैः ॥ परिवृत्तकरौ पश्चात्तर्जनीमध्यमे युते ॥ कनिष्ठानामिकाङ्गुष्ठं परस्परयुतं कुरु ॥ धेनुमुद्रेयमाख्याता अमृतीकरणं भवेत्॥" शङ्खमुद्रा—"वामाङ्गुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना। कृत्वोत्तानं ततो मुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥ वामाङ्गुलयस्तथाश्लिष्टाःसंयुताः सुप्रसारिताः। दक्षिणाङ्गुष्ठसंस्पृष्टाज्ञेयैषा शङ्खमुद्रिका ॥" गरुडमुद्रा—मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा।मध्यमानामिके

तु द्वौ पक्षाविव विचालयेत्॥एषा गरुडमुद्रा स्याद्विष्णोः संतोषवर्द्धिनी ॥" योनिमुद्रा-"मध्यमे कुटिले कृत्वा तर्जन्युपरि संस्थिते ॥ अनामिके मध्यगते तथैव हि कनिष्ठिके ॥ सर्वा एकत्र संयोज्या अङ्गुष्ठपरिपीडिताः । एषा तु प्रथमा मुद्रा योनिमुद्रेति संज्ञिता ॥" प्रार्थनामुद्रा-"प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च संमुखौ । कुर्यात्स्वे हृदये सेयं मुद्रा प्रार्थनसंज्ञिका ॥"पङ्कजमुद्रा-"संमुखी कृत्य हस्तौ द्वौ किंचित्संकुचिताङ्गुली । मुकुली तु समाख्याता पङ्कजा प्रसृतैव सा " ॥ ॥ अथ पद्मासनाद्यासनलक्षणम् ( शारदा तिलके ) "पद्मासनं स्वस्तिकाख्यं वज्रं भद्रासनं तथा । वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम् ॥ ऊर्वोरुपरि विन्यस्य सम्यक्पादतले उभे । अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः पद्मासनमिति प्रोक्तं योगिनां हृदयंगमम् ॥" स्वस्तिकासनम्-"जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे । ऋजुकायो विशेद्योगी स्वस्तिकं तत्प्रचक्षते ॥" भद्रासनम्-"सीमन्याः पार्श्वयोर्न्यस्येद्गुल्फयुग्मं मुनि श्चलम् । वृषणाधः पार्श्वपादौ पाणिभ्यां परिबन्धयेत् ॥ भद्रासनं समुद्दिष्टं योगिभिः पूजितं परम् ॥ " वज्रासनम्-" ऊर्वोः पादौ क्रमान्न्यस्येज्जान्वोः प्रत्यङ्मुखाङ्गुली । करौ निदध्यादाख्यातं वज्रासनमनुत्तमम् ॥" वीरासनम्-"एकपादमधः कृत्वा विन्यस्योरौ तथेतरम् । ऋजुकायो विशेद्योगी वीरासनमितीरितम् ॥" प्राणायामलक्षणम् । तत्रैव-"इडया कर्षयेद्वायुं बाह्यं षोडशमात्रया । धार येत्पूरितं योगी चतुःषष्ट्या तु मात्रया ॥ सुषुम्नामध्यगं सम्यग्द्वात्रिंशन्मात्रया शनैः । नाड्या पिङ्गलया चैनं रेचयेद्योगवित्तमः ॥ प्राणायाममिदं प्राहुर्योगशास्त्रविशारदाः । प्राणायामो हि द्विविधः सगर्भोऽगर्भ एव च ॥ जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः । तदपेतं विगर्भं च प्राणायामं परे विदुः ॥" ( देवीपुराणे ) "श्रुतिस्मृत्यादिकर्मादौ सगर्भः प्राणसंयमः । अगर्भो ध्यानमात्रं तु स चामन्त्रः प्रकीर्तितः ॥" प्राणायामप्रकारे ( योगियाज्ञवल्क्यः ) " नासापुटेनानिलमेव बाह्यमाकृष्य तेनैव शनैः समस्तम् । नाडीषु सर्वासु च पूरयेद्यः स पूरको नाम महानिरोधः ॥ न रेचकं नैव तु पूरकं वा नासाग्रभागे स्थितमेव वायुम् । सुनिश्चलं धारयति क्रमेण कुम्भाख्यमेतं प्रवदन्ति तज्ज्ञाः॥ निःसार्य नासाविवराद्शेषं प्राणं बहिः शून्य इवानिलेन । निरुच्छ्वसंस्तिष्ठति चोर्ध्ववायुः स रेचको नाम महानिरोधः ॥" ( कात्यायनः ) "दक्षिणे रेचयेद्वायुं वामेनापूरितोदरम् । कुम्भकेन जपं कुर्य्यात्प्राणायामो भवेदि ति" ॥ ( प्रयोगपारिजाते ) "पञ्चाङ्गुलीभिर्नासाग्रं पीडयेत्प्रणवेन वै । मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः ॥ कनिष्ठानामिकाङ्गुष्ठैर्य तेश्च ब्रह्मचारिणः ॥" गायत्रीप्राणायामे विशेषः ( योगियाज्ञवल्क्यः ) "सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायत प्राणः प्राणायामः स उच्यते" ॥ ( शौनकः ) "नासिकामङ्गुलीभिस्तु तर्जनीमध्यमादृते । सव्येन तु समाकृष्य दक्षिणेन विसर्ज येत् ॥ प्रणवं व्याहृतीः सप्त गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥" ( विश्वामित्रकल्पे ) " उत्तमं नवधा चैव मध्यमं ऋतुसंख्यया । अधमं त्रयमित्याहुः प्राणायामो विधीयते ॥ " ( अगस्त्यसंहितायाम् ) " प्राणायामैर्विना यद्य त्कृतं कर्म निरर्थकम् । अतो यत्नेन कर्त्तव्यः प्राणायामः शुभार्थिना ॥ " इति प्राणायामः ॥ अथ तान्त्रिकाग्निस्थापनादिविचारः ( शारदातिलके ) " अथाग्निजननं वक्ष्ये सर्वतन्त्रानुसारतः । आचार्यकुण्डे विधिवत्संस्कृते शास्त्रवर्त्मना । अष्टादश स्युः संस्काराः

कुण्डानां तन्त्रचोदिताः ॥ वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् । तेनैव ताडनं दर्भैर्वर्म्मणाभ्युक्षणं स्मृतम् ॥ अस्त्रेण खननो द्धारौ हृन्मन्त्रेण प्रपूरणम् । समीकरणमस्त्रेण सेचनं वर्मणा मतम् ॥ कुट्टनं हेतिमन्त्रेण वर्ममन्त्रेण मार्जनम् । विलेपनं कलारूपकल्पनं तदनन्तरम् ॥ त्रिसूत्रीकरणं पश्चाद् हृदयेनार्चनं मतम् ॥ अस्त्रेण वज्रीकरणं हृन्मन्त्रेण कुशैः शुभैः । चतुष्पथं तनुत्रेण तनुयादक्षपाटनम् ॥ यागे कुण्डानि संस्कुर्यात्संस्कारैरेभिरीरितैः । अथवा तानि संस्कुर्याच्चतुर्भिर्वीक्षणादिभिः ॥" संस्कारचतुष्टयम् ( मन्त्रमहोदधौ ) "प्राणायामं षडङ्गं च कृत्वा मूलेन मन्त्रवित् । कुण्डे वा स्थण्डिले कुर्यात्संस्काराणां चतुष्टयम् ॥ मूलेनेक्षणमस्त्रेण प्रोक्षणं ताडनं कुशैः । वर्म्मणा मुष्टिनासिच्य लिखेद्यन्त्रं तदन्तरे ॥ वह्निकोणषडस्राष्टदलभू मन्दिरात्मकम् । मध्ये तारपुरां मायां लिखित्वा पीठमर्चयेत् ॥ मण्डलात्परतत्त्वान्तं पीठशक्तीर्जयादिकाः । वागीशीवागी श्वरयोर्योगपीठात्मने नमः ॥ मायादिकः पीठमन्त्रस्तयोस्तेनासनं दिशेत । यजेत्तौ तारमायाभ्यां गन्धाद्यैरुपचारकैः ॥ लक्ष्मी नारायणौ स्वच्छैर्द्वैष्णवे होमकर्मणि ॥" ( शारदातिलके ) "तिस्रस्तिस्रो लिखेल्लेखा हृदा प्रागुदगग्रगाः । प्रागग्राणां स्मृता देवा मुकुन्देशपुरन्दराः ॥ रेखाणामुदगग्राणां ब्रह्मवैवस्वतेन्दवः । अथवा षट्कोणवृत्तं त्रिकोणं तत्र संलिखेत् ॥ वर्मणाभ्युक्ष्य तारेण योगपीठमथार्चयेत् । वागीश्वरीमृतुस्नातां नीलेन्दीवरसन्निभाम् ॥ वागीश्वरेण संयुक्तामुपचारैः प्रपूजयेत् ॥" ( मन्त्रमहोदधौ ) "सूर्यकान्तादरणितः श्रोत्रियागारतोऽपि वा । पात्रेण पिहिते पात्रे वह्निमानाययेत्ततः ॥ अस्त्रेणादाय तत्पात्रं वर्मणोद्घाटयेत्तु तम् । अस्त्रमन्त्रेण नैर्ऋत्ये क्रव्यादांशं ततस्त्यजेत ॥ मूलेन पुरतो धृत्वा संस्कारांश्च ततश्चरेत् । वीक्षणाद्यान्पुरा प्रोक्तानलप्रोक्षणमा चरन् ॥ परमात्मानलेनाथ जाठरेणापि वह्निना । स्मरन्नैक्यं वह्निबीजाच्चैतन्यं योजयेत्ततः ॥ तारेण चाभिमन्त्र्याग्निं सुधया धेनुमुद्रया । अमृतीकृत्य संरक्षेदस्त्रमन्त्रेण मन्त्रवित् ॥ मुद्रया त्ववगुण्ठन्या कवचेनावगुण्ठयेत् । कुण्डोपरि ततो वह्निं भ्रामयेत्त्रिर्ध्रुवं पठन् ॥ शय्यागतामृतुस्नातां नीलेन्दीवरधारिणीम् । देवेन भुज्यमानां तां स्मृत्वा तद्योनिमण्डले ॥ ईशरेतोधि या वह्निं स्थापयेदात्मसंमुखम् । मूलं नवार्णं च पठञ्जानुस्पृष्टधरातलः ॥ ( नवार्णमन्त्रः–हूंवह्निचैतन्याय नमः ) । रेफा धीशेन्दुसंयुक्तं गगनं वह्निचैततः । तन्याय हृदयान्तोऽयं नवार्णोऽग्निनिधापने ॥ विश्राण्याचमनं देवीदेवयोर्ज्वालयेद्वसुम् । चतुर्विंशतिवर्णेन मन्त्रेण श्रयणादिभिः ॥ चित्पिंगलहनद्वंद्वं दहयुग्मं पचद्वयम् । सर्वज्ञाज्ञापयस्वाहा मन्त्रो वेदभुजाक्षरः ॥ प्रदर्श्य ज्वालिनीं मुद्रामुत्थाय विहिताञ्जलिः । श्लोकरूपेण मन्त्रेण ह्युपतिष्ठेद्धुताशनम् ॥ अग्निं प्रज्वलितं वन्दे जातवेदं हुता शनम् । सुवर्णवर्णममलं समिद्धं सर्वतोमुखम् ॥" कुशकण्डिकापि ( तत्रैव ) "परिषिंचेत्ततस्तोयैः कुण्डं स्थण्डिलमेव वा । दर्भैः परिस्तरेदग्निं प्रागग्रैरुदगग्रकैः ॥ प्रत्यग्दक्षिणसौम्यासु न्यसेत्त्रीन्परिधीन् क्रमात् । पालाशान्बिल्वजांस्तेषु ब्रह्मविष्णुशिवान्य जेत् ॥ वह्नौ तत्पीठमभ्यर्च्यावाहयेत्स्वहृदोऽनलम् । गन्धादिभिः समभ्यर्च्य पूजयेत्पावकं व्रती ॥ षट्सु कोणेषु मध्ये च जिह्वास्तद्देवता यजेत् ॥ ईशानादिषु वाय्वन्तकोणेषु षट् समर्चयेत् । हिरण्याद्यतिरक्तां तां मध्ये तु बहुरूपिणीम् ॥ केस

रेष्वङ्गपूजा स्याद्दलेष्वष्टसु मूर्तयः ॥ मातरोऽष्टौ दलान्तेषु भैरवाः स्युस्तदग्रतः ॥ धरापुरे तु शक्राद्या वज्राद्यायुधसंयुताः । एवमावरणैर्युक्तं सप्तभिः पावकं यजेत् ॥ वामे कुशानथास्तीर्य तत्र वस्तूनि निक्षिपेत् । प्रणीताप्रोक्षणीपात्रे आज्यस्थालीं स्रुवं स्रुचम् ॥ अधोमुखानि चैतानि होमद्रव्यं घृतं कुशान् । समिधः पञ्च पालाशिरन्यदप्युपयोगि यत् ॥ कृत्वा पवित्रे मूलेन प्रोक्षितानि शुभाम्भसा । उत्तानानि विधायाथ प्रणीतां पूरयेज्जलैः ॥ तीर्थमन्त्रेण तीर्थानि सृण्या तत्राह्वयेत्सुधीः ॥ पवित्रे अक्षतांस्तत्र निक्षिप्योत्पवनं चरेत् ॥ अथौदीच्यां निधायैतां प्रोक्षण्यां तज्जलं क्षिपेत् ॥ हवनीयं द्रव्यजातमुक्षेत्तोयैः पवित्रगैः ॥ मूलेन मूलगायत्र्या यद्वा हृदयमन्त्रतः ॥ दक्षिणे पीठमासाद्य तत्र ब्रह्माणमाह्वयेत् ॥ हस्ताभ्यां स्रुक्स्रुवौ धृत्वा तापयेत्रिरधोमुखौ । वामहस्तेन तौ धृत्वा दर्भैर्दक्षेण मार्जयेत् ॥ संप्रोक्ष्य प्रोक्षणीतोयैः प्रतप्य पूर्ववत्पुनः । न्यस्याग्नौ मार्जनान्दर्भांस्तयोः शक्तित्रयं न्यसेत् ॥ इच्छाज्ञानक्रिया संज्ञा चतुर्थी नमसान्विता । दीर्घत्रयेन्दुयुग्व्योमपूर्वकं स्थानकत्रये ॥ हृदा शुचिं न्यसेच्छक्तिं स्रुवे शम्भुं ततस्तु तौ । सूत्रत्रयेण संवेष्ट्य संपूज्य कुसुमादिभिः ॥ कुशोपरि न्यसेद्दक्षे तयोः संस्कार ईरितः । अस्त्रोक्षितायामाज्यस्य स्थाल्यामाज्यं विनिक्षिपेत् ॥ वीक्षणादिकसंस्कारसंस्कृतं मूलमन्त्रतः । गोमुद्रयामृतीकृत्य षट् संस्कारांस्ततश्चरेत् ॥ कुण्डोद्धृते वायुकोणे स्थितेऽङ्गारे विनिक्षिपेत् । हृदेति तापनं प्रोक्तं दर्भयुग्मं प्रदीपितम् ॥ आज्ये क्षिपेद् हृदा मन्त्री पवित्रीकरणं त्विदम् । आज्यं नीराजयेद्दीप्तदर्भयुग्मेन वर्मणा ॥ अभिद्योतनमुक्तं तद्दीप्तं दर्भत्रयं घृते । दर्शयेदस्त्रेणोद्योतो गृहीत्वा घृतपात्रिकाम् ॥ संयोज्याग्नौ तदङ्गारात्सलिलं संस्पृशेत्सुधीः । अङ्गुष्ठानामिकाभ्यां तु दर्भावादाय निक्षिपेत् ॥ त्रिरग्निसंमुखे त्याज्यमस्त्रेणोत्पवनं त्विदम् । हृदात्मसंमुखं तद्वदाज्यक्षेपस्तु संप्लवः ॥ नीराजनादिसंस्कारेष्वग्नौ दर्भान्विनिक्षिपेत् । दर्भद्वयं ग्रंथियुतं घृतमध्ये विनिक्षिपेत् ॥ वामदक्षिणयोः पक्षौ स्मृत्वा नाडीत्रयं स्मरेत् । दक्षिणाद्वामतो मध्याद् हृदादाय घृतं सुधीः ॥ अग्नयेग्निप्रियासोमाय स्वाहेत्यग्निनेत्रयोः । जुहुयादग्नीषोमाभ्यां स्वाहेत्यक्षिण तृतीयके ॥ पातयेदाहुतेः शेषमाहुतिग्रहणस्थले । भूयो हृदा दक्षभागादादायाज्यं मुखे यजेत् ॥ अग्नये स्विष्टकृते तन्नेत्रास्योद्घाटनं मतम् । नरसिंहं विना विष्णुमन्त्रे नेत्रद्वयं यजेत् ॥ नरसिंहान्यदेवेषु वह्नेर्नेत्रत्रयं स्मृतम् । महाव्याहृतिभिर्व्यस्तसमस्ताभिश्चतुष्टयम् ॥ आहुतीनां त्रयं वह्निमन्त्रेणैव ततश्चरेत् ॥" घृताहुतिभिरष्टाभिरेकैकां संस्कृतिं चरेत् । ओमस्याग्नेरमुं संस्कारं करोम्यग्निवल्लभा ॥ इत्थं मनुं जपन्गर्भाधानं पुन्सवनं ततः । सीमन्तोन्नयनं जातकर्म कृत्वा ततश्चरेत् ॥ वह्नौ पञ्चसमिद्धोमान्नालापनयनं वसोः । कुर्यादेवाभिधानेन पूर्ववन्नामशुष्मणः ॥ नामानन्तरमेतस्य पितरौ स्वेऽर्पयेद्धृदि । अन्नप्राशं तथा चौलोपनयौ दारयोजनम् । संस्काराः स्युर्विवाहान्ता मृत्यन्ताः क्रूरकर्मणि ॥ एककामाहुतिं कुर्याद्वहेर्जिह्वाङ्गमूर्तिभिः ।

इन्द्रादिभिश्च वज्राद्यैर्दिठान्तैर्जुहुयात्ततः ॥ स्रुवेणाज्यं चतुर्वारं निधाय स्रुचि तां सुधीः । अपिधाय स्रुवेणैतौ गृह्णीयात्कर युग्मतः ॥ तिष्ठन्मूलं तयोर्नाभौ कृत्वाग्रे कुसुमं क्षिपेत् । वामस्तनान्तं तन्मूलं कृत्वाग्निमनुना सुधीः ॥ जुहुयाद्वौषडन्तेन संपत्त्यर्थमतन्द्रितः । महागणेशमन्त्रेण व्यस्तेन दशधा ततः ॥ जुहुयाच्च समस्तेन चतुर्वारं घृताहुतीः ॥ पूर्वपूर्वयुतं वीजषट्कं बाणाश्च सायकाः । मुनयो मार्गणाश्चेति विभागस्तन्मनोः स्मृतः ॥ एवं कृत्वाग्निसंस्कारं पीठं देवस्य पूजयेत् । तत्रेष्टदेव मावाह्य मुद्रा आवाहनादिकाः ॥ प्रदर्श्य वह्निरूपस्य देवस्य वदने पुनः । मूलेन जुहुयात्पञ्चनेत्रसंख्या घृताहुतीः ॥ वक्त्रैकी करणं त्वग्निर्दैवयोस्तेन जायते । नाडीसंधानसिद्ध्यर्थं बहिरेव तयोस्ततः ॥ जुहुयान्मूलमन्त्रेण रुद्रसंख्या घृताहुतीः । इष्टदेव स्यावृत्तीनामेकैकामाहुतिं चरेत् ॥ ततस्तु मूलमन्त्रेण दशधा जुहुयाद्घृतम् । ततः कल्पोक्तद्रव्येण दशांशं जुहुयाज्जपात् ॥ होमं समाप्य कुर्वीत पूर्णाहुतिमनन्यधीः । होमावशिष्टेनाज्येन पूरयित्वा स्रुचं सुधीः ॥ पुष्पं फलं निधायाग्रे स्रुवेणाच्छाद्य तां पुनः । उत्थितो वौषडन्तेन मूलेन जुहुयादसौ ॥ तद्द्रव्येणावृतीनां च जुहुयादाहुतिं पृथक् । देवं विसृज्य स्वहृदि वह्ने जिह्वाङ्गमूर्तिभिः ॥ जुहुयाद्व्याहृतीर्हुत्वा प्रोक्षेत्तां प्रोक्षणीजलैः । संप्रार्थ्यानेन मनुना नत्वा तं विसृजेद् हृदि ॥ भो भो वह्ने महाशक्ते सर्वकर्मप्रसाधक । कर्मान्तरेऽपि संप्राप्ते सान्निध्यं कुरु सादरम् ॥ वह्नौ पवित्रे निक्षिप्य प्रणीतांबु भुवि क्षिपेत् । विधिं विसृज्य सकुशान्परिधिं विन्यसेदसौ । एवं होमं समाप्याथ तर्पयेद्देवतां जलैः ॥ आवाह्य तद्दशांशेन तर्पणादभिषे चनम् तर्पयामि नमश्चेति द्वितीयान्तेष्टपूर्वकम् । मूलान्ते तु पदं देयं सिञ्चामीत्यभिषेचने ॥ ततो नानाविधैरन्नैस्तर्पयेद्द्विज सत्तमान् । इष्टरूपास्तमाराध्य तेभ्यो दद्याच्च दक्षिणाम् ॥ न्यूनं संपूर्णतामेति ब्राह्मणाराधनान्नृणाम् । देवताश्च प्रसीदन्ति संपद्यन्ते मनोरथाः ॥ इति श्रीवीकानेरविषयान्तर्गतश्रीरत्नगढनिवासिना वसिष्ठगोत्रोद्भवश्रीरामकृष्णामरचन्द्रपौत्रेण श्रीकस्तूरीचन्द्र सूनुना श्रीमहादेवभक्तवाजसनेयिशाखानुयायिना गौडपण्डितेन श्रीचतुर्थीलालशर्मणा विरचिते अनुष्ठानप्रकाशे विचारकाण्डे तन्त्रोक्तविधानविचारप्रकरणं समाप्तम् ॥ समाप्तश्चायं विचारकाण्डः प्रथमः ॥ १ ॥



अथ सर्वमन्त्रानुष्ठानोपयोगिपद्धतिकाण्डः ॥ तत्रादौ प्रारम्भदिनात्पूर्वकृत्यम् । चन्द्रतारादिबलान्विते सुदिने सुमुहूर्ते तीर्थपुण्यक्षेत्रनिर्जनस्थानादौ अनुष्ठानयोग्यभूमेः परिग्रहं कृत्वा तत्र मार्जनदहनखननसंप्लावनादिभिः स्मृत्युक्तैः शोधनोपायैः शुद्धिं संपाद्य पुरश्चरणात् प्राक् तृतीयदिवसे क्षौरादिकं विधाय शुद्धः सन् जपस्थानस्य चतुर्दिक्षु क्रोशं क्रोशद्वयं वा क्षेत्रं चतुरस्रमाहारादिविहारार्थं परिकल्प्य जपस्थानभूमौ कूर्म्मसंशोधनं कुर्यात् । ततो जपस्थानस्य चतुर्दिक्षु अश्वत्थोदुम्बरप्लक्षाणामन्यतमस्य वितस्तिमात्रान् दश कीलान् 'ॐनमःसुदर्शनायास्त्राय फट्' इति मंत्रेणाष्टोत्तरशताभिमन्त्रितान् "ॐये चात्र विघ्नकर्तारो भुवि दिव्यन्तरिक्षगाः॥विघ्नभूताश्च ये चान्ये मम मन्त्रस्य सिद्धिषु ॥१॥ मयैतत्कीलितं क्षेत्रं परित्यज्य विदूरतः ॥ अपसर्प्पन्तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे ॥२॥ " इति मन्त्रद्वयेन निखनेत् । ततस्तेषु 'ॐ सुदर्शनायास्त्राय फट्' इति मन्त्रेण प्रत्येकमस्त्रं संपूज्य तत्रैव पूर्वादिक्रमेण इन्द्रादिलोकपालानावाह्य पञ्चोपचारैः संपूजयेत् ॥ ततो जपस्थानमध्ये गणेशं कूर्म्मानन्तवसुधाक्षेत्रपालवास्तुपुरुषान् द्विजांश्च संपूज्य दिक्पालेभ्यः क्षेत्रपालवास्तुगणपतिभ्यश्च माषभक्तबलीन् दत्त्वा बाह्ये भूतबलिं दद्यात् । तत्र मन्त्रः "ॐ ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ॥ मातरोऽप्युग्ररूपाश्च गणाधिपतयश्च ये ॥१॥ विघ्नभूताश्च ये चान्ये दिग्विदिक्षु समाश्रिताः ॥ ते सर्वे प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ॥२॥" इति मन्त्रद्वयेन दशदिक्षु भूतेभ्यो बलिं दत्त्वा हस्तौ पादौ प्रक्षाल्याऽऽचामेत् । ततस्तत्र रात्रौ देवतोपास्ति चिकीर्षुरादौ शुभाशुभस्वप्नं विचारयेत् । तद्यथा—स्नानादिकं कृत्वा हरिपादाम्बुजं स्मृत्वा कुशासनादिशय्यायां यथासुखं सुप्त्वा वृषध्वजं प्रार्थयेत् । तत्र मन्त्रः—"ॐ भगवन् देवदेवेश शूलभृद्वृषवाहन ॥ इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वत ॥१॥ ॐ नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने ॥ वामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ २ ॥ स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः ॥ क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर॥३॥" एभिर्मन्त्रैः शिवं प्रार्थ्य निद्रां कुर्यात्ततो निशि ॥ दृष्टं स्वप्नंप्रातर्गुरवे निवेदयेत् वा स्वयं विचारयेत् । ततो ब्राह्मे मुहूर्ते उत्थाय प्रातःस्मरणं कृत्वा उषसि दन्तधावनपूर्वकं स्नात्वा सन्ध्यादिनित्यक्रियां प्रातः संपाद्य शरीरशुद्ध्यर्थं प्रायश्चित्तं कुर्यात् । तद्यथा—तत्रादौ नदीतडागादिकं गत्वा सुप्रक्षालिततत्तीरे स्नानोपकरणानि स्थापयेत् । ततः पाणिपादं प्रक्षाल्य नाभिमात्रं जलं गत्वा कुशपवित्रहस्तो बद्धशिखी आचम्य देशकालौ संकीर्त्य—मम ज्ञाताज्ञातसमस्तपापक्षयार्थं करिष्यमाणामुकदेवमन्त्रपुरश्चरणाधिकारार्थं शरीरशुद्ध्यर्थममुकप्रायश्चित्ताङ्गभूतान्यादौ भस्मादिभिरष्टौ स्नानानि करिष्ये इति संकल्प्य वामहस्ते दक्षिणहस्ते यज्ञियभस्म गृहीत्वा पश्चादुदकमिश्रणानन्तर दक्षिणहस्तेन संमर्द्याभिमन्त्रयेत् ।

---

१ अथ स्वप्नानि मन्त्रमहोदधौ, तत्रादौ शुभानि—"लिङ्गं चन्द्रार्कयोर्बिम्बं भारतीं जान्हवीं गुरुम् ॥ रक्ताब्धितरणं युद्धे जयोऽनलसमर्चनम् ॥१॥ शिखिहंसरथाङ्गाढ्ये रथे स्नानंच मोहनम् ॥ आरोहणं सारसस्य धरालाभश्च निम्नगा ॥२॥ प्रासादः स्यन्दनः पद्म छत्रं कन्या द्रुमः फली ॥ नागो दीपो हयः पुष्पं वृषभोऽश्वश्च पर्वतः ॥ ३ ॥ सुराघटो ग्रहास्तारा नारी सूर्योदयोऽप्सराः ॥ हर्म्यशैलविमानानामारोहो गगने गमः ॥ ४ ॥ मद्यमांसादनं विष्ठालेपो रुधिरसेचनम् ॥ दध्योदनादनं राज्याभिषेको गोवृषध्वजाः ॥५॥ सिंहः सिंहासनं शङ्खो वादित्रं रोचना दधि ॥ चन्दनं दर्पणश्चैषां स्वप्ने संदर्शनं शुभम् ॥६॥" अथाशुभस्वप्नानि—"तैलाभ्यक्तः कृष्णवर्णो नग्नो ना गर्तवायसौ ॥ शुष्कः कण्टकिवृक्षश्चचाण्डालोदीर्घकन्धरः ॥ ७ ॥ प्रासादस्तटहीनश्च नैते स्वप्नाः शुभावहाः ॥ शान्तिं कुर्वीत दुःस्वप्ने जपेन्मन्त्रमनन्यधीः ॥ ८ ॥" इति स्वप्नानि ।

तत्र मन्त्राः-ॐ अग्निरिति भस्म । ॐ वायुरिति भस्म । ॐ जलमिति भस्म । ॐ स्थलमिति भस्म । ॐ व्योमेति भस्म । ॐ सर्वं ठं हवा इदं भस्म । ॐ मन एतानि चक्षूंषि भस्मानीत्यभिमन्त्र्य । ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ १ ॥ ॐ ईशानाय नमः इति शिरसि मर्दयेत् । ॐ तत्पुरुषाय विद्महे महादेवायधीमहितन्नोरुद्रः प्रचोदयात् ॥ २ ॥ ॐ तत्पुरुषाय नमः ॥ इति मुखे० । ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः सर्वेभ्यः शर्व्वसर्व्वेभ्यो नमस्तेऽअस्तु रुद्ररूपेभ्यः ॥ ३ ॥ ॐ अघोराय नमः इति हृदये । ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमः ॥ ४ ॥ ॐ वामदेवाय नमो गुह्ये ॥ ॐ सद्योजातं प्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ ५ ॥ ॐ सद्योजाताय नमः पादयोः ॥ ॐ प्रसद्यभस्मनायोनिमपश्चपृथिवीमग्ने ॥ स ठं सृज्यमातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः ॥६॥ इति मन्त्रेण प्रणवेन वा सर्वाङ्गे च भस्म विलिम्पेत् । ततः स्नात्वाऽऽचम्य गोमयस्नानं कुर्य्यात् । तद्यथा-शुद्धगोमयमादाय प्रणवेन दिक्षु दक्षिणभागं तीर्थे चोत्तरभागं प्रक्षिप्य शेषम् ॥"ॐ अग्रमग्रश्चरन्तीनामौषधीनां रसं वने ॥ तासां वृषभपत्नीनां पवित्रं कायशोधनम् ॥ यन्मे रोगांश्च शोकांश्च पापं मे हर गोमय ॥ १ ॥" ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तः सदमित्वाहवामहे ॥२॥ इत्यभिमन्त्र्य सूर्याय दर्शयित्वा ॥"ॐ गन्धद्वारांदुराधर्षानित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥१॥"इति मन्त्रेण दक्षिणहस्तगृहीतेन गोमयेनशिरसो नाभ्यन्तं वामहस्तगृहीतेन मन्त्रावृत्त्या नाभितःपादपर्यन्तं विलेपनमिति सर्वाङ्गमालिप्य स्नात्वा द्विराचामेत्॥अथ मृत्तिकास्नानम्॥शुद्धतीर्थमृत्तिकामादाय"अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे॥ मृत्तिके हर मे पापं यन्मया कायसंचितम्॥१॥उद्धृतासि वराहेण कृष्णेन शतबाहुना॥मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्॥२॥ त्वया हतेन पापेन सर्वपापैः प्रमुच्यते ॥ इत्यभिमन्त्र्य । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांसुरेस्वाहा॥इति मन्त्रेण शिरःप्रभृत्यङ्गानि विलिम्पेत् । ततो द्विराचम्य शुद्धोदकस्नानं कुर्यात् । ॐ आपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन॥महेरणाय चक्षसे ॥ १ ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥२॥ तस्माअरंङ्गमामवोयस्यक्षयायजिन्वथ॥आपोजनयथाचनः॥३॥इति स्नात्वा आचम्य पञ्चगव्यस्नानं कुर्यात् । गायत्र्या गोमूत्रम् ॥१॥गन्धद्वारेति गोमयम्॥गन्धद्वारांदुराधर्षानित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ २ ॥ आप्यायस्वेति पयःस्नानम् । ॐ आप्यायस्वसमेतुतेविश्वतःसोम

वृष्ण्यम् ॥ भवाव्वाजस्यसंगथे ॥ ३ ॥ दधिक्राव्णेति दधिस्नानम् ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यव्वाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूᳯंषितारिषत् ॥ ४ ॥ तेजोऽसीत्याज्यस्नानम् ॥ ॐ तेजोऽसिशुक्रमस्यमृतमसिधामनामासिप्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ५ ॥ देवस्यत्वेति कुशोदकस्नानम् । ॐ देवस्य त्वासवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ ६ ॥ एवं पञ्चगव्यस्नानं कृत्वा शुद्धोदकेन स्नात्वा जले अघमर्षणम् । द्रुपदादिवेति च वारत्रयमावर्तयेत् । ततः स्नानाङ्गतर्पणम् । सव्येन प्राङ्मुखः । ॐ ब्रह्मादयो देवास्तृप्यन्ताम् ॥ १ ॥ ॐ गौतमादय ऋषयस्तृप्यन्ताम् ॥ १ ॥ इति देवतीर्थेन एकैकमञ्जलिं जले क्षिपेत् । तत उदङ्मुखो यज्ञोपवीतं कण्ठीकृत्य ॐ सनकादयो मनुष्यास्तृप्यन्ताम् ॥ २ ॥ इति प्रजापतितीर्थेन अञ्जलिद्वयं दद्यात् । ततोऽपसव्येन दक्षिणाभिमुखः कृष्णतिलोदकैः ॐ कव्यवाडनलादयो देवपितरस्तृप्यन्ताम् ॥ ३ ॥ ॐ अस्मत्पितृपितामहप्रपितामहास्तृप्यन्ताम् ॥ ३ ॥ ॐ अस्मन्मातृपितामहीप्रपितामह्यस्तृप्यन्ताम् ॥ ३ ॥ ॐ अस्मन्मातामहप्रमातामहवृद्धप्रमातामहास्तृप्यन्ताम् ॥ ३ ॥ ॐ अस्मन्मातामहीप्रमातामहीवृद्धप्रमातामह्यस्तृप्यन्ताम् ॥ ३ ॥ ॐ आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यताम् ॥ ३ ॥ एवं तर्पणं कृत्वा ॐ यन्मया दूषितं तोयं मलैः शारीरसम्भवैः ॥ तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ॥ इति यक्ष्मणे जलं दद्यात् । ततस्तीरमागत्य "ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ॥ भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥" ॥ ३ ॥ इति जलाञ्जलिं तटे निःक्षिपेत् एवं स्नानाङ्गतर्पणं कृत्वा सव्येनाचम्य सूर्य्यायार्घ्यं दद्यात । "ॐ एहि सूर्य्य सहस्रांशो तेजोराशे जगत्पते ॥ अनुकम्पय मां देव गृहाणार्घ्यं नमोऽस्तु ते ॥ १ ॥" ततो जलाद्बहिर्निष्क्रम्य अहतं श्वेतं सदशं धौतं वस्त्रं परिधाय उपवस्त्रं गृहीत्वा द्विराचम्य गृहं गच्छेत् । इति नद्यादिस्नानप्रयोगः ॥ ॥ अथ गृहस्नानकरणे तत्प्रयोगः ॥ गृहे उद्धृतोदकेन वा उष्णोदकेन स्नानं न तु पर्युषितशीतोदकेन । ताम्रादिबृहत्पात्रे जलं गृहीत्वा "ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ १ ॥ ॐ पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ॥ आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥ २ ॥" इति तीर्थान्यावाह्य ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ १ ॥ आपः पुनन्तु० ॥ २ ॥ द्रुपदादिव० ॥ ३ ॥ ऋतं च सत्यं० ॥ ४ ॥ आपोहिष्ठा० ॥ ५ ॥ इति पञ्चभिर्ऋग्भिरभिमन्त्र्य ॐ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ २ ॥ इत्यादिवारुणैर्मन्त्रैः स्नात्वा वक्ष्यमाणैश्चतुर्भिर्मन्त्रैः कुशत्रयेण शिरसि जलं प्रक्षिपेत् । तत्रमन्त्राः—"ॐ सिसृक्षोर्निखिलं विश्वं मुहुः शुक्रं प्रजापतेः ॥ मातरः सर्वभूतानामापो देव्यः पुनन्तु माम् ॥ १ ॥ अलक्ष्मीर्मलरूपा या सर्वभूतेषु संस्थिता ॥ क्षालयन्ति निजस्पर्शादापो देव्यः पुनन्तु माम् ॥ २ ॥ यन्मे केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ॥ ललाटे कर्णयोरक्ष्णोरापस्तद् घ्नन्तु वो नमः ॥ ३ ॥ आयुरारोग्यमैश्वर्य्यमरिपक्षक्षयः सुखम् ॥ संतोषः क्षान्तिरास्तिक्यं विद्या भवतु वो नमः ॥ ४ ॥" ततो हस्तयोरप आदाय

नासिकायां संयोज्य ॐ ऋतं च सत्यं० इत्यघमर्षणं जपेत् । एवं स्नात्वा उपवस्त्रेण जलापनयनं कृत्वा शुष्कं शुभ्रं कार्पासवस्त्रं परिधाय स्नानार्द्रवस्त्रं परिपीडच आचम्य तिलकं कुर्य्यात् । इति गृहस्थानां गृहे नित्यस्नानप्रकारः ॥ ॥ अथ तिलक विधिः ॥ तत्रादो भस्मत्रिपुण्ड्रप्रकारः । वामहस्ते दक्षिणहस्तेन अग्निहोत्रोत्थितं भस्मादाय उदकमिश्रणानन्तरम् ॐ अग्निरिति भस्म ॐ वायुरिति भस्म ॐ जलमिति भस्म ॐ स्थलमिति भस्म ॐ व्योमेति भस्म सर्व्वँ्ठं० हवाइदं भस्म मनएतानि चक्षूंषि भस्मानि इति भस्माभिमन्त्र्य । ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुंष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ तत्पुरुषाय नमः इति मंत्रेण भाले त्रिपुण्ड्रं कुर्य्यात् ॥ १ ॥ पुनः ॐ त्र्यम्बकं पठित्वा ॐ अघोराय नमः इतिदक्षिणांसे० ॥२॥ पुनः ॐ त्र्यम्बकं० ॐ सद्योजाताय नमः इति वामांसे० ॥ ३ ॥ पुनः ॐ त्र्यम्बकं पठित्वा ॐ वामदेवाय नमः इति जठरे० ॥४॥ पुनः ॐ त्र्यम्बकं पठित्वा ॐ ईशानाय नमः इति वक्षसि च त्रिपुण्ड्रं कुर्य्यात् ॥ अथवा तत्पुरुषादिनामस्थले ॐ तत्पुरुषाय विद्महे० ॥ १ ॥ अघोरेभ्योऽथघोरेभ्यो० ॥ २ ॥ सद्योजातमिति० ॥ ३ ॥ वामदेवाय इति० ॥ ४ ईशानः सर्वविद्यानामित्यादि ॥ ५ ॥ पञ्चमन्त्रैस्त्रिपुण्ड्रकाणि विधेयानि । एवं भस्मधारणं कृत्वा रुद्राक्षधारणं कार्य्यम् ॥ इति भस्मत्रिपुण्ड्रविधानम् ॥ अथ वैष्णवानामूर्ध्वपुण्ड्रविधानम् । गोपीचन्दनतुलसीमूलसिन्धुतीरजाह्नवीतीराणामन्यतममृदा केशवादिद्वादशनामभिर्ललाटादिषु द्वादशस्थानेषु तिलकं कार्य्यम् । तद्यथा । ॐ केशवाय नमः इति ललाटे कार्यम् ॥ १ ॥ ॐ नारायणाय नमः इति उदरे० ॥ २ ॥ ॐ माधवाय नमः इति हृदये ॥३॥ ॐगोविंदाय नमः इति कंठे ॥ ४ ॥ ॐ विष्णवे नमः इति दक्षिणपार्श्वे ॥ ५ ॥ ॐ मधुसूदनाय नमः इति दक्षिणबाहौ ॥ ६ ॥ ॐ त्रिविक्रमाय नमः इति दक्षिणकर्णदेशे ॥ ७ ॥ ॐ वामनाय०इति वामपार्श्वे ॥८॥ ॐ श्रीधराय०इति वामबाहौ ॥९॥ ॐ हृषीकेशाय नमः इति वामकर्णदेशे॥१०॥ ॐ पद्मनाभाय०इति पृष्ठे ॥११॥ ॐ दामोदराय नमः इति ककुदि ॥ १२ ॥ एवं द्वादशस्थानेषु तिलकं कृत्वा "ललाटे तु गदां कुर्य्याद्धृदये नन्दकं पुनः ॥ शंख चक्रं भुजद्वन्द्वे शार्ङ्गं बाणं च मूर्द्धनि ॥" एतानि चिह्नानि धारयेत् ॥ इति वैष्णवतिलकविधिः॥ अथ प्रायश्चित्ताङ्गविष्णुपूजा ॥ तत्रादौ आचम्य प्राणानायम्य देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्म्मा मम सर्वपापक्षयार्थं शरीरशुद्ध्यर्थं करिष्यमाणामुकमन्त्रपुरश्चरणाधिकारार्थं पुरुषसूक्तेन श्रीमहाविष्णुपूजनमहं करिष्ये इति सङ्कल्प्य स्वपुरतः चतुरस्रं हस्तमात्रं स्थंडिलं कृत्वा तदुपरि श्वेतवस्त्रं प्रसार्य तत्र तण्डुलैरष्टदलं कृत्वा तन्मध्ये ताम्रकलशं स्थापयेत तद्यथा । ॐ भूरंसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्रीम् ॥ पृथिवींयच्छपृथिवींदृँ्ठंहपृथिवींमाहिँ्ठंसीः ॥ इति कलशाधारभूमिं स्पृष्ट्वा ॥ १ ॥ तत्र ॐ धान्यमसिधिनुहिदेवान्प्राणायत्त्वोदानायत्वाव्यानायत्त्वादीर्घामनुप्रसितिमायुषेधान्देवोवः सविताहिरण्यपा

णि÷प्रतिगृभ्णात्वच्छिद्रेणपाणिना चक्षुषेत्त्वामहीनाम्पयोसि ॥ इति धान्यं क्षिप्त्वा ॥ २ ॥ तस्योपरि ॐ आजिघ्रकलशंमह्यात्वां
विशन्त्विन्दवः पुनरूर्ज्जानिवर्तस्वसानः॥ सहस्रं धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ इति ताम्रकलशं स्थापयेत् ॥ ३ ॥
ततः ॐवरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्न्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासी
द ॥ इति कलशे जलमापूर्य्य ॥ ४ ॥ ॐत्वाङ्गन्धर्वाऽअखनस्त्वामिन्द्रस्त्वांबृहस्पतिः÷॥ त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत ॥
इति गन्धम् ॥ ५ ॥ ॐयाऽओषधीःपूर्व्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामहठं शतन्धामानिसप्तच ॥ इति सर्वौषधीः ॥
॥ ६ ॥ ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवानोदूर्व्वेप्रतनुसहस्रेणशतेनच॥इति दुर्वाम् ॥७॥ ॐ अश्वत्थेवोनिषदनम्पर्णे
वोव्वसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ इति पञ्चपल्लवान् ॥ ८ ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥
यच्छानःशर्म्मसप्रथाः ॥ इति सप्त मृदः ॥९॥ ॐ याःफलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वठं
हसः । इति पूगीफलम् ॥ १० ॥ ॐ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे इति पञ्च रत्नानि ॥ ११ ॥ ॐ
हिरण्यगर्भः समवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमाङ्कस्मै देवायहविषा विधेम ॥ इति हिरण्यम् ॥१२॥
ॐ सुजातोज्योतिषासहशर्मवरूथमासदत्स्वः ॥ वासोऽअग्नेविश्वरूपठंसंव्ययस्वविभावसो॥इति वस्त्रं वा रक्तसूत्रं कण्ठे वेष्टयेत्॥
॥ १३ ॥ ॐपूर्णादर्विपरापतसुपूर्णापुनरापत । वस्नेवविक्रीणावहाऽइषमूर्जठंशतक्रतो ॥ इति पूर्णपात्रं निधाय ॥ १४ ॥
ॐ मनोजूतिर्जुषता इति प्रतिष्ठां कृत्वा तत्र ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानो
वरुणेहबोद्ध्युरुशठंसमानऽआयुःप्रमोषीः । ॐ भूर्भुवःस्वः वरुण इहागच्छ इह तिष्ठ इत्यावाह्य ॐ अपांपतिवरुणाय
नमः । इति षोडशोपचारैः संपूज्य । 'कलशस्य मुखे विष्णुः०' इत्याद्यभिमन्त्र्य ॥ ॐ देवदानवसंवादे० इति कल
शं प्रार्थयेत् । ततस्तदुपरि पट्टवस्त्रं प्रसार्य तत्र गन्धेन अष्टदलं यन्त्रं विलिख्य तन्मध्ये तुलसीदलोपरि शालिग्रामप्रतिमाम् अथवा
स्वर्णमयीं विष्णुमूर्त्तिम् अग्न्युत्तारणपूर्विकां स्थापयेत् ॥ तत्र स्वर्णमूर्तिश्चेत्तर्हि मूर्तिं पात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धजलधारां
दद्यात् सूक्तं च पठेत् । तत्र मन्त्राः–ॐसमुद्रस्यत्त्वावकयाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यठंशिवोभव ॥ १ ॥ हिमस्य
त्वाजरायुणाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्य ठं शिवोभव ॥ २ ॥ अपामिदन्न्ययनठंसमुद्रस्य निवेशनम् ॥ अन्याँस्ते ऽअ
स्मत्तपन्तुहेतयः पावको ऽअस्मभ्य ठं शिवोभव ॥ ३ ॥ नमस्तेहरसेशोचिषेनमस्ते ऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तुहे

तर्य÷ पावकोऽअस्मभ्यꣳ शिवोभव ॥ ४ ॥ प्राणदाऽअपानदाव्यानदाव्वर्चोदाव्वरिवोदाः ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतय÷ पावकोऽअस्मभ्यꣳशिवोभव ॥ ५ ॥ इत्यग्न्युत्तारणसूक्तम् ॥ ततः पञ्चामृतेन संस्नाप्य । ॐ आपोहिष्ठेत्यादित्र्यृचेन शुद्धजलेन प्रोक्ष्य । स्थापितकलशोपरि संस्थाप्य ॥ ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामो ३ म्प्रतिष्ठ ॥ १ ॥ इति प्रतिष्ठाप्य पुष्पाणि विकीर्य स्वशरीरे देवाङ्गे च पुरुषसूक्तन्यासं कुर्यात् ॥ "देवो भूत्वा देवं यजेत" इति वाक्यात् ॥ अथाङ्गन्यासः। सहस्रशीर्षेत्यादिषोडशर्चस्य सूक्तस्य नारायण ऋषिः पुरुषो देवता। अनुष्टुप् छन्दः। अन्त्यायास्त्रिष्टुप्छन्दः। न्यासे पूजायां च विनियोगः ॥ ॐसहस्रशीर्षा० ॥ इति वामकरे ॥ १ ॥ ॐपुरुषऽएवेदꣳसर्वम्० ॥ इति दक्षिणकरे ॥ २ ॥ ॐ एतावानस्यमहिमा० ॥ इति वामपादे ॥ ३ ॥ ॐत्रिपादूर्ध्व० ॥ इति दक्षिणपादे ॥ ४ ॥ ॐ ततो व्विराड० ॥ इति वामजानुनि ॥ ५ ॥ ॐतस्माद्यज्ञात्सर्वहुतः० इति दक्षिणजानुनि ॥ ६ ॥ ॐतस्माद्यज्ञात्सर्वहुतऽऋचः० ॥ इति वामकटौ ॥ ७ ॥ ॐ तस्मादश्वा० ॥ इति दक्षिणकटौ ॥ ८ ॥ ॐ तंयज्ञं० ॥ इति नाभौ ॥ ९ ॥ ॐ यत्पुरु० ॥ इति हृदये ॥ १० ॥ ॐ ब्राह्मणोस्य० ॥ इति कण्ठे ॥ ११ ॥ ॐ चन्द्रमामनसो० ॥ इति वामबाहौ ॥ १२ ॥ ॐ नाभ्याऽआसीत्० ॥ दक्षिणबाहौ ॥ १३ ॥ ॐयत्पुरुषेण० ॥ इति मुखे ॥ १४ ॥ ॐसप्तास्यासन्० ॥ इति नेत्रयोः ॥ १५ ॥ ॐयज्ञेनयज्ञमय० ॥ इति मूर्ध्नि ॥ १६ ॥ अथ पञ्चाङ्गन्यासः। ॐअद्भ्यःसंभृतः० ॥ इति हृदये ॥ १ ॥ ॐव्वेदाहमेतम्० ॥ इति शिरसि ॥ २ ॥ ॐप्रजापतिश्च० ॥ इति शिखायै वषट् ॥ ३ ॥ ॐयोदेवेभ्यऽआतपति० ॥ इति कवचाय हुम् ॥ ४ ॥ ॐरुचम्ब्राह्मं० ॥ इत्यस्त्राय फट् ॥ ५ ॥ एवं न्यासं कृत्वा कलशं शंखघण्टे च संपूज्य देवं ध्यायन् घण्टानादं कृत्वा पूजां कुर्यात्। तत्र प्रयोगः। ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिꣳसर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ॐश्रीमहाविष्णवे नमः ॥ आवाहनं समर्पयामि । इत्यावाहनम् ॥ १ ॥ ( शालिग्रामपूजायामावाहनाभावात्पत्रपुष्पं निवेदयेत् । ) ॐ पुरुषऽएवेदꣳसर्व्वंयद्भूतंयच्चभाव्यम् ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ ॐ महाविष्णवे नमः आसनं स० ॥ ॐ एतावानस्यमहिमातोज्यायाꣳश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ ३ ॥ ॐ महाविष्णवे नमः पाद्यं सम० ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोव्विष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॐ महाविष्णवे नमः अर्घ्यं स० ॥ ॐ ततोव्विराडजायतव्विराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥ ॐ महाविष्णवे नमः आचमनीयं स० । ॐ तस्माद्यज्ञात्सर्व्वहुतःसम्भृतम्पृषदाज्ज्यम् ।

पशूँस्ताँश्चक्रेव्वायव्यानारण्याग्ग्राम्म्याश्चये ॥ ६ ॥ ॐ महाविष्णवे नमः स्नानं स० "ॐ पयः पृथिव्यामित्यादिमन्त्रः पृथक्
पृथक् स्नानं शुद्धोदकस्नानं पुरुषसूक्तेनाभिषेकश्च कार्यः ॥ ॐ तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानिजज्ञिरे ॥ छन्दाᳬसिजज्ञिरे
तस्माद्यजुस्तस्मादजायत ॥ ७ ॥ ॐ महाविष्णवे० वस्त्रं स० वस्त्रान्ते आचमनं स० ॥ ॐ तस्मादश्वाऽअजायन्तयेकेचो
भयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥ ८ ॥ ॐ महाविष्णवे० उपवीतं स० ॥ उपवीतान्ते आचमनं स० ॥
ॐ तंयज्ञम्बर्हिषिप्प्रौक्षन्पुरुषञ्जातमग्ग्रतः ॥ तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये ॥९॥ ॐ महाविष्णवे नमः चन्दनं सं० ॥ ॐ यत्पुरु
षंव्यदधुः कतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किम्बाहू किमूरूपादाऽउच्येते ॥१०॥ ॐ महाविष्णवे नमः पुष्पाणि तुलसीपत्राणि
च स० ॥ ॐ ब्राह्मणोस्यमुखमासीद्बाहूराजन्न्यः कृतः ॥ ऊरूतदस्ययद्वैश्यः पद्भ्याᳬशूद्रोऽअजायत ॥ ११ ॥ ॐ महाविष्णवे नमः
धूपं स० ॥ ॐ चन्द्रमामनसोजातश्चक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ १ ॥ ॐ महाविष्णवे नमः
दीपं सम० ॥ ॐ नाभ्याऽआसीदन्तरिक्षᳬशीर्ष्णोद्यौः समवर्त्तत ॥ पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथालोकाँ २ ॥ ऽअकल्पयन् ॥१३॥ ॐ
महाविष्णवे नमः नैवेद्यं स० ॥ नैवेद्यान्ते आचमनं स० ॥ ॐयत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ व्वसन्तोस्यासीदाज्ज्यङ्ग्रीष्म्मऽ
इध्मः शरद्धविः ॥ १४ ॥ ॐ महाविष्णवे नमः मुखवासताम्बूलं स० ॥ ॐ हिरण्यगर्भः समवर्तता० ॥ ॐ महाविष्णवे
नमः ॥ दक्षिणां स० ॥ ततो नीराजनं स० ॥ ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ॥ देवायद्यज्ञन्तन्न्वानाऽ
अबध्नन्पुरुषम्पशुम् ॥ १५ ॥ ॐ महाविष्णवे नमः प्रदक्षिणां स० ॥ ॐ यज्ञेनयज्ञमयजन्त देवास्तानिधर्माणिप्रथमान्न्या
सन्॥ तेहनाकम्महिमानः सचन्तयत्रपूर्वेसाध्याः सन्ति देवाः ॥१६॥ ॐ महाविष्णवे नमः मन्त्रपुष्पाञ्जलिं स०। ततः साष्टाङ्गप्रणामः॥
अथ नमस्कारः ॥ ॐ अद्भ्यः सम्भृतः पृथिव्यैरसाच्चविश्वकर्म्मणः समवर्त्तताग्ग्रे ॥ तस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्व
माजानमग्ग्रे ॥ १ ॥ ॐ व्वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः परस्तात् ॥ तमेवविदित्वातिमृत्युमेतिनान्यः पन्थाविद्यतेय
नाय ॥ २ ॥ ॐ प्रजापतिश्चरतिगर्ब्भेऽअन्तरजायमानोबहुधाव्विजायते ॥ तस्ययोनिम्परिपश्यन्तिधीरास्तस्मिन्हतस्थुर्भुवनानि
व्विश्वा ॥ ३ ॥ ॐ योदेवेभ्यऽआतपतियोदेवानाम्पुरोहितः ॥ पूर्व्वोयोदेवेभ्योजातोनमोरुचायब्राह्मये ॥ ४ ॥ रुचम्ब्राह्मञ्जनयन्तो
देवाऽअग्ग्रेतदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोव्विद्यात्तस्यदेवाऽअसन्वशे ॥ ५ ॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपम
श्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण ॥६॥ ॐमहाविष्णवे नमः स्तुतिपाठं स०॥ततः "जितं ते पुण्डरीकाक्ष

नमस्ते विश्वभावन ॥ सुब्रह्मण्य नमस्तेऽस्तु महापुरुषपूर्वज ॥ १ ॥ नमो हिरण्यगर्भाय प्रधानव्यक्तिरूपिणे ॥ ॐ नमो वासुदे
वाय शुद्धज्ञानस्वरूपिणे ॥ २ ॥ देवानां दानवानां च सामान्यमसि दैवतम् ॥ सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥ ३ ॥ एक
स्त्वमसि लोकस्य स्रष्टा संहारकस्तथा अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥ ४ ॥ संसारसागरं घोरमनन्तं क्लेशभाजनम् ॥
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥ ५ ॥ न ते रूपं न चाकारो नायुधानि न चास्पदम् ॥ तथाऽपि पुरुषाकारो भक्तानां
त्वं प्रकाशसे ॥ ६ ॥ नैव किञ्चित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् ॥ नैव किञ्चिदसाध्यं ते न च साध्योऽसि कस्यचित् ॥ ७ ॥
कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ॥ योगिनां परमां सिद्धिं परमं ते पदं विदुः ॥ ८ ॥ अहं भीतोऽस्मि देवेश संसारेऽस्मि
न्महाभये ॥ त्राहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥ ९ ॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ॥ शरीरेऽपि गतो
चापि वर्तते मे महद्भयम् ॥ १० ॥ त्वत्पादकमलादन्यत्र मे जन्मान्तरेष्वपि ॥ निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम्
॥ ११ ॥ विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमर्जितम् ॥ जन्मान्तरेऽपि मे देव माभूदस्य परिक्षयः ॥ १२ ॥ दुर्गतावपि जातायां
त्वं गतिस्त्वं मतिर्मम ॥ यदि नाथं च विज्ञेयं तावतास्मि कृती सदा ॥ १३ ॥ आकामकलुषं चित्तं मम ते पादयोः स्थितम् ॥
कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥ १४ ॥" एवं महापुरुषविद्यास्तवेन स्तुत्वा । ॐ अनेन षोडशोपचारपूजनेन पापापहा श्रीमहा
विष्णुः प्रीयताम् ॥ इति परमेश्वरार्पणं कुर्यात् ॥ एवं विष्णुपूजां कृत्वा पुरुषसूक्तेन प्रत्यृचं संतर्प्य मन्त्रान्तरे सर्वत्र भगवान् पापापहा महावि
ष्णुस्तृप्यताम् इति पठेत् ॥ इति विष्णुतर्पणम् ॥ अथ विष्णुश्राद्धम् । आचम्य देशकालौ संकीर्त्य प्रायश्चित्ताङ्गतया विष्णुश्राद्धसंपत्तये
श्रीविष्णूद्देशेन त्र्यधिकयुग्मब्राह्मणभोजनपर्याप्तमामं तन्निष्क्रयद्रव्यदानं वा करिष्ये ॥ इति संकल्प्य ब्राह्मणं गन्धादिना संपूज्य पापापह
श्रीविष्णुप्रीतये विष्णुश्राद्धस्य संपूर्णतासिद्ध्यर्थं युग्मब्राह्मणभोजनपर्याप्तमामान्नं तन्निष्क्रयद्रव्यं वा अमुकशर्मणे ब्राह्मणाय तुभ्य
महं संप्रददे । एवं चतुर्भ्यो ब्राह्मणेभ्यो दत्त्वा प्रायश्चित्ताङ्गमादौ गोदानं तन्निष्क्रयद्रव्यं वा दद्यात् ॥ तत्र प्रत्यक्षगोदानपक्षे देश
कालौ संकीर्त्य प्रारिप्सितप्रायश्चित्तस्य पूर्वाङ्गतया विहितं गोदानं करिष्ये ॥ इति संकल्प्य ब्राह्मणं वृत्वा यथाविधि ब्राह्मणपूजनं
धेनुपूजनं च कुर्यात । ततो गोपुच्छे देवर्षिपितृतर्पणं कृत्वा कांस्यपात्रे गोपुच्छं निधाय दुग्धतिलकुशसुवर्णयुतं कृत्वा दक्षिणहस्तेन
गृहीत्वा देशकालौ संकीर्त्य मम समस्तपापक्षयार्थं पापापहश्रीमहाविष्णुप्रीत्यर्थमिमां गां सवत्सां सोपस्करां यथाशक्ति
विभूषितां रुद्रदैवत्यां तुभ्यमहं संप्रददे इत्युच्चार्य संकल्पजलयुतं गोपुच्छं विप्रहस्ते दद्यात् ॥ "ॐ यज्ञसाधनभूता या विश्वस्याघौ
घनाशिनी ॥ विश्वरूपधरो देवः प्रीयतामनया गवा ॥ १ ॥ " इति प्रार्थयेत् । ततः गोदानसाङ्गतासिद्ध्यर्थं विप्राय दक्षिणां
दत्त्वा अनेन गोदानकर्मणा पापापहश्रीमहाविष्णुः प्रीयताम् इति जलमुत्सृजेत् । गोदानासम्भवे यथाशक्ति तन्मूल्यं देयम् । तद्यथा
देशकालौ संकीर्त्य प्रायश्चित्तपूर्वाङ्गतया विहितं यथाशक्ति गोनिष्क्रयीभूतद्रव्यदानं करिष्ये इति संकल्प्य ब्राह्मणं संपूज्य देय
द्रव्यं गृहीत्वा देशकालौ संकीर्त्य प्रायश्चित्तपूर्वाङ्गतया विहितमिदं गोनिष्क्रयीभूतं यथशक्ति रजतद्रव्यं तुभ्यमहं संप्रददे इति

दद्यात् । नात्र दक्षिणा॥इति प्रायश्चित्तधेनुदानम्॥अथ प्रायश्चित्तहोमः॥तत्रादौ शुद्धमृदा चतुरस्रं स्थण्डिलं कृत्वा देशकालौ संकीर्त्य अद्य प्रायश्चित्तपूर्वाङ्गतया विहितमाज्येन सह पञ्चगव्यहवनं करिष्ये ॥ तदङ्गतया पञ्चभूसंस्कारपूर्वकमग्निस्थापनं च करिष्ये इति संकल्प्य पंचभूसंस्कारान् कृत्वा यथाविधि विड्नामाग्निं प्रतिष्ठाप्य पात्रासादनं कुर्यात्।तद्यथा अग्नेरुत्तरतः पलाशपत्रं यज्ञियकाष्ठं हरितानि सप्त कुशपत्राणि गोमूत्रादीनि पृथक्पृथक् पञ्चगव्यानि आज्यम् इत्यादिहवनद्रव्याणि निधाय दक्षिणत आज्याधिश्रपणानन्तरं पलाशपत्रपुटके ताम्राया गोमूत्रम् अष्टमाषं गायत्र्यादाय श्वेतगोर्गोमयं षोडशमाषं गन्धद्वारेति मन्त्रेण निक्षिप्य पीतगोः क्षीरं द्वादशमाषम्॥ॐआप्यायस्वेति मन्त्रेण ग्राह्यम् । नीलाया दधि षण्माषम् ।ॐदधिक्राव्णेति मन्त्रेण निक्षिप्य । कृष्णाया घृतम् अष्टमाषम्ॐतेजोसीति मन्त्रेण गृह्णीयात्।यथोक्तगोरभावे श्वेताया अपि गोमूत्रादिकं ग्राह्यम्॥ततः देवस्यत्वेति मन्त्रेण कुशोदकं चतुर्माषं च प्रक्षिप्य प्रणवेन यज्ञकाष्ठेनालोड्य प्रणवेनाभिमन्त्रयेत् । ततः अग्निपर्युक्षणानन्तरम् आज्येन आघारावाज्यभागं हुत्वा अन्वाधानं कुर्यात्।तद्यथा अस्मिन्नन्वाहितेऽग्नावग्निं वायुं सूर्यं प्रजापतिं चाज्येन प्रत्येकं व्यस्तसमस्तव्याहृत्या अष्टाविंशतिसंख्यया यक्ष्ये । पुनरत्र प्रधानं पृथिवीं विष्णुं रुद्रं ब्रह्माणमग्निं सोमं सवितारं प्रजापतिं परमात्मानम् एता ब्रह्मकूर्चदेवताः मिलितपञ्चगव्यद्रव्येण एकैकयाहुत्या यक्ष्ये । शेषेण स्विष्टकृतमित्यादि अन्वादध्यात् अथाज्येन प्रधानहोमः। ॐभूः स्वाहा इदमग्नये न मम ॥ ॐ भुवः स्वाहा इदं वायवे न मम ॥ॐस्वः स्वाहा इदं सूर्याय न मम ॥ ॐ भूर्भुवःस्वाहा इदं प्रजापतये न मम ॥ एवं सप्तवारान्कृत्वा अष्टाविंशत्याहुतयो भवन्ति । एवं सप्तविंशतिवारान् कृत्वा अष्टोत्तरशताहुतयो भवन्ति । ततः पञ्चगव्येन प्रतिमन्त्रमेकैकाहुतिः । ॐ स्योना पृथिविनोभवानृक्षरानिवेशनी ॥ यच्छा नः शर्म्मसप्रथाः स्वाहा इदं पृथिव्यै न मम ॥१॥ ॐ इदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्यपा ७ सुरे स्वाहा । इदं विष्णवे ॥ २ ॥ ॐ मानस्तोकेतनयेमानऽ आयुषिमानो गोषु मानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्रुद्रभामिनो व्वधीर्हविष्मन्तस्सदमित्वाहवामहे स्वाहा इदं रुद्राय० ॥ उदकोपस्पर्शनम् ॥ ॥ ३ ॥ ॐ ब्रह्म यज्ञानं प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवःस्वाहा । इदं ब्रह्मणे न मम ॥ ४ ॥ ॐ अग्नये स्वाहा इदमग्नये न मम ॥ ५ ॥ ॐ सोमाय स्वाहा इदं सोमाय न मम ॥ ६ ॥ ॐ तत्सवितु० स्वाहा इदं सवित्रे न मम ॥ ७ ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ॥ ८ ॥ ॐ परमात्मने स्वाहा इदं परमात्मने न मम ॥ ९ ॥ ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ १० ॥ ततो भूरादिप्रजापत्यन्ता नवाज्याहुतीर्हुत्वा संस्रवप्राशनादि प्रणीताविमोकान्तं कृत्वा ब्रह्मणे पूर्णपात्रं दद्यात् ततो देशकालौ संकीर्त्य अद्यदिनमारभ्याप्मुकव्रतग्रहणं करिष्ये इति द्विजान्पृष्ट्वा । कुरुष्वेत्यनुज्ञातः पञ्चगव्यप्राशनं कुर्यात् । तत्र मन्त्रः ॐयत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ॥ प्राशनात्पञ्चगव्यस्य दहत्यग्निरिवेन्धनम् ॥१॥ इति सर्वं हुतशेषपञ्चगव्यं प्रणवेन पिबेत् । तद्दिने उपवासः । ततः संकल्पितप्राय

श्चित्तद्रव्यं ब्राह्मणेभ्यो दत्त्वा यथाशक्ति ब्राह्मणान् भोजयित्वा कर्मेश्वरार्पणं कुर्यात् । ततः संकल्पितव्रतमनुष्ठाय पूर्ववत् व्याहृत्या ज्यहोमविष्णुश्राद्धगोदानानि कुर्यात् । व्रतकरणाशक्तौ प्राजापत्ये गामेकां दद्यात् । अतिकृच्छ्रे सांतपने च गोद्वयम् ॥ २ ॥ पराके तप्तकृच्छ्रे च गोत्रयम् ॥३॥ कृच्छ्रातिकृच्छ्रे गवां चतुष्टयं वा ॥ चान्द्रायणेऽष्टौ ८पञ्च५चतस्र४ स्तिस्रो ३ वा गावः॥मासं पयोव्रते यावकव्रते मासोपवासे च पञ्च गावः ॥ मासं गोमूत्रयावकव्रते षड् गावो देयाः ॥ गोदानाशक्तौ निष्कनिष्कार्धनिष्कपादान्य तमप्रमाणहेम रौप्यं वा धेनुमूल्यं वा देयम् । अत्यशक्तेन निष्कपादार्धरजतं तत्समं धान्यादि वा देयम् ॥ अशीतिगुञ्जात्मकः कर्षः, चत्वारः कर्षाः निष्कमिति ॥ अथ प्राजापत्यप्रत्याम्नायाः ॥ प्राजापत्यकरणाशक्तौ धेनुमेकाम् ॥१॥ अथवा दशसहस्रगा यत्रीजपः ॥ २ ॥ गायत्र्या सहस्रं तिलहोमः ॥ ३ ॥ [ क्वचित्सहस्रं व्याहृत्या तिलहोम उक्तः ३ ॥] शतद्वयं प्राणायामा वा ॥४॥ द्वादशब्राह्मणभोजनं वा ॥ ५ ॥ वेदसंहितापारायणम् ॥ ६ ॥ योजनतीर्थयात्रा ७ ॥ द्वादशसहस्रं नमस्काराः ८ ॥ इति प्राजापत्यप्रत्याम्नायाः ॥ अहोरात्र उपवासाशक्तौ एकविप्रभोजनम् १ ॥ वा सहस्रं गायत्रीजपः २ ॥ द्वादश प्राणायामा वा इति स्मृत्यर्थसारे । इति प्रायश्चित्तप्रयोगः ॥ एवं प्रायश्चित्तं पापानुसारं कृत्वा मन्त्रसिद्ध्यर्थं गायत्र्या अयुतं जपान्कुर्यात् । तद्यथा । देशकालौ संकीर्त्य ज्ञाताज्ञातपापक्षयार्थं करिष्यमाणामुकमन्त्रपुरश्चरणाधिकारार्थं मंत्रसिद्ध्यर्थं च गायत्र्या अयुतज नहं करिष्ये इति संकल्प्य स्वयं विप्रद्वारा वा कुर्यात् । ( तदुक्तं देवीभागवते ) " यस्य कस्यापि मन्त्रस्य पुरश्चरणमारभेत् ॥ व्याहृतित्रयसंयुक्तां गायत्रीं चायुतं जपेत् ॥ १ ॥ नृसिंहार्कवराहाणां तान्त्रिकं वैदिकं तथा ॥ विना जप्त्वा तु गायत्रीं तत्सर्वं निष्फलं भवेत् ॥ २ ॥ एवं सप्रणवव्याहृतिकगायत्र्ययुतं जप्त्वा । अपोहिष्ठा०इत्यादित्र्यृचम् ३ ॥ स्वस्तिन०इत्याद्याः स्वस्तिमतीः ॥ पुनंतु मा इत्याद्याः पावमानीश्च सर्वा जप्त्वा ॐ गायत्र्याऽऽचार्यमृषिं विश्वामित्रं तर्पयामि । गायत्रीछन्दस्तर्पयामि । सवितारं देवतां तर्पयामि । इति तर्पणं कृत्वा कद्रुद्रायेत्यादीनि रुद्रसूक्तानि सकृज्जपेत् । तद्दिने उपवासः । अशक्तस्य हविष्यान्नेन एकभक्तव्रतम् इति सर्वमन्त्रपुरश्चरणारम्भात्पूर्वदिनकृत्यम् ॥ ॥ अथानुष्ठानारम्भदिनकर्म ॥ चन्द्रतारादिबलान्विते पूर्वोक्ते सुमुहूर्ते प्रातरुत्थाय तीर्थादौ यथाविधि स्नात्वा संध्यादिनित्यावश्यकं समाप्य आचार्यं जापकांश्चाहूय तेभ्य आसनार्घ्यादिकं दत्त्वा मङ्गलस्नानं कुर्य्यात् । तद्यथा । यजमानः शुद्धपीठे प्राङ्मुख उदङ्मुखो वा उपविश्य हस्तौ पादौ प्रक्षाल्य द्विराचम्य प्राणानायम्य देशकालौ संकीर्त्य ब्राह्मणद्वारा करिष्यमाणामुकमन्त्रपुरश्चरणकर्माङ्गतया मङ्गलस्नानमहं करिष्ये । इति संकल्पः । ततो यथा चारं मङ्गलवाद्यघोषपुरःसरं पुत्रवतीवृद्धसुवासिनीभिर्हरतैः सुगन्धितैलाभ्यञ्जनं तिलामलकादीनां सर्वौषध्यादिसुगन्धचूर्णेनोद्वर्तनम् उष्णोदकेन मङ्गलस्नानं पत्न्या सह कृत्वा नवं श्वेतं सदशं स्ववर्णेन सकृद्धौतं प्रागुदग्वा प्रसारितं नान्यधारितमहतं वस्त्रं नाभिपृष्ठकटिषु बद्धत्रिकच्छम् "ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि ॥ शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ १ ॥ इति मन्त्रेण परिधाय । ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती ॥ यशो भगश्च मा

विदद्यशो मा प्रतिपद्यताम् ॥ १॥ इति मन्त्रेणोत्तरीयं धृत्वा यथाविधि नूतनयज्ञोपवीतं च धारयेत् ॥ पत्नी तु अहते क्षौमवस्त्रे श्वेतपीत रक्तरञ्जिते नीलरञ्जितं विना अमन्त्रकं परिधाय प्रतित्रत्नं स्मार्तविधिना द्विराचमनम् ॥ पत्न्यास्तु यथोक्तं कार्यम् । ततः शुभासने प्राङ्मुख उपविश्य स्वदक्षिणतः पत्नीं चोपवेश्य करद्वये अनामिकामध्यपर्वणि कुशपवित्रमथवा यथाशक्ति सुवर्णात्मकं पवित्रद्वयं च धृत्वा कुङ्कुमकेशरान्यतममङ्गलद्रव्येण तिलकं यथाचारं कृत्वा द्विराचम्य प्राणानायम्य शान्तिपाठं पठित्वा लक्ष्मीनारायणा दिदेवान् प्रणमेत् । अथ शान्तिपाठमन्त्राः ॥ "ॐआनो भद्राःक्रतवो यन्तु विश्वतो दब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोयथा सदमिद्वृधेऽअसन्नप्रायुवोरक्षितारो दिवेदिवे ॥ १ ॥ देवानां भद्रा सुमतिर्ऋजूयतान्देवानाᳬरातिरभिनोनिवर्ततताम् ॥ देवानाᳬ सख्यमुपसेदिमाव्वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥ तान्पूर्व्वयानिविदाहूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ अर्य्यमणम्व्वरुणᳬसोममश्विनासरस्वतीनःसुभगामयस्करत् ॥ ३ ॥ तन्नोव्वातोमयोभुव्वातुभेषजन्तन्माता पृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतो मयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेव्व यम् ॥ पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ५ ॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाव्विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वामरुतःपृश्निमातरःशुभंय्यावानोव्विदथेषुजग्मयः ॥ अग्निजिह्वा मनवःसूरचक्षसोव्विश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳬस स्तनूभिर्व्व्यशेमहिदेवहितंयदायुः ॥८॥ शतमिन्नुशरदोऽअन्ति देवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमध्या रीरिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ व्विश्वेदेवाऽअदितिःपञ्चजनाऽअदितिर्ज्जातमदि तिर्ज्जनित्त्वम् ॥ १० ॥ तम्पत्नीभिरनुगच्छेमदेवाःपुत्रैर्भ्रातृभिरुतवाहिरण्यैः ॥ नाकङ्गृभ्णानाःसुकृतस्यलोकेतृतीयेपृष्ठेऽअधिरोच नेदिवः ॥ ११ ॥ आयुष्यंव्वर्च्चस्यᳬरायस्पोषमौद्भिदम् ॥ इदᳬहिरण्यंवर्च्चस्वज्जैत्रायाविशतादुमाम् ॥ १२ ॥ द्यौःशान्तिरन्तरिक्ष ᳬशान्तिःपृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः ॥ व्वनस्पतयःशान्तिर्व्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिः सर्व्वᳬशान्तिः शान्ति रेवशान्तिःसामाशान्तिरेधि ॥ १३ ॥ यतो यतः समीहसेततोनोऽअभयङ्कुरु ॥ शन्नःकुरुप्रजाभ्योभयन्नःपशुभ्यः ॥ १४ ॥ सुशान्तिर्भवतु ॥ ॐ श्रीमहागणाधिपतये नमः ॥ ॐ लक्ष्मीनारायणाभ्यां नमः ॥ ॐ उमामहेश्वराभ्यां नमः ॥ ॐ वाणीहिरण्यगर्भाभ्यां नमः ॥ ॐ शचीपुरन्दराभ्यां नमः ॥ ॐ मातापितृचरणकमलेभ्यो नमः ॥ ॐ कुलदेवताभ्यो नमः ॥ ॐइष्टदेवताभ्यो नमः॥ ॐग्राम

देवताभ्यो नमः ॥ ॐ स्थानदेवताभ्यो नमः॥ॐवास्तुदेवताभ्यो नमः॥ ॐ सर्वेभ्यो देवेभ्यो नमः॥ ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमोनमः ॥ ॐ पुण्यं पुण्याहं दीर्घमायुरस्तु॥ ॐसुमुखश्चैकदन्तश्च कपिलो गजकर्णकः॥ लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥१॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥३॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ४ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ ५ ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तुते ॥ ६ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ॥ येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ ७ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥८॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥ ९ ॥ सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ १० ॥ वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ ॥ अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ११ ॥ इति प्रणम्य संकल्पं कुर्य्यात् ॥ अथ संकल्पः ॥ तत्रादौ दक्षिणहस्ते कुशत्रययवगन्धपुष्पजलान्यादाय ॐविष्णुर्विष्णुर्विष्णुः ॐ तत्सद्ब्रह्म श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणो द्वितीये परार्द्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नो द्वितीये यामे तृतीये मुहूर्त्ते रथन्तरादिद्वात्रिंशत्कल्पानां मध्ये अष्टमे श्वेतवाराहकल्पे स्वयंभुवादिमन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वन्तरे कृतत्रेताद्वापरकलिसंज्ञानां चतुर्णां युगानां मध्ये वर्तमाने अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे तथा पञ्चाशत्कोटियोजनविस्तीर्णभूमण्डलान्तर्गतसप्तद्वीपमध्यवर्तिनि जम्बूद्वीपे तत्रापि नवखण्डानां मध्ये नवसहस्रयोजनविस्तीर्णे भरतखण्डे तत्रापि परमपवित्रे भारते वर्षे आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे अमुकक्षेत्रे श्रीगङ्गायमुनयोरमुकदिग्भागे नर्मदाया अमुकप्रदेशे देवब्राह्मणानां सन्निधौ श्रीमन्नृपविक्रमादित्यराज्यादमुकसंख्यापरिमिते प्रवर्तमानवत्सरे प्रभवादिषष्टिसंवत्सराणां मध्येऽमुकनाम्नि संवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थे चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माहमात्मनः श्रुतिस्मृतिपुराणोक्तफलावाप्तये अस्मिन्पुण्याहे मम कलत्रादिभिः सह जन्मराशेः सकाशान्नामराशेः सकाशाद्वा जन्मलग्नाद्वर्षलग्नाद्गोचराद्वा ये केचिच्चतुर्थाष्टमद्वादशाद्यनिष्टस्थानस्थिताः क्रूरग्रहास्तैः सूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशार्थं सर्वदा तृतीयैकादशशुभस्थानस्थितवदुत्तमबलप्राप्त्यर्थं तथा दशान्तर्दशोपदशादिनदशाजनितपीडाऽल्पायुराधिदैवाधिभौतिकाध्यात्मिकजनितक्लेशनिवृत्तिपूर्वकशरीरारोग्यार्थं परमैश्वर्य्यादिप्राप्त्यर्थम् अमुकदेवताप्रीत्यर्थममुकसंख्यापरिमितामुकमन्त्रजपपुरश्चरणं स्वयं ब्राह्मणद्वारा वा करिष्ये इति तदङ्गत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धमाचार्यादिवरणं च करिष्ये इति संकल्प्य स्ववामे कर्मार्थजलपूरितकलशार्चनम् । "ॐ तत्त्वा

यामिब्रह्मणाग्वन्दमानस्तदाशास्तेयजमानोहविर्भि॥अहेडमानोवरुणेहवोध्युरुशठंसमानऽआयुःप्रमोषीः ॥ अस्मिन्कलशे ॐ वरुण इहागच्छेह तिष्ठ इत्यावाह्य ॐ अपांपतये वरुणाय नमः इति गन्धाक्षतपुष्पैः संपूज्य कलशस्य मुखे विष्णुरित्याद्यभिमन्त्र्यॐगङ्गे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ १ ॥ अस्मिन्कलशे सर्वाणि तीर्थान्यावाहयामि पूजयामि नमस्करोमि इति तीर्थान्यावाह्य देवदानवसंवादे इति प्रार्थयेत् ॥ ततो दूर्वाभिः कलशोदकेन संभारान् ॐ अपवित्रःपवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥१॥ इति मन्त्रेण संप्रोक्ष्य दीपपूजनं कुर्यात्।भो दीप त्वं ब्रह्मरूप अन्धकारनिवारक ॥ इमां मया कृतां पूजां गृह्णंस्तेजः प्रवर्धय ॥१॥ दीपाय नमः। इति गन्धाक्षतपुष्पैः पूजयेत्॥अथ गणपतिपूजनम्। तत्रादौ ध्यानम्—"श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः क्षीराब्धौ रत्नदीपैःसुरतरुविमले रत्नसिंहासनस्थम्॥ दोर्भिः पाशाङ्कुशेष्टाभयधृतिविशदं चन्द्रमौलिं त्रिनेत्रं ध्यायेच्छान्त्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥१॥ "ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमःध्यायामि इति ध्यानम्॥१॥पुष्पाण्यादाय—हे हेरम्ब त्वमेह्येहि अम्बिकात्र्यम्बकात्मज॥सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभपितुः पितः ॥ १ ॥ नागास्य नागहार त्वं गणराज चतुर्भुज ॥ भूषितः स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः ॥२॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ॥ इहागत्य गृहाण त्वं पूजां क्रतुं च रक्ष मे ॥ ३ ॥ ॐ गणानान्त्वागणपतिठंहवामहे प्रियाणांन्त्वा प्रियपतिठंहवामहेनिधीनान्त्वानिधिपतिठंहवामहेव्वसो मम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणाधिपतये नमः गणपतिमावाहयामि स्थापयामि इत्यावाह्य ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणाधिपतये नमः । इति मन्त्रेण पाद्यादिभिः षोडशोपचारैः संपूज्य विशेषार्घ्यं दद्यात् । ॐ रक्षरक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ॥ भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ १ ॥ द्वैमातुर कृपासिन्धो षाण्मातुरग्रज प्रभो ॥ वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ २ ॥ गृहाणार्घ्यमिदं देव सर्वदेवनमस्कृत ॥ अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ॥ ३ ॥ ॐ भू० सि० म० विशेषार्घ्यं स० ॥ ( प्रार्थना )—"विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ॥ नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमोनमस्ते ॥ १ ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमोनमस्ते ॥ २ ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः ॥ नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥ ३ ॥ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे ॥ भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ ४ ॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय ॥ निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ५ ॥ त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति वरप्रदेति ॥ विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्य

मेव ॥ ६ ॥ " इति प्रार्थ्य अनया पूजया सिद्धिबुद्धिसहितमहागणपतिः सांगः सपरिवारः प्रीयताम् ॥ इति गणपतिपूजनम् ॥
अथ पुण्याहवाचनम् ॥ तत्रादौ स्वाग्रे पूर्वोक्तकलशस्थापनविधिना अव्रणं ताम्रकलशं संस्थाप्य तत्र वरुणं संपूज्य प्रार्थयेत् ।
ॐ नमोनमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय ॥ सुपाशहस्ताय झषासनाय जलाधिनाथाय नमोनमस्ते ॥ १ ॥ पाशपाणे
नमस्तुभ्यं पद्मिनीजीवनायक ॥ पुण्याहवाचनं यावत्तावत्त्वं सन्निधौ भव ॥ २ ॥ इति प्रार्थ्य पुण्याहवाचनं कुर्य्यात् । अवनि
कृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधायानन्तरं दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा दीर्घा नागा नद्यो
गिरयस्त्रीणि विष्णुपदानि च ॥ ॐ त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ १ ॥ तेनायुःप्रमाणेन
पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु इति यजमानः पुण्यं पुण्याहं दीर्घमायुरस्त्विति द्विजाः । एवं सर्वत्र यजमानवचनो
त्तरं ब्राह्मणाः प्रतिवचनं दद्युः । ब्राह्मणानां हस्ते सुप्रोक्षितमस्तु ॐ शिवा आपः सन्तु इति जलं दद्यात् । सन्तु शिवा आपः
इति प्रतिवचनम् । ॐ सौमनस्यमस्तु इति पुष्पम् । अस्तु सौमनस्यम्० । ॐअक्षतं चारिष्टं चास्तु इत्यक्षतान् । अस्त्वक्षतमरिष्टं
च । ॐ गन्धाः पान्तु । इति गन्धम्०॥सौमङ्गल्यं चास्तु । ॐ अक्षताः पान्तु आयुष्यमस्तु० । ॐ पुष्पाणि पान्तु सौश्रियमस्तु ।
ॐ ताम्बूलानि पान्तु ऐश्वर्यमस्तु० । ॐदक्षिणाः पान्तु बहुधनमस्तु । पुनरत्राः पान्तु स्वार्चितमस्त्विति विप्रा ब्रूयुः यजमानःआचा
र्यादीन्प्रणम्य श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चास्त्विति भवन्तो ब्रुवन्तु इति वदेत् । ते च श्रीर्यशो विद्या विनयो वित्तं
बहुपुत्रं चायुष्यं चास्तु इत्युक्त्वा दीर्घमायुः शान्तिः पुष्टिस्तुष्टिश्चास्त्विति यजमानं मूर्ध्न्यभिषिञ्चेयुः॥यं कृत्वा सर्ववेदयज्ञक्रियाक
रणकर्मारम्भाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातःपुण्यं पुण्याहं
वाचयिष्ये । ॐ वाच्यतां ब्राह्मणानां हस्तेष्वक्षतान्दद्यात्ते चाशिषो दद्युः । ॐ भद्रङ्कर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः॥
स्थिरैरङ्गैस्तुष्टुवाᳫंसस्तनूभिर्व्यशेमहि देवहितंयदायुः ॥ १ देवानांभद्रासुमतिर्ऋजूयतान्देवानाᳫंरातिरभिनोनिवर्तताम् ॥ देवानां
ᳫंसख्यमुपसेदिमाव्वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥ नतद्रक्षाᳫंसिनपिशाचास्तरन्तिदेवानामोजःप्रथमजᳫंह्येतत् ॥ योबि
भर्तिदाक्षायणᳫंहिरण्यᳫंसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ ३ ॥ दीर्घायुस्तऽओषधेखनितायस्मैचत्वाखनाम्यहम् ॥
अथोत्वन्दीर्घायुर्भूत्वाशतवल्शाविरोहतात् ॥ ४ ॥ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत् ॥ द्रविणोदावीरवतीमि
शन्नोद्रविणोदारासतेदीर्घमायुः ॥ ५ ॥ सवितापश्चात्तात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सविता नः सुवतुसर्वतातिं
सवितानोरासतान्दीर्घमायुः ॥ ६ ॥ नवोनवोभवतिजायमानोह्नाङ्केतुरुषसामेत्यग्रम् ॥ भागन्देवेभ्योविदधात्यायन्प्रचन्द्रमास्तिर

तेदीर्घमायुं६ ॥ ७ ॥ उच्चादिविदक्षिणावन्तोऽअस्थुर्येऽअंश्वदाः सहतेसूर्येण ॥ हिरण्यदाऽअंमृतत्वंभजन्तेवासोदाःसोमप्रतिरन्तआयुः ॥ ८ ॥ इत्याशीर्वादः ॥ व्रतजपनियमतपःस्वाध्यायक्रतुदयादमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम्। इति यजमानः। समाहितमनसः स्मः इति द्विजाः। प्रसीदन्तु भवन्तः इति यजमानो ब्रूयात। प्रसन्नाः स्मः इति द्विजा ब्रूयुः। ततो यजमानो ब्रूयात्। ॐ शान्तिरस्तु अस्त्विवति द्विजाः प्रतिवचनं सर्वत्र दद्युः। ॐ पुष्टिरस्तु ॐ तुष्टिरस्तु ॐ वृद्धिरस्तु ॐ अविघ्नमस्तु ॐ आयुष्यमस्तु ॐ आरोग्यमस्तु ॐ शिवं कर्मास्तु ॐ कर्मसमृद्धिरस्तु ॐ वेदसमृद्धिरस्तु ॐ शास्त्रसमृद्धिरस्तु ॐ धनधान्यसमृद्धिरस्तु ॐ पुत्रपौत्रसमृद्धिरस्तु ॐ इष्टसंपदस्तु ॐ अरिष्टनिरसनमस्तु ॐ यत्पापं यद्रोगं नः अशुभम् अकल्याणं तद्दूरे प्रतिहतमस्तु ॐ यच्छ्रेयस्तदस्तु ॐ उत्तरे कर्मणि निर्विघ्नमस्तु ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यन्ताम्। ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसंपदस्तु ॥ ६ ॥ ( उदकसेकः ) ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम्। ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे साधिदेवते प्रीयेताम्। ॐ दुर्गापाञ्चाल्यौ प्रीयेताम्। ॐ अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम्। ॐ इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम्। ॐ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम्। ॐ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम्। ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम्। ॐ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम्। ॐब्रह्म च ब्राह्मणाश्च प्रीयन्ताम्। ॐ श्रीसरस्वत्यौ प्रीयेताम्। ॐ श्रद्धामेधे प्रीयेताम्। ॐ भगवती कात्यायनी प्रीयताम्। ॐ भगवती माहेश्वरी प्रीयताम्। ॐ भगवती ऋद्धिकरी प्रीयताम्। ॐ भगवती सिद्धिकरी प्रीयताम्। ॐ भगवती पुष्टिकरी प्रीयताम्। ॐ भगवती तुष्टिकरी प्रीयताम्। ॐ भगवन्तौ विघ्नविनायकौ प्रीयेताम्। ॐ सर्वा कुलदेवताः प्रीयन्ताम्। ॐ सर्वा ग्रामदेवताः प्रीयन्ताम्। ॐ हताश्च ब्रह्मद्विषः ॐ हताश्च परिपन्थिनः। ॐ हताश्च विघ्नकर्तारः शत्रवः पराभवं यान्तु। ॐ शाम्यन्तु घोराणि। ॐ शाम्यन्तु पापानि। ॐ शाम्यंत्वीतयः। ॐ शुभानि वर्द्धन्ताम्। ॐ शिवा आपः सन्तु। ॐ शिवा ऋतवः सन्तु। ॐ शिवा ओषधयः सन्तु। ॐ शिवा नद्यः सन्तु। ॐ शिवा गिरयः सन्तु। ॐ शिवा अतिथयः सन्तु। ॐ शिवा अग्नयः सन्तु। ॐ शिवा आहुतयः सन्तु। ॐ अहोरात्रे शिवे स्याताम् ॥ ॐ निकामेनिकामेनः पर्जन्यो व्वर्षतुफलवत्योनऽओषधयः पच्च्यन्तां योगक्षेमो नः कल्पताम् ॥ १ ॥ ॐ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम्। ॐ भगवान्नारायणः प्रीयताम्। ॐ भगवान्पर्जन्यः प्रीयताम्। ॐ भगवान्स्वामी महासेनः प्रीयताम्। ॐ पुण्याहकालान्वाचयिष्ये। इति यजमानः। ॐ वाच्यताम् इति प्रतिवचनम्। ब्राह्म्यं पुण्यं महद्यच्च सृष्ट्युत्पादनकारकम्। वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ १ ॥ भो ब्राह्मणाः मया क्रियमाणस्यामुकमंत्रपुरश्चरणाख्यस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु ॐ पुण्याहम् ॥ २ ॥ एवं प्रति

वचनं च त्रिः पठित्वा । ॐ पुनन्तुमादेवजनाः पुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ १ ॥ पृथिव्यामुद्धृतायां तु यत्कल्याणं पुराकृतम् ॥ ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ॥ १ ॥ भो ब्राह्मणाः मया० कर्मणः कल्याणं भवन्तो ब्रुवन्तु । ॐ कल्याणम् ३ ॥ ॐ यथेमांवाचंकल्याणीमावदानिजनेभ्यः । ब्रह्मराजन्याभ्यांशूद्राय चार्यायचस्वायचारणायच ॥ प्रियोदेवानांदक्षिणायैदातुरिहभूयासमयम्मेकामःसमृध्यतामुपमादोनमतु ॥ १ ॥ सागरस्य यथा वृद्धिर्महालक्ष्म्यादिभिः कृता ॥ संपूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः मया क्रिय० कर्मणः ऋद्धिं भवन्तो ब्रुवन्तु। ॐ ऋध्यताम् ॥३॥ ॐसत्रस्यऽऋद्धिरस्यगन्मज्योतिरमृताऽअभूम ॥ दिवम्पृथिव्याऽअध्यारुहामाविदामदेवान्त्स्वर्ज्योतिः ॥ १ ॥ स्वस्तिस्तु या विनाशाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥१॥ भो ब्राह्मणाः मया० कर्मणः स्वस्तिं भ० । ॐ स्वस्ति ॥३॥ ॐ स्वस्तिनऽइंद्रोवृद्धश्रवाः स्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनो बृहस्पतिर्दधातु ॥१॥ समुद्रमथनाज्जाता जगदानन्दकारिका ॥ हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः॥१॥ भो ब्राह्मणाः मया० कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु । अस्तु श्रीः ३ ॥ ॐ श्रीश्च ते लक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥१॥ अस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् श्रीमहागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु । ॐ अस्तु परिपूर्ण इति विप्राः । [ अथाभिषेकः ] अभिषेके पत्नी वामतः एकस्मिन्कलशे वरुणोदकं गृहीत्वाऽविधुराश्चत्वारो ब्राह्मणा दूर्वाग्रपल्लवैर्यजमानमभिषिञ्चेयुः ॥ तत्र मन्त्राः॥ॐ पयः पृथिव्यां० १ पंचनद्यः २ वरुणस्योत्तम्० ३ पुनंतु मा० ४ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ ॥६॥ देवस्यत्वा० सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेःसाम्राज्येनाभिषिञ्चामि ॥७॥ देवस्यत्वा० अश्विनोर्भैषज्येनतेजसाब्रह्मवर्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येनवीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियै यशसेभिषिञ्चामि॥७ विश्वानिदेवसवितर्दुरितानिपरासुवयद्भद्रन्तन्नऽआसुव ॥ ९ ॥ धामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः सचेतसोविश्वेदेवायज्ञम्प्रावन्तुनः शुभे १० त्वंयविष्ठदाशुषोनॄःपाहिशृणुधीगिरः रक्षतोकमुतत्मना ११ अन्नपतेन्नस्यनोधेह्यनमीवस्यशुष्मिणः प्रप्रदातारन्तारिषऽऊर्जन्नोधेहिद्विपदेशंचतुष्पदे १२ ॐद्यौःशांतिरन्त० १३ यतोयतःसमीहसे १४ अमृताभिषेकोऽस्तु शांतिः शांतिः शांतिःसुशांतिर्भवतु ततः पुत्रवतीभिर्वृद्धसुवासिनीभिर्नीराजनं कार्यम् ॥ ॐअनाधृष्टापुरस्तादग्नेराधिपत्यऽआयुर्मेदाःपुत्रवतीदक्षिणतइन्द्रस्याधिपत्येप्रजा

म्मेदाꣳविधृतिरुपरिष्टाद्बृहस्पतेराधिपत्येऽओजोमेदाꣳविश्वेभ्योमानाष्ट्राभ्यःस्पाहिमनारश्वोसि ॥ १ ॥ अनेन पुण्याहवाचनेन अमुकमं त्रजपदेवता प्रीयताम् इति पुण्याहवाचनम् ॥ ॥ अथ मातृकापूजनम् ॥ तत्र तावत् षड्विनायकपूजनम् । गोधूमादिधान्यपुञ्जेषु हरिद्रारञ्जितेषु षड्विनायकाः स्थाप्याः ॥ तद्यथा ॥ मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा ॥ अविघ्नो विघ्नकर्ता च षडेते विघ्ननायकाः ॥१॥ ॐ मोदाय नमः मोदमावाहयामि ॥१॥ ॐ प्रमोदाय० प्रमोदमा० ॥२॥ ॐ सुमुखाय० सुमुखमा० ॥३॥ ॐ दुर्मुखाय०दुर्मुखमा० ॥ ४ ॥ ॐ अविघ्नाय० अविघ्नमा०० ॥ ५ ॥ ॐ विघ्नकर्त्रे नमः विघ्नकर्तारमावाहयामि ॥ ६ ॥ इत्यावाह्य ॐ मनोजूतिरिति प्रतिष्ठाप्य ॐ मोदादिषड्विनायकेभ्यो नमः इति नाममन्त्रेण षोडशोपचारैः संपूजयेत् ॥ अनया पूजया मोदादिषड्विनायकाः प्रीयन्ताम् । ततो गौर्यादिमातृका अक्षतपुञ्जेषु पूगीफलेषु वा निवेश्याः । तत्रायं क्रमः । गौरी पद्मा शची मेधा सावित्री विजया जया ॥ देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ १ ॥ हृष्टिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवताः ॥ गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश ॥ २ ॥ ॐ गणेशाय नमः गणेशमावाहयामि ॥ १ ॥ ॐ गौर्यै नमः गौरीमावाहयामि ॥ २ ॥ ॐपद्मायै नमः पद्मामावाहयामि ॥ ३ । ॐ शच्यै नमः शचीमावाहयामि ॥४॥ ॐ मेधायै नमः मेधाम्० ॥५॥ ॐ सावित्र्यै० सावित्रीम्० ॥६॥ ॐ विजयायै० विजयाम्० ॥ ७ ॥ ॐ जयायै० जयाम्० ॥ ८ ॥ देवसेनायै० देवसेनाम्० ॥ ९ ॥ ॐ स्वधायै० स्वधाम्० ॥१०॥ ॐ स्वाहायै स्वाहाम्० ॥११॥ ॐ मातृभ्यो नमः मातृरावा० ॥ १२ ॥ ॐ लोकमातृभ्यो०लोकमातृरावा० ॥ १२ ॥ ॐ हृष्टयै० हृष्टिम्० ॥ १४ ॥ ॐ पुष्टयै० पुष्टिम् ॥ १५ ॥ ॐ तुष्टयै० तुष्टिमा० ॥ १६ ॥ ॐकुलदेवतायै नमः कुलदेवतामावाहयामि ॥ १७ ॥ इत्यावाह्य ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामो ३ म्प्रतिष्ठ ॥ इति प्रतिष्ठाप्य ॐ गौर्यादिषोडशमातृकाभ्यो नमः नाममन्त्रेण षोडशोपचारैः संपूजयेत् । ततः कुड्ये आवाहितमातृणामुपरिघृतेन कुङ्कुमाक्तेन दक्षिणोत्तराः सप्त पञ्च तिस्रो वा धारा दद्यात् ॐवसोः पवित्रमसिशतधारंवसोः पवित्रमसिसहस्रधारंदेवस्त्वासवितापुनातु ॥ वसोः पवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ १ ॥ अथ घृतमातृकानामानि । ॐ श्रीश्च लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा सरस्वती ॥ माङ्गल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः ॥२॥ श्रियै नमः श्रियमावाहयामि ॥ १ ॥ ॐ लक्ष्म्यै नमः लक्ष्मीमा० ॥२॥ ॐ धृत्यै० धृतिमा० ॥३॥ ॐ मेधायै० मेधामा० ॥४॥ ॐ पुष्टयै० पुष्टिमा० ॥५॥ ॐश्रद्धायै० श्रद्धामा० ॥ ६ ॥ ॐ सरस्वत्यै नमः सरस्वतीमावाहयामि ॥७॥ इत्यावाह्य ॐ घृतमातृकाभ्यो नम इति षोडशोपचारैः पूजयेत् । अथ स्थलमातरः॥तत्रैव तण्डुलपुञ्जेषु॥"ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा॥वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः॥" ॐ ब्राह्म्यै नमःब्राह्मीमावाहयामि॥१॥ॐमाहेश्वर्यै०माहेश्वरीमा०॥२॥ॐ कौमार्यै०कौमारीमा०॥३॥ॐ वैष्णव्यै० वैष्णवीमा०॥४॥

ॐ वाराह्यै० वाराहीमा० ॥५॥ ॐ इन्द्राण्यै० इन्द्राणीमा० ॥६॥ ॐ चामुण्डायै नमः चामुण्डामावाहयामि इत्यावाह्य ॥ ॐ ब्राह्म्यादि सप्तमातृकाभ्यो नमः इति नाममन्त्रेण षोडशोपचारैः पूजयेत् ॥ अथायुष्यमन्त्रजपः ॥ ॐ आयुष्यंवर्चस्यर्ठ्ँरायस्पोषमौद्भिदम् ॥ इदर्ठ्ँहिरंण्यम्वर्चस्वज्जैत्रायाविंशतादुमाम् ॥ १ ॥ नतद्रक्षांऽसिनपिंशाचास्तंरन्तिदेवानामोजं÷प्रथमजर्ठ्ँह्येतत् ॥ योबिभर्तिदाक्षायणर्ठ्ँहिरंण्यर्ठ्ँसदेवेषुंकृणुतेदीर्घमायुर्ठ्ँसमंनुष्येषुकृणुतेदीर्घमायुं÷ ॥ २ ॥ यदाबध्नंदाक्षायणाहिरंण्यर्ठ्ँशतानीकायसुमनस्यमांनाः ॥ तन्मऽआबंध्नामिशतशांरदायायुंष्माञ्जरदंष्टिर्यथासंम् ॥ ३ ॥ इति मातृकापूजनम् ॥ अथ सांकल्पिकनान्दीश्राद्धप्रयोगः । तत्रादौ आचम्य प्राणानायम्य देशकालौ संकीर्त्य अद्यामुकमन्त्रपुरश्चरणकर्माङ्गत्वेन सांकल्पिकविधिना ब्राह्मणयुग्मभोजनपर्याप्तान्ननिष्क्रयीभूतयथाशक्तिहिरण्येन नान्दीश्राद्धं करिष्ये । इति संकल्पः । ततः पाद्यादिदानम् । सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः ॥ १ ॥ अमुकगोत्रा मातृपितामहीप्रपितामह्यः नांदीमुख्यः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः ॥ २ ॥ अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखा ॐ भूर्भुवः स्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः ॥ ३ ॥ ( द्वितीयगोत्राः ) मातामहप्रमातामहवृद्धप्रमातामहाःसपत्नीकाः नांदीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादप्रक्षालनं स्वाहा संपद्यतां वृद्धिः ॥ ४ ॥ अथासनदानम् ॥ सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानाम् ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः संपद्यतां वृद्धिः नांदीश्राद्धे क्षणौ क्रियेताम् । ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवावः ॥ १ ॥ अमुकगोत्राणां मातृपितामहीप्रपितामहीनां नान्दीमुखीनाम् ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः संपद्यतां वृद्धिः नान्दीश्राद्धे क्षणौ क्रियेताम् । ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवावः ॥ २ ॥ अमुकगोत्राणां पितृपितामहप्रपितामहानां नान्दीमुखानाम् ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः संपद्यतां वृद्धिः नान्दीश्राद्धे ॥ ३ ॥ द्वितीयगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानाम् ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा संपद्यतां वृद्धिः नान्दीश्राद्धे क्षणौ० ॥ ४ ॥ ततो गन्धादिदानम् । सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ॥ १ ॥ अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ॥ २ ॥ अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नांदीमुखेभ्यः इदं गंधा० ॥ ३ ॥ द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्य इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ॥ ४ ॥ ततो भोजननिष्क्रयद्रव्यदानम् ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः ॥ १ ॥ अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यो ब्राह्मणयुग्म० ॥२॥ अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयी० ॥ ३ ॥ द्वितीयगोत्रेभ्यो मातामहप्रमाता

महवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्यो ब्राह्मणयुग्म०॥ततः सक्षीरमुदकदानम्। सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखा० प्रीयन्ताम् । अमुकगोत्राः मातृपितामहीप्रपितामह्यः प्रीयन्ताम् । पितृपितामहप्रपितामहाः प्रीयन्ताम् । द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः प्रीयन्ताम् । अथाशिषो ग्रहणम् । गोत्रं नो वर्द्धताम् [ वर्द्धतां वो गोत्रम् ] दातारो नोऽभिवर्धन्ताम् [ अभिवर्धन्तां वो दातारः ] वेदाश्च नोऽभिवर्धन्ताम् वर्धन्तां वो वेदाः ] संततिर्नो वर्द्धताम्[वर्द्धतां वः संततिः ] श्रद्धा च नो माव्यगमत् [माव्यगमद्वः श्रद्धा ] बहु देयं च नोऽस्तु [अस्तु वो बहु देयम् ] अन्नं च नो बहु भवेत् [ भवतु वो बह्वन्नम् ] अतिथींश्च लभामहे [ लभन्तां वोऽतिथयः ] याचितारश्च नः सन्तु[सन्तु वो याचितारः]एता आशिषः सत्याः सन्तु[सन्त्वेताः सत्याशिषः ] ततो दक्षिणादानम् । सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे संपद्यतां वृद्धिः ॥ १ ॥ [ यवमूलमार्द्रकम् ] अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः कृतस्य० ॥ २ ॥ अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः कृतस्य० ॥ ॥३॥ द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्यः कृतस्य० ॥ ४ ॥ ततो नान्दीश्राद्धं संपन्नं सुसंपन्नमिति पठित्वा । ॐ वाजेवाजे० ॥ १ ॥ आमावाजस्य २ इति मन्त्रद्वयेन विसर्जयेत ॥ अस्मिन्नान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् नान्दीमुखप्रसादात्सर्वः परिपूर्णोऽस्तु ॥ [ अस्तुपरिपूर्णः ] ॥ इति नान्दीश्राद्धम् ॥

अथाचार्यजापकवरणम् ॥ तत्र तावत् शुद्धकुलोत्पन्नान्सदाचारपरायणान् संध्यादिषट्कर्मयुक्तान् वेदशास्त्रज्ञान् सुशीलान्नीरोगान् नातिवयस्कान् अव्यङ्गान् आस्तिकान्स्नातांश्च ब्राह्मणानाहूय तेषां पादप्रक्षालनं कृत्वा । आसनेषु प्राङ्मुखानुपवेश्य स्वयं यजमान उदङ्मुख उपविश्य, आचम्य, वरणद्रव्याणि गृहीत्वा, आचार्यस्य जान्वालभ्य देशकालौ स्मृत्वा अमुकगोत्रोऽमुकशर्मा अमुककामनासिद्ध्यर्थम् अमुकदेवताप्रीतये करिष्यमाणामुकमन्त्रजपपुरश्चरणकर्मणि अमुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्गन्धाक्षतताम्बूलमुद्रिकासनमालाकमण्डलुवासोभिराचार्यत्वेन त्वामहं वृणे।इति वृत्वा।ॐवृतोऽस्मीति प्रतिवचनानन्तरं गन्धाक्षतपुष्पमालादिभिराचार्यं संपूज्य। यज्ञकङ्कणं बद्ध्वा । ॐ यथा शक्रस्य वागीश आचार्यः सर्वकर्मसु ॥ तथा मया त्वमाचार्यो वृतोऽस्मिन् यज्ञकर्मणि ॥ १॥ इति प्रार्थयेत् । इत्याचार्यं वृत्वा । दशाऽष्टौ पञ्च चतुरो वा जापकानेकतन्त्रेण पृथग्वा वृणुयात् । तद्यथा अद्यामुकगोत्रोऽमुकशर्मा अमुककामनार्थम् अमुकदेवताप्रीतये करिष्यमाणामुकमन्त्रपुरश्चरणकर्मणि अमुकसंख्यापरिमितामुकमन्त्रजपकरणार्थम् अमुकामुकगोत्रोत्पन्नानमुकामुकशर्मणो विप्रानेभिर्गन्धाक्षतपुष्पतांबूलमुद्रिकासनमालाकमण्डलुवासोभिर्जापकत्वेन युष्मानहं वृणे । इति वृत्वा।ॐवृताः स्मः।इति तैरुक्ते प्रत्येकं गन्धाक्षतपुष्पमालावरणद्रव्यैःसंपूज्य सर्वेषां पृथक्पृथक् यज्ञसूत्रं बद्ध्वा प्रार्थयेत् । ॐ जापकाश्च यथा पूर्वं शक्रादीनां मखेऽभवन् ! यूयं तथा मे भवितु जापकाऽहथ सत्तमाः ॥ १ ॥ इति प्रार्थ्य यजमानाचार्यजापकाः परस्परं यज्ञकङ्कणं बध्नीयुः । गन्धाद्यर्चनं च कुर्युः । अथ प्रार्थना । ॐ अस्य यागस्य निष्पत्तौ भवन्तोऽभ्य

र्थिता मया ॥ सुप्रसन्नैः प्रकर्त्तव्यं शान्तिकं विधिपूर्वकम् ॥ १ ॥ अङ्गीकुर्वन्तु कर्मैतत्कल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्युक्ता जपार्थे स्थिरबुद्धयः ॥२॥ अस्मिन् यज्ञे मया पूज्याः सन्तु मे नियमान्विताः ॥ अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ॥ ३ ॥ देवध्यानरता नित्यं प्रसन्नमनसः सदा ॥ अदुष्टभाषणाः सन्तु मा सन्तु परनिन्दकाः ॥ ममापि नियमा ह्येते भवंतु भवतामपि ॥४॥ इति प्रार्थ्य प्रत्येकं वस्त्रद्वयम् २, आसनं १, यज्ञोपवीतम् १, अर्घ्यपात्रम् १, आचमनपात्रं १, जलकमण्डलुः १, सुवर्णाङ्गुलीयकद्वयं २, रुद्राक्षमालां १, च दद्यात् । आचार्याय द्विगुणं देयम् ॥ इत्याचार्यजापकवरणप्रयोगः ॥ ततः सर्वे जापका वक्ष्यमाणजपक्रमेण न्यासध्यानपूर्वकं जपं कुर्युः ॥ ॥ इति श्रीबीकानेरविषयान्तर्गतश्रीरत्नगढनगरनिवासिना गौडवंशावतंसेन श्रीवसिष्ठगोत्रोद्भवेन श्रीरामकृष्णामरचन्द्रपौत्रेण श्रीकस्तूरीचन्द्रचतुर्भुजसूनुना श्रीमहादेवभक्तवाजसनेयिना पण्डितश्रीचतुर्थीलालशर्मणा विरचिते अनुष्ठानप्रकाशे पद्धतिकाण्डे सर्वमन्त्रजपोपयोगिप्रारम्भदिनकृत्यप्रयोगप्रकरणं प्रथमम् ॥ १ ॥ ॥

॥ अथ सर्वमन्त्रानुष्ठानोपयोगिजपक्रमः ॥ कृतस्नानादिनित्यक्रियः पूर्वोक्तजपस्थानसमीपमागत्य पादप्रक्षालनमाचमनं च कृत्वा द्वारपूजां कुर्यात् । तद्यथा । ताम्रार्घ्यपात्रं गृहीत्वा ॐ ह्रः द्वारार्घ्यं साधयामीत्युक्त्वा ॐ फट् इति पात्रं प्रक्षाल्य । ॐ नमः इति जलेनापूर्य्य ॥ ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ १ ॥ इति तीर्थानावाह्य । ॐ इति प्रणवेन गन्धपुष्पे निक्षिप्य धेनुमुद्रां प्रदर्श्य । मूलमन्त्रेणाभिमन्त्रयेत् । एवं सामान्यार्घ्यं संपाद्य । ॐअस्त्राय फडित्यभिमन्त्रितजलेन द्वारं संप्रोक्ष्य । ऊर्ध्वशाखायाम्–ॐ गं गणपतये नमः ॥ १ ॥ तद्दक्षिणे भागे–ॐ महालक्ष्म्यै नमः ॥ २ ॥ वामभागे–ॐ सरस्वत्यै नमः ॥ २ ॥ दक्षिणशाखायाम्–ॐ विघ्नेशाय नमः ॥१॥ ॐ गङ्गायै नमः ॥ २ ॥ ॐ यमुनायै नमः ॥ ३ ॥ वामशाखायाम्–ॐ क्षेत्रपालाय नमः ॥१॥ ॐ स्वःसिन्धवे नमः ॥२॥ ॐ यमुनायै नमः ॥ ३ ॥ पुनर्दक्षिणशाखायाम्–ॐ धात्रे नमः ॥ १ ॥ वामशाखायाम्–ॐ विधात्रे नमः ॥२॥ पुनर्दक्षिणशाखायाम्–ॐ शङ्खनिधये नमः ॥ १ ॥ वामशाखायाम्–ॐ पद्मनिधये नमः ॥२॥ देहल्याम्–ॐ अस्त्राय नमः॥१॥ इति गन्धादिभिरभ्यर्च्य तत्तद्देवताद्वारपालान् पूजयेत् । तद्यथा । विष्णोर्द्वारे–ॐनन्दाय नमः ॥१॥ ॐ सुनन्दाय नमः ॥२॥ ॐ चण्डाय नमः ॥३॥ प्रचण्डाय नमः ॥ ४ ॥ ॐ बलाय नमः ॥ ५ ॥ ॐ प्रबलाय नमः ॥६॥ ॐ भद्राय नमः॥७॥ ॐ सुभद्रायनमः॥८॥ इति विष्णुद्वारपालान् पूजयेत् ॥ (शिवानुष्ठाने)ॐनन्दिने नमः॥१॥ ॐमहाकालाय नमः ॥२॥ ॐ गणेशाय नमः॥३॥ॐवृषभाय नमः॥४॥ ॐ भृङ्गिणे नमः॥५॥ॐ रिटये नमः ॥६॥ ॐ स्कन्दाय नमः॥७॥ ॐ चण्डेश्वराय नमः ॥८॥ इति शिवद्वारपालाः ॥ ( गणेशानुष्ठाने ) ॐ वक्रतुण्डाय नमः ॥१॥ ॐ एकदंष्ट्राय नमः ॥ २ ॥ ॐ महोदराय नमः ॥ ३ ॥ ॐ गजाननाय नमः ॥ ४ ॥ ॐ लम्बोदराय नमः ॥ ५ ॥ ॐ विकटाय नमः ॥ ६ ॥ ॐ विघ्नराजाय नमः ॥ ॥ ७ ॥ ॐ धूम्रवर्णाय नमः ॥ ८ ॥ इति गणेशद्वारपालाः ॥ ( शक्त्यनुष्ठाने ) ॐ ब्राह्म्यै नमः ॥ १ ॥ ॐ माहेश्वर्य्यै नमः ॥ ॐ कौमार्य्यै नमः ॥ ३ ॥ ॐ वैष्णव्यै नमः ॥ ४ ॥ ॐ वाराह्यै नमः ॥ ५ ॥ ॐ इन्द्राण्यै नमः ॥ ६ ॥ ॐ चामुण्डायै नमः

॥ ७ ॥ ॐ महालक्ष्म्यै नमः ॥ ८ ॥ इति देवीद्वारपालांश्च पूजयेत् ॥ ततः पूर्वादिदिक्षु क्रमेण–ॐ इन्द्राय नमः ॥ १ ॥ आग्नेय्याम्–ॐअग्नये नमः ॥ २ ॥ याम्याम्–ॐयमाय नमः ॥ ३ ॥ नैर्ऋत्याम्–ॐ निर्ऋतये नमः ॥ ४ ॥ पश्चिमायाम्–ॐ वरुणाय नमः ॥ ५ ॥ वायव्याम्–ॐ वायवे नमः ॥ ६ ॥ उत्तरस्याम्–ॐ कुबेराय नमः ॥ ७ ॥ ईशान्याम्–ॐ ईशानाय नमः ॥ ८ ॥ इति दिक्पालान् पूजयेत् ॥ एवं द्वारपूजां विधाय। आत्मानं शंकरं ध्यात्वा "ॐ शिवाज्ञया इतोऽन्यत्र व्रजन्तु सर्वं एव हि।"इति मन्त्रं मूलमन्त्रं च पठन् दिव्यदृष्ट्यवलोकनेन दिव्यान्विघ्नान्निवार्य।ॐफडिति मन्त्रेणाऽर्घ्यपानीयैःप्रोक्षणेनान्तरिक्षस्थानुत्पार्य। तेनैव मन्त्रेण भूमौ वामपादपार्ष्णिघातेन धरागतान्विघ्नानुत्सारयेत्। ततः–ॐ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ १ ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामविरोधेन ब्रह्मकर्म्म समारभे ॥ २ ॥ इति मन्त्रद्वयेन सर्वान विघ्नान निवार्य्य अवकाशप्रदानाय शनैः स्वाङ्गं संकोचयन् वामशाखां स्पृशन् दक्षिणपादेन प्रविशेत्। एवं यागमण्डपं प्रविश्य स्वेष्टदेवं संस्मृत्य घण्टास्वनं कृत्वा वाससा द्वारमाच्छाद्य पञ्चगव्यार्घतोयाभ्याम्। ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥ १ ॥ इति मन्त्रेण मण्डपान्तरं प्रोक्ष्य। ईशान्याम्–ॐ ब्रह्मणे नमः ॥ ॐ वास्तुपुरुषाय नमः ॥ ॐ क्षेत्रपालाय नमः ॥ इति ब्रह्मवास्तुपुरुषक्षेत्रपालान् संपूज्य॥ ॐ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां देहि मे प्रभो ॥ १ ॥ इति प्रार्थयेत् ॥ अथासनादिविधानम् ॥ तत्र तावत् आसनभूमौ कूर्मशोधनं कार्यम्। तद्यथा–जपस्थानभूमिं नवधा कृत्वा पूर्वादिसप्तकोष्ठेषु क्रमेण कवर्ग १ चवर्ग२ टवर्ग ३ तवर्ग ४ पवर्ग ५ यवर्ग ६ शवर्गान् ७ लिखित्वा ईशान्यामष्टमे कोष्ठे 'लं०''क्षं०'इति द्वौ वर्णौविलिख्य मध्यकोष्ठमपि नवधा विभज्य तत्र पूर्वादिषु अष्टदिक्षु अकारादिस्वरद्वयं क्रमेण लिखेत ॥ यत्र कोष्ठे क्षेत्रस्य वा ग्रामस्य साधकस्य वा नामादिवर्णो भवेद् तदेव कूर्ममुखं जपसिद्धिदं भवति। तत्रैव दीपस्थापनं कुर्य्यात् ॥ यत्र जपकर्ता एक एव तदा कूर्म्ममुखे उपविश्य जपं तत्रैव दीपस्थापनं च कुर्यात्। यत्र बहवो जापकास्तत्र कूर्ममुखोपरि दीपमेव स्थापयेत् स्थानाभावात् ॥ एव कूर्म्मशोधनं दीपस्थानशोधनं च विधाय आसनाधो जलादिना त्रिकोणं कृत्वा तत्र ॐ कूर्म्माय नमः। ॐ ह्रीं आधारशक्तिकमलासनाय नमः। ॐ पृथिव्यै नमः। इति गन्धाक्षतपुष्पैः संपूज्य तदुपर्यनुद्विग्नकरं कुशासनम् १ तदुपरि मृगाजिनम् २ तदुपरि कम्बलाद्यासनम् ३ आस्तीर्य्य स्थापितानां त्रयाणामासनानामुपरि क्रमेण ॐ अनन्तासनाय नमः ॥ १ ॥ ॐ विमलासनाय नमः ॥ २ ॥ ॐ पद्मासनाय नमः ॥३॥ इति मन्त्रत्रयेण त्रीन् दर्भान् प्रत्येकं निदध्यात् ( काष्ठादिनिषिद्धासनानि वर्जयेत ) एवमासनं संस्थाप्य तत्र प्राङ्मुख उदङ्मुखो वा उपविश्य स्वस्तिकासनपद्मासनवीरासनेष्वन्यतममासनं कुर्यात ॥ तत्रासनमन्त्रः ॥ पृथ्वीति मन्त्रस्य मेरुपृष्ठऋषिः। कूर्मो देवता। सुतलं छन्दः। आसने विनियोगः ॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥१॥ ततो मूलमन्त्रेण शिखां बद्ध्वा आचम्य॥

ततः पाद्यार्घ्याचमनीयमधुपर्कस्नानार्थं पञ्चपात्राणि पुष्पादींश्च दक्षिणपार्श्वे संस्थाप्य जलपात्रं व्यजनं छत्रादर्शचामराणि च वामे स्थापयेत् । ततः करद्वये अनामिकामूलयोः कुशपवित्रद्वयं स्वर्णपवित्रद्वयं वा परिधाय स्मार्त्तविधिना द्विराचम्य । प्राणानायम्य । देशकालौ संकीर्त्य ममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थममुककामनासिद्ध्यर्थम् अमुकदेवताप्रीतयेऽमुकमन्त्रपुरश्चरणान्तर्गतामुकसंख्यापरिमितविहितामुकमन्त्रजपं करिष्ये इति । तदङ्गत्वेन भूतशुद्धिप्राणप्रतिष्ठाऽन्तर्मातृकाबहिर्मातृकान्यासांश्च करिष्ये इति संकल्प्य । ऋत्विग्भिस्तु देशकालसंकीर्तनान्ते यजमानेन वृतोऽहं करिष्यामि इति प्रत्येकं संकल्पः । ततः कृताञ्जलिपुटः भूतशुद्ध्यादिकर्म्म कुर्यात् । तद्यथा–ॐ सूर्यः सोमो यमः कालः संध्या भूतानि पञ्च च ॥ एते शुभाऽशुभस्येह कर्मणो मम साक्षिणः ॥ १ ॥ भो देव प्राकृतं चित्तं पापाक्रान्तमभून्मम ॥ तन्निस्सारय चित्तान्मे पापं तेऽस्तु नमोनमः ॥ २ ॥ इति प्राथ्य वामभागे ॐ गुरुभ्यो नमः ॥ दक्षिणे ॐ गणेशाय नमः ॥ इति नत्वा, करयोः ॐ अस्त्राय फडित्यस्त्रं न्यस्य तदुपरि तालत्रयं कृत्वा अङ्गुष्ठतर्जनीभ्यां शब्दं कुर्वन् ॐ नमः सुदर्शनाय अस्त्रायफडिति मन्त्रेणदिग्बन्धनं कृत्वा वह्निप्रकारत्रयं विभाव्य मूलेनाचम्य प्राणानायम्य भूतशुद्धिं कुर्यात् । अथ भूतशुद्धिप्रकारः॥कुम्भकप्राणायामेन मूलाधारात् कुण्डलिनीं परदेवतां बिसतन्तुनिभां समुत्थाप्य ब्रह्मरंध्रगतां स्मृत्वा हृदयस्थं जीवं प्रदीपकलिकाकारं गृहीत्वा । सुषुम्नामार्गेण ब्रह्मरंध्रं गत्वा । ॐ हंसः सोहमिति मंत्रेण जीवं ब्रह्मणि संयोजयेत् । ततः पादादिजानुपर्यन्तं चतुष्कोणं वज्रलाञ्छितं स्वर्णवर्णं पृथ्वीमण्डलम् (लँ) इति भूबीजाढ्यं स्मरेत् ॥१॥ जान्वादिनाभिपर्य्यंतम् अर्द्धचन्द्राकारं पद्मद्वयाङ्कितं श्वेतवर्णम् अपां स्थानं सोममण्डलम् (वं) इति वरुणबीजाढ्यं स्मरेत्॥१॥नाभ्यादिहृदयपर्यन्तं त्रिकोणं स्वस्तिकाङ्कितं रक्तवर्णम् अग्निमण्डलं (रं) इति वह्निबीजाढ्यं स्मरेत् ॥३॥ हृदयादिभ्रूमध्यपर्यन्तं वृत्तं षड्बिन्दुलाञ्छितं धूम्राभं वायुमण्डलम् (यं) वायुबीजाढ्यं स्मरेत्॥४॥भ्रूमध्यादारभ्य ब्रह्मरन्ध्रान्तं वृत्तं स्वच्छं मनोहरम् आकाशमण्डलं (हं) व्योमबीजाढ्यं स्मरेत्॥५॥ एवं भूतगणं स्मृत्वा ततः पूर्वोक्तभूमण्डले–पादेन्द्रिय १ गगन २ घ्राण ३ गन्ध ४ ब्रह्म ५ निवृत्ति ६ समान ७ गन्तव्यदेशा ८ श्च एवमष्टौ पदार्थाश्चिन्त्याः ॥१॥ जलमण्डले हस्तेन्द्रिय १ ग्रहण २ ग्राह्य ३ रसना ४ रस ५ विष्णु ६ प्रतिष्ठा ७ उदाना ८ ध्येयाः ॥ २ ॥ तेजोमण्डले–पायु १ विसर्ग २ विसर्जनीय ३ चक्षु ४ रूप ५ शिव ६ विद्या ७ व्याना ८ ध्येयाः ॥ ३ ॥ वायुमंडले–उपस्था १ऽऽ नंद २ स्त्री ३ स्पर्शन ४ स्पर्श ५ ईशान ६ शांति ७ अपाना ८ ध्येयाः ॥ ४ ॥ आकाशमण्डले–वाग् १ वक्तव्य २ वदन ३ श्रोत्र ४ शब्द ५ सदाशिव ६ शांत्यतीता ७ प्राणा ८ इत्यष्टौ चिन्त्याः ॥ ५ ॥ एवं भूतानि संचिन्त्य पूर्वपूर्वकार्यस्योत्तरोत्तरकारणे विलापनं ब्रह्मपर्य्यंतं कार्य्यम् । तद्यथा-'ॐ लंफट्' इत्यनेन पञ्चगुणां पृथ्वीमप्सु उपसंहरामीति जले भुवं विलापयेत् ॥ १ ॥ 'ॐ वंहुंफट्' इति चतुर्गुणा अपोऽग्नौ उपसंहरामीति वह्नौ जलं विलापयेत् ॥ २ ॥ 'ॐ रंहुंफट्' इति त्रिगुणं तेजो वायौ उपसंहरामीति वह्निं वायौ विलापयेत् ॥ ३ ॥ 'ॐयंहुंफट्' इति द्विगुणं वायुमाकाशे उपसंहरामीति वायुमाकाशे विलापयेत् ॥ ४ ॥ 'ॐ हंहुंफट्' इत्येकगुणमाकाशमहंकारे उपसंहरामीत्याकाशमहंकारे विलापयेत् ॥ ५ ॥ ॐ अहं

कारं महत्तत्वे उपसंहरामीत्यहंकारं महतत्त्वे विलापयेत् ॥ ६ ॥ ॐ महत्तत्त्वं प्रकृतावुपसंहरामीति महत्तत्त्वं प्रकृतौ विलापयेत् । ॐ प्रकृतिमात्मनि उपसंहरामीत्यनेन मायामात्मनि विलापयेत् । एवं शुद्धः सच्चिन्मयो भूत्वा वासनामयं पापपुरुषं चिन्तयेत् । तद्यथा–" वामकुक्षिस्थितं कृष्णमङ्गुष्ठपरिमाणकम् ॥ ब्रह्महत्याशिरोयुक्तं कनकस्तेयबाहुकम् ॥ १ ॥ मदिरापानहृदयं गुरुतल्पकटीयुतम् ॥ तत्संसर्गिपदद्वन्द्वमुपपातकमस्तकम् ॥२॥ खड्गचर्मधरं दुष्टमधोवक्त्रं सुदुःसहम् ॥" एवं पापपुरुषं चिन्तयित्वा पूरकप्राणायामे यँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँ इति वायुबीजेन द्वात्रिंशद्वारं ३२ षोडश १६ वारं वा आवर्तितेन पापपुरुषं शोषयेत् । ततः स्वशरीरयुतं पापं कुम्भके रँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँरँ इति वह्निबीजेन चतुःषष्टि ६४ वारमावर्तितेन तदुत्थाग्निना दहेत् । ततो रेचकप्राणायामे यँयँयँयँयँयँयँयँयँयँयँयँयँयँयँयँ इति वायुबीजं षोडश१६वारं द्वात्रिंशद्वारं ३२ वा जपित्वा दक्षिणनाड्या तद्भस्म स्वशरीराद्बहिः रेचयेत् । ततो देहोत्थं भस्मॐ(वं) इत्युच्चारेण सुधाबीजेन तदुत्थाऽमृतेन संप्लाव्य पश्चात् (ॐ लं) इति भूबीजेन तत् भस्म घनीभूतं पिण्डं कृत्वा कनकाण्डवद्भावयेत् । ततः (ॐ हं) इति आकाशबीजं जपन् तत्पिण्डं मुकुराकारं भावयित्वा तस्य मूर्द्धादिनखान्ता अवयवा मनसा रचनीयाः। ततः पुनरपि सृष्टिमार्गेण ब्रह्मणः सकाशादाकाशादीनि भूतानि उत्पादयेत् ॥ तद्यथा–ब्रह्मणः प्रकृतिः प्रकृतेर्महत् महतोऽहंकारः अहंकारादाकाशः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यःपृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नाद्रेतः रेतसः पुरुष इत्युत्पाद्य 'ॐ हंसः सोहम्' इति मन्त्रेण ब्रह्मण्येकभूतं जीवं स्वहृदयाम्बुजे संस्थाप्य कुण्डलीं मूलाधारगतां संस्मरेत्।इति भूतशुद्धिः॥एवं भूतशुद्धिं कृत्वा प्राणप्रतिष्ठां कुर्यात्॥अथ प्राणप्रतिष्ठाप्रयोगः॥अस्य प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः,ऋग्यजुःसामानि छन्दांसि, प्राणशक्तिर्देवता, आं बीजम्, ह्रीं शक्तिः, क्रौं कीलकम् स्वशरीरे प्राणप्रतिष्ठापने विनियोगः । ॐ ब्रह्मविष्णुमहेश्वरऋषिभ्यो नमःशिरसि। ऋग्यजुःसामच्छन्दोभ्यो नमो मुखे । प्राणशक्त्यै नमः हृदये । आं बीजायनमः गुह्ये । ह्रींशक्तये नमःपादयोः । क्रौंकीलकाय नमः सर्वाङ्गे । इति ऋष्यादिन्यासः । अथ षडङ्गन्यासः । ॐ ङँकँखँघँगँनमो वाय्वग्निवार्भूम्यात्मने हृदयाय नमः ञँचँछँझँजँशब्दस्पर्शरूपरसगन्धात्मने शिरसे स्वाहा । णँटँठँढँडँ श्रोत्रत्वङ्नयनजिह्वाघ्राणात्मने शिखायै वषट् । नँतँथँधँदँवाक्पाणिपादपायूपस्थात्मने कवचाय हुम् ॥ मँपँफँभँबँवक्तव्यादानगमनविसर्गानन्दात्मने नेत्रत्रयाय वौषट् । शँयँरँवँलँहँषँक्षँसँलँ बुद्धिमनोऽहंकारचित्तात्मने अस्त्राय फट् । एवं षडङ्गन्या संकृत्वा नाभेरारभ्य पादान्तम् 'आँ' इति पाशबीजं विन्यसेत् ॥ हृदयादारभ्य नाभ्यन्तं 'ह्रीं' इति शक्तिबीजं न्यसेत् । मस्तकादारभ्य हृदयान्तम् 'क्रौं' इति सृणिबीजं न्यसेत् ॥ ॐ यँ त्वगात्मने नमः ॥ १ ॥ ॐरँ असृगात्मने नमः ॥ २ ॥ ॐ लँ मांसात्मने नमः ॥ ३ ॥ ॐ वँ मेदात्मने नमः ॥ ४ ॥ ॐ शँ अस्थ्यात्मने नमः ॥ ५ ॥ ॐ षँ मज्जात्मने नमः ॥ ६ ॥ ॐ सँ शुक्रात्मने नमः ॥ ७ ॥ ॐ हों ओजात्मने नमः ॥ ८ ॥ ॐ हँ प्राणात्मने नमः ॥ ९ ॥ ॐ सँ जीवात्मने नमः ॥ १० ॥ इति हृदि विन्यस्य । ॐ यँरँलँवँशँषँसँहँलँक्षँ इति

मूर्द्धादिचरणावधिव्यापकं कृत्वा प्राणशक्तिं देवीं ध्यायेत्। "पाशं चापासृक्कपाले सृणीषुत्रशूलंहस्तैर्बिभ्रतीं रक्तवर्णाम् ॥ रक्तो दन्वत्पीतरक्ताम्बुजस्थां देवीं ध्यायेत्प्राणशक्तिं त्रिनेत्राम् ॥ १ ॥" इति ध्यात्वा। हृदि करं निधाय। ॐ आँह्रीं क्रौंयँरँलँवँशँषँहोंॐ क्षँसँहँ सः ह्रीं ॐ मम प्राणा इह प्राणाः। ॐ आँह्रीं क्रौंयँरँलँवँशँषँसँहों ॐ क्षसँहँसः ह्रीं ॐ मम जीव इह स्थितः। ॐआँह्रींक्रौंयँ रँलँवँशँषँसँहोंआँक्षँसँहँसः ह्रीं ॐमम सर्वेन्द्रियाणि। ॐ ह्रीं क्रौंयँरँलँवँशँषँसँहों ॐक्षँसँहँसः ह्रीं ॐमम वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राण प्राणा इहागत्य सुखं तिष्ठन्तु स्वाहा। इति मन्त्रं वारत्रयं पठेत् ततः ॐॐॐॐॐॐॐॐॐॐॐॐॐॐॐ इति प्रणवस्य पञ्चदशावृत्तीः १५ कृत्वा 'अनेम मम देहस्य पञ्चदश संस्काराः संपद्यन्ताम्' इत्युक्त्वा प्राणायामं कुर्य्यात्। इति प्राणप्रतिष्ठा॥अथ मातृकान्यासः॥ तत्र तावदन्तर्मातृकान्यासः। ॐ अस्य श्रीअन्तर्मातृकान्यासमन्त्रस्य प्रजापतिर्ऋषिः। गायत्री छन्दः। सरस्वती देवता। हलो बीजानि। स्वराः शक्तयः। क्षं कीलकम्। अखिलाप्तये न्यासे विनियोगः। ॐ अँ प्रजापतिऋषये नमः आं शिरसि। ॐ इँ गायत्रीछन्दसे नमः ईँ वदने। ॐ उँ सरस्वतीदेवतायै नमः ऊँ हृदये। ॐ एँ हल्भ्यो बीजेभ्यो नमः ऐँ गुह्ये। ॐ ओं स्वरशक्तिभ्यो नमः औं पादयोः। ॐ अँ क्षँ कीलकाय नमः। अः सर्वाङ्गेषु इति ऋष्यादिन्यासः। अथ करन्यासः। ॐ अँकँखँगँ घँङँआँ अङ्गुष्ठाभ्यां नमः। ॐइँचँछँजँझँञँ ईं तर्जनीभ्यां नमः। ॐ उँटँठँडँढँणँऊँ मध्यमाभ्यां नमः। ॐ एँतँथँदँधँनँऐँ अनामिकाभ्यां नमः। ॐ ओँ पँफँबँभँमँ औँ कनिष्ठिकाभ्यां नमः। ॐ अँयँरँलँवँशँषँसँहँक्षँ अः करतलकरपृष्ठाभ्यां नमः। इति करन्यासः। अथ हृदयादिषडङ्गन्यासः। ॐ अँकँखँगँघँङँआँ हृदयाय नमः। ॐइँचँछँजँझँञँ ईँ शिरसे स्वाहा। ॐ उँटँठँडँढँणँऊँ शिखायै वषट्। ॐएँतँथँदँधँनँऐँ कवचाय हुम्। ॐ ओँ पँफँबँभँमँ औँ नेत्रत्रयाय वौषट्। ॐ अँ यँरँलँवँशँषँसँहँक्षँ अः अस्त्राय फट्। इति हृदयादिन्यासः॥ ततः पूरके प्राणायामे कण्ठस्थषोडशदलपद्मे ॐ अँआँइँईँउँऊँऋँॠँऌँॡँएँऐँ ओँऔँअँअः इति षोडशस्वरान् न्यसेत्॥ कुम्भकप्राणायामे हृदयस्थे द्वादशदले ॐ कँ नमः। खँ नमः। गँ नमः। घँ नमः। ङँ नमः। चँ नमः। छँ नमः। जँ नमः। झँ नमः। ञँ नमः। टँ नमः। ठँ नमः। इति द्वादश वर्णान्॥ नाभौ दशदले ॐ डँ नमः। ढँ नमः। णँ नमः। तँ नमः। थँ नमः। दँ नमः। ध नमः। नँ नमः। पँ नमः। फँ नमः। १०इति डादिफान्तान्। तदधोलिङ्गे षड्दले। ॐ बँ नमः। भँ नमः। मँ नमः। यँ नमः। रँ नमः। लँ नमः। इति बादिलान्तान्। आधारे गुदे चतुर्दले-ॐ वँ नमः। शँ नमः। षँ नमः। सँ नमः। इति वादिसान्तान्॥ रेचके ललाटे द्विदले-ॐ हँ नमः। क्षँ नमः। इति द्वौ वर्णौ विन्यसेत्॥ अथ ध्यानम्॥ आधारे लिङ्गनाभौ प्रकटितहृदये तालुमूले ललाटे द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे चतुष्के॥ वासान्ते वालमध्ये ड फ क ठ सहिते कण्ठदेशे स्वराणां हंक्षंतत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ १ ॥ इत्यन्तर्मातृकान्यासः। अथ बहिर्मातृकान्यासः। ऋष्यादिषडङ्गन्यासः पूर्ववत्। ॐ अं नमः शिरसि ॐ आं नमः मुखे ॐइं नमः दक्षिणनेत्रे ॐ ईं नमः वामनेत्रे ॐ उँ नमः दक्षिणकर्णे ॐऊँ नमः वामकर्णे ॐ ऋं नमः दक्षिणनासापुटे ॐ ॠं नमः वामनासापुटे ॐऌँ नमः

दक्षिणकपोले ॐ ॡं नमः वामकपोले ॐ एँ नमः ऊर्ध्वौष्ठे ॐ ऐं नमः अधरोष्ठेॐ ओंनमः ऊर्ध्वदन्तपङ्क्तौ ॐ औं नमः अधोदन्तपङ्क्तौ ॐ अँ नमः मूर्ध्नि ॐ अः नमः मुखवृत्ते ॐ कं नमः दक्षिणबाहुमूले ॐ खं नमः दक्षिणकूर्परे ॐ गं नमःदक्षिणमणिबन्धे ॐ घं नमः दक्षिणाङ्गुलिमूले ॐ ङं नमः दक्षिणाङ्गुल्यग्रे ॐ चं नमः वामबाहुमूले ॐ छं नमः वामकूर्परे ॐ जं नमः वाममणिबन्धे ॐ झं नमः वामाङ्गुलिमूले। ॐञं नमः वामाङ्गुल्यग्रे ॐटं नमः दक्षिणपादमूले ॐ ठं नमः दक्षिणजानुनि ॐ डं नमः दक्षिणगुल्फे ॐ ढं नमः दक्षपदाङ्गुलिमूले । ॐ णं नमः दक्षपादाङ्गुल्यग्रे । ॐतं नमःवामपादमूले । ॐथं नमः वामजानुनि । ॐदं नमः वामगुल्फे ॐधंनमः वामपादाङ्गुलिमूले । ॐ नं नमः वामपादाङ्गुल्यग्रे । ॐपंनमःक्षदपार्श्वे ॐफं नमःवामपार्श्वे । ॐ बं नमः पृष्ठेॐभं नमः नाभौ । ॐ मं नमः उदरे । ॐ यं त्वगात्मनेनमः हृदये । ॐरं असृगात्मने नमः दक्षांसे । ॐलं मांसात्मने नमःककुदि । ॐ वं मेदात्मने नमः वामांसे । ॐ शं अस्थ्यात्मने नमः हृदयादिदक्षहस्तान्तम् ॐषं मज्जात्मने नमः हृदयादिवामहस्तान्तम् । ॐ सं शुक्रात्मने नमःहृदयादिपादान्तम् । ॐहं प्राणात्मने नमः हृदयादिवामपादान्तम् । ॐळं जीवात्मने नमः जठरे । ॐ क्षं परमात्मने नमः मुखे । एवं बहिर्मातृकान्यासं कृत्वा ध्यायेत । "पञ्चाशल्लिपिभिर्विभक्तमुखदोर्हृत्पद्मवक्षःस्थलां भास्वन्मौलिनिबद्धचन्द्रशकलमापीनतुङ्गस्तनीम् ॥ मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैर्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये॥ १॥" इति ध्यानम्।एवं मातृकान्यासं कृत्वा तत्तद्देवताकलान्यासं कुर्यात् । शंभुभक्तश्चेत् श्रीकण्ठादिमातृकाकलान्यासं वैष्णवस्तु केशवादिन्यासं गणेशभक्तो विघ्नेशादिकलान्यासं शाक्तश्चेत् निवृत्त्यादिकलान्यासं च कुर्यात् । तत्कलान्यासस्तु स्वस्वप्रयोगे स्पष्टो भविष्यति एवं तत्तद्देवताकलान्यासं कृत्वा प्राणानायम्य स्वमूलमन्त्रस्य कल्पोदितान् ऋषिच्छन्दोदैवतादिन्यासान् तत्तदङ्गेषु न्यस्य करन्यासं हृदयादिषडङ्गन्यासं च कृत्वा पीठन्यासं कुर्यात् । स्वदेहं पीठमयं विचिन्त्य न्यसेत् । तद्यथा–आधारे ॐमं मण्डूकाय नमः ॥१॥ लिङ्गे ॐ कालाग्निरुद्राय नमः ॥२॥ नाभौ ॐ कूंकूर्माय नमः ॥३॥ हृदये ॐ आं आधारशक्तये नमः ॥४॥ ॐ अं अनंताय नमः॥५॥ॐ धं धरायै नमः ॥६॥ ॐ सुं सुधासिंधवे नमः ॥७॥ ॐ श्वं श्वेतद्वीपाय नमः ॥८॥ ॐ सुं सुराङ्घ्रिपाय नमः॥९॥ॐ मं मणिहर्म्याय नमः॥१०॥ॐहें हेमपीठाय नमः ॥ ११ ॥ दक्षांसे ॐ धं धर्म्माय नमः ॥ १२ ॥ वामांसे ॐ ज्ञां ज्ञानाय नमः ॥ १३ ॥ वामोरौ ॐ वैं वैराग्याय नमः ॥ १४ ॥ दक्षोरौ ॐ ऐं ऐश्वर्याय नमः ॥ १५ ॥ मुखे ॐ अं अधर्म्माय नमः ॥ १६ ॥ वामपार्श्वे ॐ अँ अज्ञानाय नमः ॥१७॥ नाभौ ॐ अं अवैराग्याय नमः ॥१८॥ दक्षपार्श्वे ॐ अं अनैश्वर्याय नमः ॥१९॥ पुनर्हृदये ॐ अं अनन्ताय नमः ॥२०॥ ॐ तं तत्त्वपद्माय नमः ॥२१॥ ॐ आं आनन्दमयकन्दाय नमः ॥२२॥ ॐ सं संविन्नालाय नमः॥२३॥ॐ विं विकारमयकेसरेभ्यो नमः ॥२४॥ ॐ प्रं प्रकृत्यात्मकपत्रेभ्यो नमः ॥ २५ ॥ ॐ पं पंचाशद्वर्णकार्णिकायै नमः ॥२६॥ कर्णिकायाम् ॐ सूं सूर्य्यमण्डलाय नमः ॥२७॥ ॐ इं इन्दुमण्डलाय नमः ॥ २८ ॥ ॐ पां पावकमण्डलाय नमः ॥२९॥ ॐ सं सत्त्वाय नमः ॥३०॥ ॐ रं रजसे नमः ॥ ३१ ॥ ॐ तं तमसे नमः ॥३२॥ ॐ आं आत्मने नमः ॥ ३३ ॥ ॐ अं अन्तरात्मने नमः ॥३४॥ ॐ पं परमात्मने नमः

॥ ३५ ॥ ॐ ह्रीं ज्ञानात्मने नमः ॥ ३६ ॥ ॐ मां मायातत्त्वाय नमः ॥३७॥ ॐ कं कलातत्त्वाय नमः॥३८॥ॐ विं विद्यातत्त्वा य नमः ॥३९॥ ॐ पं परतत्त्वाय नमः ॥४०॥ इति पीठदेवताः मानसोपचारैः संपूज्य तत्रैव तत्तत्कल्पोक्तपीठशक्तीर्विन्यस्य संपूज्य ॐ ह्रींनमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः इत्यासनमन्त्रेण व्यापकं कृत्वा स्वहृदये मूलमन्त्रदेवता ध्यायेत् । ध्यानं तु स्वस्वमन्त्रोक्तं ज्ञेयम् ॥ एवं ध्यात्वाॐलं पृथिव्यात्मकं गन्धं समर्पयामि नमः ॥१॥ ॐहं आकाशात्मकं पुष्पं समर्पयामि नमः ॥२॥ ॐ यं वाय्वात्मकं धूपं समर्पयामि नमः ॥ ३ ॥ ॐ रं वह्न्यात्मकं दीपं समर्पयामि नमः ॥ ४ ॥ ॐ वं अमृतात्मकं नैवेद्यं समर्पयामि नमः ॥ ५ ॥ इति मानसोपचारैः संपूज्य यथाशक्ति मूलमन्त्र जपित्वा पुनरर्घ्यादिकं विधाय गुह्यातिगुह्येत्यादिना वेददक्षिणकरे जपं समर्प्य क्षणं तद्गतमानसः कुण्डलीमुत्थाप्य ब्रह्मरन्ध्रे संयोज्य तदुत्पन्नामृतधारामिर्हृदय कमलमध्यगतं मन्त्रदेवं संतर्प्य कुण्डलीं मूलाधारे संस्थाप्य मूलं यथाशक्ति जपित्वा प्रणमेत् ॥ इत्यन्तर्यागविधानम् ॥ अथ बहिर्यागविधानम् ॥ तत्रादौ देशकालौ स्मृत्वा अमुकमन्त्रपुरश्चरणकर्मणि अमुकदेवताप्रीत्यर्थं यथासंभवैर्द्रव्यैर्यथाशक्त्यमुकदेव तापूजनं वैदिकैस्तन्त्रोक्तैश्च मन्त्रैः करिष्ये इति संकल्प्य पात्रस्थापनं कुर्य्यात्।स्ववामाग्रे त्रिकोणषट्कोणवृत्तचतुरस्रमण्डलं गन्धेन विधाय शङ्खमुद्रया अवष्टभ्य अमुकदेवार्घ्यमण्डलाय नमः । इति संपूज्य । तत्र ॐ फडिति प्रक्षालितमाधारं संस्थाप्य ॐ वह्निमण्डलाय दशकलात्मने पात्रासनाय नमः । इति संपूज्य । आधारे पूर्वादिषु दशाग्निकलाः पूजयेत् । ॐ यं धूम्रार्चिकायै नमः ॥ १ ॥ ॐ रं ऊष्मायै नमः ॥ २ ॥ ॐ लं ज्वलिन्यै नमः ॥३॥ ॐ वं ज्वालिन्यै नमः ॥४॥ ॐ शं विस्फुलिङ्गिन्यै नमः ॥५॥ ॐ षं सुश्रियै नमः ॥६॥ ॐ सं सुरूपायै नमः ॥ ७ ॥ ॐ हं कपिलायै नमः ॥८॥ॐ ळं हव्यवहायै नमः ॥९॥ॐ क्षं कव्यवहायै नमः ॥१०॥इति संपूज्य ।ॐक्लीं महाजलचराय हुंफट् स्वाहा पाञ्चजन्याय नमः । इति मन्त्रेण क्षालितं शङ्खं तत्र संस्थाप्य।ॐअं सूर्यमण्डलाय द्वादशकलात्मने सामान्यार्घ्यपात्राय नमः । इति संपूज्य । पात्रे स्वाग्रादिप्रादक्षिण्येन द्वादशसूर्यकलाः पूजयेत् ॥ ॐ कं भं तापिन्यै नमः ॥ १ ॥ ॐ खं बं तापिन्यै नमः ॥ २ ॥ ॐ गं फं धूम्रायै नमः ॥ ३ ॥ ॐ घं पं मरीच्यै नमः ॥ ४ ॥ ॐ ङं नं ज्वालिन्यै नमः ॥ ५ ॥ ॐ चं धं रुच्यै नमः ॥ ६ ॥ ॐ छं दं सुषुम्णायै नमः ॥ ७ ॥ ॐ जं थं भोगदायै नमः ॥ ८ ॥ ॐ झं तं विश्वायै नमः ॥ ९ ॥ ॐ ञं णं बोधिन्यै नमः ॥ १० ॥ ॐ टं ढं धरिण्यै नमः ॥ ११ ॥ ॐ ठं ढं क्षमायै नमः ॥१२॥ इति संपूज्य । क्षंळंहंसंषंशंवंलंरंयंमंभंबंफंपंनंधंदंथंतंणंढंडंठंटंञंझंजंछंचंङंघंगंखंकंअःअंऔंओंऐंएंॡंऌंॠंऋंऊंउंईंइंआंअं ५१ इति विलोममातृकां मूलमन्त्रं विलोमं च पठन् जलमापूर्य्य ॐ सोममण्डलाय षोडशकलात्मने अमुकपात्रामृताय नमः । इति संपूज्य। जले षोडश चन्द्रकलाः पूजयेत् । ॐ अं अमृतायै नमः ॥ १ ॥ ॐ आं आनदायै नमः ॥ २ ॥ ॐ इं पूषायै नमः ॥ ३ ॥ ॐ ईं तुष्ट्यै नमः ॥ ४ ॥ ॐ उं पुष्ट्यै नमः ॥ ५ ॥ ॐ ऊं रत्यै नमः ॥ ६ ॥ ॐ ऋं धृत्यै नमः ॥ ७ ॥ ॐ शशिन्यै नमः ॥ ८ ॥ ॐ ऌं चन्द्रिकायै नमः ॥ ९ ॥ ॐ ॡं कान्त्यै नमः ॥ १० ॥ ॐ एं ज्योत्स्नायै नमः ॥ ११ ॥ ॐ ऐं श्रियै नमः ॥ १२ ॥

ॐ ओं प्रीत्यै नमः ॥ १३ ॥ ॐ औं अङ्गदायै नमः ॥ १४ ॥ ॐ अं पूर्णायै नमः ॥ १५ ॥ ॐ अः पूर्णामृतायै नमः । इति संपूज्य ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ इत्यङ्कुशमुद्रया सूर्यमण्डला त्तीर्थान्यावाह्य हुं इत्यवगुण्ठच मूलेनाष्टधा अभिमन्त्र्य फट् इति छोटिकया संरक्ष्य मन्त्रोक्तषडङ्गं संपूज्य नमः इति संपूज्य मूलम ष्टधा जपन् मत्स्यमुद्रयाऽऽच्छादयेत् । पुनः वं इति धेनुमुद्रयाऽमृतीकृत्य संरोधिन्या निरुध्य शङ्खमुसलचक्रमुद्राः प्रदर्श्य महामु द्रया परमीकृत्य लिङ्गमुद्रां प्रदर्श्य नमेत । शिवसूर्यार्चने शङ्खस्थाने शङ्खेतरताम्रादिपात्रस्थापनं कुर्यात् । इति तन्त्रोक्तशङ्खाद्यर्घ्य पात्रस्थापनम् । ततः शङ्खाद्दक्षिणभागे प्रोक्षणीपात्रपूरणं कृत्वा तज्जलेनात्मानं पूजासामग्रीं च मूलमन्त्रेण प्रोक्ष्य तद्दक्षिणतः पाद्यार्घ्याचमनीयमधुपर्कपात्राणि शङ्खवत्संस्थाप्य अशक्तश्चेत्तर्हि एकमेव पात्रं संस्थाप्य सामान्यविधिना पूजयेत् । तेषु च वस्तूनि क्षिपेत् । यथा—पाद्यपात्रे श्यामाकविष्णुक्रान्ताब्जदूर्वाः क्षिपेत् । अर्घ्यपात्रे दूर्वातिलदर्भाग्रसर्षपयवपुष्पफलाक्षतग न्धान् क्षिपेत् । आचमनीयपात्रे लवङ्गजातीपत्रकङ्कोलानि प्रक्षिपेत् । मधुपर्कपात्रे दध्याज्यमधूनि च स्थापयेत् । एवं पूजापात्राणि संपाद्य ॐ जगद्ध्वनिमन्त्रमातः स्वाहा ॥ इति घण्टां संपूज्य घण्टानादं कृत्वा मूलेनाचम्य प्राणानायम्य वामभागे ॐ गुरुगुरुभ्यो नमः ॥ १ ॥ पं परमगुरुभ्यो नमः ॥२॥ पं परमेष्ठिगुरुभ्यो नमः ॥ ३ ॥ दक्षिणभागे ॐ गं गणपतये नमः ॥ १ ॥ इति प्रणम्य पीठे ॐ मं कण्डूकादिपरतत्त्वान्तपीठदेवताभ्यो नमः इति पूर्ववत्पीठदेवताः संपूज्य तत्रैव तत्तत्कल्पोक्त पीठशक्तीः पूजयेत् । तत्र ॐ ह्रीं नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः ॥ इति पुष्पाञ्ज लिनासनं दत्त्वा तत्र महीद्यौरित्यादिवैदिकैर्मन्त्रैस्ताम्रकलशं यथाविधि पूर्णपात्रान्तं संस्थाप्य तत्र तत्त्वायामीति वरुणमावाह्य षोडशोपचारैः संपूज्य तदुपरि पट्टवस्त्रं प्रसार्य्य तत्र मन्त्रदेवतायन्त्रं तद्गन्धेन विलिख्य तन्मध्ये मूलमन्त्रेण स्वर्णमयीं मूलमन्त्रदेवताप्रतिमां सावयवां स्वर्णादियन्त्रं वा अग्न्युत्तारणपूर्वकं स्थापयेत् । अथ अग्न्युत्तारणप्राणप्रतिष्ठाप्रयोगः ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थममुककामनासिद्ध्यर्थममुकदेवनूतनप्रति मायाः यन्त्रस्य वा अग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां करिष्ये । इति संकल्प्य । यन्त्रं मूर्तिं वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दद्यात् । तत्र मन्त्राः । ॐ समुद्रस्य त्वावकयाग्ने परि व्ययामसि । पावकोऽअस्मभ्यꣳ शिवो भव ॥ १ ॥ हिमस्य त्वा जरायुणाग्ने परि व्ययामसि ॥ पावकोऽअस्मभ्यꣳ शिवो भव ॥ २ ॥ उपज्मन्नुप वेतसेऽवतर नदीष्वा । अग्ने पि त्तमपामसि मण्डूकि ताभिरागहि सेमन्नो यज्ञम्पावकवर्णꣳ शिवङ्कृधि ॥ ३ ॥ अपामिदन्न्ययनꣳ समुद्रस्य निवेशनम् ॥ अन्न्याँ स्ते ऽअस्मत्तपन्तु हेतयः ॥ पावकोऽअस्मभ्यꣳ शिवो भव ॥ ४ ॥ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ॥ आ देवान्वक्षि यक्षि च ॥ ५ ॥ स नः पावक दीदिवोऽग्ने देवाँ ॥ २ ॥ ऽइहावह ऽउप यज्ञꣳ हविश्च नः ॥ ६ ॥ पावकया यश्चितयन्त्या कृपा क्षामन्रुरुचऽ

उपसोनभानुना ॥ तूर्व्वन्नयामन्नेतंशस्यनूरणऽआयोघृणेनततृषाणोऽअजरं÷ ॥ ७ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्च्चिषे ॥ अग्न्याँ
स्तेऽअस्मत्तपन्तुहेतयं÷पावकोऽअस्स्मब्भ्यंᳪशिवोभव ॥ ८ ॥ नृषदेव्वेडप्प्सुषदेव्वेड्बर्हिषदेव्वेड्वनसदेव्वेड्स्वर्व्विदेव्वेट् ॥ ९ ॥ येदे
वादेवानांय्यज्ञियांय्यज्ञियानाᳪसंव्वत्सरीणमुपभागमासते॥अहुतादोहविषोयज्ञेऽअस्मिन्त्स्वयम्पिबन्तुमधुनोघृतस्य॥१०॥येदेवादेवे
ष्ष्वधिदेवत्त्वमायन्न्येब्रह्मणंᳪपुरऽएतारोऽअस्य ॥ येब्भ्योनऽऋतेपवतेधामकिञ्चन नतेदिवोनपृथिव्व्याऽअधिस्नुषु ॥ ११ ॥ प्प्राण
दाऽअपानदाव्व्यानदाव्वर्च्चोदाव्वरिवोदा॰ ॥ अग्न्याँस्तेऽअस्मत्तपन्तुहेतयं÷पावकोऽअस्म्मब्भ्यंᳪशिवोभव ॥ १२॥ इत्यग्न्युत्तारणप्र
कम्॥अथ प्राणप्रतिष्ठा॥अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः।ऋग्यजुःसामानि च्छंदांसि ॥ क्रियामयवपुःप्राणाख्या
देवताः । आँबीजम् । ह्रीं शक्तिः । क्रौं कीलकम् । अस्यां नूतनमूर्त्तौ प्राणप्रतिष्ठापने विनियोगः।ॐ आँह्रींक्रौंयँरँलँवँशँषँसँहोंहँसः॥१४॥
अस्या अमुकदेवप्रतिमायाः प्राणा इह प्राणाः ॥ पुनः ॐ आँह्रींक्रौंयँरँलँवँशँषँसँहोंहँसः ॥१४॥ अस्या अमुकदेवप्रतिमाया जीव इह
स्थितः । पुनः ॐ आँह्रींक्रौंयँरँ० १४ इत्यादि । अस्या अमुकदेवप्रतिमायाः सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपाद
पायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ ॐ मनोजूतिर्ज्जुषतामाज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञᳪसमिमंदधातु॥
व्विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥१॥ एष वै प्रतिष्ठानाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितं भवति ॥२॥ इति प्रति
ष्ठाप्य । पञ्चोपचारैः संपूज्य संस्कारसिद्धये पञ्चदश प्रणवावृत्तीः कृत्वा अनेन अस्या अमुकदेवप्रतिमायाः गर्भाधानादिपञ्चदशसं
स्कारान्संपादयामि इति वदेत । एवं प्राणप्रतिष्ठां कृत्वा षोडशोपचारैः राजोपचारैर्वा पूजयेत्। "तत्र विष्णुं पुरुषसूक्तेन ॥ शिवं त्र्यंब
कमन्त्रेण पञ्चाक्षरेण वा ॥ गणपतिं तन्मूलमन्त्रेण । देवीं श्रीसूक्तेन सूर्य्यं पुरुषसूक्तेन तन्मूलमन्त्रेण वा षोडशोपचारैःपूजयेत्। सर्वेषां
वा पुरुषसूक्तेन पूजाकरणम्"॥अथ सर्वदेवोपयोगिषोडशोपचारपूजाप्रयोगः ॥ ॐ आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वर ॥ अरण्या
मिव हव्याशं मूर्तावावाहयाम्यहम् ॥१॥ ॐ सहस्रशीर्षापुरुष÷सहस्राक्षᳪसहस्रपात् ॥ सभूमिᳪसर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥
ततो मूलमन्त्रमुच्चार्य्य । ॐ भूर्भुवः स्वः अमुकदेवमावाहयामि ॥ इत्यावाह्य आवाहनमुद्रां प्रदर्शयेत् । इत्यावाहनम् ॥ १ ॥ तवेयं
महिमामूर्तिस्तस्यां त्वां सर्वगं प्रभो । भक्तिस्नेहसमाकृष्टदीपवत्स्थापयाम्यहम् । ततो मूलमुच्चार्य्य । ॐभूर्भुवः स्वः अमुकदेव इहतिष्ठ ।
इति स्थापनीमुद्रया स्थापनम् ॥ २ ॥ "देवीपूजायां स्त्रीलिंगेनोच्चारणं कार्यम्" ॥ अनन्या तव देवेश मूर्तिशक्तिरियं प्रभो ॥ सान्नि
ध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्पर ॥ १ ॥ ततो मूलं पठित्वा । ॐ भू० अमुकदेव इह संनिधेहि इति तन्मुद्रया संनिधापनम्
॥ ३ ॥ आज्ञया तव देवेश कृपाम्भोधे गुणाम्बुधे ॥ आत्मानन्दैकतृप्तं त्वां निरुणध्मि पितर्गुरो ॥१॥ मूलं पठित्वा ॐ भू० अमुक

देव इह संनिरुध्यस्व इति तन्मुद्रया संनिरोधनम् ॥ ४ ॥ अज्ञानाद्दुर्मनस्याद्वा वैकल्यात्साधनस्य च ॥ यदपूर्णं भवेत्कृत्यं तदप्यभिमुखो भव ॥ १ ॥ ततो मूलं पठित्वा ॐ भू० अमुकदेव इह संमुखो भव इति तन्मुद्रया सन्मुखीकरणम् ॥ ५ ॥ दयापीयूषवर्षिण्या पूरयन्यज्ञविष्टरम् ॥ मूर्त्यावायज्ञसंपूर्त्यै स्थितो भव महेश्वर ॥१॥ इति प्रार्थिनीमुद्रया प्रार्थयेत । अभक्तवाङ्मनश्चक्षुःश्रोत्रदूरातिसद्द्युते ॥ स्वतेजःपञ्जरेणाशु वेष्टितो भव सर्वतः ॥ १ ॥ मूलं पठित्वा ॐ भू० अमुकदेव अवगुण्ठितो भव । इति तन्मुद्रया अवगुण्ठनम् ॥ ६ ॥ ततः षडङ्गेन सकलीकरणम् । मूलेन धेनुमुद्रया अमृतीकरणम् । मूलेन महामुद्रया परमीकरणम् । यस्य दर्शनमिच्छन्ति देवाः स्वाभीष्टसिद्धये । तस्मै ते परमेशाय स्वागतं स्वागतं च मे ॥१॥ मूलं पठित्वा ॐ भू० अमुकदेव सुस्वागतमिति सुस्वागतम्॥७॥"देवदेव महाराज प्रियेश्वर प्रजापते॥आसनं दिव्यमीशान दास्येऽहं परमेश्वर ॥१॥"ॐ पुरुषऽएवेदꣳसर्वंयद्भूतंयच्चभाव्यम् ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति॥मूलं पठित्वा ॐभू०अमुकदेवाय इदमासनम् ।इत्यासनं दद्यात् ॥२॥ "यद्भक्तिलेशसंपर्कात्परमानन्दविग्रहम् ॥ तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये" ॐ एतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोऽस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ १ ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय नमः पाद्यं समर्पयामि । इति पाद्यम् ॥ ३ ॥ "तापत्रयहरं दिव्यं परमानन्दलक्षणम्॥तापत्रयविनिर्मुक्तं तवार्घ्यं कल्पयाम्यहम् ॥" त्रिपादूर्ध्वऽउदैत्पुरुषःपादोऽस्येहाभवत्पुनः॥ ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय ० इदमर्घ्यम् । इत्यर्घ्यम् ॥ ४ ॥ "वेदानामपि वेद्याय देवानां देवतात्मने ॥ आचाम कल्पयामीश शुद्धानां शुद्धिहेतवे ॥" ततोविराडजायतविराजोऽअधिपूरुषः । सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय० आचमनीयं० इत्याचमनम् ॥ ५ ॥"सर्वकालुष्यहीनाय परिपूर्णसुखात्मने॥मधुपर्कमिदं देव कल्पयामि प्रसीद मे ॥"मूलं पठित्वाॐभू०अमुकदेवाय०मधुपर्कं स०इति मधुपर्कं दत्त्वाचमनं दद्यात ॥६॥"ॐस्नेहं गृहाण स्नेहेन लोकनाथ महाशय॥सर्वलोकेषुशुद्धात्मन्ददामि स्नेहमुत्तमम्॥"मूलंपठित्वाॐभू०अमुकदेवाय०सुगन्धतैलं स० इति सुगन्धतैलं दद्यात्॥७॥"गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः॥स्नापितोऽसि मया देव तथा शान्तिं कुरुष्व मे"॥ ॐतस्माद्यज्ञात्सर्वहुतꣳसम्भृतंपृषदाज्यम् ॥ पशूँस्ताँश्चक्रेवायव्यानारण्याग्राम्याश्चये ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय० स्नानं स० इति स्नानम् ॥ ८ ॥ अथ पयःस्नानम् । "कामधेनुसमुत्पन्न सर्वेषां जीवनं परम् ॥ पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥" ॐपयःपृथिव्यांपयऽओषधीषु पयोदिव्यन्तरिक्षेपयोधाः॥ पयस्वतीःप्रदिशःसन्तुमह्यम् ॥ १ ॥ मूलं पठित्वा ॐभू० अमुकदेवा० पयःस्नानं स० ॥ ९ ॥ दधिस्नानम् । "पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ॥ दध्यानीतं मया देव स्नानार्थं प्रति

गृह्यताम् ॥''ॐदृधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यव्वाजिनः॥सुरभिनोमुखाकरत्प्रणआयूषितारिषत्॥मूलं पठित्वा ॐभू० अमु कदेवाय० दधिस्नानं स० ॥१०॥ अथ घृतस्नानम् । "नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृ ह्यताम्" ॐघृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम ॥ अनुष्ष्वधमावह मादयस्वस्वाहा कृतंवृषभवक्षिहव्यम् ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय घृतस्नानं स० ॥११॥ अथ मधुस्नानम् ।"तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ॥तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम्" ॐ मधुव्वाताऽऋतायतेमधुक्षरन्तिसिन्धवः॥माद्ध्वीर्न्नः सन्त्वोषधीः ॥ ॐमधुनक्तमुतोषसोमधुमत्पार्थिवरजः ॥ मधुद्यौरस्तुनःपिता ॐमधुमान्नोव्वनस्पतिर्म्मधुमा २ँ ॥ ऽअस्तुसूर्य्यः ॥ माध्वीर्गावोभवन्तुनः ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय० मधुस्नानं स० ॥ १२ ॥ अथ शर्करोदकस्नानम् ॥ "इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ॥ मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम्"॥ॐअपारसमुद्वयससूर्य्येसन्तसमाहितम् ॥ अपारसस्ययोरसस्तंव्वोगृह्णाम्युत्तममुपयामगृहीतोसी न्द्रायत्त्वा जुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय० शर्करोदकस्नानं स० ॥ १३ ॥ अथ पञ्चामृतस्नानम ॥ "पयो दधि घृतं चैव मधु च शर्करायुतम् ॥ पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥" ॐपञ्चनद्यःसरस्वती मपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय० पञ्चामृतस्नानं स० ॥ १४ ॥ अथ गन्धोदकस्नानम् ॥ "मलयाचलसंभूतं चन्दनागुरुसंभवम् ॥ चन्दनं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥" ॐगन्धद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ मूलं पठित्वा ॐ भू० अमुकदेवा० गन्धोदकस्नानं स० ॐ वरुण स्योत्तम्भनमसिव्वरुणस्यस्कंभसर्ज्जनीस्थोव्वरुणस्यऽऋतसदन्यसि ॥ वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय शुद्धोदकस्नानं स० ॥ एवं स्नानं समर्प्य ॥१५॥ शिवसूर्यातिरिक्तदेवेषु शंखेनाभिषेकं कुर्य्यात् ॥ अथाभिषेकः । हरिः ॐ ॐ सहस्रशीर्षा० ॥ १ ॥ पुरुषए० ॥२॥ एतावान० ॥३॥ त्रिपादूर्ध्व० ॥४॥ ततोविराड ॥ ५ ॥ तस्मा द्यज्ञात्स० ॥ ६ ॥ तस्माद्यज्ञात्सर्व्वहुत० ॥ ७ ॥ तस्मादश्वाऽअजायन्त० ॥ ८ ॥ तंयज्ञम्बर्हिषि० ॥ ९ ॥ यत्पुरुषंव्यदधुःकति धा० ॥ १० ॥ ब्राह्मणोस्यमुखमासीद्० ॥ ११ ॥ चन्द्रमामनसोजातश्चक्षोः० ॥ १२ ॥ नाभ्याऽआसीदन्तरिक्ष० ॥ १३ ॥ यत्पुरुषेणहविषा० ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः० ॥ १५ ॥ यज्ञेनयज्ञमयजन्त० ॥ १६ ॥ एवं पुरुषसूक्तेन वा अथर्वशि रसा तत्तन्मूलमन्त्रेण वा यथाशक्ति अभिषेकं कृत्वा । ॐ अनेन अभिषेककर्म्मणामुकदेवता प्रीयताम् । इति समर्प्य आचमनं

दद्यात् ॥ वस्त्रम् । "सर्वभूषादिके सौम्ये लोकलज्जानिवारणे ॥ मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥" ॐ तस्माद्यज्ञा त्सर्वहुतऽऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत । मूलं पठित्वा ॐ भू० अमुकदेवाय वस्त्रं स० (आचमनम् ॥ १६ ॥ पीतं विष्णौ सितं शंभौ रक्तं विघ्नार्कशक्तिषु ॥ सच्छिद्रं मलिनं जीर्णं त्यजेत्तैलादिदूषितम्" ॥ यज्ञोपवीतम् । "नवभिस्त न्तुभिर्युक्तं त्रिगुणं देवतामयम् ॥ उपवीतं चोत्तरीयं गृहाण परमेश्वर ॥" ॐ तस्मादश्वाऽ अजायन्त ये के चोभयादतः ॥ गावो ह यज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय० यज्ञोपवीतं समर्पयामि ॥ १७ ॥ (आचमनम्) गन्धम् । "श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ॥ विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम्" । ॐ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जा तमग्रतः ॥ तेन देवाऽअयजन्त साध्याऽऋषयश्च ये ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय गन्धं समर्पयामि ॥ १८ ॥ "अङ्गुष्ठौ कनिष्ठामूल लग्नौ गन्धमुद्रा" अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः ॥ मया निवेदिता भक्त्या गृहाण परमेश्वर ॥" ॐ अक्षन्नमीमदन्त ह्यव प्रियाऽअधूषत ॥ अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय अक्षता न्स० ॥ १९ ॥ पुष्पाणि । "माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ॥ मयाऽऽनीतानि पुष्पाणि गृहाण परमेश्वर ॥" ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ॥ मुखं किमस्यासीत्किं बाहू किमूरू पादाऽउच्येते । मूलं पठित्वा ॐ भू० अमुकदेवाय पुष्पाणि समर्पयामि ॥ २० ॥ "तर्जन्यङ्गुष्ठयोगेन पुष्पमुद्रा" "पुष्पं पत्रं फलं देवे न प्रदद्यादधोमुखम् ॥ पुष्पांजलौ न तद्दोषस्तथापर्युषि तस्य च" ॥ अत्रावसरे तत्तत्प्रयोगोक्तामावरणपूजां कृत्वा धूपादिनिवेदनं कार्यम् । धूपम् 'वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्" ॐ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽअ जायत । मूलं पठित्वा ॐ भू० अमुकदेवाय साङ्गाय० धूपं समर्पयामि ॥ २१ ॥ 'तर्जनीमूलयोरङ्गुष्ठयोगो धूपमुद्रा' दीपम् । "ॐ सुप्रकाशो महादीपः सर्वतस्तिमिरापहः ॥ सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम्" ॥ ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअ जायत ॥ श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय साङ्गाय० दीपं स० ॥ २२ ॥ "घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः ॥ सितवर्तियुतो दक्षे वामाङ्गे रक्तवर्तिका" ॥ 'मध्यमाङ्गुष्ठयोगो दीपमुद्रा' नैवेद्यम् । ततः स्वर्णादिभा जने देवताग्रे देवदक्षिणतो वा साज्यं सशर्करं पायसादि नैवेद्यं परिवेष्य ॐ 'यं' इति वायुबीजेन द्वादशवाराभिमन्त्रितजलेन प्रोक्ष्य तेनैव 'य' बीजेन नैवेद्यदोषं सशोष्य दक्षिणकरे 'रं' इति बीजं विचिन्त्य दक्षकरपृष्ठे वामकरं दत्त्वा नैवेद्यं प्रदर्श्य तेनैव 'रं' इति अग्निबीजोत्थाग्निना दोषं दग्ध्वा वामकरे 'वं' इति बीजं ध्यात्वा तत्पृष्ठे दक्षहस्तं दत्त्वा नैवेद्यं प्रदर्श्य

'वं' इति सुधाबीजोत्थामृतप्लुतं स्मृत्वा मूलमन्त्रेण प्रोक्ष्य तत्स्पृष्ट्वाऽष्टवारं मूलमन्त्रं प्रजप्य धेनुमुद्रां प्रदर्श्य संपूज्य देवे पुष्पाञ्जलिं दत्त्वा देवस्योद्गतं तेजः स्मृत्वा वामाङ्गुष्ठस्पृष्टनैवेद्यं सजलदक्षहस्तेन "सत्पात्रसिद्धं सुहविर्विविधानेकभक्षणम् । निवेदयामि देवेश सानुगाय गृहाण तत् ॥" ॐ नाभ्याऽआसीदन्तरिक्षᳯशीर्ष्णोद्यौः समवर्त्तत। पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोका २ँ॥ अंकल्पयन् ॥ १ ॥ ॐ सांगायामुकदेवाय नमः इदं नैवेद्यं समर्पयामि इति पठित्वा भूतले देवदक्षिणे जलं क्षिप्त्वा नैवेद्यमुद्रां प्रदर्शयेत् । 'अनामामूलयोरङ्गुष्ठयोगो नैवेद्यमुद्रा' ततः सपुष्पाभ्यां कराभ्यां भक्ष्यपात्रमुद्धरन् 'निवेदयामि भवते जुषाणेदं हविर्हर'॥ इति मन्त्रेण ग्रासमुद्रां प्रदर्श्य वामहस्तेन पद्माभां मुद्रां कृत्वा दक्षिणहस्तेन (ॐ प्राणाय स्वाहा) इति प्राणमुद्रां प्रदर्शयेत्॥१॥(ॐ अपानाय स्वाहा) इत्यपानमुद्रां प्रदर्शयेत् ॥२॥ (ॐ उदानाय स्वाहा) इत्युदानमुद्रां प्रदर्शयेत् ॥ ३ ॥ (ॐ व्यानाय स्वाहा) इति व्यानमुद्रां प्रदर्शयेत् ॥ ४ ॥ ॐ समानाय स्वाहा) इति समानमुद्रां प्रदर्शयेत् ॥ ५ ॥ ततः अन्तःपटं दत्त्वा– "ब्रह्मेशाद्यैः परित उरुभिः सूपविष्टैसमेतैर्लक्ष्म्या सिञ्जद्वलयकरया सादरं वीज्यमानः ॥ नर्मक्ष्वेलीप्रहसनमुखैर्ह्लापयन्पंक्तिमध्ये भुंक्ते पात्रे कनकघटिते षड्रसं श्रीरमेशः ॥ १ ॥ शालीभक्तं सुपक्वं शिशिरकरसितं पायसापूपसूपं लेह्यं पेयं च चोष्यं सितममृतफलं द्वारिकाद्यं सुखाद्यम् ॥ आज्यं प्राज्यं सभोज्यं नयनरुचिकरं राजिकैलामरीचस्वादीयः शाकराजीपरिकरममृताहारजोषं जुषस्व ॥ २ ॥" इति नैवेद्यं समर्प्य ॥ आचमनम् ॥ "समस्तदेवदेवेश सर्वतृप्तिकरं परम् ॥ अखण्डानन्दसंपूर्णं गृहाण जलमुत्तमम् ॥१॥" इत्याचमनं दद्यात् । इति नैवेद्यम् ॥ अत्र साग्निकश्चेत्तदाग्नौ होमं वैश्वदेवं च कृत्वा मूर्त्तौ देवे वह्निं नियोज्याचमनोदकं दद्यात् । ततो नैवेद्यांशं तत्तदुच्छिष्टभोजने निवेदयेत् । तद्यथा । विष्णोरुच्छिष्टं विष्वक्सेनाय ॥१॥ शिवस्योच्छिष्टंचण्डेश्वराय ॥२॥ सूर्यस्योच्छिष्टं चण्डांशवे ॥३॥ गणेशस्योच्छिष्टं वक्रतुण्डाय ॥४॥शक्तेरुच्छिष्टं शेशिकायै निवेदयेत् ॥२३॥ ताम्बूलम्। "पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ॥ एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम्"।मूलं पठित्वाॐभू० अमुकदेवाय नमः॥ताम्बूलं समर्पयामि ॥ २४ ॥ फलम् "इदं फलं मया देव स्थापितं पुरतस्तव ॥ तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि"। ॐ या३ फलिनीर्य्याऽअफलाऽअपुष्पायाश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वᳯहंसः । मूलं पठित्वा ॐ भू० अमुकदेवाय० फलं समर्पयामि॥ २५ ॥ छत्राद्यर्पणम् ॥ बुद्धिः सवासना क्लृप्ता दर्पणं मङ्गलानि च ॥ मनोवृत्तिर्विचित्रा ते नृत्यरूपेण कल्पिता ॥ १ ॥ ध्वनयो गीतरूपेण शब्दा वाद्यप्रभेदतः ॥ छत्राणि नवपद्मानि कल्पितानि मया प्रभो ॥ २ ॥ सुषुम्ना ध्वजरूपेण प्राणाद्याश्चामरा मताः ॥ अहंकारोङ्गजत्वेन वेगः क्लृप्तो रथात्मना ॥३॥ इन्द्रियाण्यश्वरूपाणि शब्दादिरथवर्त्मना॥ मनः प्रग्रहरूपेण बुद्धिः सारथिरूपतः ॥४॥ सर्वमन्यत्तथा क्लृप्तं तवोपकरणात्मना ॥ एवं सार्द्धचतुष्टयश्लोकान् पठित्वा छत्रादि

समर्पयेत् ॥२६॥ दक्षिणा । "हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्ति प्रयच्छ मे" ॥ ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मै देवायहविषा विधेम ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय दक्षिणां समर्पयामि इति हिरण्यादिदक्षिणां दद्यात् ॥ २७ ॥ कर्पूरार्तिक्यम् । "कदलीगर्भसंभूतं कर्पूरं च प्रदीपितम् । आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव" ॐ इदꣳहविः प्रजननम्मेऽअस्तुदशवीरꣳसर्वगणꣳस्वस्तये ॥ आत्मसनिप्रजासनिपशुसनिलोकसन्यभयसनि अग्निःप्रजाम्बहुलाम्मेकरोत्त्वन्नम्पयोरेतोऽअस्मासुधत्त ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय कर्पूरारार्तिक्यं प्रदर्शयामि ॥ २८ ॥ प्रदक्षिणा । "यानि कानि च पापानि जन्मान्तरकृतानि वै । तानि सर्वाणि नश्यन्तु प्रदक्षिणपदेपदे ॥" ॐ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः ॥ देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय० प्रदक्षिणां समर्पयामि ॥ विष्णौ चतस्रः प्रदक्षिणाः ४ शिवे तिस्रः ३ दुर्गायामेका १ गणेशे तिस्रः ३ रवौ सप्त ७ प्रदक्षिणाः कार्याः ॥ २९ ॥ नानापत्रपुष्पैः पुष्पाञ्जलिः ॥ "नानासुगन्धपुष्पाणि यथाकालोद्भवानि च । पुष्पाञ्जलिं मया दत्तं गृहाण परमेश्वर ॥" ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ॥ तेहनाकम्महिमानः सचन्तयत्रपूर्व्वेसाध्याःसन्तिदेवाः ॥ मूलं पठित्वा ॐ भू० अमुकदेवाय पुष्पाञ्जलिं स० ॥३०॥ प्रणामः । 'ॐ प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥' इति वदन्साष्टाङ्गप्रणामेनात्मानं निवेदयेत् ॥ ३१ ॥ ततस्तत्तत्स्तुतिपाठेन देवं स्तुत्वा ब्रह्मार्पणं कुर्यात् । एवं जपदेवतापूजां कृत्वा मालायाः संस्कारान्कुर्यात् ॥ अथ मालासंस्कारः । तत्रादौ कुशोदकसहितैः पञ्चगव्यैर्मालां प्रक्षाल्य अश्वत्थपत्रनवके रचिते कमले स्थापयित्वा ॐ ह्रीं अँआँइँईँउँऊँऋँॠँऌँॡँ एँऐँओँ औँअंअः कँखँगँघँङँ चँछँजँझँञँ टँठँडँढँणँ तँथँदँधँनँ पँफँबँभँमँ यँरँलँवँशँषँसँहँळँक्षँ इत्येतानि मातृकाक्षराणि मूलमन्त्रं च मालायां विन्यस्य पुनः पञ्चगव्येन प्रोक्ष्य ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ १ ॥ इति मन्त्रेण शीतजलेन प्रक्षालयेत् ॥ ॐवामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमोरुद्रायनमः कालायनमः कलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमः सर्वभूतदमनायनमोमनोन्मनायनमः ॥ १ ॥ इति मन्त्रेण चन्दनागुरुकर्पूरादिसुगन्धद्रव्यैर्घर्षयेत । ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ शर्व्वेभ्यः सर्व्वसर्व्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ १ ॥ इति मन्त्रेण तां धूपयेत । ॐ तत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रः प्रचोदयात् ॥ १ ॥ इति मन्त्रेण मालायाश्चन्दनं लेपयेत् ॥ ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मशिवोमेअस्तुसदाशिवोम् ॥ १ ॥ इति मन्त्रेण

मेरुसहितं प्रत्येकमणिं सकृत्सकृदेवाभिमंत्रयेत्। इत्यभिमन्त्र्य प्राणप्रतिष्ठां कुर्यात्। तद्यथा। अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि च्छन्दांसि। क्रियामयवपुःप्राणाख्या देवता। आँबीजं ह्रींशक्तिः क्रौंकीलकम् अस्यां मालायां प्राणप्रतिष्ठापने विनियोगः।ॐआँह्रींक्रौंअँयँरँलँवँशँषँसँहँळँक्षँअःक्रौंह्रींआँहँसःसोहँ अस्यां मालायां प्राणा इह प्राणास्तिष्ठन्तु ॐ आँह्रींक्रौंअँयँरँलँवँशँषँसँहँळँक्षँअ क्रौंह्रींआँहँसः सोहं अस्यां मालायां जीव इह स्थितः। ॐ आँह्रींक्रौंअँयँरँलँवँशँषँसँहँळँक्षँअः क्रौंह्रींआँहँसः सोहँ अस्यां मालायां सर्वेन्द्रियाणि। वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहागत्य स्वस्ति सुखं चिरं तिष्ठन्तु स्वाहा। एवं प्राणप्रतिष्ठां कृत्वा पुष्पाक्षतान् कुङ्कुमाक्तान् निःक्षिप्य गर्भाधानादिपञ्चदशसंस्कारसिद्ध्यर्थं पञ्चदशप्रणवावृत्तिं कृत्वा प्राणशक्तिं ध्यायेत्॥ "रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्च बाणान्॥ बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः॥१॥" एवं प्राणप्रतिष्ठां कृत्वा तत्रेष्टदेवतामावाह्य मूलमन्त्रेण षोडशोपचारैः संपूज्य "ॐह्रीं मालेमाले महामाये सर्वशक्तिस्वरूपिणि॥ चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव॥१॥ इति प्रार्थ्य। 'अविघ्नंकुरु माले त्वं सर्वकार्येषु सर्वदा'। इति तामादाय मन्त्रदेवतां ध्यायन् हृदये मालां धारयन् मन्त्रार्थं स्मरन्मध्यदिनावधि जपेत्। ततो जपान्ते पुनःप्रणवयुक्ता "ॐत्वं माले सर्वदेवानां प्रीतिदा शुभदा भव॥ शिवं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा॥१॥ तेन सत्येन सिद्धिं मे देहि मातर्नमोऽस्तु ते॥" ॐह्रीं सिद्ध्यै नमः। इति मालां शिरसि निधाय प्राणानायम्य गोमुखीं रहसि स्थापयेत। एवं संस्कृतां मालां न कस्यापि दर्शयेत्। नाशुचिः स्पर्शयेत्। नान्यं दद्यात्। अशुचिस्थाने न निधापयेत्। स्वयोनिवद्गुप्तं कुर्यात्। ततः पूर्ववत् मूलमन्त्रस्य ऋष्यादिन्यासं करन्यासं हृदयादिषडङ्गन्यासं च कृत्वा पुनः देवतां पञ्चोपचारैः संपूज्य नीराजनं कृत्वा पुष्पाञ्जलिं च दत्त्वा "ॐ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्॥ सिद्धिर्भवतु मे देव त्वत्प्रसादात्त्वयि स्थितिः"॥१॥ ॐइतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा। 'मां मदीयं च सकलं हरये ते समर्पये' ॐतत्सदिति॥ इति देवदक्षिणकरे जपसमर्पणजलं दद्यात्। अथ क्षमापनम्॥ "आवाहनं न जानामि न जानामि तवार्चनम्॥ पूजां चैव न जानामि क्षमस्व परमेश्वर॥१॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम॥ तस्मात्कारुण्यभावेन रक्षस्व परमेश्वर॥२॥ गतं पापं गतं दुःखं गतं दारिद्र्यमेव च॥ आगता सुखसंपत्तिः पुण्याच्च तव दर्शनात्॥ ३॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर॥ यत्पूजितं मया देव परिपूर्णं तदस्तु मे॥ ४॥ यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत्॥ तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर॥ ५॥ इति प्रार्थयेत्। प्रत्यहं समानसंख्यक एव जपो न तु न्यूनाधिकः। प्रत्यहं भूशयनं हविष्यान्नेन एकभक्तभोजनं ब्रह्मचर्यं त्रिकालं देवतार्चनं च कार्यम्। जपान्ते प्रत्यहं पुरश्चरणान्ते वा दशांशहोमं कुर्यात्॥ इति श्रीबीकानेरविषयान्तर्गतश्रीरत्नगढनिवासिना गौडवंशावतंसश्रीवसिष्ठगोत्रोद्भवेन श्रीरामकृष्णामरचन्द्रपौत्रेण श्रीकस्तूरीचन्द्रसूनुना श्रीमहादेवभक्तवाजसनेयिना पण्डितश्रीचतु

थींलालशर्मणा विरचिते अनुष्ठानप्रकाशे पद्धतिखण्डे सर्वदेवोपयोगिजपक्रमपूपद्धतिप्रकरणम् ॥ २ ॥ ॥ अथ हवनप्रकरणम् ॥ तावन्मण्डपकुण्डादिकरणप्रकारः । जपान्ते सुमुहूर्ते तुषाङ्गारपिपीलिकादिविवर्जिते सुदेशे मण्डपं कर्तुं यथोचितं मार्जनदहनखननसंप्लावनसंलेपनादिभिः शोधनोपायैर्भूमिं संशोध्य । तत्र निर्विघ्नतार्थं गणेशं कूर्मं शेषं द्विजांश्च संपूज्य भूम्यावाहनं कुर्य्यात् । ॐ भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींयच्छपृथिवींदृꣳहपृथिवीं माहिꣳसीः ॥ "आगच्छ सर्वकल्याणि वसुधे लोकधारिणि । उद्धृतासि वराहेण सशैलवनकानना ॥१॥ रत्नाकरे विष्णुना त्वं धृता वाराहरूपिणा॥ आगच्छ वरदे धात्रि यज्ञेऽस्मिञ्छुभदायिनि ॥ २ ॥ " ॐ भूर्भुवःस्वर्भूमे इहागच्छ इह तिष्ठ इत्यावाह्य । ॐ भूम्यै नमः । इति षोडशोपचारैः संपूज्य अञ्जलिं बद्ध्वा प्रार्थयेत् । "शेषमूर्ध्नि स्थितां रम्यां नानासुखविधायिनीम् ॥ विश्वधात्रीं महाभागां विश्वस्य जननीं पराम् ॥ १ ॥ यज्ञभागं प्रतीच्छस्व सुखार्थं प्रणमाम्यहम् । तवोपरि करिष्यामि मण्डपं सुमनोहरम् ॥ २ ॥ क्षन्तव्यं च त्वया देवि सानुकूला मखे भव ॥ निर्विघ्नं मम कर्मेदं यथा स्यात्त्वं तथा कुरु ॥३॥ " इति संप्रार्थ्य । ताम्रपात्रे गन्धदूर्वाक्षतफलपुष्पयवयुताऽर्घ्यमादाय जानुभ्यामवनिं गत्वा । "ॐ मण्डपं कारयाम्यद्य त्वदूर्ध्वं शुभलक्षणम् ॥ गृहाणार्घ्यं मया दत्तं प्रसन्ना सर्वदा भव ॥ १ ॥ " इत्यर्घ्यं दत्त्वा । स्वामीष्टमानां भूमिं स्वीकृत्य । पञ्चगव्येन हरितैः कुशैर्भूमिं प्रोक्षयेत् । तत्र मन्त्राः । ॐ इरावती धेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्त्थपृथिवीमभितोमयूखैः ॥ १ ॥ ॐ इदंविष्णुर्विचक्रमे त्रेधानिदधेपदम्॥समूढमस्यपाꣳसुरे ॥२॥ ॐमानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मंतःसदमित्त्वाहवामहे॥३॥ॐशन्नोमित्रःशंवरुणःशन्नोभवत्वर्यमा ॥ शन्नऽइन्द्रोबृहस्पतिःशन्नोविष्णुरुरुक्रमः॥४॥ ॐ शन्नऽइन्द्राग्नीभवतामवोभिःशन्नऽइन्द्रावरुणारातहव्या ॥ शन्नऽइन्द्रापूषणावाजसातौशमिन्द्रासोमासुवितायशंय्योः॥५॥ "ॐजितंते पुंडरीकाक्ष नमस्ते विश्वभावन ॥ सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज॥" ॐनृसिंह उग्ररूप प्रज्वलस्वाहा॥ ॐ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांसरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेःसाम्राज्ज्येनाभिषिञ्चामि ॥७॥ एतैर्मन्त्रैःपृथिवीं प्रोक्षयेत् । ततः श्वेतसर्षपान् गृहीत्वा । "ॐभूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन॥ते सर्वेऽप्यपसर्पन्तु विष्णुयागं करोम्यहम् ॥१॥ भूतप्रेतपिशाचाद्या ह्यपक्रामन्तु राक्षसाः । स्थानादस्माद्व्रजन्त्वन्यत्स्वीकरोमि भुवं त्विमाम् ॥२॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ ३ ॥ " इति सर्वत्र विकीर्य । तत्र मण्डपं हस्तोच्चं द्वादशाङ्गुलोच्चं वा त्रिंशतिहस्तं वा षोडश १६ द्वादश १२ दशा १० ऽष्टा ८ ऽन्यतमहस्तात्मकं भूमेर्यथावकाशं वा षोडशस्तम्भनिर्मितं चतुर्द्वारोपशोभितं तोरणध्वजपता

कादिसहितं सुवितानवस्त्रादर्शच्छत्रचामरादिभिर्मण्डितं निर्वातं मण्डपं विधाय (तदभावे छायामण्डपं वा कृत्वा) तमेव नवधा विभज्य मध्यभागे आहुतिप्रमाणं चतुरस्रं कुण्डं स्थण्डिलं वा कृत्वा तस्य ईशानकोणे ग्रहवेदीं हस्तमात्रां द्वादशाङ्गुलोच्चां वप्रद्वयवतीम्॥१॥ (पूर्वे) प्रधानदेवतापीठं चतुस्त्रिंशाङ्गुलविस्तारं द्वादशाङ्गुलोच्चम् ॥२॥ (अग्निकोणे) मातृकापीठं हस्तमात्रं द्वादशाङ्गुलोच्चम् ॥ ३ ॥ (निर्ऋतिकोणे) वास्तुपीठं हस्तमात्रं द्वादशाङ्गुलोच्चम् ॥४॥ (वायवीयकोणे) योगिनीक्षेत्रपालपीठं हस्तमात्रं द्वादशाङ्गुलोच्चं च ॥५॥ कृत्वा ग्रहपीठादैशान्ये रुद्रपीठं द्वादशाङ्गुलमात्रं तृतीयांशेनोच्चं कारयेत् । अथवा मध्यभागे प्रधानदेवतावेदीं कृत्वा तस्याः समन्तात् ईशानादिषु पूर्ववत् ग्रहादिमण्डलचतुष्टयं संपाद्य । पश्चिमे उत्तरे ईशान्यां वा होमानुसारेण चतुरस्रं यथोक्तं कुण्डं स्थण्डिलं वा कुर्य्यात् । तत्र पञ्चकुण्डीपक्षे मध्यपीठस्य समन्तात् सपादकरान्तरदेशे पूर्वादिचतुर्षु दिक्षु चतुरस्र१अर्धचन्द्र२वर्तुल३ अष्टदल ४ निभानि चत्वारि कुण्डानि संपाद्य पञ्चममिन्द्रेशानयोर्मध्ये होमानुसारेण चतुरस्रमाचार्यकुण्डं कार्यम् । अथवा कुण्डनिर्माणस्यातीव दुष्करतया न्यूनाधिकतायां दोषश्रवणाच्च कुण्डस्थाने स्थण्डिलान्येवाऽधुना कुर्य्यात् । एवं यथाविधि मण्डपादि रचयित्वा सुमुहूर्ते प्रातःकृत्यं निर्वृत्य शुद्धो भूत्वा गणेशादिस्मरणपूर्वकं यजमानो जापकैः सह मङ्गलघोषेणाचार्यहस्ते सामग्रीं दद्यात् । तान्युपकरणानि पश्चिमद्वारेणाचार्यो मण्डपमध्ये उपकल्पयेत् ॥ विशेषस्तु मत्कृते जलाशयोत्सर्गप्रकाशे द्रष्टव्यः ॥ इति मण्डपकुण्डादिनिर्माणप्रकारः ॥ अथ प्रयोगः । सुमुहूर्ते यजमानः सपत्नीकः पूर्ववत्तिलतैलेन कृताभ्यङ्गो मङ्गलस्नानं कृत्वा मङ्गलघोषपुरःसरं जलयात्रां कृत्वा भूषितसंपूर्णकलशहस्तः भद्रंकर्णेभिः" इति मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारसमीपमागत्य द्वारपूजां कुर्यात् । तद्यथा । पादौ प्रक्षाल्य आचम्य सामान्यार्घ्यं प्रकल्प्य । 'ॐ अस्त्रायफट्' इत्यभिमन्त्रितजलेन द्वारं प्रोक्ष्य (ऊर्ध्वशाखायाम्) ॐ गं गणपतये नमः । इति गणपतिं संपूज्य (तद्दक्षिणभागे) ॐ महालक्ष्म्यै नमः । (वामभागे) ॐ सरस्वत्यै नमः इति पूजयेत् । (ततो दक्षिणशाखायाम्) ॐ विघ्नेशाय नमः । ॐ गङ्गायै नमः ॐ यमुनायै नमः । (वामशाखायाम्) ॐ क्षेत्रपालाय नमः । ॐ स्वः सिन्धवे नमः । ॐ यमुनायै नमः इति संपूज्य (पुनर्दक्षिणशाखायाम्) ॐ धात्रे नमः । (वामशाखायाम्) ॐ विधात्रे नमः । (पुनर्दक्षिणशाखायाम्) । ॐ शंखनिधये नमः । (वामशाखायाम् । ॐ पद्मनिधये नमः । (अधोदेहल्या) ॐ अस्त्राय नमः । इत्यभ्यर्च्य । पूर्वोक्ततत्तद्देवद्वारपालानिन्द्रादिदिक्पालांश्च पूजयेत् । ॐ द्वारपालेभ्यो नमः । ॐ इन्द्रादिदिक्पालेभ्यो नमः।एवं द्वारपूजां विधाय।नमस्कृत्य मूलमन्त्रं पठन् यागमण्डपं प्रविश्य "ॐअपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥१॥अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ॥ सर्वेषामवरोधेनब्रह्मकर्म समारभे ॥ २ ॥ इति मन्त्रद्वयेन गौरसर्षपान्सर्वत्र विकीर्य । ॐ आपोहिष्ठा० १ मानस्तोके० २ अपवित्रः० इति मन्त्रैः मण्डपान्तरं प्रोक्ष्य । ईशान्याम्ॐ ब्रह्मणे नमः । वास्तुपुरुषाय नमः । क्षेत्रपालाय नमः।इति प्रणमेत्॥तत आचार्याज्ञया स्वासने प्राङ्मु

ख उपविश्य स्वदक्षिणपार्श्वे संभारान् वामपार्श्वे जलपूरितं कर्मपात्रं च संस्थाप्य पत्न्यां समारब्धः स्मार्तविधिनाचम्य प्राणानायम्य। ॐ आनोभद्रा इत्यादिशान्तिपाठं पूर्वोक्तं पठित्वा लक्ष्मीनारायणादिदेवान् प्रणमेत्। ततो देशकालौ संकीर्त्य। अमुकगोत्रोऽमुकशर्मा अमुकदेवताप्रीत्यर्थम् अमुककामनया ब्राह्मणद्वारा कृतस्यामुकमन्त्रपुरश्चरणस्य साङ्गतासिद्ध्यर्थममुकसंख्यापरिमितजपदशांशहोमतद्दशांशतर्पणतद्दशांशमार्जनतद्दशांशब्राह्मणभोजनरूपकर्म करिष्ये। तदङ्गत्वेन गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धमाचार्यादिवरणं च करिष्ये। इति संकल्प्य। ॐ सुमुखश्चैकदन्तश्चेत्यादिस्मरणपूर्वकं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च पूर्ववत् कृत्वा आचार्यादिवरणं कुर्यात्। आचार्यस्य पादप्रक्षालनं कृत्वा। वरणद्रव्याणि जलं चादाय। आचार्यस्य दक्षिणजान्वालभ्य। देशकालौ संकीर्त्य करिष्यमाणामुकजपदशांशहोमकर्मणि अमुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्गन्धाक्षतपुष्पताम्बूलमुद्रिकाकमण्डलुयुग्मवासोभिराचार्यत्वेन त्वामहं वृणे इति वृत्वा वृतोऽस्मीति प्रतिवचनानन्तरं गन्धादिभिः संपूज्य। "ॐ आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः॥ तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥१॥" इति प्रार्थयेत्। (ब्रह्मवरणम्) तथैव देशकालौ संकीर्त्य करिष्यमाणामुकजपदशांशहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्गन्धाक्षतपुष्पताम्बूलमुद्रिकाकमण्डलुवासोभिर्ब्रह्मत्वेन त्वामहं वृणे॥ वृतोऽस्मीति प्रतिवचनानन्तरं ब्रह्माणं संपूज्य। "यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः। तथा त्वं मम यज्ञेऽस्मिन्ब्रह्मा भव द्विजोत्तम॥१॥" इति प्रार्थयेत्। (ऋत्विग्वरणम्) सर्वानृत्विज उदङ्मुखानुपवेश्य। देशकालौ स्मृत्वा। करिष्यमाणामुकजपदशांशहोमकर्मणि तत्तत्कर्मकरणार्थममुकामुकगोत्रोत्पन्नानमुकशर्मण ऋत्विक्त्वेन युष्मानहं वृणे। वृताः स्म इति तैरुक्ते तान् गन्धादिभिः संपूज्य। "ऋत्विजश्च यथापूर्वं शक्रादीनां मखेऽभवन्॥ यूयं तथा मे भवितुमृत्विजोऽर्हथ सत्तमाः॥१॥" इति प्रार्थयेत्। यजमानर्त्विजः परस्परं यज्ञकङ्कणं बध्नीयुः॥ ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्॥ दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥१॥ (एतावद्रूपं यज्ञस्य यद्देवैर्ब्रह्मणा कृतम्॥ तदेतत्सर्वमाप्नोति यज्ञे सौत्रामणीसुते॥१॥) ततो यजमानस्य तिलकाशीर्वादः। ॐ स्वस्तिनऽइन्द्र इत्यादिमंत्रैः कार्य्यः॥ अथ प्रार्थना॥ "ब्राह्मणाःसन्तु मे शस्ताः पापात्पान्तु समाहिताः॥ देहिनां चैव दातारः पातारः सर्वदेहिनाम्॥१॥ जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः॥देवानां च ऋषीणां च तृप्त्यर्थं याजकाः कृताः॥२॥येषां देहे स्थिता वेदा पावयन्ति जगत्त्रयम्॥ रक्षंतु सततं तेषां जपयज्ञैर्व्यवस्थिताः॥३॥ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम्॥तेषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः॥४॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः॥ सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः॥ ५॥ श्रोत्रियाः सत्यवाचश्च देवध्यानरताः सदा॥ यद्वाक्यामृतसंसिक्ताः शुद्धिं यान्ति नरद्रुमाः॥ ६॥ अङ्गीकुर्वंतु कर्मैतत्कल्पद्रुमसमाशिषः॥ यथोक्तनियमैर्युक्ता मंत्रार्थे स्थिरबुद्धयः॥७॥ यत्कृपालोचनात्सर्वे ऋषयो वृद्धिमाप्नुयुः॥ अस्मिन्होमे मया पूज्याः सन्तु मे नियमान्विताः॥८॥ अक्रोधनाः शौचपराः सततं

१ वापीकूपतडागानां प्रतिष्ठायां महोत्सवे। व्रतादौ शान्तिके चैव पत्नी स्यादुत्तरे सदा॥ शांतिकेषु च सर्वेषु प्रतिष्ठोद्यापनादिषु। वामे उपविशेत्पत्नी व्याघ्रस्य वचनं यथा॥

ब्रह्मचारिणः॥ग्रहध्यानरता नित्यं प्रसन्नमनसः सदा॥९॥अदुष्टभाषणाः सन्तु मा सन्तु परनिन्दकाः॥ममापि नियमा ह्येते भवन्तु भवता-मपि॥१०॥अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्चिता मया॥सुप्रसन्नैः प्रकर्तव्यं शान्तिकं विधिपूर्वकम्॥११॥इत्याचार्यादिवरणप्रयोगः॥ (अथाचार्यकर्म)आचम्य प्राणानायम्य देशकालौ स्मृत्वा अस्मिन् सनवग्रहमखामुकदेवत।मन्त्रपुरश्चरणजपदशांशहोमकर्मणि यजमा-नेन वृतोऽहमाचार्यकर्म करिष्ये ।तदङ्गत्वेन शरीरशुद्ध्यर्थं पुरुषसूक्तजपं करिष्ये इति संकल्प्य पुरुषसूक्तं षोडशर्चं जपेत् । तत आचार्यो वामहस्ते गौरसर्षपाक्षतजमिश्रितान् गृहीत्वा दिग्रक्षणं कुर्यात् ॥ तत्र मन्त्राः । ॐरक्षोहणम्बलगहनम्वैष्णवीमिदमहन्तम्बलगमु-त्किरामियन्मेनिष्ठ्योयममात्यौनिचखानेदमहन्तम्बलगमुत्किरामियम्मेसमानोयमसमानोनिचखानेदमहन्तम्बलगमुत्किरामियम्मे सबन्धुर्य्यमसंबन्धुर्निचखानेदमहन्तम्बलगमुत्किरामियम्मेसजातोयमसंजातोनिचखानोत्कृत्याङ्किरामि१।रक्षोहणौवोबलगहनल्प्रोक्षा-मिव्वैष्णवान्नक्षोहणौवोबलगहनोवनयामिव्वैष्णवान्नक्षोहणौवोबलगहनोवस्तृणामिव्वैष्णवान्नक्षोहणौ वांबलगहनाऽउपदधामि व्वैष्णवीरक्षोहणौवांबलगहनौपर्यूहामिव्वैष्णवीव्वैष्णवमसिव्वैष्णवास्थ२।रक्षसाम्भागोसिनिरस्तठंरक्षऽइदमहठंरक्षोभितिष्ठामीदमह ठंरक्षोवबाधऽइदमहठंरक्षोधमन्तमोनयामिघृतेनद्यावापृथिवीप्रोर्णुव्वाथांवायोव्वेस्तोकानामग्निराज्यस्यव्वेतुस्वाहाकृते । ऊर्ध्वनभसंमारु-तङ्गच्छतम्॥३॥ रक्षोहाव्विश्वचर्षणिरभियोनिमयोहतेद्रोणासधस्थमासदत॥४॥"अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः॥ येभूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥१॥अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम्॥सर्वेषामविरोधेन शान्तिकर्म समारभे॥२॥यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः॥स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु॥३॥भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः॥स्थाना-दस्माद्व्रजन्त्वन्यत्स्वीकरोमि भुवं त्विमाम्॥४॥भूतानि राक्षसा वापि यत्र तिष्ठन्ति केचन॥ते सर्वेऽप्यपगच्छन्तु शान्तिकं तुकरोम्यहम् ॥५॥इति मन्त्रैरीशानादिसर्वदिक्षु विकिरेत्॥(उदकोपस्पर्शः)ततः (पञ्चगव्यकरणम्) तद्यथा—गायत्र्या गोमूत्रम्॥ॐतत्सवितु ० ॥१॥ गन्धद्वारामिति गोमयम् । ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥२॥आप्यायस्वेति क्षीरम् । ॐ आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् । भवाव्वाजस्य सङ्गथे ॥३॥ दधिक्राव्णेति दधि । ॐदधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य व्वाजिनः॥ सुरभिनो मुखाकरत्प्रणऽआयूठंषि तारिषत् ॥४॥ तेजोसीत्याज्यम्॥ ॐतेजोसि शुक्रमस्यमृतमसि धामना-मासि प्प्रियन्देवानामनाधृष्टन्देवयजनमसि॥५॥देवस्यत्वेति कुशोदकम् । ॐ देवस्य त्वा सवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ता-भ्याम्॥६॥ॐइति प्रणवेन यज्ञकाष्ठेनालोड्य आपोहिष्ठेति त्रिभिर्मन्त्रैः कर्मभूमिं यज्ञसंभारांश्च प्रोक्षयेत् ॥ ततो यजमानहस्तप्रमाणं चतुरस्रं चतुरङ्गुलोन्नतं स्थण्डिलं विरच्य तत्र भूमिपूजनम् । ॐभूरसि भूमिरस्यदितिरसि व्विश्वधाया व्विश्वस्य भुवनस्य धर्त्री ॥

पृथिवींयच्छपृथिवींदृᳬहपृथिवीम्माहिᳬसीः ॥ ॐभू० पृथिवीकूर्मानन्तदेवताभ्यो नमः । इति मन्त्रेण षोडशोपचारैः संपूजयेत् । ततः कृताञ्जलिः । ॐ स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पति र्दधातु ॥ १ ॥ इति वारत्रयं पठित्वा ॐ देवा आयान्तु । यातुधाना अपयान्तु । विष्णो देवयजनं रक्षस्व । इति प्रार्थयेत् ॥ ततो नैर्ऋत्यां वास्तुमण्डले वास्तुपूजां कृत्वा मण्डपपक्षे मण्डपपूजां च कुर्य्यात् । वास्तुपूजा मण्डपपूजा तु मत्कृते प्रतिष्ठाप्रकाशे वोत्सर्ग प्रकाशे द्रष्टव्या, अत्र विस्तरभयान्न लिखिता ॥ इति दिग्रक्षणादिकर्म ॥ अथ वेदिकाऽग्निस्थापनप्रकारः ॥ मण्डपपूजानन्तरं यजमानः प्रक्षालितपाणिपादः स्वाचान्तः सर्वैराचार्य्यादिभिर्ऋत्विग्भिः सहितः प्राग्द्वारेण मण्डपान्तः प्रविश्य अग्न्यायतनाद्दक्षिणतो ब्रह्मासनस्थानात् पश्चाद्यजमानः स्वासने उदङ्मुख उपविशेत् । आचार्य्यस्तु कुण्डपश्चिमत उपविश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा अद्यामुकमन्त्रदशांशहवनकर्मण्यग्निप्रतिष्ठां करिष्ये, तदङ्गतया समार्जनमेखलायोनिदेवतास्थापनपूजनादिकं करिष्ये इति च संकल्पं कुर्य्यात् । अथाग्न्यायतनं संमृज्य कुशोदकेनाभ्युक्ष्य हस्ते पुष्पाण्यादाय कुण्डं स्पृष्ट्वा । ॐ आवाहयामि तत्कुंडं विश्वकर्मविनिर्मितम्॥शारीरं यच्च ते दिव्यमग्न्यधिष्ठानमद्भुतम्॥१॥इत्यावाह्य ॐकुण्डाय नमः । इति कुण्डं संपूज्य ॐये च कुण्डे स्थिता देवाः कुण्डाङ्गेयाश्च देवताः॥ऋद्धिं यच्छन्तु ते सर्वे यज्ञसिद्धिं मुदान्विताः॥१॥ हे कुण्ड तव निर्माणं रचितं विश्वकर्मणा॥अस्माकं वाञ्छितां सिद्धिं यज्ञसिद्धिं ददातु भोः॥२॥इति प्रार्थ्य कुण्डमध्ये विश्वकर्माणं पूजयेत्।ॐविश्वकर्मन्निति मन्त्रस्य भौवनऋषिस्त्रिष्टुप्छन्दो विश्वकर्मा देवता विश्वकर्मपूजने विनियोगः । ॐव्विश्वकर्म्मन्हविषाव्वर्द्धनेनत्रातारमकृणोरवद्ध्यंतस्मैव्विशः समनंतपूर्वीरयमुग्रोव्विहव्यो यथासत ॥ उपयामगृहीतोसीन्द्रायत्वाविश्वकर्मणऽएषतेयोनिरिन्द्रायत्वाव्विश्वकर्मणे॥ १ ॥ॐभूर्भुवः स्वः विश्वकर्मन्निहागच्छेह तिष्ठ इत्यावाह्य । ॐ विश्वकर्मणे नम इति गन्धादिभिःसंपूज्य । अज्ञानाज्ज्ञानतो वापि दोषाःस्युः खननोद्भवाः । नाशाय त्वं हि तान्सर्वान्विश्वकर्मन्नमोऽस्तु ते ॥ इति संप्रार्थ्य उपरि मेखलायां श्वेतवर्णालङ्कृतायां विष्णुं स्थापयेत् । ॐविष्णो यज्ञपते देव दुष्टदैत्यनिषूदन ॥ विभो यज्ञस्य रक्षार्थं कुण्डेऽस्मिन्सन्निधो भव ॥१॥ ॐ भूर्भुवः स्वर्विष्णो इहागच्छ इह तिष्ठेत्यावाह्य॥इदं विष्णुरिति मन्त्रस्य मेधातिथिर्ऋषिर्गायत्रीछन्दो विष्णुर्देवता विष्णुपूजने विनियोगः॥ॐ इदं व्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्यपाᳬसुरे॥ ॐविष्णवे नमः । इति मन्त्रेण विष्णुं संपूज्य ॥ॐ प्रथममेखलायै विष्णुदेवतायै श्वेतवर्णालङ्कृतायै नम इति मेखलां च पूजयेत्॥ततो मध्यमेखलायां रक्तवर्णालङ्कृतायां ब्रह्माणं स्थापयेत् ॥ॐ हंसपृष्ठसमारूढ देवदेवगणावृत ॥ रक्षार्थं मम सत्रस्य कुण्डेऽस्मिन्सन्निधो भव ॥१॥ ॐ भूर्भुवः स्वर्ब्रह्मन्निहागच्छ॰इत्यावाह्य ॥ ब्रह्मजज्ञानमिति मन्त्रस्य विवस्वान् ऋषिस्त्रिष्टुप्छन्दो ब्रह्मा देवता ब्रह्मपूजने विनियोगः । ॐब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः सबुध्न्याऽउपमाऽअस्य व्विष्ठाः सतश्चयोनिमसतश्च व्विवः ॐ ब्रह्मणे नमः । इति मन्त्रेण ब्रह्माणं संपूज्य । द्वितीयमेखलायै ब्रह्मदेवतायै रक्तवर्णालङ्कृतायै नमः ।इति मेखलां च पूजयेत् । ततः अधोमेखलायां कृष्णवर्णालंकृतायां रुद्रं॰ॐगङ्गाधर महादेव वृषारूढ महेश्वर॥आगच्छ भगवन्रुद्र कुण्डेऽस्मिन्सन्निधो भव॥१॥ॐभूर्भुवःस्वः

रुद्र इहागच्छ इह तिष्ठ इत्यावाह्य।नमस्ते रुद्र मन्यव इति परमेष्ठी ऋषिर्गायत्री छन्दः रुद्रो देवता रुद्रपूजने विनियोगः।ॐनमस्ते रुद्र मन्यवऽउतोतऽइषवेनमः बाहुभ्यामुत ते नमः ॐ रुद्राय नमः।इति रुद्रं संपूज्य।ॐ तृतीयमेखलायै रुद्रदेवतायै कृष्णवर्णालङ्कृतायै नमः। इति मेखलां च पूजयेत् ॥ अथ योनिपूजा ॥ ॐ क्षत्रस्य योनीति मन्त्रस्य विवस्वान् ऋषिर्द्विपदा गायत्री छंदः योनिर्देवता योनिपूजने विनियोगः ॥ॐ क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि मात्वहिंठ्ठसीन्मामाहिंठ्ठसीः॥ ॐ जगदुत्पत्तिहेतुकायै मनोभवयुतायै योन्यै नमः । इति गन्धादिभिः संपूज्य ॥ योने त्वं विश्वरूपासि प्रकृतिर्विश्वधारिणी । कामस्था कामरूपा च वियोन्यै ते नमोनमः ॥ इति प्रार्थयेत् ॥ अथ कण्ठपूजनम् ॥ जीवनं सर्वजन्तूनां स्वगादिस्थानमुत्तमम्॥उत्तमाङ्गस्य चाधारं कण्ठमावाहयाम्यहम् ॥ १ ॥ इत्यावाह्य ॥ नीलग्रीवा इति परमेष्ठी ऋषिरनुष्टुप्छन्दो रुद्रो देवता कंठपूजने वियोगः । ॐ नीलग्रीवाः शितिकंठादिवठ्ठरुद्राऽउपश्रिताः ॥ तेषाठ्ठंसहस्रयोजनेवधन्वानितन्मसि । ॐ कंठाय नमः । इति संपूज्य । कंठमङ्गलरूपेण सर्वकुण्डे प्रतिष्ठितः ॥ परितो मेखलास्त्वत्तो रचिता विश्वकर्मणा॥१॥इति प्रार्थयेत् ॥ ततो नाभिपूजा॥पद्माकाराथवा कुण्डसदृशाकृतिबिभ्रती॥ आधारः सर्वकुण्डानां नाभिमावाहयाम्यहम् ॥१॥ इत्यावाह्य नाभिर्मेचित्तमिति प्रजापतिर्ऋषिर्महापङ्क्तिर्जगतीच्छन्दो रुद्रो देवता रुद्रपूजने विनियोगः । ॐ नाभिर्म्मे चित्तं विज्ञानं पायुर्मेपचितिर्भसत् । आनन्दनन्दावाण्डौमेभगः सौभाग्यं यशः।जङ्घाभ्यां पद्भ्यांधर्मोस्मि विशि राजा प्रतिष्ठितः ॥१॥ॐनाभ्यै नमः । इति संपूज्य ॐ । नाभे त्वं कुण्डमध्ये तु सहदेवैः प्रतिष्ठिता॥अतस्त्वं पूजिता देवि शुभदा ऋद्धिदा भव ॥ १ इति नत्वा कुण्डमध्ये निर्ऋतिकोणे वास्तुपुरुषं पूजयेत । पुष्पाण्यादाय । आवाहयामि देवेशं वास्तुदेवं महाबलम् ॥ देवदेवं गणाध्यक्षं पातालतलवासिनम् ॥ १ ॥ इत्यावाह्य ॥ वास्तोष्पते इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो वास्तुर्देवता वास्तुपूजने विनियोगः । ॐ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवो भवानः । यत्वेमहे प्रतितन्नो जुषस्व शन्नोऽअस्तु द्विपदेशं चतुष्पदे ॥१ ॥ ॐ वास्तुपुरुषाय नमः । इति संपूज्य बलिं दत्वा । यस्य देहे स्थिता क्षोणी ब्रह्माण्डं विश्वमण्डलम् ॥ व्यापिनं भीमरूपं च सुरूपं विश्वरूपिणम् ॥ पितामहसुतं मुख्यं वन्दे वास्तोष्पतिं प्रभुम् ॥ १ ॥ इति प्रणमेत् ॥ इति कुण्डपूजा ॥ ( अथाग्न्यानयनप्रकारः ) आचार्यः सदाचारपञ्चमहायज्ञादिक्रियावतां ब्रह्मक्षत्रियविशां गृहात् अरणिमन्थनाद्वा सूर्यकान्तमणेर्वा स्वस्तिवाचनपूर्वकमग्निं मृन्मये पात्रे ताम्रेण पात्रेण गृहीत्वा दर्भपाणिः सन् वेदघोषेण तूर्यनादेन ब्राह्मणैः परिवृत आनीय तैजसीं शक्तिं ध्यात्वा पृष्ठतोऽनवलोकयन् मण्डपमागच्छेत् । इत्यग्न्यानयनप्रकारः ॥ ततो यथापरिमिते तुषकेशशर्करादिरहिते कुण्डे स्थण्डिले वा चतुरस्रां भूमिं कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयेनोपलिप्य खादिरस्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्योल्लेखनक्रमेण वानामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्योर्ध्वं प्रक्षिप्य जलेन न्युब्जपाणिनाभ्युक्ष्य कांस्यपात्रेण पिहितमग्निं कुण्डस्याग्नेयकोणे निधाय ज्वलत्कुशेन ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतुरिप्रवाहः । इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ १ ॥ इति मन्त्रेण

क्रव्यादांशं नैर्ऋत्यां दिशि परित्यज्य । ॐअग्निं दूतम्पुरोदधेहव्यवाहमुपब्रुवे । देवाँ२ऽआसादयादिह ॥ १ ॥ इति मन्त्रेण योनिमार्गेणात्माभिमुखमग्निं संस्थापयेत् । ततः अग्न्यानीतपात्रे साक्षतोदकं निषिच्य अग्निमुखं कृत्वा ध्यायेत् । ॐ चत्वारि शृङ्गास्त्रयोऽअस्य पादा द्वे शीर्षे सप्तहस्तासोऽअस्य । त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याँ२ऽआविवेश ॥ १ ॥ सप्तहस्तश्चतुश्शृंगः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः ॥ १ ॥ स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा । बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् ॥२॥ तोमरं व्यजनं वामे घृतपात्रं च धारयन् । आत्माभिमुखमासीन एवंरूपो हुताशनः ॥३॥ इति ध्यात्वा । अग्ने वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलेति त्रिप्रवरान्वित भूमिर्माता वरुणः पिता मेषध्वजः प्राङ्मुखो मम संमुखो भव । इति यथानामानमग्निं प्रतिष्ठाप्य । ॐ अग्निपुरुषाय नमः । इति मन्त्रेण वायव्यकोणे बहिः अग्निं षोडशोपचारैः संपूज्य । ॐ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । हिरण्यवर्णमनलं समृद्धं विश्वतोमुखम् ॥२॥ इति प्रार्थयेत् ॥ इति वैदिकाग्निस्थापनप्रयोगः ॥ एवं कुण्डसंस्कारपूर्वकमग्निस्थापनं कृत्वा ईशान्यां ग्रहपीठे ग्रहान् संस्थापयेत । ( अथ नवग्रहस्थापनप्रयोगः ) तत्र पीठमध्ये वर्तुलद्वादशाङ्गुलमण्डले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैरावाहयेत् । ॐ आकृष्णेनरजंसावर्तमानोनिवेशयंन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसविितारथेनादेवोयांतिभुवनानिपश्यंन् । ॐ भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपगोत्र रक्तवर्ण भो सूर्य्य इहागच्छ इह तिष्ठ । ॐ सूर्य्याय नमः सूर्यमावाहयामि ॥ १ ॥ आग्नेय्यां दिशि चतुरस्रेऽर्धचन्द्राकारे वा चतुर्विंशत्यङ्गुले मण्डले सोमं शुक्लपुष्पैरावाहयेत् । ॐ इमंदेवाअसपत्नर्ठ्ंसुवध्वम्महतेक्षत्रायंमहतेज्यैष्ठ्यांयमहतेजानंराज्यायेंद्रस्येंद्रियायं । इमममुष्यंपुत्रममुष्यैपुत्रमस्यैविशऽएषवोंमीराजांसोमोस्माकम्ब्राह्मणानार्ठ्ंराजां । ॐ भूर्भुवः स्वः यमुनातीरदेशोद्भव आत्रेयगोत्र शुक्लवर्ण भो सोम इहा० ॐ सोमाय नमः सोममावाहयामि ॥ २ ॥ ततो दक्षिणस्यां दिशि त्रिकोणे त्र्यङ्गुले मण्डले दक्षिणाभिमुखं भौमं रक्तपुष्पाक्षतैः । ॐ अग्निर्मूर्द्धादिवः ककुत्पतिःपृथिव्याऽअयम् । अपार्ठ्ंरेतार्ठ्ंसिजिन्वति । ॐ भू० अवंतिदेशोद्भव भारद्वाजगोत्र रक्तवर्ण भो भौम इहा० ॐभौमाय नमः भौममावाहयामि ॥३॥ ईशान्यां दिशि बाणाकारे चतुरङ्गुले मण्डले उदङ्मुखं बुधं पीतपुष्पाक्षतैः । ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्त्तेसर्ठ्ंसृजेथामयञ्च । अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत । भू० मगधदेशोद्भव आत्रेयगोत्र पीतवर्ण भो बुध इहा० ॐ बुधाय नमः बुधमावाहयामि ॥ ४ ॥ उत्तरस्यां दिशि । लम्बदीर्घचतुरस्रे पट्टाकारे षडङ्गुले मण्डले बृहस्पतिं पीतपुष्पाक्षतैः॥ ॐ बृहस्पतेऽअतियदर्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥ ॐ भू० सिंधुदेशोद्भव आङ्गिरसगोत्र पीतवर्ण भो बृह

स्पते इहा० ॐ बृहस्पतये नमः बृहस्पतिमावाहयामि ॥५॥ पूर्वस्यां दिशि पञ्चकोणे नवाङ्गुले मण्डले प्राङ्मुखं शुक्रं शुक्लपुष्पाक्षतैः॥ ॐ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयः९सोमम्प्रजापतिः। ऋतेनसत्यमिन्द्रियंविपानंᳬशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु। ॐ भू० भोजकटदेशोद्भव भार्गवसगोत्र शुक्लवर्ण भो शुक्र इहा० ॐ शुक्राय नमः शुक्रमावाहयामि ॥ ६ ॥ पश्चिमायां दिशि धनुषाकारे द्व्यङ्गुले मण्डले प्रत्यङ्मुखं शनैश्चरं कृष्णपुष्पाक्षतैः। ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये। शंय्योरभिस्रवन्तुनः। ॐ भू० सौराष्ट्रदेशोद्भव काश्यपगोत्र कृष्णवर्ण भो शनैश्चर इहा०। ॐ शनैश्चराय नमः। शनैश्चरमावाहयामि ॥ ७ ॥ नैर्ऋत्यां दिशि शूर्पाकारे द्वादशाङ्गुले मण्डले दक्षिणाभिमुखं राहुं कृष्णपुष्पाक्षतैः। ॐ कयानश्चित्रऽआभुवदूतीसदावृधःसखा। कयाशचिष्ठयावृता। ॐ भू० राठिनापुरोद्भव पैठीनसगोत्र कृष्णवर्ण भो राहो इहा० ॐ राहवे नमः राहुमावाहयामि ॥ ८ ॥ वायव्यां दिशि ध्वजाकारे षडङ्गुले मण्डले दक्षिणाभिमुखं केतुं धूम्रपुष्पाक्षतैः। ॐ केतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे। समुषद्भिरजायथाः। ॐ भूर्भुवः स्वः अन्तर्वेदिसमुद्भव जैमिनिगोत्र धूम्रवर्ण भो केतो इहागच्छेह तिष्ठ। ॐ केतवे नमः। केतुमावाहयामि ॥ ९ ॥ इति सूर्य्यादिनवग्रहस्थापनम् ॥ अथाधिदेवतास्थापनम् ॥ तत्र सूर्य्यदक्षिणपार्श्वे। ॐ त्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबंधनान्मृत्योर्म्मुक्षीयमामृतात्। ॐ भूर्भुवः स्वः ईश्वर इहागच्छेह तिष्ठ। ॐ ईश्वराय नमः। ईश्वरमावाहयामि ॥ १ ॥ (एवं सर्वत्र) सोमदक्षिणपार्श्वे ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम्। इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण। ॐ भू० उमे इहा० उमायै नमः ॥ उमाम्० ॥२॥ भौमदक्षिणपार्श्वे। ॐ यदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात्। श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन्। ॐ भू० स्कंद इहा० स्कन्दाय० स्कन्दम्०॥३॥ बुधदक्षिणपार्श्वे। ॐ विष्णोरराटमसिविष्णोः९श्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि। वैष्णवमसिविष्णवेत्वा। ॐ भू० विष्णो इह० विष्णवे नमः॥विष्णुम्० ॥४॥ गुरुदक्षिणपार्श्वे। ॐ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यःशूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुः९सप्तिःपुरन्धिर्य्योषाजिष्णूरथेष्ठाः। सभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनःपर्जन्योवर्षतुफलवत्योनऽओषधयःपच्यंतांय्योगक्षेमोनःकल्पताम्। ॐ भू० ब्रह्मणे नमः ब्रह्माणम्० ॥५॥ शुक्रदक्षिणपार्श्वे। ॐ सजोषाऽइन्द्रसगणोमरुद्भिःसोमम्पिबवृत्रहाशूरविद्वान्। जहिशत्रूँ १ रपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनः। ॐ भू० इंद्र इहा० इंद्राय नमः इन्द्रमावा० ॥६॥ शनिदक्षिणपार्श्वे। ॐ यमायत्वांगिरस्वतेपितृमतेस्वाहा। स्वाहाघर्मायस्वाहाघर्म्मः९पित्रे

ॐ भू० यम इहा० यमायनमः यमम्० ॥७॥ राहुदक्षिणपार्श्वे । ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि । समापोऽअद्भिरग्मतसमोषधीभिरोषधीः। ॐभू० काल इहा० कालाय० काल०॥८॥ केतुदक्षिणपार्श्वे । ॐचित्रावसोस्वस्तितेपारमशीय । ॐ भू० चित्रगुप्त इहा० ॐ चित्रगुप्ताय नमः । चित्रगुप्तमावाहयामि ॥ ९ ॥ इत्यधिदेवताः ॥ अथ प्रत्यधिदेवतास्थापनम् ॥ सूर्य्यस्य वामपार्श्वे । ॐ अग्निंदूतम्पुरोदधेहव्यवाहमुपब्रुवे । देवाँ २॥ ऽआसादयादिह । ॐ भू० अग्ने इहा० ॐ अग्नये नमः । अग्निमा० ॥ १ ॥ सोमवामपार्श्वे।ॐआपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन ॥ महेरणायचक्षसे ॐभू० आप इहागच्छत० अद्भ्यो नमः । अपः० ॥ २ ॥ भौमवामपार्श्वे । ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी । यच्छानः शर्म्मसप्रथाः॥ॐभू० पृथिवि इहा० ॐपृथिव्यै नमः । पृथिवी० ॥३॥ बुधवामपार्श्वे । ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाꣳसुरेस्वाहा । ॐ भू० विष्णो इहा० ॐ विष्णवे नमः । विष्णुमावा० ॥ ४ ॥ गुरुवामपार्श्वे । ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः । ॐ भू० इन्द्र इहा० ॐ इन्द्राय० इन्द्रं० ॥५॥ शुक्रवामपार्श्वे ।ॐ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः॥ पूषासिघर्म्मायदीष्व ॐ भू० इन्द्राणि इहा० ॐ इन्द्राण्यै नमः । इन्द्राणीं० ॥६॥ शनिवामपार्श्वे ॐप्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव । यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयꣳस्यामपतयोरयीणाम् । भू० प्रजापते इहा० ॐ प्रजापतये नमः । प्रजापतिम्० ॥७॥ राहुवामपार्श्वे । ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु । येऽअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॐ भू० सर्पा इहागच्छत इह तिष्ठत । ॐ सर्पेभ्यो नमः । सर्पान्० ॥८॥ केतुवामपार्श्वे । ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः । ॐ भू० ब्रह्मन् इ० ॐ ब्रह्मणे नमः । ब्रह्माणमावाहयामि ॥ ९ ॥ इति प्रत्यधिदेवतास्थापनम् ॥ अथ पञ्चलोकपालस्थापनम् ॥ राहोरुत्तरतः । ॐ गणानान्त्वा० ॐ भू० गणपते इहा० ॥१॥ शनेरुत्तरतः ॐअंबेऽअंबिकेंबालिकेनमानयतिकश्चनससस्त्यश्वकःसुभद्रिकांकाम्पीलवासिनीम् ॥ ॐभू० दुर्गे इहा० दुर्गायै० ॥२॥ रवेरुत्तरतः—ॐ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयंपातःस्वस्तिभिःसदानः ॐ भू० वायो इहा० वायवे नमः॥३॥ राहोर्दक्षिणे—ॐघृतङ्घृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यहविरसिस्वाहादिशःप्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा ॐभू० आकाश इहा० आकाशाय नमः॥४॥ केतोर्दक्षिणे ॐयावाङ्कशामधुमत्याश्विनासूनृतावतीतयायज्ञम्मिमिक्षताम् ॐ भू० अश्विनौ इहागच्छतम् अश्विभ्यां नमः ॥५॥ अथ प्रागादितः पीठसमन्ताद्दिक्पालानावाहयेत्। पूर्वे ॐत्रातारमि

न्द्रंसवितारमिन्द्रठं्हवेहवेसुहवठंशूरमिन्द्रम्॥ह्वयामिशक्रम्पुरुहूतमिन्द्रठंस्वस्तिनोमघवाधात्विन्द्रः ॐ भू० इन्द्र इहा० इन्द्राय नमः ॥१॥ आग्नेय्याम्-ॐत्वन्नोऽअग्नेतवदेवपायुभिर्म्मघोनोरक्षतन्वश्चवन्द्य॥त्रातातोकस्यतनयेगवामस्यनिमेषठंरक्षमाणस्तवव्रते ॐअग्ने इहा० अग्नये०॥२॥दक्षिणे-ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा॥स्वाहाघर्मायस्वाहाघर्मःपित्रे।ॐभू०यमइहा०यमा०॥३॥नैर्ऋत्याम् ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य । अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॐ भू० निर्ऋते इहा० ॥ ४ ॥ पश्चिमे-ॐतत्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः॥अहेडमानोवरुणेहबोध्युरुशठंसमानआयुःप्रमो षीः। ॐ भू०वरुण इहा० ॥५॥ वायव्याम्-ॐआनोनियुद्भिःशतिनीभिरध्वरठंसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवने मादयस्वयूयंपातस्वस्तिभिःसदानः ।ॐभू० वायो इहा०॥६॥उत्तरे-ॐवयठंसोमव्रतेतवमनस्तनूषुबिभ्रतःप्रजावन्तःसचेमहि ॐभू० सोम इहा० ॥ ७ ॥ ईशान्याम्-ॐतमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षिता पायुरदब्धःस्वस्तये ॐभू० ईश्वर इहा० ॥८॥ पूर्वेशानयोर्मध्ये ऊर्ध्वायाम्-ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशठंसतेस्तुवतेधायिपज्रइन्द्रज्येष्ठाऽअस्माँ२ऽअवन्तुदेवाः । ॐभू० ब्रह्मन्० ब्रह्मणे० ॥९॥ निर्ऋतिपश्चिमयोर्मध्ये अधःस्थायाम्- ॐस्योनापृथिविनोभवानृक्षरानिवेशनीयच्छानःशर्मसप्रथाः ॥ ॐभूर्भुवःस्वः अनन्त इहागच्छ इह तिष्ठ अनंताय नमः । अनंतमावा हयामि१०एवम् क्रतुसंरक्षकदिक्पालदेवतास्थापनंकृत्वा।ॐमनोजूतिर्जुषतामाज्ज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञठंसमिमंदधातु विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ१ॐआदित्यादिग्रहमण्डलदेवताभ्यो नमः॥सुप्रतिष्ठिता वरदा भवत इति प्रतिष्ठाप्य। देशकालौ संकीर्त्य इह सकलशान्तिपूर्वकं सकलदुरितोपशमनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सनवग्रहमखामुकमन्त्रपुरश्चरणहोमकर्मणि सूर्यादिन वग्रहाणामधिदेवतानां प्रत्यधिदेवतानां पञ्चलोकपालानां दशदिक्पालानां च पूजनं करिष्ये इति संकल्पयेत् । ततः ॐ ग्रहाऽऊर्जाहु तयोव्यन्तोविप्राय मतिंतेषांविशिप्रियाणाम्वोहमिषमूर्ज्जठंसमग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टं तमम् ॥ १ ॥ ॐ भूर्भुवः स्वः सूर्य्यादिग्रहेभ्यो नमः । रुद्राद्यधिदेवताभ्यो नमः । अग्न्यादिप्रत्यधिदेवताभ्यो नमः । विनायकादिपञ्चलोकपालेभ्यो नमः इन्द्रादिदशदिक्पालेभ्यो नमः इति नाममन्त्रैः प्रत्येकं तत्तद्वर्णयुक्तगं धपुष्पधूपदीपनैवेद्यतांबूलदक्षिणादिभिः संपूज्य ततो ग्रहवेदीसमीपे भूमौ पूर्वोक्तनाममंत्रैर्ग्रहदेवताभ्यो बलीन्दद्यात् । तद्यथा । सूर्याय गुडौदनम् । सोमाय घृतपायसम् । कुजाय मसूरान्नम् । बुधाय क्षीरौदनम् । गुरवे दध्योदनम् ।

शुक्राय घृतौदनम् । शनैश्चराय तिलपिष्टम् । राहवे तिलमाषान्नम् । केतवे चित्रौदनम् । अन्येभ्यः पायसबलीन्दत्त्वा प्रार्थयेत् । ॐ आदिदेव नमस्तुभ्यं सप्तसप्ते दिवाकर ॥ आयुरारोग्यं मे देहि कुरु शांतिं शुभप्रदाम् ॥ १ ॥ रोहिणीश सुधा मूर्ते सुधारूप सुधाशन ॥ सोम सौम्यो भवास्माकं सर्वारिष्टं निवारय ॥ २ ॥ कुज कुम्भभवोऽपि त्वं मंगलः परिगद्यसे ॥ अमङ्गलं निहत्याशु सर्वदा यच्छ मङ्गलम् ॥ ३ ॥ बुध त्वं बुद्धिजननो बोधवान्सर्वदा नृणाम् ॥ तत्त्वावबोधं कुरु मे सोमपुत्र नमोऽस्तु ते ॥ ४ ॥ वेदशास्त्रार्थतत्त्वज्ञ ज्ञानविज्ञानपारग ॥ विबुधार्तिहरो नित्यं देवाचार्य नमोऽस्तु ते ॥ ५ ॥ भार्गवो भर्गजननः शुचिः श्रुतिविशारद ॥ हत्वा ग्रहकृतान्दोषानारोग्यं देहि मे सदा ॥ ६ ॥ कोणनीलाञ्जनप्रख्यं मन्दचेष्टाप्रसारिणम् ॥ छायामार्तण्डसंभूतं तं नमामि शनैश्चरम् ॥ ७ ॥ महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः ॥ मुण्डकायोर्ध्वकेशी च पीडां हरतु मे तमः ॥ ८ ॥ अधः स्थार्धाङ्ग भोः केतो पत्रधूमसमप्रभ ॥ रौद्ररूप नमस्तुभ्यं मम पीडां निराकुरु ॥ ९ ॥ इति प्रार्थ्य । ॐ अनया पूजया आदित्याद्यावाहितग्रहमण्डलदेवताः प्रीयन्तामिति पठेत् ॥ तत ईशान्यां ग्रहसंबन्धिरुद्रकलशम्ॐ महीद्यौरित्यादिमन्त्रैः पूर्ववत् संस्थाप्य । तत्र तत्त्वायामीति वरुणमावाह्य संपूज्य । कलशस्य मुखे विष्णुरित्यभिमन्त्र्य-देवदानवसंवादे० इत्यादि प्रार्थयेत् । ततस्तदुपरि । ॐ असंख्याताऽसहस्राणियेरुद्राऽअधिभूम्याम् । तेषाठँसहस्रयोजनेवधन्वानितन्मसि ॐ भूर्भुवः स्वः रुद्रा इहागच्छत इह तिष्ठत इत्यावाह्य । ॐ रुद्रेभ्यो नमः इति षोडशोपचारैः संपूजयेत ॥ ( अनेन कलशोदकेन अभिषेकसमये पत्न्या सह यजमानमभिषिञ्चेत ) इति नवग्रहमण्डलपूजनम् ॥ ॥ अथ सर्वदेवमन्त्रानुष्ठानोपयोगिसर्वतोभद्रमण्डलदेवतापूजनम् ॥ आचम्य प्राणानायम्य । देशकालौ स्मृत्वा । अमुकमन्त्रपुरश्चरणहोमकर्मणि एतत्सर्वतोभद्रमण्डले वेदमन्त्रैर्ब्रह्मादिषट्पञ्चाशद्देवतावाहनं प्रतिष्ठापूजनं च करिष्ये इति संकल्पं कृत्वा । पुष्पाक्षतानादाय मध्ये ब्रह्माणमावाहयेत् । ॐब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः । सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः । ॐ भूर्भुवःस्वः ब्रह्मन्निहागच्छ इह तिष्ठ ॐब्रह्मणे नमः १ उत्तरे सोमम् । ॐ वयठँसोमव्रतेतवमनस्तनूषुबिभ्रतः । प्रजावन्तःसचेमहि । ॐ भूर्भुवः स्वः सोम इहा०-ॐ सोमाय नमः ॥ २ ॥ ईशान्यामीशानम् ॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् । पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये । ॐ भू०ईशान इहा०ॐ ईशानाय नमः ॥ ३ ॥ पूर्वस्यां दिशि इन्द्रम् । ॐ त्रातारमिन्द्रमवितारमिन्द्रठँहवेहवेसुहवठँशूरमिन्द्रम् । ह्वयामिशक्रम्पुरुहूतमिन्द्रठँस्वस्तिनोमघवाधात्विन्द्रः । ॐभूर्भुवः स्वः इन्द्र इहा० ॐ इन्द्राय नमः ॥४॥ आग्नेय्यामग्निम् । ॐ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः । यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाठँसिप्रमुमुग्ध्यस्मत् । ॐभू० अग्ने

इहा॰ ॐ अग्नये नमः ॥ ५ ॥ दक्षिणे यमम् । ॐ सुगन्नुपन्थामप्रदिशन्नऽएहिज्योतिष्मद्धेह्यजरन्नऽआयुः । अपैतमृत्युरमृतन्नऽआगन्वैवस्वतोनोऽअभयंकृणोतु । ॐ भू॰ यम इहा॰ ॐ यमाय नमः ॥ ६ ॥ नैर्ऋत्यां निर्ऋतिम् । ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य । अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु । ॐ भू॰ निर्ऋते इहा॰ ॐ निर्ऋतये नमः ॥७॥ पश्चिमे वरुणम् । ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः । ॐ भू॰ वरुण इहा॰ ॐ वरुणाय नमः ॥ ८ ॥ वायव्यां वायुम् । ॐ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः ॥ ॐ भू॰ वायो इहा॰ ॐ वायवे नमः ॥ ९ ॥ वायुसोमयोर्मध्ये अष्टवसून् । ॐ वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् । देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः । ॐ भू॰ अष्टौवसव इहागच्छत इह तिष्ठत॰ ॐ वसुभ्यो नमः ॥ १०॥ सोमेशानयोर्मध्ये रुद्रान् । ॐ नमस्तेरुद्रमन्यवऽउतोतइषवेनमः बाहुभ्यामुततेनमः । ॐ भू॰ रुद्रा इहागच्छत॰ ॐ रुद्रेभ्यो नमः ॥ ११ ॥ ईशानपूर्वयोर्मध्ये आदित्यान् । ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः । विश्वेदेवाऽअदितिःपञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम्॥ ॐ भू॰ आदित्या इहा॰ आदित्येभ्यो नमः ॥१२॥ इन्द्राग्न्योर्मध्येऽश्विनौ । ॐ अश्विनातेजसाचक्षुःप्राणेनसरस्वतीवीर्यम्॥वाचेन्द्रोबलेन्द्राययदधुरिन्द्रियम् । ॐ भू॰ अश्विनौ इहागच्छतम् इह तिष्ठतम् ॐ अश्विभ्यां नमः ॥ १३ ॥ अग्नियमयोर्मध्ये विश्वेदेवान्सपितॄन् । ॐ विश्वेदेवासऽआगतशृणुतामऽइमꣳहवम् ॥ एदम्बर्हिर्निषीदत ॥ ॐ विश्वेदेवा इहा॰ ॐ विश्वेभ्यो देवेभ्यो नमः॥१४॥ तत्रैव ॐ आयन्तुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः। अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेवन्त्वस्मान्।ॐ भू॰ पितर इहा॰पितृभ्यो नमः ॥१५॥ यमनिर्ऋत्योर्मध्ये यक्षान्।ॐ अभित्यन्देवꣳसवितारमोण्योःकविक्रतुमर्चामिसत्यसवꣳरत्नधामभिप्रियम्मतिङ्कविम् । ऊर्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः । प्रजाभ्यस्त्वाप्रजास्त्वानुप्राणन्तुप्रजास्त्वमनुप्राणिहि । ॐ भू॰ यक्षा इहा॰ॐ यक्षेभ्यो नमः॥१६॥निर्ऋतिवरुणयोर्मध्ये भूतनागान्।ॐ भूतायत्वानारातयेस्वरभिविख्येषन्दृꣳहन्तान्दुर्याःपृथिव्यामुर्वन्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौ सादयाम्यदित्याऽउपस्थेग्नेहव्यꣳरक्ष।ॐ भू॰भूतानि इहा॰ॐ भूतेभ्यो नमः॥१७॥ तत्रैव सर्पान् ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनुयेऽअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः।ॐ भू॰ सर्पा इहा॰ॐ सर्पेभ्यो नमः॥१८॥ वरुणवाय्वोर्मध्ये गन्धर्वाप्सरसः । गन्धर्वस्त्वाविश्वावसुःपरिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडईडितः । इन्द्रस्यबा

द्दुरंसिदक्षिणोग्विश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः । मित्रावरुणौत्वोत्तरतः परिधत्तांध्रुवेणधर्म्मणाविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥ ॐ भू० गन्धर्वा इहा० ॐ गन्धर्वेभ्यो नमः ॥ १९ ॥ तत्रैवाप्सरसः । ॐ अयंपुरोहरिकेशःसूर्य्यरश्मिस्तस्यरथगृत्सश्चरथौजाश्चसेनानिग्रामण्यौ । पुञ्जिकस्थलाचक्रतुस्थलाचाप्सरसौदंक्ष्णवःपशवोहेतिःपौरुषेयोवधःप्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः । ॐ भू० अप्सरस इहागच्छत इह तिष्ठत । ॐ अप्सरोभ्यो नमः ॥ २० ॥ ब्रह्मसोमयोर्मध्ये स्कन्दं नन्दीश्वरं शूलं च । ॐ यदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् । श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातंतेऽअर्व्वन् ॥ ॐ भू० स्कन्द इहा० ॐ स्कन्दाय नमः ॥ २१ ॥ तदुत्तरे । ॐ आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोनिमिषऽएकवीरःशतᳬसेनाऽअजयत्साकमिन्द्रः । ॐ भू० नन्दिन् इहा० ॐ नन्दीश्वराय नमः ॥ २२ ॥ तत्रैव । ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामिसमापोऽअद्भिरग्मतसमोषधीभिरोषधीः । भू० शूलमहाकालौ इहागच्छतमिह तिष्ठतम् ॐ शूलमहाकालाभ्यां नमः ॥ २३ ॥ ब्रह्मेशानयोर्मध्ये प्रजापतीन् । ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयᳬस्यामपतयोरयीणाम् । ॐ भू० प्रजापतय इहा० ॐ प्रजापतिभ्यो नमः ॥ २४ ॥ ब्रह्मेन्द्रयोर्मध्ये दुर्गाम् । ॐ अम्बेऽअम्बिकेम्बालिकेनमानयति कश्चन । ससस्त्यश्वकःसुभद्रिकांकाम्पीलवासिनीम् ॥ ॐ भू० दुर्गे इहा० ॐ दुर्गायै नमः ॥ २५ ॥ दुर्गापूर्वे विष्णुम् । ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाᳬसुरेस्वाहा । ॐ भू० विष्णो इहा० ॐ विष्णवे नमः ॥ २६ ॥ ब्रह्माग्न्योर्मध्ये पितॄन् । ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्यासः । असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु । ॐ भू० पितर इहा० ॐ पितृभ्यो नमः ॥ २७ ॥ ब्रह्मयमयोर्मध्ये मृत्युरोगान् । ॐ परं मृत्योऽअनुपरेहिपन्थांयस्तेअन्यइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजाᳬरीरिषोमोतवीरान् । ॐ भू० मृत्युरोगा इहा० ॐ मृत्युरोगेभ्यो नमः ॥ २८ ॥ ब्रह्मनिर्ऋत्योर्मध्ये गणपतिम् । ॐ गणानांत्वागणपतिᳬहवा० । ॐभू० गणपते इहा० ॐ गणपतये नमः ॥२९॥ ब्रह्मवरुणयोर्मध्ये अपः । ॐ अपोऽअद्यान्वचारिषᳬरसेनसमसृक्ष्महि । पयस्वानग्नऽआगमन्तम्मासᳬसृजवर्च्चसाप्रजयाचधनेनच । ॐभू० आप इहा०ॐअद्भ्यो नमः॥३०॥ ब्रह्मवायुमध्ये मरुतः । ॐ बृहदिन्द्रायगायतमरुतोवृत्रहन्तमम् । येनज्योतिरजनयन्नृतावृधोदेवंदेवायजागृवि । ॐ भू० मरुत इहा०॥ ॐ मरुद्भ्यो नमः ॥३१॥ ब्रह्मणः पादमूले पृथिवीम् । ॐ महीद्यौःपृथिवीचनऽइमंयज्ञम्मिमिक्षताम् । पिपृतान्नोभरीमभिः ।

ॐ भू० पृथिवि इहा० ॐ पृथिव्यै नमः ॥३२॥ तत्रैव गङ्गादिसरितः। ॐ इमम्मेगंगेयमुने सरस्वतिशुतुंद्रिस्तोमंसचतापरुष्णिया। असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया। ॐ भू० गङ्गादिसप्तसरित इहा० ॐ गंगादिसरिद्भ्यो नमः ॥ ३३ ॥ तत्रैव सप्तसागरान्। ॐ मापोमौषधीर्हिंसीर्धाम्नोंधाम्नोराजँस्ततोंवरुणनोमुञ्च यदाहुरघ्न्याऽइतिवरुणेतिशपामहेततोंवरुणनो मुञ्च। ॐभू० सप्तसागरा इहा० ॐ सप्तसागरेभ्यो नमः ॥ ३४ ॥ तदुपरि मेरुं नाममन्त्रेणावाहयेत्। ॐभू० मेरो इहा० ॐ मेरवे नमः ॥ ३५ ॥ ततो मण्डलाद्बहिः सोमादिसन्निधौ क्रमेण आयुधान्यावाहयेत्। उत्तरे गदामावाहयामि स्थापयामि। ॐ भू० गदे इहा० ॐ गदायै नमः ॥ ३६ ॥ ईशान्यां त्रिशूलमा० त्रिशूलाय० ॥ ३७ ॥ पूर्वे वज्रमा० ॐ वज्राय० ॥ ३८ ॥ आग्नेय्यां शक्तिं० ॐ शक्तये नमः ॥३९॥ दक्षिणस्यां दण्डमा० ॐ दण्डाय नमः ॥४०॥ नैर्ऋत्यां खड्गमा० ॐ खड्गाय० ॥४१॥ पश्चिमे पाशमावा० ॐ पाशाय० ॥४२॥ वायव्याम् अङ्कुशमावा० ॐ अङ्कुशाय० ॥४३॥ तद्बाह्ये उत्तरे ॐ गौतमाय० ॥४४॥ ईशान्याम् ॐ भारद्वाजाय० ॥ ४५ ॥ पूर्वे ॐ विश्वामित्राय० ॥ ४६ ॥ आग्नेय्याम् ॐ कश्यपाय० ॥ ४७ ॥ दक्षिणे ॐ जमदग्नये० ॥ ४८ ॥ नैर्ऋत्याम् ॐ वसिष्ठाय नमः ॥४९॥ पश्चिमे ॐ अत्रये० ॥५०॥ वायव्याम् ॐ अरुन्धत्यै नमः॥ ५१ ॥ तद्बाह्ये पूर्वादिक्रमेण पूर्वे। ॐ ऐन्द्र्यै नमः॥५२॥आग्नेय्याम्। ॐकौमार्यै०॥५३॥दक्षिणस्याम्। ॐब्राह्म्यै नमः॥५४॥नैर्ऋत्याम्। ॐवाराह्यै नमः ॥ ५५ ॥ पश्चिमायाम् ॐ चामुण्डायै नमः ॥ ५६ ॥ वायव्याम् ॐ वैष्णव्यै नमः ॥ ५७ ॥ उत्तरस्याम् ॐ माहेश्वर्यै० ॥ ५८ ॥ ईशान्याम् ॐ वैनायक्यै नमः ॥ ५९ ॥ इत्यावाह्य। ॐ मनोजूतिर्जुषतामिति प्रतिष्ठाप्य यथालब्धोपचारैः ब्रह्मादीन् संपूज्य वेदीमध्ये पद्मे ताम्रकलशं पूर्ववत् ॐ महीद्यौरित्यादिमन्त्रैः पूर्णपात्रनिधानान्तं पूर्ववत् कृत्वा तत्र ॐ तत्त्वायामीति वरुणमावाह्य। ॐ अपांपतिवरुणाय नमः इति संपूज्य–कलशस्य मुखे विष्णुरित्यभिमन्त्र्य–देवदानवसंवादे० इत्यादि प्रार्थयेत् ॥ ततः कलशोपरि पट्टवस्त्रं प्रसार्य्य तदुपरि गन्धाष्टकेन प्रधानदेवतायन्त्रं विलिख्य तन्मध्ये पलेन तदर्द्धेन वा सुवर्णेन रचितां प्रधानदेवप्रतिमां सावयवामग्न्युत्तारणपूर्वकं स्थापयेत्। अथाग्न्युत्तारणम् ॥ तत्र तावत्साचार्य्यो यजमानः देशकालौ संकीर्त्य अस्याः स्वर्णमय्यमुकदेवप्रतिमाया घटनादिदोषपरिहारार्थम् अग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां करिष्ये इति संकल्प्य मूर्तिं पात्रे निधाय घृतेनाभ्यज्य उपरि दुग्धजलधारां कुर्यात्। (अग्न्युत्तारणमन्त्राः) ॐ समुद्रस्यत्वाव्वकयाग्ने परिव्ययामसिपावकोऽअस्मभ्यंठंशिवोभव ॥ १ ॥ हिमस्यत्वाजरायुणाग्नेपरिव्ययामसिपावकोऽअस्मभ्यंठंशिवोभव ॥ २ ॥ उपज्मन्नुपवेतसेवतरनदीष्वा अग्नेपित्तमपामसिमण्डूकिताभिरागहिसेमन्नोयज्ञंपावकवर्णंठंशिवङ्कृधि ॥ ३ ॥ अपामिदंन्ययनंठंसमुद्रस्यंनिवेशनम् अन्याँस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यंठंशिवोभव ॥ ४ ॥ अग्नेपावकरोचिषामन्द्र

यांदेवजिह्वयां आदेवान्वंक्षियाक्षिंच ॥ ५ ॥ सनं÷पावकदीदिवोग्नेदेवाँ२ ॥ ऽइहावह उपंयज्ञठंहविश्चनः ॥ ६ ॥ पावकयायश्चितय
न्त्याकृपाक्षामंन्नुरुचऽउषसोनुभानुनां तूर्व्वन्नयामन्नेतंशस्यन्तूरणऽआयोघृणेनतंतृषाणोऽअजरं÷ ॥ ७ ॥ नमस्तेहरंसेशोचिषेनमस्ते
ऽअस्त्वर्चिषे अन्यांस्तेऽअस्मत्तंपन्तुहेतयं÷पावकोऽअस्मभ्यंठंशिवोभव ॥८॥ नृषदेवेडप्सुषदेव्वेड्बर्हिषदेवेड्वनसदेव्वेदस्वर्विदेव्वेट्॥९॥
येदेवादेवानांयज्ञियांयज्ञियांनांसंवत्सरीणमुपभागमासंतेअहुतादोहविषोयज्ञेअस्मिन्त्स्वयंपिबन्तुमधुनोघृतस्य॥१०येदेवादेवेष्वधिदे
वत्वमायन्येब्रह्मणःपुरऽएतारोऽअस्ययेभ्योनऽऋतेपवंतेधामकिञ्चननतेदिवोनपृथिव्याऽअधिस्नुषु॥११॥ प्राणदाऽअपानदाव्यांनदाव्वर्चो
दाव्वरिवोदाःअन्यांस्तेऽअस्मत्तंपन्तुहेतयं÷पावकोऽअस्मभ्यंठंशिवोभव ॥१२॥ इत्यग्न्युत्तारणमन्त्राः । ततः प्राणप्रतिष्ठां कुर्यात् ।ॐ
आँह्रींक्रौंयंरंलंवंशंषंसंक्षंहंसः सोहम् अस्या अमुकदेवप्रतिमायाः प्राणा इह प्राणाः ॐ आँह्रींक्रौंयंरंलंवंशंषंसंहंक्षंहंसः सोहम् अस्या
अमुकदेवप्रतिमायाः जीव इह स्थितः पुनः ॐ आँह्रींक्रौंयंरंलंवंशंषंसंक्षंहंसः सोहम् अस्या अमुकदेवप्रतिमायाः सर्वेन्द्रियाणि वाङ्
मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।ॐमनोजूति र्जुषता० १ एषवैप्रतिष्ठा०२
इति प्रतिष्ठाप्य। वृत्रस्यासीति नेत्रोन्मीलनम् । ॐवृत्रस्यांसिकनीनंकश्चक्षुर्दाऽअंसिचक्षुर्म्मेदेहि१। ततो गन्धादिपञ्चोपचारान् दत्त्वा
संस्कारसिद्धये षोडशप्रणवावृत्तिं कुर्य्यात् । अनेनास्या अमुकदेवप्रतिमाया गर्भाधानादिषोडशसंस्कारान् संपादयामि इति वदेत् ।
इति प्राणप्रतिष्ठां कृत्वा पूजयेत् । ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिंठंसर्व्वतंस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥
इत्यावाहनम् ॥१॥ ॐ पुरुषऽएवेदंठंसर्वंयद्भूतंयच्चभाव्यम् उतामृतत्वस्येशानोयदन्नेनातिरोहति । इत्यासनम् ॥२॥ ॐएतावानस्य
महिमातोज्यायाँश्चपूरुषः पादोस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि । इति पाद्यम्॥३॥ॐत्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः
ततोव्विष्वङ्व्यक्रामत्साशनानशनेअऽभि । इत्यर्घ्यम्॥४॥ॐततोव्विराडजायतव्विराजोऽअधिपूरुषःसजातोऽअत्यरिच्च्यतपश्चाद्भू
मिमथोपुरः।इत्याचमनम्॥५॥ॐतस्माद्यज्ञात्सर्व्वहुतःसम्भृतंपृषदाज्यम्॥पशूँस्ताँश्चक्रेव्वायव्यानारण्याग्राम्याश्चये। इति स्नानम्॥६॥
पयः पृथिव्यामित्यादिपञ्चमन्त्रैःपञ्चामृतस्नानं कारयेत्)। पुनः शुद्धस्नानम्। ॐतस्माद्यज्ञात्सर्व्वहुतऽऋचःसामानियज्ञिरे छंदांसिय
ज्ञिरेतस्माद्यजुस्तस्मादजायत । इति वस्त्रम्( आचमनं च)॥७॥ ॐतस्मादश्वाऽअजायन्तयेकेचोभयादतः।गावोहयज्ञिरेतस्मात्तस्माज्जा
ताऽअजावयः । इति यज्ञोपवीतम् (आचमनं च)॥८॥ॐतंयज्ञंबर्हिषिप्रोक्षन्पुरुषञ्जातमग्रतःतेनदेवाऽअयजन्तसाध्याऽऋषयश्चये ।
इति गन्धम्॥९॥ॐयत्पुरुषंव्यदधुःकतिधाव्यकल्पयन्॥मुखङ्किमस्यासीत्किंबाहूकिमूरूपादाऽउच्येते।इति पुष्पाणि॥१०॥ (तत आव

रणदेवतापूजनम् ) ब्राह्मणोऽस्यमुखमासीद्बाहूराजन्यः कृतः ऊरूतदस्ययद्वैश्यः पद्भ्याᳬशूद्रोऽअजायत। इति धूपम् ॥ ११ ॥ ॐचन्द्रमा मनसोजातश्चक्षोःसूर्यो ऽअजायत श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत । इति दीपम् ॥ १२ ॥ ॐनाभ्याऽआसीदंतरिक्षᳬशीर्ष्णोद्यौः समवर्तत पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथालोकाँ२ ऽअकल्पयन् इति नैवेद्यम् ( आचमनंच ) ॥१३॥ ॐयत्पुरुषेणहविषादेवायज्ञमतन्वत वसन्तोऽस्यासीदाज्यङ्ग्रीष्मऽइध्मःशरद्धविः इति दक्षिणाम् ॥१४॥ ( ततो नीराजनम् ) ॐसप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥१५॥ इति प्रदक्षिणाम् । ॐ यज्ञेन यज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् तेहनाकम्महिमानः सचन्तयत्र पूर्वेसाध्याः सन्तिदेवाः । इति मंत्रपुष्पाञ्जलिम् ॥१६॥ ततस्तत्तत्स्तवेन स्तुत्वा साष्टाङ्गं प्रणम्य देवाय पूजां निवेदयेत् । इति * सर्वतोभद्रपूजापद्धतिः समाप्ता ॥

अथ शिवमन्त्रानुष्ठाने द्वादशलिङ्गतोभद्रपूजापद्धतिः ॥ आचम्य प्राणानायम्य । देशकालौ संकीर्त्य श्रीभवानीशङ्करप्रीतिद्वारा अमुककार्यसिद्ध्यये एतद्द्वादशलिङ्गतोभद्रमण्डले देवतावाहनं प्रतिष्ठापूजनं च करिष्ये इति संकल्प्य पुष्पाक्षतानादाय मण्डलबाह्ये ईशानकोणे ॐ गुरवे नमः । गुरुमावाहयामि स्थापयामि ( एवं सर्वत्र ) ॥१॥ आग्नेय्याम् ॐगणपतये नमः ॥२॥ नैर्ऋत्याम् ॐ दुर्गायै नमः ॥ ३ ॥ वायव्याम् ॐ क्षेत्रपालाय नमः ॥ ४ ॥ततो भद्रमध्ये । श्रीसदाशिवाय नमः ॥५॥ ततः अष्टदले ( पूर्वस्यां दिशि ) ॐ कालाग्निरुद्राय नमः ॥ १ ॥ॐ कूर्माय ॥२॥ ॐ मण्डूकाय ॥ ३ ॥( आग्नेय्याम् ) ॐवाराहाय ॥४॥ ॐ अनन्ताय ॥५॥ ( दक्षिणे ) ॐ पृथिव्यै ॥ ६ ॥ ॐ स्कन्दाय ॥ ७ ॥ ॐ सुधासिन्धवे नमः ॥ ८ ॥ ( नैर्ऋत्यां दिशि ) ॐ नलाय ॥ ९ ॥ ॐ पद्माय ॥१०॥ ( पश्चिमे ) ॐ पत्रेभ्यः ॥ ११ ॥ ॐ केसरेभ्यः ॥ १२ ॥ ॐ कर्णिकायै ॥ १३ ॥ ( वायव्याम् ) ॐ सिंहासनाय ॥ १४ ॥ ॐ पद्मासनाय ॥ १५ ॥ ( उत्तरे ) ॐ धर्माय ॥ १६ ॥ ॐ ज्ञानाय ॥ १७ ॥ ॐ वैराग्याय ॥१८॥ ( ईशान्याम् ) ॐ ऐश्वर्याय ॥ १९ ॥ ॐ चिदाकाशाय ॥२०॥ ( पद्ममध्ये ) ॐ योगपीठात्मने ॥ २१ ॥ ततः ( कर्णिकोपरि ) पूर्वे ॐ पृथिव्यै ॥१॥ (दक्षिणे) ॐ कपालाय ॥२॥( पश्चिमे )ॐ सप्तसरिद्भ्यः ॥३॥ उत्तरे ) ॐ सप्तसागरेभ्यः ॥ ४ ॥ ( कर्णिकासमीपे ) चत्वारि श्वेतभद्राणि तद्देवतास्थापनम् ( पूर्वे ) ॐतत्पुरुषाय ॥१॥ (दक्षिणे )ॐ अघोराय ॥ २ ॥ ( पश्चिमे ) ॐसद्योजाताय ॥३॥ ( उत्तरे ) ॐवामदे

* सर्वतोभद्रमण्डलानि पूर्वंद्रष्टव्यानि ।

वाय ॥ ४ ॥ अथ तत्समीपे कृष्णानि अष्टौ भद्राणि तद्देवतास्थापनम् ऐशान्यादिक्रमेण ( ऐशान्ये ) ॐ भगवत्यै अष्टौ भद्राणि ॥ १ ॥ ( पूर्वे ) ॐ उमायै ॥ २ ॥ ( आग्नेय्याम् ) ॐ शङ्करप्रियायै ॥३॥ ( दक्षिणे ) ॐ पार्वत्यै ॥४॥ (नैर्ऋत्ये) ॐ गौर्यै ॥५॥ ( पश्चिमे ) ॐ काल्यै ॥ ६ ॥ ( वायव्याम् ) ॐ कौम्यै ॥७॥ ( उत्तरे ) ॐ विश्वम्भर्यै ॥८॥ ततः कृष्णभद्राणामधः अष्टौ रक्त भद्राणि तद्देवतास्थापनमैशान्यादिक्रमेण ( ऐशान्याम् ) ॐ नन्दिने ॥ १ ॥ ( पूर्वे ) ॐ महाकालाय ॥२॥ ( आग्नेय्याम् ) ॐ वृष भाय ॥ ३ ॥ ( दक्षिणे ) ॐ भृङ्गिरिटिने ॥४॥ ( नैर्ऋत्याम् ) ॐ स्कन्दाय ॥५॥ ( पश्चिमे ) ॐ उमापतये ॥६॥ ( वायव्याम् ) ॐ चण्डेश्वराय ॥७॥ (उत्तरे ) ॐ सोमसूत्राय ॥ ८ ॥ अथ लिङ्गोपरि चत्वारि श्वेतभद्राणि तद्देवतास्थापनम् ( पूर्वे ) ॐ धात्रे ॥ १ ॥ ( दक्षिणे )ॐ मित्राय ॥ २ ॥ ( पश्चिमे ) ॐयमाय ॥३॥ (उत्तरे) ॐरुद्राय ॥४॥ ततः तत्समीपे लिङ्गोपरि अष्टौ पीत भद्राणि तद्देवतास्थापनमैशान्यादिक्रमेण ( ऐशान्याम् ) ॐवरुणाय ॥१॥ (पूर्वे) ॐ सूर्याय ॥२॥ ( आग्नेय्याम् ) ॐभगाय ॥३॥ ( दक्षिणे ) ॐ विवस्वते ॥ ४ ॥ ( नैर्ऋते ) ॐ पुरुषोत्तमाय ॥ ५ ॥ ( पश्चिमे ) ॐ सवित्रे ॥ ६ ॥ ( वायव्याम् ) ॐ त्वष्ट्रे ॥७॥ ( उत्तरे ) ॐ विष्णवे ॥ ८ ॥ ततो द्वादशलिङ्गदेवतास्थापनं पूर्वादिक्रमेण-( पूर्वे ) ॐ शिवाय ॥ १ ॥ ॐ एकनेत्राय ॥ २ ॥ ॐ एकरुद्राय ॥ ३ ॥ ( दक्षिणे ) ॐ त्रिमूर्तये ॥ १ ॥ ॐ श्रीकण्ठाय ॥ २ ॥ ॐ वामदेवाय ॥ ३ ॥ ( पश्चिमे ) ॐ ज्येष्ठाय ॥ १ ॥ ॐ श्रेष्ठाय ॥२॥ ॐ रुद्राय ॥ ३ ॥ ( उत्तरे ) ॐ कालाय ॥ १ ॐ कलविकरणाय० ॥ २ ॥ ॐ बलविकरणाय ॥ ३ ॥ अथ श्वेतषोडशवापीदेवतास्थापनम् ईशान्यादिक्रमेण–ॐ अणिमायै ॥ १ ॥ ॐ महिमायै ॥ २ ॥ ॐ लघिमायै ॥ ३ ॥ ॐ गरिमायै ॥ ४ ॥ ॐ प्राप्त्यै० ॥ ५ ॥ ॐ प्राकाम्यायै ॥ ६ ॥ ॐ ईशितायै ॥ ७ ॥ ॐ वशितायै ॥ ८ ॥ ॐ ब्राह्म्यै ॥ ९ ॥ ॐ माहेश्वर्यै ॥ १० ॥ ॐ कौमार्यै ॥ ११ ॥ ॐ वैष्णव्यै ॥ १२ ॥ ॐ वाराह्यै ॥ १३ ॥ ॐ इन्द्राण्यै ॥ १४ ॥ ॐ चामुण्डायै ॥ १५ ॥ ॐ चण्डिकायै ॥ १६ ॥ ततः वापीसमीपे अष्टौ रक्तभद्राणि तद्देवतास्थापनम् ऐशान्यादिक्रमेण ॐ असितांगाय १ ॐ रुरुभैरवाय २ ॐ चण्डभैरवाय ३ ॐ क्रोधभैरवाय ४ ॐ उन्मत्तभैरवाय ५ ॐ कालभैरवाय ६ ॐ भीषणभैरवाय ७ ॐ संहारभैरवाय ८॥ अथाष्टवल्लीदेवतास्थापनम् ऐशान्यादिक्रमेण–ॐ घृताच्यै १ ॐ मेनकायै २ ॐ रम्भायै ३ ॐ उर्वश्यै ४ ॐ तिलोत्तमायै ५ ॐ सुकेशायै ६ ॐ मञ्जुघोषायै ७ ॐ अप्सरसे[1] ८॥ ततः मण्डलमध्ये परिधिसमीपे शृङ्खलादेवतास्थापनम् आग्नेय्यादिक्रमेण-(आग्नेय्याम्) ॐ भवाय० १ ॐ शिवाय० २ ॐ रुद्राय० ३ ॐ पशुपतये० ४ ॐ उग्राय० ५ ॐ महादेवाय० ६ ॐ भीमाय ७ ॐ ईशानाय ८ ॐ अनन्ताय ९ ॐ वासुकये ॥ १० ॥ ततः नैर्ऋत्यपरिधिसमीपे शृङ्खलादेवताः ॐ

१ बहुषु इति मायोवादः। "अनचिच" इति सूत्रे 'अप्सरा' इति भाष्यप्रयोगात्। "स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि" इति शब्दार्णवाच्च।

तक्षकाय ॥१॥ ॐ कुलीरकाय ॥२॥ कर्कोटकाय ॥३॥ ॐ शङ्खपालाय ॥४॥ ॐ कवलाय ॥५॥ ॐ अश्वतराय ॥६॥ ॐ वेन्याय ॥७॥ ॐ अङ्गाय ॥८॥ ॐ हैहयाय ॥९॥ ॐ अर्जुनाय ॥१०॥ ततः वायव्ये दश शृंखलादेवताः। ॐ शाकुन्तलाय॥१॥ ॐभरताय ॥२॥ ॐ नलाय ॥३॥ ॐ रामाय ॥४॥ ॐ सार्वभौमाय॥५॥ ॐ निषधाय ॥६॥ ॐ विन्ध्याचलाय॥७॥ ॐ माल्यवते॥८॥ ॐ पारियात्राय ॥९॥ ॐ सह्याय ॥१०॥ ततः ऐशान्यपरिधिसमीपे दशशृङ्खलादेवतास्थापनम् ॐ हेमकूटाय ॥१॥ ॐ गन्धमादनाय ॥२॥ ॐ कुलाचलाय ॥३॥ ॐ हिमवते ॥४॥ ॐ रैवताचलाय ॥५॥ ॐ देवगिरये ॥६॥ ॐ मलयाचलाय ॥७॥ ॐकनकाचलाय ॥८॥ ॐपृथिव्यै॥९॥ॐअनन्ताय॥१०॥इति शृङ्खलादेवताः॥अथचतुर्दिक्षु खण्डेन्दुदेवतास्थापनम् ऐशान्यादिक्रमेण- ऐशान्याम् ) ॐ अश्विनीकुमाराभ्याम्॥१॥(आग्नेय्याम्)ॐ विश्वेभ्योदेवेभ्यो॥२॥(नैर्ऋते) ॐ पितृभ्यो॥३॥(वायव्याम्)ॐनागेभ्यः॥४॥ ततः मण्डलाद्बहिः प्रथमं सत्त्वपरिधौ पूर्वादिक्रमेण देवताः ॐ इन्द्राय ॥१॥ॐ अग्नये ॥२॥ ॐ यमाय ॥३॥ ॐ निर्ऋतये ॥ ४ ॥ ॐ वरुणाय ॥५॥ ॐ वायवे ॥६॥ ॐ कुबेराय ॥७॥ ॐ ईशानाय ॥८॥ ( इन्द्रेशानयोर्मध्ये ) ॐ ब्रह्मणे ॥ ९ ॥ ( वरुणनिर्ऋत्योर्मध्ये ) ॐ अनन्ताय ॥ १० ॥ ( तद्बहिः रजःपरिधौ ) पूर्वादिक्रमेण देवताः–ॐ वज्राय ॥१॥ ॐ शक्तये ॥ २ ॥ ॐ दण्डाय ॥३॥ ॐ खड्गाय ॥ ४ ॥ ॐ पाशाय ॥ ५ ॥ ॐ अङ्कुशाय ॥ ६ ॥ ॐ गदायै ॥ ७ ॥ ॐ त्रिशूलाय ॥८॥ ॐ पद्माय ॥ ९ ॥ ॐ चक्राय ॥ १० ॥ तद्बहिस्तमोमयकृष्णपरिधौ पूर्वादिक्रमेण देवता ॐ कश्यपाय ॥ ॐ अत्रये ॥ २ ॥ ॐ भरद्वाजाय ॥ ३ ॥ ॐ विश्वामित्राय ॥ ४ ॥ ॐ गौतमाय ॥ ५ ॥ ॐ जमदग्नये ॥ ६ ॥ ॐ वसिष्ठाय ॥ ७ ॥ ॐ अरुन्धत्यै० ॥८॥ ॐ ततः ( पूर्वे ) ॐ ऋग्वेदाय० ॥ १ ॥ ( दक्षिणे ) ॐ यजुर्वेदाय० ॥ २ ॥ ( पश्चिमे ) ॐ सामवेदाय ॥ ३ ॥ ( उत्तरे ) ॐ अथर्ववेदाय ॥ ४ ॥ एवं १८० देवताः संस्थाप्य षोडशोपचारैः संपूज्य ततः प्रधानदेवताशिवप्रतिमां स्वर्णमयीमग्न्युत्तारणपूर्वकं ॐ मण्डलमध्यस्थताम्रकलशे पूर्ववत् संस्थाप्य पूजयेत् ॥ इति द्वादशलिङ्गतोभद्रमण्डलपूजाविधानम् ॥ *

॥ अथ होमविधानम् ॥ तत्रादौ कुशकण्डिका ॥ आचार्योऽग्नेर्दक्षिणतः परिस्तरणभूमिं त्यक्त्वा ब्रह्मणे आसनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय अस्मिन्नमुकमन्त्रजपदशांशहोमकर्मणि त्वं मे ब्रह्मा भव। इत्यभिधाय वरणकर्म्मणा पूर्वं संपादितं ब्राह्मणं तदभावे पञ्चाशत्कुशनिर्मितं कल्पितासने उपवेशयेत्॥ ततः प्रणीतापात्रं पुरतः कृत्वा जलेनापूर्य्य कुशत्रयेणाच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ( परिस्तरणम् ) बर्हिषश्चतुर्थभागमादाय चतुर्भिश्चतुर्भिर्दर्भैरुत्तराग्रैः प्राच्याम् १ प्रागग्रैर्दक्षिणस्याम् २ उदगग्रैः प्रतीच्याम् ३ पुनः प्रागग्रैरग्नित उदीच्याम् ४ परिस्तरणं कुर्य्यात् ॥ ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् ३ पवित्रकरणार्थं पवित्रे साग्रे अनन्तर्गर्भे द्वे कुशपत्रे ॥ २ ॥ प्रोक्षणीपात्रम् १

* द्वादशलिङ्गतोभद्रमण्डलानि

आज्यस्थाली १ चरुस्थाली १ संमार्जनकुशाः पञ्च ५ उपयमनकुशाः सप्त ७ समिधस्तिस्रः ३ पालाश्यः प्रादेशमात्राः स्रुवः खादिरो हस्तमात्रः १ आज्यं गव्यम् चर्वर्थाः तण्डुलाः पूर्णपात्रम् ॥ दक्षिणा वरो वा ॥ पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणा सादनीयम् ॥ ततः पवित्रच्छेदनम् ॥ पवित्रकरणम् ॥ द्वयोः पवित्रयोरुपरि पवित्रत्रयं निधाय अग्रतः प्रादेशमात्रं विहाय त्रिभिः कुशैर्द्वे कुशतृणे प्रच्छिद्य द्वयोर्मूलं त्रीणि चोत्तरतः क्षिपेत् ॥ ततः सपवित्रहस्तेन प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निक्षिप्य अनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम् । प्रोक्षणीपात्रस्य सव्यहस्ते करणम् । अनामिकाङ्गुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुदिङ्गनम् । ततः प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् । प्रोक्षणीजलेन आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि क्रमेणैकैकशः प्रोक्ष्य असंचरे प्रणीताग्न्योरन्तराले प्रोक्षणीपात्रं निधाय आसादितमाज्यं पश्चादग्नेर्निहितायामाज्यस्थाल्यां प्रक्षिप्य चरुस्थाल्यां प्रणीतोदकमासिच्य आसादितांस्तण्डुलान्प्रक्षिप्य तत्राज्यं ब्रह्माधिश्रयति । तदुत्तरतः स्वयं चरुमेव युगपदग्नावारोप्य ईषच्छृते चरौ ज्वलदुल्मुकं प्रदक्षिणम् आज्यचर्वोः समन्ताद्भ्रामयेत् । ततो दक्षिणपाणिना स्रुवमादाय अधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्जनाग्रैर्मूलतोऽग्रपर्यन्तं मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तं संमृज्य प्रणीतोदकेनाभिषिच्य पुनः प्रताप्य दक्षिणतो निदध्यात् । ततः आज्यमुत्थाप्य चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वाज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय चरुं चानीय आज्यस्योत्तरतो निदध्यात् । ततः पूर्ववत्पवित्राभ्यामाज्यमुत्पूय अवलोक्य तस्मादपद्रव्यनिरसनं पुनः प्रोक्षण्युत्पवनम् । तत उपयमनकुशानादाय उत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः प्रक्षिपेत् । तत उपविश्य प्रोक्षण्युदकेन सपवित्रेणाग्निमीशानाद्युदक्पर्यन्तं परिषिच्य दक्षिणजान्वाच्य ब्रह्मणान्वारब्धः यजमानेनान्वारब्धश्च समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् । ( तत्राघारावाज्यभागादिषु स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः । ततो यजमानेन द्रव्यत्यागः कार्यः सर्वत्र यथाकालं प्रत्याहुतित्यागस्य कर्तुमशक्यत्वात् ) देशकालौ संकीर्त्य अस्मिन् अमुकदेवतामन्त्रजपकृतपुरश्चरणदशांशहवनाख्ये कर्मणि इदं संम्पादितं समिच्चरुतिलाज्यादिहविर्द्रव्यं या याः यक्ष्यमाणदेवतास्तस्यैतस्यै देवतायै न मम यथादैवतमस्त्विति द्रव्यत्यागं कुर्यात् । अथ होमः ॥ ( अग्नेरुत्तरभागे ) ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम । (अग्नेर्दक्षिणभागे) ॐइन्द्राय स्वाहा । इदमिन्द्राय न मम इत्याघारौ ( मध्येसमिद्धतमे ) ॐ अग्नये स्वाहाइदमग्नये न मम ॥ ॐसोमाय स्वाहा । इदं सोमाय नमम इत्याज्यभागौ ॥ अथाचार्योऽग्निं संपूज्य नवग्रहहोमं कुर्यात् ॥ (सच अनन्वारब्धकर्तृको होमः) तत्रादौ नवग्रहाणां समिधः—अर्कः पलाशः खदिरो ह्यपामार्गोऽथ पिप्पलः। उदुम्बरःशमीदूर्वाःकुशाश्च समिधः क्रमात् ॥१॥ तिलाज्यचरुपकं च हविर्मुख्यं प्रकीर्तितम् ॥ ततो दधिक्षीरघृताक्ताः चरुसाकल्यसहिताऽर्कादिसमिधः सूर्यादिभ्यस्तत्तन्मन्त्रान्ते प्रत्येकमष्टाष्टसंख्यया जुहुयात् । तत्र क्रमः—ॐगणानान्त्वागणपतिठंहवामहेप्रियाणांन्त्वाप्रियपतिठं हवामहे

निधीनान्त्वांनिधिपतिंठ्ँहवामहेव्वसोमम ॥ आहमंजानिगर्भधमात्वमंजासिगर्भधं स्वाहा इदं गणपतये न मम १ ( एवं सर्वत्र )।
( अर्कम् )-ॐ आकृष्णेनरजंसाव्वर्त्तमानोनिवेशयंन्नमृतंमर्त्यंचहिरण्ययेंनसवितारथेनादेवोयातिभुवनानिपश्यंन् स्वाहा इदं सूर्य्याय
॥१॥ ( पलाशम् )-ॐइमंदेवाऽअसपत्नठ्ँसुवध्वंमहतेक्षुत्रायंमहतेज्यैष्ठ्यांयमहतेजानंराज्ज्यायेंद्रस्येंद्रियायंइममुष्यंपुत्रममुष्यैपुत्रमस्यै
व्विशऽएषवोंमीराजासोमोस्माकंब्राह्मणानाठ्ँराजांस्वाहाइदंचन्द्रमसे ॥२॥ (खदिरम्)-ॐअग्निर्मूर्द्धादिवःककुत्पतिः पृथिव्याऽअयम्
अपाठ्ँरेतांठ्ँसिजिन्वति स्वाहाइदंभौमाय॥३॥ (अपामार्गम्)-ॐउद्बुध्यस्वाग्नेप्रतिंजागृहित्वमिष्टापूर्तेसठ्ँसृंजेथामयंचअस्मिन्त्सध
स्थेऽअध्युत्तरस्मिन्विश्वेदेवायजंमानश्चसीदंतस्वाहा इदं बुधाय ॥ ४ ॥ (अश्वत्थम् )- ॐबृहंस्पतेऽअतिंयदर्य्योऽअर्हाद्युमद्विभातिक्र
तुंमज्जनेषुयद्दीदयच्छवंसऽऋतप्रजाततदस्मासुद्रविंणंधेहिचित्रठ्ँ स्वाहा इदं गुरवे ॥५॥ ( उदुम्बरम् )-ॐअन्नात्परिस्रुतोरसं
ब्रह्मणाव्यंपिबत्क्षत्रंपयठ्ँसोमंम्प्रजापतिः ऋतेनंसत्यमिंद्रियंविपानंठ्ँशुक्रमन्धंसऽइंद्रस्येन्द्रियमिदंपयोमृतंमधु स्वाहा इति शुक्राय
॥६॥ ( शमीम् )-ॐ शन्नोंदेवीरभिष्टंयऽआपोंभवन्तुपीतयेंशंय्योरभिस्रंवन्तुनःस्वाहा इदं शनैश्चराय ॥ ७ ॥ ( दूर्वाम् )-ॐ कयां
नश्चित्रऽआभुंवदूतीसदावृंधःसखां कयाशचिंष्ठयावृतास्वाहा इदं राहवे ॥ ८ ॥ ( दर्भम् )-ॐ केतुंकृण्वन्नंकेतवेपेशोंमर्य्याअपेशसे
समुषाद्भिरजायथाःस्वाहा इदं केतवे ॥ ९ ॥ इति नवग्रहाणां होमः ततो हस्ते जलमादाय अनेन समिधादिकृतेन होमेन सूर्य्यादयो
ग्रहाः प्रीयन्तां न ममेत्युत्सृजेत ॥ अथाधिदेवताप्रत्यधिदेवतानां होमः ॥ ईश्वरादिभ्यः पालाश्यः समिधस्तैरेव द्रव्यैः सह चतुश्चतुः
संख्यकाभिराहुतिभिर्जुहुयात् । ॐत्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् उर्व्वारुकमिंवबधंनान्मृत्योर्मुक्षीयमामृतात् स्वाहा इदमीश्वराय
॥१॥ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यांवहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् इष्णन्निषाणामुम्मंऽइषाणसर्वलोकम्मंइषाणस्वाहा इदमुमायै
॥२॥ॐयदक्रंदःप्रथमंजायमानऽउद्यन्त्संमुद्रादुतवापुरीषात् श्येनस्यंपक्षाहंरिणस्यंबाहूऽउपस्तुत्यंमहिंजातन्तेऽअर्व्वन्स्वाहा इदं स्कन्दा
य॥३॥ॐविष्णोंरराटमसिविष्णोःश्नप्त्रेंस्थोव्विष्णोःस्यूरंसिव्विष्णोंर्ध्रुवोसिवैष्णवमसिविष्णंवेत्वास्वाहाइदंविष्णवे॥४॥ॐब्रह्मयज्ञानं
प्रथमंपुरस्ताद्विसीमतःसुरुचोंव्वेनऽआंवःसबुध्न्याउपमाऽअस्यव्विष्ठाःसतश्चयोनिमसंतश्चव्विवंःस्वाहा इदं ब्रह्मणे ॥५॥ ॐ सजोषां
इन्द्रसगंणोमरुद्भिःसोमंम्पिबवृत्रहाशूरव्विद्वान्जहिशत्रूँ १ रपमृधोंनुदस्वाथाभयङ्कृणुहिव्विश्वतोंनःस्वाहा ॥ इदमिन्द्राय ॥ ६ ॥
ॐयमायत्वांगिरस्वतेपितृमतेस्वाहास्वाहा धर्म्मायस्वाहाधर्म्मः पित्रेस्वाहा इदं यमाय ॥ ७ ॥ ॐ कार्षिरसिसमुद्रस्यत्त्वाक्षित्याऽ
उन्नयामिसमापोऽअद्भिरंग्मतसमोषधीभिरोषधीःस्वाहा इदं कालाय॥८॥ॐचित्रावसोस्वस्तितेपारमशीयस्वाहा ॥इदं चित्रगुप्ताय ॥९॥

अनेन सघृततिलयवचरुसमिद्धोमेन ईश्वराधिदेवताः प्रीयन्तां न ममेति जलमुत्सृजेत् । यथाबाणप्रहाराणामिति यजमानमूर्द्धाभिषेकः ॥ अथ प्रत्यधिदेवताहोमः ॥ ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवेदेवाँ२ऽआसादयादिहस्वाहा इदमग्नये ॥ १ ॥ ॐ आपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन महेरणायचक्षसे १ योवःशिवतमोरसस्तस्यभाजयतेहनःउशतीरिवमातरः २ तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ आपोजनयथाचनःस्वाहा ३ इदमद्भ्यः ॥२॥ॐ स्योनापृथिविनोभवानृक्षरानिवेशनीयच्छानःशर्मसप्रथाःस्वाहा ॥ इदं पृथिव्यै॥३॥ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपाᳫंसुरेस्वाहा इदं विष्णवे ॥४॥ॐत्रातारमिन्द्रमवितारमिन्द्रᳫंहवेहवेसुहवᳫंशूरमिन्द्रम् ह्वयामिशक्रम्पुरुहूतमिन्द्रᳫंस्वस्तिनोमघवाधात्विन्द्रःस्वाहा०॥इदमिन्द्राय॥५॥ ॐ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः पूषासिधर्म्मायदीष्वस्वाहा ॥ इदमिंद्राण्यै ॥ ६ ॥ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरितावभूवयत्कामास्तेजुहुमस्तन्नोऽअस्तुव्वयᳫंस्यामपतयोरयीणाम् स्वाहा॥इदं प्रजापतये ॥७॥ ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु येऽअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमःस्वाहा इदं सर्पेभ्यः ॥८॥ ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतᳫंसुरुचोवेनऽआवःसबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चव्विवःस्वाहा॥इदं ब्रह्मणे॥९॥अनेन समिधादिकृतेन होमेन अग्न्यादिप्रत्यधिदेवताःप्रीयन्तां न मम इत्युत्सृजेत्॥अथ पञ्चलोकपालदेवताहोमः । विनायकादिपञ्चलोकपालेभ्य इन्द्रादिदशदिक्पालेभ्यश्च प्रत्येकं पूर्वोक्तद्रव्येण द्वे द्वे आहुती जुहुयात् । ॐगणानान्त्वागणपतिᳫंहवामहेप्रियाणान्त्वाप्रियपतिᳫंहवामहेनिधीनान्त्वानिधिपतिᳫंहवामहेव्वसोमम आहमजानिगर्भधमात्वमजासिगर्भधंस्वाहा॥इदं गणपतये ॥१॥ॐ अंबेऽअंबिकेऽम्बालिकेनमानयतिकश्चन ससस्त्यश्वकःसुभद्रिकांकाम्पीलवासिनीᳫंस्वाहा इदं दुर्गायै ॥२॥ ॐआनोनियुद्भिः शतिनीभिरध्वरᳫंसहस्रिणीभिरुपयाहियज्ञम् वायो अस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानःस्वाहा॥ इदं वायवे॥३॥ ॐघृतंघृतपावानःपिबतवसांव्वसापावानःपिबतान्तरिक्षस्यहविरसिस्वाहादिशःप्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा इदमाकाशाय॥४॥ॐ यावाङ्कशामधुमत्यश्विनासुनृतावतीतयायज्ञम्मिमिक्षताम् स्वाहा इदमश्विभ्याम्॥५॥ अनेन होमेन पञ्चलोकपालदेवताः प्रीयन्तां न ममेति जलमुत्सृजेत । यथाबाणप्रहाराणामिति यजमानमुर्द्धाभिषेकः ॥ अथ दशदिक्पालहोमः । ॐ त्रातारमिन्द्रमवितारमिन्द्रᳫंहवेहवेसुहवᳫंशूरमिन्द्रम् ह्वयामिशक्रम्पुरुहूतमिन्द्रᳫंस्वस्तिनोमघवाधात्विन्द्रः स्वाहा ॥इदमिन्द्राय ॥ ॥ १ ॥ ॐ त्वन्नोऽअग्नेतवपायुभिर्म्मघोनोरक्षतन्वश्चवन्ध ॥ त्रातातोकस्यतनयेगवामस्यानिमेषᳫंरक्षमाणस्तवव्रतेस्वाहा इदमग्नये ॥ २ ॥ ॐ यमायत्वांगिरस्वतेपितृमतेस्वाहास्वाहाधर्मायस्वाहाधर्म्मःपित्रेस्वाहा इदं यमाय ॥ ३ ॥ ॐ असुन्वन्तमयजमानमि

च्छस्तेनस्येत्यामन्विहितस्करस्यअन्यमस्मदिच्छसातंऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तुस्वाहा इदं निर्ऋतये ॥ ४ ॥ ॐ तत्त्वा यामिब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः अहेडमानोव्वरुणेहबोध्युरुशꣳसमानऽआयुः प्रमोषीः स्वाहा ॥ इदं वरुणाय । ॥ ५ ॥ ॐ आनोनियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् । वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः स्वाहा ॥ इदं वायवे ॥ ६ ॥ ॐ व्वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः प्रजावन्तः सचेमहि स्वाहा ॥ इदं कुबेराय ॥ ॥ ७ ॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेव्वयम् पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तयेस्वाहा ॥ इदमीशानाय ॥ ८ ॥ ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः यꣳशꣳसतेस्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअस्माँऽअवन्तुदेवाः स्वाहा ॥ इदं ब्रह्मणे ॥९॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनीयच्छानः शर्मसप्रथाः स्वाहा ॥ इदमनन्ताय ॥१०॥ अनेन होमेन इन्द्रादयो दिक्पालदेवताः प्रीयन्तां न ममेति जलमुत्सृजेत् ॥ इति दिक्पालहोमः ॥ अथ पितामहादिदेवानामेकैकाहुत्या होमः ॥ ॐ ब्रह्मयज्ञानंप्रथमं पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः स्वाहा इदं ब्रह्मणे॥१॥ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपाꣳसुरेस्वाहा इदं विष्णवे॥२॥ॐ त्र्यंबकंयजामहे० इदंशिवाय ॥ ३ ॥ ॐ गणानान्त्वा० स्वाहा इदं गणपतये ॥ ४ ॥ ॐ श्रीश्चतेलक्ष्मीश्च० स्वाहा इदं लक्ष्म्यै॥५॥ ॐपञ्चनद्यः सरस्वती० स्वाहा इदं सरस्वत्यै ॥ ६ ॥ ॐ अंबेअंबिकेऽम्बालिकेनमानयतिकश्चनससस्त्यश्वकः सुभद्रिकांकाम्पीलवासिनीं ॐ स्वाहा इदं दुर्गायै ॥७॥ ॐ नहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः ॥ एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरंक्षैत्रजित्यायदेवाः स्वाहा इदं क्षेत्रपालाय ॥ ८ ॥ ॐ भूतायत्वानारातयेस्वरभिविख्येषन्दृꣳहंतांदुर्याः पृथिव्यामुर्व्वन्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौसादयाम्यदित्याऽउपस्त्थेग्नेहव्यꣳरक्षस्वाहा इदं भूतेभ्यः ॥ ९ ॥ ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवोभवानः यत्त्वेमहेप्रतितन्नो जुषस्वशन्नो भवद्विपदेशञ्चतुष्पदेस्वाहा इदं वास्तोष्पतये ॥ १० ॥ ॐ विश्वकर्म्मन्हविषाव्वर्द्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम् तस्मैविशः समनमन्तपूर्व्वीरयमुग्रोविहव्योयथासत्स्वाहा इदं विश्वकर्मणे ॥ ११ ॥ एवं ग्रहमण्डलदेवताहोमं कृत्वा ततः सर्वतोभद्रादिमण्डलस्थापितदेवताभ्यः शिवमन्त्रहोमे लिङ्गतोभद्रदेवताभ्यश्च सकृत्सकृत्संख्यया प्रत्येकं तिलयवपायसाज्यद्रव्येण होमं कुर्यात् ॥ ततः प्रधानदेवतायै तत्तत्कल्पोक्तद्रव्यैस्तिलपायसाज्यसमिधादिभिश्च जपदशांशेन होमं कृत्वा यन्त्रस्थावरणदेवताभ्यश्चैकैकाहुतीर्जुहुयात् । ततो देशकालौ संकीर्त्य अद्यामुकमन्त्रजपदशांशहोमस्य कृतस्य कर्मणः साङ्गतासिद्ध्यर्थं स्थापितदेवतानां

मृडाग्नेश्चोत्तरपूजनं करिष्ये इति संकल्प्य ॐ अग्ने नय सुपथा राये ऽअस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिं विधेम १ ॐ मृडाग्नये नमः इति मन्त्रेणाग्निं गन्धादिपञ्चोपचारैः संपूज्य स्थापितदेवतानामुत्तरपूजनं कुर्यात् ॥ ॐ भूर्भुवः स्वः सूर्यादिस्थापितदेवताभ्यो नमः इति गन्धादिपञ्चोपचारैः संपूज्य अनया पूजया मृडाग्निः स्थापितदेवताश्च प्रीयन्तामित्युत्सृजेत् । ततो हुतशेषहविर्द्रव्यं गृहीत्वा ब्रह्मणान्वारब्धः स्विष्टकृद्धोमं कुर्यात् । ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम । ततो भूराद्या नवाज्याहुतयः—ॐ भूः स्वाहा इदमग्नये न मम ॥ १ ॥ ॐ भुवः स्वाहा इदं वायवे न मम ॥२॥ ॐ स्वः स्वाहा इदं सूर्याय न मम ॥ ३ ॥ ॐ त्वन्नोऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वा द्वेषांᳮसि प्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां न मम ॥४॥ ॐ सत्वन्नोऽअग्नेऽवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्व नो व्वरुणᳮरराणो व्वीहि मृडीकᳮसुहवो नऽएधि स्वाहा इदमग्नीवरुणाभ्यां न मम ॥५॥ ॐ अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्त्वमयाऽअसि । अया नो यज्ञं वहास्यया नो धेहि भेषजᳮस्वाहा इदमग्नये न मम ॥ ६ ॥ ॐ येते शतं व्वरुण ये सहस्रं यज्ञियाः पाशा व्वितता महान्तः । तेभिर्नोऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम । ॐ उदुत्तमं व्वरुण पाशमस्मदवाधमं व्वि मध्यमᳮश्रथाय । अथा व्वयमादित्य व्व्रते तवानागसो ऽअदितये स्याम स्वाहा इदं वरुणायादित्यायादितये च न मम ॥८॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ॥९॥ इति नवाहुतयः ॥ अथ बलिदानम् । तच्चैवम् । अग्न्यायतनस्य समंतादिदिवि दिक्षु च दशदिक्पालानां माषभक्तबलयो देयाः ॥ देशकालौ स्मृत्वा अद्य पूर्वकृतस्य कर्मणः साङ्गतासिद्ध्यर्थं दिक्पालपूर्वकम् आदित्यग्रहमण्डलस्थापितदेवताभ्यो बलिदानं करिष्ये इति संकल्पयेत् । पूर्वे ॐ त्रातारमिन्द्र० १ इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तबलिं समर्पयामि । भो इन्द्र दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव अनेन बलिदानेन इन्द्रः प्रीयताम् । (एवं सर्वत्र) । १ आग्नेय्यां दिशि ॐ त्वन्नोऽअग्नेतवदेव० अग्नये साङ्गाय सपरिवाराय० भो अग्ने दिशं रक्ष बलिं भक्ष० आयुःकर्ता० अनेन बलि० अग्निः प्रीयताम् २ । दक्षिणस्याम् ॐ यमाय त्वाङ्गि० यमाय साङ्गाय० भो यम दिशं० आयुःकर्ता० अनेन बलिदानेन यमः प्रीयताम् । ३ नैर्ऋत्याम् । ॐ असुन्वन्तमयजमानमिच्छ० निर्ऋतये साङ्गाय० भो निर्ऋते दि० अनेन बलि० निर्ऋतिः प्रीयताम् ॥ ४ ॥ पश्चिमे ॐ तत्त्वा यामि० वरुणाय साङ्गाय ० भो वरुण० दिशं० आयुःकर्ता० अनेन बलि०वरुणः प्रीयताम् ५। वायव्याम् ॐ आनो नियुद्भि०वायवे साङ्गाय० भो वायो

दिशं० अनेन बलिदा०वायुः प्रीयताम् ६ ॥ उत्तरे ॐ वयर्ठसोमस्य० कुबेराय० भो कुबेर० अनेन सोमः प्रीयताम् ७ । ऐशान्याम्
ॐतमीशानं०ईश्वराय साङ्गाय०भो ईश्वर दिशं०अनेन बलिदानेन ईश्वरः प्रीयताम्८।पूर्वैशानयोर्मध्येॐ अस्मेरुद्रा०ब्रह्मणेसाङ्गाय०
भो ब्रह्मन्० अनेन बलिदानेन ब्रह्मा प्रीयताम्९। निर्ऋतिपश्चिमयोर्मध्ये ॐस्योनापृथिविनो० ॐ अनन्ताय साङ्गाय० भो अनन्त
दिशं० आयुः कर्ता० अनेन बलिदानेन अनन्तः प्रीयताम्।१०।(ततो ग्रहवेदीसमीपे ग्रहाणां बलयः)ॐआकृष्णेन०सूर्याय साङ्गाय०
ईश्वराग्निरूपाधिप्रत्यधिदेवतासहिताय इमं सदीपमाषभक्तबलिं समर्पयामि भो सूर्य इमं बलिं गृहाण ममसकुटुम्बस्याभ्युदयं कुरु
आयुः कर्ता० अनेन बलिदानेन सूर्यः प्रीयताम् १ । ॐ इमं देवा० ॐ सोमाय साङ्गाय उमांबुरूपाधिप्रत्यधिदेवतासहिताय० भो
सोम इमं बलिं०२ । अग्निमूर्द्धा०ॐ भौमाय सां० स्कन्दभूमिरूपाधिप्रत्यधिदेवतासहिताय० भो भौम इमं०बलिं गृ० ३ । ॐ
उद्बुध्यस्वा० बुधाय सां० नारारायणविष्णुरूपाधिप्रत्यधिदेवतासहिताय० इमं माष० भो बुध इमं०४ । ॐ बृहस्पते० बृहस्पतये
साङ्गाय०ब्रह्मेन्द्ररूपाधिप्रत्यधिदेवतासहिताय०भो बृहस्पते इमं० अनेन बलि० ५।ॐ अन्नात्परि०शुक्राय सांगाय ० इन्द्रेन्द्राणीरूपाधि
प्रत्यधिदेवतासहिताय०भो०शुक्र इमं बलिं०६।ॐशन्नोदेवी०शनैश्चराय सां० यमप्रजापतिरूपाधिप्रत्यधिदेवतासहिताय० भो शनैश्चर
इमं बलिं०७। ॐकयानश्चित्र० राहवे साङ्गाय० कालरूपाधिप्रत्यधिदेवतासहिताय० भो राहो इमं बलिं० अनेन बलिदानेन राहुः
प्रीयताम् ८ । ॐ केतुंकृण्वन्नं० केतवे साङ्गाय० चित्रगुप्तब्रह्मरूपाधिप्रत्यधिदेवतासहिताय० भो केतो इमं बलिं० अनेन केतुः
प्रीयताम् ९। ततः पञ्चलोकपालेभ्यो बलिः । ॐ गणानांत्वा० गणपतये साङ्गाय० भो गणपते० इमं बलिं० १ ॐअम्बेऽअंबिके०
दुर्गायै साङ्गायै० भो दुर्गे इमं०२।ॐआनोनियुद्भिः०वायवे साङ्गाय० भो वायो० इमं ० ३। ॐघृतंघृत० आकाशाय० भो आकाश
इमं०४।ॐयावांकशा० अश्विभ्यां साङ्गाभ्यां इमं बलिं० भो अश्विनौ० ५ । ॐवास्तोष्पते साङ्गाय० भो वास्तो० ६ । ततो मातृ
णामेकमेव बलिं दद्यात् । ॐ समख्येदेव्याधियासन्दक्षिणयोरुचक्षसामामऽआयुष्प्रमोषीर्मोऽअहन्तवंवीरम्विदेयतवदेविसन्दृशि
गौर्यादिमातृभ्यः इमं सदीपमाषभक्तबलिं०भोभो गौर्यादिमातर इमं बलिं गृह्णीत आयुःकर्त्र्यःक्षेमकर्त्र्यःअनेन बलिदानेन गौर्यादिमा
तरः प्रीयन्ताम्॥ततः प्रधानदेवताभ्यो बलिं दत्त्वा क्षेत्रपालाय महाबलिंदद्यात्। अथ क्षेत्रपालबलिः।एकस्मिन्वंशपात्रे कुशानास्तीर्य
तदुपरि आहारचतुर्गुणं द्विगुणं वा माषभक्तदध्योदनं जलपात्रं च निधाय हरिद्राकुंकुमसिंदूरकज्जलद्रव्यपताकादीपयुतं कृत्वा अद्ये
त्यादि० सकलारिष्टशांतिपूर्वकं प्रारिप्सितस्य कर्मणः साङ्गतासिद्ध्यर्थं क्षेत्रपालपूजनं बलिदानं च करिष्ये इति संकल्प्य ॐ न

हिस्पर्शमविंदन्नन्यमस्माद्वैश्वानुरात्पुरऽएतारंमग्नेः एमेनमघन्नमृताऽमर्त्त्यंवैश्वानरंक्षेत्रंजित्याय देवाः॥१ क्षेत्रपालाय नमः इति मन्त्रेण षोडशोपचारैः संपूज्य प्रार्थयेत् । "ॐ नमो क्षेत्रपालस्त्वं भूतप्रेतगणैः सह ॥ पूजां बलिं गृहाणेमं सौम्यो भवतु सर्वदा॥१॥ देहिमे आयुरारोग्यं निर्विघ्नं कुरु सर्वदा ।" अनेन पूजनेन क्षेत्रपालः प्रीयताम् । ततो बलिदानम्।ॐ"क्षेत्रपाल महाबाहो महाबलपराक्रम॥ क्षेत्राणां रक्षणार्थाय बलिं गृह्ण नमोस्तु ते ॥ १ ॥ क्षेत्रपालाय सांगाय भूतप्रेतपिशाचशाकिनीवेतालादिपरिवारयुताय सायुधाय सशक्तिकाय सवाहनाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि भोभोः क्षेत्रपाल सर्वतो दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु आयुःकर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव । अनेन बलिदानेन क्षेत्रपालः प्रीयताम् । (इमं बलिम् अनवेक्ष्यमाणेन दुर्ब्राह्मणेन नीत्वा निःक्षिपेत् । यजमानोऽपि तस्य पृष्ठतो द्वारपर्यंतं गत्वा जलं क्षिपेत्)॥इति क्षेत्रपाल बलिः ॥ अथ भूतेभ्यस्तत्रैव बलिदानम् ॥ शूर्पमध्ये पिष्टमयदीपमाषान्नदध्योदनहरिद्रासिन्दूरकज्जलगन्धरक्तपुष्पाणि संस्थाप्य गीतवादित्रकुटुम्बजनसहितश्चत्वरे गत्वा तत्र गन्धपुष्पाद्यर्चितं शूर्पं स्थापयेदेभिर्मन्त्रैः-ॐ बलिं गृह्णन्तु ते देवा आदित्या वसवस्तथा । मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ १ ॥ जृम्भकाः सिद्धगन्धर्वा माला विद्याधरानुगाः ॥ असुरा यातुधानाश्च पिशाचा डाकिनीगणाः ॥ २ ॥ शक्तयो यक्षवेताला ये च विघ्नविनायकाः ॥ जगतां शान्तिकर्तारः क्रमाद्याश्चैव मातरः ॥ ३ ॥ मा विघ्नं मा च मे रोगो मा संतु परिपन्थिनः । सौम्या भवन्तु तृप्ताश्च भूताः प्रेताः सुखावहाः ॥ ४ ॥ ते सर्वे तृप्तिमायान्तु रक्षां कुर्वन्तु मेऽध्वरे । देवताभ्यः पितृभ्यश्च भूतेभ्यः सहजन्तुभिः ॥ ५ ॥ एतत्स्थानाधिवासिभ्यः प्रयच्छामि बलिं नमः ॥ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ॥ ६ ॥ ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वंतु तानि मे । देवदानवगन्धर्वा यज्ञराक्षसपन्नगाः ॥७॥ ऋषयो मुनयो गावो देवमातर एव च । एते ममाध्वरे रक्षां कुर्वन्तु प्रमदान्विताः ॥८॥ एतेभ्यो भूतेभ्यो गन्धादिकं वः स्वाहा इति बलिं दत्त्वा गृहे आगत्य पाणिपादं प्रक्षाल्याचमनं कुर्यात् ॥ इति बलिदान प्रकारः ॥ अथ पूर्णाहुतिहोमः ॥ देशकालौ स्मृत्वा कृतस्य कर्मणः साङ्गतासिद्ध्यर्थं वसोर्धारासमन्वितं पूर्णाहुतिहोमं करिष्ये इति सङ्कल्पं कृत्वा आज्याधिश्रयणमाज्योद्वासनमवेक्षणमुत्पवनं स्रुक्स्रुवप्रतपनं सूत्रेण वेष्टनं चतुर्गृहीतेनाज्यग्रहणं तदुपरि घृतप्लुतनारिकेलस्य निधानं तस्य पूजनं च कृत्वा सपत्नीको यजमानो गुरोर्दक्षिणस्कन्धं स्पृशन् जुहुयात् । तत्र मन्त्राः-ॐ समुद्रादूर्मिर्म्मधुमाँ २ उदारदुपाᳲशुनासममृतत्वमानट् । घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः॥१॥वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः । उपब्रह्माशृणवच्छस्यमानञ्चतुःशृङ्गोवमीद्गौरऽएतत् ॥ २ ॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्यत्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्त्याँ२ आविवेश ॥ ३ ॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्द

नू॥इन्द्रऽएकठंसूर्यऽएकंअजनव्वेनादेकठंस्वधयानिष्टतक्षुः॥४॥एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्व्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअ
भिचाकशीमिहिरण्ययोव्वेतसोमध्यऽआसाम् ॥५॥ सम्यक्स्रवन्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः॥एतेऽअर्षन्त्यूर्म्मयोघृतस्य
मृगाऽइवक्षिपणोरीयमाणाः ॥ ६ ॥ सिन्धोरिवप्राध्वनेशूघनासोव्वातप्प्रमियःपतयन्तिजिह्वाः ॥ घृतस्यधाराऽअरुषोनव्वाजीकाष्ठाभि
न्दन्नूर्म्मिभिःपिन्वमानः ॥ ७ ॥ अभिप्प्रवन्तसमनेव्वयोषाः कल्याण्यःस्मयमानासोऽअग्निम् ॥ घृतस्यधाराःसमिधोनसन्तताजु
षाणोहर्य्यतिजातवेदाः ॥ ८ ॥ कन्याऽइवव्वहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधाराऽ
अभितत्पवन्ते ॥ ९ ॥ अभ्यर्षतसुष्टुतिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञन्नयतदेवतानोघृतस्यधारामधुमत्पवन्ते ॥
॥ १० ॥ धामन्तेव्विश्वम्भुवनमधिश्रितमन्तःसमुद्रेहृद्यन्तरायुषि अपामनीकेसमिथेयऽआभृतस्तमश्यामधुमन्तन्तऽऊर्म्मिम् ॥
॥ ११ ॥ पुनस्त्वादित्यारुद्रावसवःसमिन्धताम्पुनर्ब्रह्माणोव्वसुनीथयज्ञैः ॥ घृतेनत्वन्तन्वँव्वर्धयस्वसत्याः सन्तुयजमानस्य
कामाः ॥ १२ ॥ सप्ततेऽअग्नेसमिधः सप्तजिह्वाःसप्तऽऋषयःसप्तधामप्प्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजन्तिसप्तयोनीरापृणस्वा
घृतेनस्वाहा ॥ १३ ॥ पूर्णादर्व्विपरापतसुपूर्णापुनरापत ॥ वस्नेवव्विक्रीणावहाऽइषमूर्जठंशतक्रतो स्वाहा ॥ १४ ॥ इदमग्नये
वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये अद्भ्यश्च न मम । ततो वसोर्द्धारां जुहुयात । तत्र मन्त्रः--
ॐ सप्ततेऽअग्नेसमिधःसप्तजिह्वाःसप्तऽऋषयःसप्तधामप्प्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजन्तिसप्तयोनीरापृणस्वघृतेनस्वाहा १ शुक्र
ज्योतिश्चचित्रज्योतिश्चसत्यज्योतिश्चज्योतिष्मांश्चशुक्रश्चऽऋतपाश्चात्यठंहाः २ ईदृङ्चान्यादृङ्चसदृङ्चप्रतिसदृङ्चमितश्चसम्मि
तश्चसभराः ३ ऋतश्चसत्यश्चध्रुवश्चधरुणश्चधर्त्ताचव्विधर्त्ताचव्विधारयः ४ ऋतजिच्चसत्यजिच्चसेनजिच्चसुषेणश्चअन्तिमित्रश्चदूरेऽ
अमित्रश्चगणः ५ ईदृक्षासऽएतादृक्षासऽऊषुणःसदृक्षासःप्प्रतिसदृक्षासऽएतनमितासश्चसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअ
स्मिन् ६ स्वतवांश्चप्रघासीचसान्तपनश्चगृहमेधीचक्रीडीचशाकीचोज्जेषी ७ इन्द्रन्दैवीर्व्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्व्विशो
मरुतोनुवर्त्मानोभवन् एवमिमंयजमानन्दैवीश्चव्विशोमानुषीश्चानुवर्त्मानोभवन्तु ८ इमठंस्तनमूर्ज्जस्वन्तन्धयापाम्प्रपीनमग्नेसरि
रस्यमध्ये ॥ उत्संजुषस्वमधुमन्तमर्व्वन्त्समुद्रियठंसदनमाविशस्व ९ घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम ॥ अनुष्व
धमावहमादयस्वस्वाहाकृतंव्वृषभव्वक्षिहव्यम् ॥ इति पूर्णाहुतिहोमः । ततस्त्र्यायुषकरणम् । श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं
बलम् । तेज आयुष्यमारोग्यं देहि मे हव्यवाहन॥१॥ॐ त्र्यायुषञ्जमदग्नेरिति ललाटे । कश्यपस्य त्र्यायुषमिति ग्रीवायाम् । यद्देवेषु

त्र्यायुषमिति दक्षिणांसे । तन्नोऽअस्तुत्र्यायुषमिति हृदि॥ततः संस्रवप्राशनम् । पवित्राभ्यां मार्जनम्॥अग्नौ पवित्रप्रतिपत्तिः।ब्रह्मणे पूर्ण पात्रदानम् । तद्यथा अद्येत्यादि पठित्वा अद्य कृतैतदमुकजपदशांशहोमकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुक शर्मणे ब्राह्मणाय ब्रह्मणे तुभ्यमहं संप्रददे । ॐ स्वस्तीति प्रतिवचनम् । ततो ब्रह्मग्रन्थिविमोकः । ततः प्रणीतोदकेनॐसुमित्रियानऽ आपऽओषधयः संत्विति ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजमिति च यजमानमूर्धानमभिषिं चति । ततः ॐ दुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टि यं च व्वयं द्विष्म इति ईशान्यां प्रणीतां न्युब्जीकुर्यात्।ततः आस्तरणक्रमेण बर्हि रुत्थाप्याज्येनाभिघार्य ॐ देवांगातुविदोगातुव्वित्वागातुमितमनसस्पतऽइमंदेवयज्ञᳬस्वाहावातेधाᳬस्वाहा इति मंत्रेण हस्तेनैव जुहु यात । एवं होमं समाप्य होमान्ते जले जपदेवतां संपूज्य होमदशांशेन दुग्धमिश्रजलेन मूलमंत्रान्ते–ॐअमुकदेवतां तर्पयामि इत्यु क्त्वा तर्पणंकुर्य्यात् । ततस्तर्पणदशांशेन मूलमन्त्रान्ते–आत्मानमभिषिंचामि नमः इति यजमानमूर्ध्न्यभिषेकः कार्य्यः ॥ ततो ग्रह कलशदेवताकलशानामुदकमेकस्मिन्पात्रे एकीकृत्य दूर्वापंचपल्लवैरुदङ्मुख आचार्यस्तिष्ठन् जापका ऋत्विजश्च सपत्नीकं यजमानं प्राङ्मुखमुपविष्टमभिषिञ्चेयुः ( अभिषेके पत्नी वामतः ) ॐ आपोहिष्ठामयोभुवस्तानऽऊर्जेदधातनमहेरणाय चक्षसे॥ १ ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः उशतीरिवमातरः॥२॥ तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथआपोजनयथा चनः॥३॥ॐ त्रातारमिन्द्रमवितारमिन्द्रᳬहवेहवेसुहवᳬशूरमिन्द्रम्॥ह्वयामिशक्रम्पुरुहूतमिन्द्रᳬस्वस्तिनोमघवाधात्विन्द्रः॥४॥ॐवरु णस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्त्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥५॥भगप्रणे तर्भगसत्यराधोभगेमान्धियमुदवाददन्नः ॥ भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्नृवन्तःस्याम ६ इदमापःप्रवहतावद्यञ्चमलञ्चयत् यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् आपोमातस्मादेनसःपवमानश्चमुञ्चतु ७ पुनंतुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनंतुविश्वाभू तानिजातवेदःपुनीहिमा॥८॥आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम्॥ भवावाजस्यसङ्गथे॥९॥पयः पृथिव्याम्पयऽओषधीषुपयोदिव्य न्तरिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसन्तुमह्यम्॥१०॥देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां सरस्वत्यैवाचोयन्तुर्यन्त्रिये दधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चामि ॥ ११ ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् अश्विनोर्भैषज्येनतेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यैभैषज्येनवीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिञ्चामि ॥ १२ ॥ पालाशं भवतितेनब्राह्मणेभिषिञ्चतिब्रह्मवैपालाशोब्रह्मणैवेनमेतदभिषिञ्चति ॥ १४ ॥ सर्वेषांवाऽएषवेदानाᳬरसोयत्साम

सर्वेषामेवैवमेतद्वेदानां॑रसेनाभिषिञ्चति ॥ १५ ॥ यद्देवकुल्पा अहोतिप्राणावैकल्पाऽअमृतम्पवेप्राणऽअमृतेनैवैनमेतदभि षिञ्चति ॥ १६ ॥ दीर्घायुत्वायबलांयुवर्चसेसुप्रजास्त्वायसहसाऽअथोजीवशरदंःशतम् ॥ १७ ॥ द्यौःशान्तिरन्तरिक्षुःशान्तिः पृथिवीशान्तिरापुःशान्तिरोषधयुःशान्तिः वनस्पतयुःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिःसर्वःशान्तिःशान्तिरेवशान्तिःसामाशा न्तिरेधि॥१८॥अथ पौराणिका मंत्राः॥ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ आखण्डलोग्निर्भगवान्यमो वै निर्ऋतिस्तथा॥२॥वरुणःपवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्ति स्तुष्टिः कान्तिस्तु मातरः ॥४॥ एतास्त्वामभिषिंचन्तु देवपत्न्यः समागताः ॥ आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥५॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयो मुनयो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ७ ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ९ ॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । अभिषिञ्चन्तु ते सर्वे धर्मकामार्थसिद्धये ॥ १० ॥ अमृताभिषेकोऽस्तु ॥ एवमभिषे कानन्तरं सर्वौषधीरनुलिप्य शुद्धोदकेन स्नात्वा उभयोः स्नानवस्त्रत्यागः। शुक्लमाल्याम्बरधरो धृतमङ्गलतिलकः सपत्नीको यजमानः स्वासने उपविश्य आचम्य आज्यावलोकनं कुर्यात् ॐ रूपेणंवोरूपमभ्यागांन्तुथोवोविश्ववेदाविभजतुऋतस्यपथाप्रेतंचन्द्रदक्षि णाविस्वःपश्यव्यन्तरिक्षंयतंस्वसदस्यैः ॥ १ ॥ रूपंरूपम्प्रतिरूपोबभूवतदस्यरूपम्प्रतिचक्षणाय इन्द्रोमायाभिःपुरुरूपईयते युक्ताह्यस्यहरयःशतादशेत्ययंवैहरयोयंवैदशचसहस्राणिबहूनिचनन्तातदेतद्ब्रह्मपूर्वमनमवाह्यजमनुःसर्वानुशासनम् ॥ २ ॥ इत्याज्ये मुखमवलोक्य देशकालौ स्मृत्वा ममायुरारोग्यप्राप्तये ससुवर्णमिदमाज्यपात्रममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति कस्मै चिद्ब्राह्मणाय दद्यात ॥ ( ततो ब्राह्मणभोजनसंकल्पः ) कृतस्य कर्मणः साङ्गतासिद्ध्यर्थममुकसंख्याकब्राह्मणान् भोजयिष्ये इति संकल्प्य यथाशक्ति आचार्याय दक्षिणां दद्यात्। ततो ऋत्विगादिभ्यो यथाशक्ति दक्षिणां दत्त्वा अन्येभ्यो ब्रा ह्मणेभ्योऽपि यथाशक्ति भूयसीं दक्षिणां दत्त्वा तेषामाशिषो गृह्णीयात । ते च ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ १ ॥ ॐ श्रीवर्चस्वमायुष्यमारोग्यमाविधात्पवमानम्महीयतेधान्यंधनं पशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ २ ॥ पुनंस्त्वादित्यारुद्रावसंवःसमिन्धताम्पुनर्ब्रह्माणोवसुनीथयज्ञैः। घृतेनत्वन्तन्वंवर्धयस्व

सत्याःसंन्तुयजमानस्यकामाः ॥ ३ ॥ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ ४ ॥ इत्याशिषो दद्युः ॥ ततो देवताग्निविसर्जनम् ॥ यान्तु देवगणाः सर्वे स्वशक्त्या पूजिता मया । इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥ १ ॥ ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तंस्त्वेमहेउपप्रयन्तुमरुतःसुदानवऽइन्द्रप्राशूर्भवासचा ॥ २ ॥ उमान्तिके गणपति ब्रह्माण्डे ब्रह्म गच्छतु । वैकुण्ठे भगवान्विष्णुः कैलासे च महेश्वरः ॥३॥ लक्ष्मीर्विष्णुसमीपे च कलशश्चैव सागरे । पन्नगा यान्तु पाताले काश्मीरे च सरस्वती ॥ ४ ॥ स्वात्मपीठेषु योगिन्यः क्षेत्रपालो महाबलः । वेदाश्च ब्रह्मणः पार्श्वे मातरो मातृमण्डले ॥ ५ ॥ रविः कलिङ्गं यमुनां च चन्द्रमा भौमो ह्यवन्तीं शशिजश्च कोशलान् । सिन्धुं गुरुर्भोजकटं भृगुश्च मन्दः सुराष्ट्रं पवनं च राहुः ॥ केतुर्गिरिं शक्रमुखाश्च देवाः स्वांस्वां पुरीं यान्तु यथाक्रमेण ॥६॥ ब्रह्मोर्द्धतां नागपतिस्तथाऽधो याम्यामगस्त्यो ध्रुव उत्तरां च । सप्तर्षयो राशिभयोगपक्षगन्धर्वयक्षा गिरयो नदाश्च । स्थानानि गच्छन्तु यथा समायुर्द्याशीश्च सन्तानसुखं प्रदद्युः ॥ ७ ॥ ( आवाहितदेवताः स्वस्वस्थानानि गच्छत ) "गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥१॥ ॐ यज्ञंयज्ञंगंच्छयज्ञपतिंगच्छस्वांयोनिंगच्छस्वाहा ॥ एषतेयज्ञोयंज्ञपतेसहसूंक्तवाकःसर्वंवीरस्तञ्जुषस्वस्वाहा ॥ २ ॥ यज्ञ नारायण स्वस्थाने गच्छ ॥ एवं देवान्विसृज्य यज्ञोपकरणादिकम् ऋत्विग्भ्यो दत्त्वा गुर्वादीन्संपूज्य करौ संपुटीकृत्य मया यत्कृतम् अमुकदेवतामन्त्रपुरश्चरणाख्यं यज्ञकर्म तत्कालहीनं भक्तिहीनं श्रद्धाहीनं द्रव्यहीनं च भवतां ब्राह्मणानां वचनात् श्रीसूर्याद्यावाहितदेवताप्रसादाच्च सर्वविधैः परिपूर्णमस्त्विति भवन्तो ब्रुवन्तु ॥ अस्तु परिपूर्णम् इति ब्राह्मणा ब्रूयुः ॥ ततो मार्जनदशांशेन वा ब्राह्मण शतं पञ्चाशद्विंशतिं वा शक्त्यनुरूपं भोजयित्वा -ॐ यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वन्दे नमच्युतम् ॥१॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः॥२॥ ॐ विष्णवे नमो विष्णवे नमो विष्णवे नमः इत्युक्त्वा कुटुम्बजनैः परिवृतः स्वयं भोजनं कुर्यात् ॥इति श्रीबीकानेरविषयान्तर्गतश्रीरत्नगढनगरनिवासिना गौड वंशावतंसश्रीवासिष्ठगोत्रोद्भवेन श्रीरामकृष्णामरचन्द्रपौत्रेण श्रीचतुर्भुजदत्तात्मजेन श्रीकस्तूरीचन्द्रसूनुना श्रीमहादेवभक्तवाजसनेयिना पंडितश्रीचतुर्थीलालशर्मणा विरचिते अनुष्ठानप्रकाशे पद्धतिखण्डे सर्वमन्त्रानुष्ठानोपयोगिवैदिकहोमविधानप्रकरणं समाप्तम् ॥३॥

अथ तन्त्रोक्तहवनविधिः ॥ तत्र तावदग्निस्थापनप्रकारः॥ आचम्य मूलेण प्राणानायम्य मूलमन्त्रेण षडङ्गन्यासं कृत्वा कुण्डे स्थण्डिले वा संस्कारचतुष्टयं कुर्यात् । तद्यथा--मूलेन कुण्डं वीक्ष्य ॐ फट् इत्यस्त्रेण संप्रोक्ष्य तेनैव मन्त्रेण कुशत्रयेण संताड्य ॐ हुं इति वर्म्मणा मुष्टिनासिञ्च्य स्रुवेण कुशमूलेन वा प्रागग्रा उत्तरोत्तरक्रमेण तिस्रो रेखाः स्थण्डिलप्रमाणाः प्रादेशमात्रा वा कृत्वा तदुपरि उदगग्राः प्राक्प्राक् क्रमेण तिस्रो रेखाः कुर्यात् । ततस्तासु प्रागग्रासु क्रमेण ॐ मुकुन्दाय नमः १ ॐ ईशानाय नमः २ ॐ पुरन्दराय नमः ३ इति गन्धादिभिः संपूज्य उदगग्रासु ॐ ब्रह्मणे नमः १ ॐ वैवस्वताय नमः २ ॐ इन्दवे नमः ३ इति पूजयेत् ।

अथवा कुण्डे स्थंडिले वा मध्ये कोणं तद्बाह्ये षट्कोणं तद्बाह्ये वृत्तं तद्बाह्ये अष्टदलं तद्बाह्ये चतुरस्रं चतुर्द्वारयुतं भूमंदिरयन्त्रं लिखित्वा तत्र मध्ये त्रिकोणे ॐ ह्रीं ॐ लिखेत् । ततः ॐ मण्डूकादिपरतत्त्वान्तपीठदेवताभ्यो नमः ॐ जयादिपीठशक्तिभ्यो नमः इति पीठं संपूज्य यन्त्रमध्ये सुवर्णस्य शकलं निधाय ॐ ह्रीं वागीश्यै वागीश्वराय योगपीठात्मने नमः इत्यासनं दत्त्वा ॐ आग्नेययोगपीठाय नमः इति पीठं संपूज्य तत्र ऋतुस्नातां नीलेन्दीवरसन्निभां वागीश्वरेणसंयुक्तां वागीश्वरीं ध्यात्वा ॐ ह्रीं वागीश्यै वागीश्वराय नमः ( वैष्णवहोमे तु ॐ ह्रीं लक्ष्मीनारायणाभ्यां नमः ) इति गंधादिभिः संपूज्य मूलमन्त्रमुच्चार्य्य ॐ कुण्डाय नमः इति कुण्डं पूजयेत् ॥ ततः सूर्यकान्तमणेः सकाशात् वा अरणितः श्रोत्रियागारतो वा कांस्यपात्रेण पिहितमग्निं ॐ फट् इत्यस्त्रेणादाय कुण्डबाह्ये आग्नेय्यां निधाय ॐहुं इति वर्म्मणा उद्घाट्य ज्वलितकुशेन ॐफट् इति मन्त्रेण नैर्ऋत्यां क्रव्यादांशं परित्यजेत ततो मूलमन्त्रेणाग्निं पुरतो धृत्वा तेनैव वीक्ष्य ॐ फट् इत्यस्त्रेण अल्पं प्रोक्ष्य तेनैव कुशत्रयेण संताड्य ॐहुं वर्मणा संसिच्य जाठरेणाग्निनानीतस्याग्नेरैक्यं स्मरन् ॐरं इति वह्निबीजेन चैतन्यं संयोज्य ॐ इति तारेणाभिमन्त्र्य धेनुमुद्रया ॐवं इति सुधाबीजेनअमृतीकृत्य ॐफट् इत्यस्त्रेण संरक्ष्य अवगुण्ठिन्यामुद्रया ॐहुंइति कवचेनावगुण्ठयेत ततो बाहुभ्यां वह्निपात्रं समुद्धृत्य प्रणवेन कुण्डोपरि त्रिर्विभ्राम्य—"शय्यागतां ऋतुस्नातां नीलेन्दीवरधारिणीम्॥देवेन भुज्यमानां तां स्मरेत्तद्योनिमण्डले" इति ध्यात्वा जानुस्पृष्टधरातलो मूलमन्त्रेण योनौ शिवरेतोधिया आत्मसंमुखं वह्निं धृत्वा ॐहुंवह्निचैतन्याय नमःइतिकुण्डमध्ये स्थापयेत । ततःॐवागीश्यै वागीश्वरायनमःइत्याचमनं दत्त्वाॐचित् पिंगल हन२ दह२ पच पच सर्वज्ञाज्ञापयस्वाहा इति मन्त्रेणाग्निं प्रज्वालयेत्[1]ततो ज्वालिनीं मुद्रां प्रदर्श्य उत्थायॐअग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्।सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्" इति प्रार्थयेत् ततोऽग्नेरमुकनामासि इति नाम कृत्वा-वैश्वानरेति मन्त्रस्य भृगुर्ऋषिर्गायत्री छन्दः अग्निर्देवता रं बीजं स्वाहा शक्तिर्हवने प्रार्थनायां च विनियोगः।ॐवैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा ॥२६॥ इति मन्त्रेणाग्निंपाद्यादिभिः संपूज्य न्यासं कुर्य्यात । ॐ स्प्रूँ हिरण्यायै नमः लिङ्गे १ ॐ ष्प्रूँ गगनायै नमो गुदे २ ॐ श्प्रूँ रक्तायै नमो मूर्ध्नि ३ ध्प्रूँ कृष्णायै नमः वक्रे ४ ॐ ल्प्रूँ सुप्रभायै नमो नासिकायाम् ५ ॐ प्रूँ बहुरूपायै नमः नेत्रे ६ ॐप्रूँ अतिरिक्तायै नमः सर्वाङ्गे ७ इत्यग्नेर्जिह्वान्यासं कृत्वा ॐ देवताभ्यो नमो लिङ्गे १ ॐ पितृभ्यो नमो गुदे २ ॐ गन्धर्वेभ्यो नमःमूर्ध्नि ३ ॐयक्षेभ्यो नमःवक्रे ४ॐनागेभ्यो नमो नासिकायाम् ५ ॐ पिशाचेभ्यो नमः नेत्रे ६ ॐ राक्षसेभ्यो नमः सर्वाङ्गे ७ इति जिह्वादेवतान्यासं कुर्य्यात् ॥ ततः ॐ सहस्रार्चिषे हृदयाय नमः ॐ स्वस्ति




१ मन्त्रमहोदधौ-मणिबन्धयुतौ कृत्वा प्रसृताङ्गुलिकौ करौ। कनिष्ठाङ्गुष्ठयुगले मिलितावन्तःप्रसारितै॥ ज्वालिनी नाम मुद्रेयं वैश्वानरप्रियङ्करी॥ १॥" इत्युक्तम्।

पूर्णाय शिरसे स्वाहा २ ॐ उत्तिष्ठ पुरुषाय शिखायै वषट् ३ ॐ धूमव्यापिने कवचाय हुं ४ ॐ सप्तजिह्वाय नेत्रत्रयाय वौषट् ५ ॐ धनुर्धराय अस्त्राय फट् ६ इति न्यासं कृत्वा ॐ अग्नये जातवेदसे नमो मूर्ध्नि १ ॐ अग्नये सप्तजिह्वाय नमो वामांसे २ ॐ अग्नये हव्यवाहनाय नमो वामपार्श्वे ३ ॐ अग्नये अश्वोदरजाय नमो वामकटौ ४ ॐ अग्नये वैश्वानराय नमो लिङ्गे ५ ॐ अग्नये कौमारतेजसे नमो दक्षिणकटौ ६ ॐ अग्नये विश्वमुखाय नमो दक्षिणपार्श्वे ७ ॐ अग्नये देवमुखाय नमो दक्षांसे ८ एवं वह्नि न्यासं कृत्वा रं वह्न्यासनाय नम इत्यासनं प्रकल्प्य ध्यायेत्। अथ ध्यानम्—"इष्टं शक्तिं स्वस्तिकाभीतिमुच्चैर्दीर्घैर्दोर्भिर्धारयन्तं जपाभम्। हेमाकल्पं पद्मसंस्थं त्रिनेत्रं ध्यायेद्वह्निं बद्धमौलिं जटाभिः इति ॥" इति ध्यात्वा मानसोपचारैः संपूजयेत्॥ ततः शुद्धोदकेन कुण्डं स्थण्डिलं वा परिषिच्य प्राचीवर्जं दक्षिणे प्रागग्रैः पश्चिमे उदगग्रैः उत्तरे प्रागग्रैश्च दर्भैर्मध्यस्थमेखलायां परिस्तीर्य्य त्रीन् परिधीन् क्रमात् निक्षिपेत्। ततस्तेषूपरि मेखलाक्रमेण ॐ ब्रह्मणे नमः १ ॐ विष्णवे नमः २ ॐ शिवाय नमः ३ इति गन्धादिभिः संपूज्य योन्याम्—ॐ गौर्य्यै नमः इति गौरीं पूजयेत्। ततः ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इति वह्निं मध्ये गन्धादिभिः संपूज्य वह्नेरावरणपूजां कृत्वा कुण्डयोनिं वस्त्रेणाच्छाद्य कुण्डं नवसूत्रेण संवेष्ट्य कुशकण्डिकां कुर्यात् इति। इति तन्त्रोक्तः अग्निस्थापनप्रकारः ॥ अथ तान्त्रिककुशकण्डिका ॥ स्ववामे कुशानास्तीर्य तत्र क्रमेण प्रणीतां १ प्रोक्षणीम् २ आज्यस्थालीं ३ स्रुवं ४ स्रुचं ५ च अधोमुखानि चैतानि न्यस्य होमद्रव्यं घृतं कुशान् समिधः पञ्च पालाशीः समिधः ५ अन्यदप्युपयोगि यत् तन्निधाय पवित्रे २ कृत्वा मूलमन्त्रेण शुद्धां भसा तानि प्रोक्ष्य उत्तानानि विधाय प्रणीतां जलेन पूरयेत्। तत्र "ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धुकावेरि जलेऽस्मिन्संनिधिं कुरु ॥ १ ॥" इति मन्त्रेण कुशमुद्रया[1] तीर्थान्यावाह्य पवित्रे २ अक्षतांश्च तत्र निक्षिप्य उत्पवनं चरेत्। तत उदीच्यां प्रणीतां निधाय प्रोक्षण्यां तज्जलं क्षिप्त्वा पवित्राभ्यां जलमानीय हवनीयं द्रव्यजातं प्रोक्षयेत्। ततो मूलमन्त्रेण मूलगायत्र्या वा दक्षिणे पीठमासाद्य तत्र ॐ अणिमादिपीठदेवताभ्यो नमः इति पीठशक्तीः संपूज्य ॐ नमो ब्रह्मणे इति ब्रह्माणमावाह्य षोडषोपचारैः पूजयेत् ॥ ततो हस्ताभ्यां स्रुक्स्रुवौ धृत्वा अधोमुखौ वह्नौ त्रिवारं तापयित्वा वामहस्तेन तौ धृत्वा दक्षिणहस्तेन दर्भैर्यथाक्रमं तदग्रमूलमध्यानि शोधयित्वा प्रोक्षणीजलेन सम्प्रोक्ष्य पूर्ववत् पुनः प्रताप्य दर्भानग्नौ निःक्षिप्य तयोः स्रुक्स्रुवयोः शक्तित्रयं न्यसेत्। मूले—ह्रां इच्छाशक्त्यै नमः १। मध्ये—ह्रीं ज्ञानशक्त्यै नमः २। अन्ते—ह्रूं क्रियाशक्त्यै नमः ३। ततः—स्रुवे नमः शक्त्यै १। स्रुचे नमः शंभवे २ इति न्यस्य तौ सूत्रत्रयेण संवेष्ट्य कुङ्कुमपुष्पादिभिः संपूज्य आत्मनो दक्षिणभागे कुशोपरि स्थापयेत्। तत आज्यस्थालीमानीय ॐ फट् इति वारिणा प्रोक्ष्य तस्यामाज्यं निक्षिप्य मूलमन्त्रतो गोमुद्रयाऽमृतीकृत्य षट्संस्कारांश्चरेत्—(तद्यथा) कुण्डोद्धृते वायुकोणे स्थितेऽङ्गारे ॐ नम इति मन्त्रेणाज्यस्थालीं निधाय तापनं कुर्य्यादिति तापनम् १।

१ (कुशमुद्रा) "ऊर्ध्वां मध्यमिकां कृत्वा तर्जनीं मध्यपर्वणि। संयोज्याकुञ्चयेत्किञ्चिन्मुद्रैषा कुशसंज्ञिका ॥ १ ॥"

दर्भयुगलं संदीप्य । ॐ नम इत्याज्ये विनिक्षिपेदिति पवित्रीकरणम् २ पुनर्दर्भयुग्मप्रदीप्तम् ॐ हुं इति वर्म्मणा आज्योपरि भ्रामयित्वा दर्भयुग्ममग्नौ विसर्जयेत् इत्यभिद्योतनम् ३ । ततः ॐ फडिति मन्त्रेण घृते प्रज्वलितं दर्भत्रयं प्रदर्श्य तानग्नौ न्यसेदित्युद्योतनम् ४ । ततः घृतस्थालीं गृहीत्वा तदङ्गारान्न वह्नौ संयोज्य जलं संस्पृश्य तत अङ्गुष्ठानामिकाभ्यां प्रादेशसंमितौ दर्भौ गृहीत्वा ॐ फट् इत्यस्त्रेण घृतमुत्पवेत इत्युत्पवनम् ५ । ॐ नम इति मन्त्रेणात्मसंमुखं कृत्वा घृतसंप्लवनं कुर्य्यात् ६॥इति घृतस्य षट्संस्काराः ॥ ततः प्रादेशमात्रं सग्रन्थिदर्भयुग्मं घृतमध्ये क्षिप्त्वा आज्यस्य द्वौ भागौ कृत्वा कृष्णशुक्लौ पक्षौ स्मरेत् । ततो वामे इडां नाडीं दक्षिणे पिङ्गलां मध्ये सुषुम्णां ध्यात्वा होमं कुर्य्यात् । ( तद्यथा )–ॐ नम इति मन्त्रेण स्रुवेण दक्षिणभागादाज्यं गृहीत्वा ( अग्नेर्दक्षिणलोचने ) ॐ अग्नये स्वाहा इदमग्नये १ ( तद्वद्वामभागादाज्यमादाय वामलोचने ) ॐ सोमाय स्वाहा इदं सोमाय २ ( तन्मध्यादाज्यं गृहीत्वा अग्नेर्भाललोचने ) ॐ अग्नीषोमाभ्यां स्वाहा इदं० ३ इति जुहुयात् । तत ॐ नमः इति स्रुवेणाज्यं दक्षिणभागादादाय ( वह्निमुखे ) ॐ अग्नये स्विष्टकृते स्वाहा इदं० इति जुहुयात् । ततो महाव्याहृतिहोमः ।ॐभूःस्वाहा । ॐ भुवः स्वाहा । ॐस्वः स्वाहा । ततो वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्म्माणि साधय स्वाहा इति मन्त्रेण त्रिवारं हुत्वा अग्नेर्गर्भाधानादिकाः क्रियाः संपादयेत् ( शुभे कर्मणि गर्भाधानादिविवाहान्तं क्रूरकर्मणि गर्भाधानादिमरणान्तं संस्कारान् कुर्यात् ) । तत्र प्रणवेन घृताहुतिभिरष्टाभिरेकैकं संस्कारं कुर्यात् । तत्र क्रमः–ॐ अस्याग्नेर्गर्भाधानसंस्कारं करोमि स्वाहा १ ॐ अग्नेः पुंसवनसंस्कारं करोमि स्वाहा २ ॐ अग्नेः सीमन्तोन्नयनसंस्कारं करोमि स्वाहा ३ ॐ अग्नेर्जातकर्मसंस्कारं क० स्वाहा ४ ॐ अग्नेर्नामकर्मसंस्कारं क० स्वाहा ५ ॐ अग्नेर्निष्क्रमणसंस्कारं० स्वाहा ६ ॐ अग्नेः कर्णवेधसं स्कारं० स्वाहा ७ ॐ अग्नेरन्नप्राशनसं० स्वाहा ८ ॐ अग्नेश्चौलसंस्का० स्वा० ९ ॐ अग्नेरुपनयनसं० स्वाहा १० ॐ अग्नेर्वेदारम्भसं० स्वाहा ११ ॐ अग्नेर्महानाम्नीमहाव्रतसं० स्वाहा १२ ॐ अग्नेरुपनिषद्व्रतसं० स्वाहा १३ ॐ अग्नेर्व्रतविसर्गसं० स्वाहा १४ ॐ अग्नेः केशान्तगोदानसं० स्वाहा १५ ॐ अग्नेर्विवाहसंस्कारं करोमि स्वाहा १६ एवं संस्कारान् संपाद्य वह्नेः पितरौ ॐ पार्वतीपरमेश्वराभ्यां नमः इति मन्त्रेण संपूज्य आत्मनि योजयित्वा मूलाग्रघृतसंप्लुताः पञ्चसमिधो मनसा ध्यात्वा जुहुयात् । ततः अग्नेः सप्तजिह्वादिमूर्तिभ्यस्तत्तन्मन्त्रैणैकैकामाज्याहुतिं जुहुयात् । तद्यथा-ॐ स्प्रूं हिरण्यायै अग्निजिह्वायै नमः स्वाहा इदं हिरण्यायै अग्निजिह्वायै न मम १ ॐ ष्प्रूं गगनायै अ० नमः स्वाहा इदं ग० २ ॐ श्प्रूं रक्तायै अ० स्वाहा० इदं रक्तायै० ३ ॐ व्प्रूं कृष्णायै अ० स्वाहा इदं कृष्णायै० ४ ॐ ल्प्रूं सुप्रभायै अ० स्वाहा इदं सुप्रभायै० ५ ॐ प्रूँ बहुरूपायै अ० स्वाहा इदं बहुरूपायै० ६ ॐ प्रूं अतिरक्तायै अ० स्वाहा इद अतिरक्तायै ॥७॥ अथ जिह्वादिदेवताहोमः ॥ ॐ देवताभ्यो नमः स्वाहा इदं देव०१ ॐ पितृभ्यः स्वाहा इदं पि० २ ॐ गन्धर्वेभ्यः स्वाहा इदं ग० ३ ॐ यक्षेभ्यः स्वाहा इदं य० ४ ॐ नागेभ्यः स्वाहा इदं नागे० ५ ॐ पिशाचेभ्यः स्वाहा इदं पि०६ ॐ राक्षसेभ्यः स्वाहा इद रा०७॥ अथाग्नेरङ्गदेवताहोमः॥ ( ततः केसरेषु अग्न्यादिकोणे मध्ये

दिक्षु च ) ॐ सहस्रार्चिषे हृदयाय नमः स्वाहा १ ॐ स्वस्तिपूर्णाय शिरसे स्वाहा २ ॐ उत्तिष्ठ पुरुषाय शिखायै वषट् स्वाहा ३ ॐ धूमव्यापिने कवचाय हुं स्वाहा ४ ॐ सप्तजिह्वाय नेत्रत्रयाय वौषट् स्वाहा ५ ॐ धनुर्धरायास्त्राय फट् स्वाहा ॥६॥ ( ततः पूर्वादिदलेषु ) ॐ अग्नये जातवेदसे नमः स्वाहा १ ॐ अग्नये सप्तजिह्वाय स्वाहा २ ॐ अग्नये हव्यवाहनाय स्वाहा ३ ॐ अग्नये अश्वोदरजाय स्वाहा ४ ॐ अग्नये वैश्वानराय स्वाहा ५ ॐ अग्नये कौमारतेजसे स्वाहा ६ ॐ अग्नये विश्वमुखाय स्वाहा ७ ॐ अग्नये देवमुखाय स्वाहा८॥ इत्यष्टमूर्तिहोमः॥ अथ सायुधदिक्पालहोमः॥ ॐ इन्द्राय सुराधिपतये वज्रहस्ताय स्वाहा १ ॐ वह्नये तेजोऽधिपतये छागवाहनाय शक्तिहस्ताय स्वाहा २ ॐ यमाय प्रेताधिपतये दण्डहस्ताय स्वाहा ३ ॐ नैर्ऋतये रक्षाधिपतये खड्गहस्ताय स्वाहा ४ ॐ वरुणाय जलाधिपतये पाशहस्ताय स्वाहा ५ ॐ वायवे प्राणाधिपतये ध्वजहस्ताय स्वाहा ६ ॐ सोमाय क्षेत्राधिपतये गदाहस्ताय स्वाहा ७ ॐ ईशानाय विद्याधिपतये त्रिशूलहस्ताय स्वाहा ८॥ एवं वह्नियन्त्रदेवताहोमं कृत्वा ततः स्रुवेण चतुर्वारमाज्यमादाय स्रुचि निधाय स्रुवेण तां पिधाय उत्तिष्ठन् ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा वौषट् इत्यनेन जुहुयात । ततो विघ्नेश्वरमन्त्रेण दशाहुतीर्जुहुयात् । तद्यथा–ॐ स्वाहा १ ॐ श्रीँ स्वाहा२ ॐ श्रीँ ह्रीँ स्वाहा३ ॐ श्रीँ ह्रीँ क्लीँ स्वाहा४ ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ स्वाहा५ ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गं स्वाहा ६ ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गं गणपतये स्वाहा ७ ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गं गणपतये वरवरदस्वाहा ८ ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गं गणपतये वरवरद सर्वजनं मे स्वाहा९ ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा १० एवं दशाहुतीर्हुत्वा पुनः समस्तमन्त्रेण चतुर्वारं जुहुयात् । एव मग्निसंस्कारं कृत्वा देवतायाः पीठं पूजयेत् ॥ ततो हुताशने इष्टदेवताम् आवाह्य आवाहनादिका मुद्राः प्रदर्श्य वह्निरूपां तां देवतां पूजयेत् । ततो वह्निरूपस्य देवस्य मुखे मूलमन्त्रेण पञ्चविंशतिसंख्यया घृताहुतीर्हुत्वा वह्निदेवतयोरात्मना सहैक्यं विभाव्य मूल मन्त्रेण नाडीसंधानार्थमेकादशाहुतीराज्येन जुहुयात् । ततः इष्टदेवताया आवरणदेवताभ्य एकैकां घृताहुतिं हुत्वा पुनर्मूलमन्त्रेण दश धा घृतं जुहुयात ततः कल्पोक्तद्रव्येण जपदशांशं मूलमन्त्रेण हुत्वा होमं समाप्य पूर्णाहुतिं दद्यात । तद्यथा–होमावशिष्टेनाज्येन स्रुचं पूरयित्वा तदग्रे पुष्पं फलं निधाय तांस्रुवेणाच्छाद्य उत्थाय तयोर्मूलं नाभौ कृत्वा मूलमन्त्रं वौषट् इत्यन्तं पठित्वा ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा मां मदीयं च सकलं हरये ते समर्पये ॐ तत्सदिति मन्त्रेण पूर्णाहुतिं दद्यात् । एवं पूर्णाहुतिं दत्त्वा संहारमुद्रया देवतां स्वात्मनि उद्वास्य पुनर्व्याहृतिभिर्हुत्वा अग्नेर्जिह्वादीनां पूर्ववत् एकैकाहुतिं दत्त्वा मेखलोपरि अद्भिः परिषिच्यात्मनि पावकं योजयित्वा ततः "ॐ भोभो वह्ने महाशक्ते सर्वकर्मप्रसाधक ॥ कर्मांतरेऽपि संप्राप्ते सान्निध्यं कुरु सादरम् ॥ १ ॥ " इति संप्रार्थ्य नत्वा अग्निं विसृजेत् ॥ ततो दक्षिणादानम्–"सुवर्णमयुते दद्यात् लक्षे दशसुवर्णकम् ॥ दक्षिणा तु प्रदातव्या यथा होमे तथा जपे ॥१॥" ततो वह्नौ पवित्रे निक्षिप्य प्रणीताम्बु भुवि क्षिप्त्वा सकुशान् परिधीन् अग्नौ क्षिपेत । एवं होमं समाप्य

मूलमंत्रेण होमदशांशेन दुग्धमिश्रजलेन ॐ अमुकदेवतां तर्पयामि इति तर्पणं कृत्वा तद्दशांशेन मूलमन्त्रान्ते अभिषिञ्चामि इत्यभिषेकं कुर्यात् । ततो नानाविधैरन्नैर्द्विजसत्तमान्भोजयित्वा तेभ्यो दक्षिणां दत्त्वा 'न्यूनं सम्पूर्णतां०' वाचयेत् ॥ इति शारदातिलकमन्त्रमहोदधिप्रोक्तं तान्त्रिकहवनविधानं समाप्तम् ॥ इति श्रीबीकानेरविषयान्तर्गतश्रीरत्नगढनगरनिवासिना गौडवंशावतंसेन श्रीवसिष्ठगोत्रोद्भवेन श्रीरामकृष्णामरचन्द्रपौत्रेण श्रीकस्तूरीचन्द्रचतुर्भुजसूनुना श्रीमहादेवभक्तवाजसनेयिना पण्डितश्रीचतुर्थीलालशर्मणा विरचिते अनुष्ठानप्रकाशे पद्धतिकाण्डे सर्वदेवोपयोगितन्त्रोक्तहोमप्रयोगप्रकरणम् ॥४॥ समाप्तश्चायं द्वितीयः पद्धतिकाण्डः ॥ २ ॥



अथ पुरश्चरणप्रयोगकाण्डः ॥ प्रथमं तावत्सकलविघ्ननिवर्त्तकश्रीगणेशमन्त्रपुरश्चरणप्रकरणम् ॥ सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं दन्तं पाशाङ्कुशेष्टान् पुरुकरविलसद्बीजपूराभिरामम् । बालेन्दुद्योतमौलिं करिपतिवदनं दानपूरार्द्रगण्डं भोगीन्द्राबद्धमौलिं भजत गणपतिं रक्तवस्त्राङ्गरागम् ॥ १ ॥ चन्द्रताराादिबलान्विते सुमुहूर्ते विविक्ते देशे जपस्थानं प्रकल्प्य तत्र भूशुद्धिं कूर्मशुद्धिम् आसनादिशुद्धिं च पूर्ववत् कृत्वा पूर्वदिने स्वदेहशुद्ध्यर्थमयुतगायत्रीजपं कुर्य्यात् । ततः प्रारम्भदिने प्रातर्नित्यमावश्यकं कर्म समाप्य पूर्वोक्तविधिना मङ्गलस्नानं गणेशपूजनादिजापकवर्णान्तं सर्वं सम्पाद्य स्वासने प्राङ्मुख उदङ्मुखो वा उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य अमुककामनासिद्ध्ये अमुकश्रीगणपतिदेवताप्रीतये अमुकश्रीगणपतिमन्त्रस्यामुकसंख्यात्मकजपपुरश्चरणं करिष्ये । तदङ्गत्वेनासनादिशुद्धिं भूतशुद्धिं प्राणप्रतिष्ठामन्तर्मातृकान्यासं बहिर्मातृकान्यासं विघ्नेशादिकलामातृकान्यासं च करिष्ये इति च संकल्प्य बहिर्मातृकान्यासान्तं पूर्ववत्सर्वं कृत्वा सर्वगणेशमन्त्राङ्गभूतविघ्नेशादिकलामातृकान्यासं कुर्य्यात् । तद्यथा—ॐ अस्य विघ्नेशादिकलामातृकान्यासस्य गणक ऋषिर्निचृत् गायत्री छन्दः विनायको देवता हलो बीजानि स्वराः शक्तयः सर्वेष्टसिद्ध्ये न्यासे विनियोगः ॥ अथ षडङ्गन्यासः ॥ ॐ गां हृदयाय नमः ॥ १ ॥ ॐ गीं शिरसे स्वाहा ॥ २ ॥ ॐ गूं शिखायै वषट् ॥ ३ ॥ ॐ गैं कवचाय हुम् ॥ ४ ॥ ॐ गौं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ गः अस्त्राय फट् ॥ ६ ॥ एवं षडङ्गन्यासं कृत्वा गजाननं ध्यायेत् ॥ अथ ध्यानं—"गुणाङ्कुशवराभीतिपाणिं रक्ताब्जहस्तया ॥ प्रिययालिङ्गितं रक्तं त्रिनेत्रं गणपं भजे ॥ १ ॥" एवं ध्यात्वा कलान्यासं

कुर्यात् ॥ तत्र क्रमः ॥ ॐ अं विघ्नेशह्रीभ्यां नमः ललाटे ॥ १ ॥ ॐ आं विघ्नराजश्रीभ्यां नमः मुखवृत्ते ॥ २ ॥ ॐ इं विनायक पुष्टिभ्यां नमः दक्षिणनेत्रे ॥३॥ ॐ ईं शिवोत्तमशान्तिभ्यां नमः वामनेत्रे ॥४॥ ॐ उं विघ्नकृत्स्वस्तिभ्यां नमः दक्षिणकर्णे ॥५॥ ॐ ऊं विघ्नहर्तृसरस्वतीभ्यां नमः वामकर्णे ॥६॥ ॐ ऋं गणस्वाहाभ्यां नमः दक्षिणनासापुटे ॥७॥ ॐ ॠं एकदन्तसुमेधाभ्यां० वामनासापुटे ॥ ८ ॥ ॐ लृं द्विदन्तकान्तिभ्यां० दक्षिणगण्डे ॥ ९ ॥ ॡं गजवक्त्रकामिनीभ्यां नमः वामगण्डे ॥१०॥ ॐ एं निरञ्जनमोहिनीभ्यां नमः ऊर्ध्वोष्ठे ॥ ११ ॥ ॐ ऐं कपर्दिनटीभ्यां० अधरोष्ठे ॥ १२ ॥ ॐ ओं दीर्घजिह्वपार्वतीभ्यां० ऊर्ध्वदन्तपङ्क्तौ ॥ १३ ॥ ॐ औं शङ्कुकर्णज्वालिनीभ्यां० अधोदन्तपङ्क्तौ ॥ १४ ॥ ॐ अं वृषभध्वजनन्दाभ्यां० शिरसि ॥१५॥ ॐ अः गणेश सुरेशाभ्यां० मुखे ॥ १६ ॥ ॐ कं गजेन्द्रकामरूपिणीभ्यां० दक्षिणबाहुमूले ॥ १७ ॥ ॐ खं शूर्पकर्णोमाभ्यां नमः दक्षिणकूर्परे ॥ १८ ॥ ॐ गं त्रिलोचनतेजोवतीभ्यां० दक्षिणमणिबन्धे ॥ १९ ॥ ॐ घं लम्बोदरसत्याभ्यां० दक्षाङ्गुलिमूले ॥२०॥ ॐ ङं महानन्दविघ्नेशीभ्यां० दक्षाङ्गुल्यग्रे ॥ २१ ॥ ॐ चं चतुर्मूर्तिसुरूपिणीभ्यां० वामबाहुमूले ॥ २२ ॥ ॐ छं सदाशिवकामदाभ्यां०वाम कूर्परे ॥ २३ ॥ ॐ जं आमोदमदजिह्वाभ्यां० वाममणिबन्धे ॥ २४ ॥ ॐ झं दुर्मुखभूतिभ्यां वामाङ्गुलिमूले ॥ २५ ॥ ॐ ञं सुमुखभौतिकाभ्यां नमः वामाङ्गुल्यग्रे ॥ २६ ॥ ॐ टं प्रमोदसिताभ्यां नमः दक्षपादमूले ॥ २७ ॥ ॐ ठं एकपादरमाभ्यां नमः दक्षजानुनि ॥ २८ ॥ ॐ डं द्विजिह्वमहिषीभ्यां नमः दक्षगुल्फे ॥२९॥ ॐ ढं शूरभञ्जनीभ्यां नमः दक्षपादाङ्गुलिमूले ॥३०॥ ॐ णं वीरविकरणाभ्यां नमः दक्षपादाङ्गुल्यग्रे ॥ ३१ ॥ ॐ तं षण्मुखभ्रुकुटीभ्यां नमः वामपादमूले ॥ ३२ ॥ ॐ थं वरदलज्जाभ्यां नमः वामजानुनि ॥ ३३ ॥ ॐ दं वामदेवदीर्घघोणाभ्यां नमः वामगुल्फे ॥ ३४ ॥ ॐ धं वक्रतुण्डधनुर्धराभ्यां नमः वामाङ्गुलिमूले ॥ ३५ ॥ ॐ नं द्विरदयामिनीभ्यां नमः वामाङ्गुल्यग्रे ॥ ३६ ॥ ॐ पं सेनानीरात्रिभ्यां नमः दक्षपार्श्वे ॥ ३७ ॥ ॐ फं कामान्धग्रामणीभ्यां नमः वामपार्श्वे ॥ ३८ ॥ ॐ बं मत्तशशिप्रभाभ्यां नमः पृष्ठे ॥३९॥ ॐ भं विमत्तलोललोचनाभ्यां नमः नाभौ ॥ ४० ॥ ॐ मं मत्तवाहनचञ्चलाभ्यां नमः जठरे ॥ ४१ ॥ ॐ यं त्वगात्मभ्यां जटीदीप्तिभ्यां नमः हृदि ॥४२॥ ॐ रं असृगात्मभ्यां मुण्डीसुभगाभ्यां नमः दक्षांसे ॥४३॥ ॐ लं मांसात्मभ्यां खड्गीदुर्भगाभ्यां नमः ककुदि ॥ ४४ ॥ ॐ वं मेदात्मभ्यां वरेण्यशिवाभ्यां नमः वामांसे ॥४५॥ ॐ शं अस्थ्यात्मभ्यां वृषकेतनभगाभ्यां नमः हृदयादिदक्षहस्तान्तम् ॥४६॥ ॐ षं मज्जात्मभ्यां भक्तिप्रियभगिनीभ्यां नमः हृदयादिवामहस्तान्तम् ॥४७॥ ॐ सं शुक्रात्मभ्यां गणेशभोगिनीभ्यां नमः हृदयादिदक्षपादान्तम् ॥४८॥ ॐ हं प्राणात्मभ्यां मेघनादसुभगाभ्यां नमः हृदयादिवामपादान्तम् ॥४९॥ ॐ ळं शक्त्यात्मभ्यां व्याप्तिकालरात्रिभ्यां नमःजठरे॥५०॥ ॐ क्षं परमात्मभ्यां गणेश्वरकालिकाभ्यां नमः मुखे॥५१॥एवं कलान्यासं कृत्वा प्राणानायम्य मूलमन्त्रन्यासं कुर्यात्॥एवं कलान्यासः सर्वगणपतिमन्त्रेषु कार्यः॥(अथ वक्रतुण्डगणेशमन्त्रो मन्त्रमहोदधौ)॥यथा–'ॐवक्रतुण्डाय हुं'इति षडक्षरो मूलमन्त्रः॥अस्य श्रीगणेश मन्त्रस्य भार्गव ऋषिः अनुष्टुप् छन्दः विघ्नेशो देवता वं बीजं यं शक्तिःसर्वेष्टसिद्धये जपे विनियोगः।अथ ऋष्यादिन्यासः।ॐभार्गव

ऋषये नमः शिरसि ॥१॥ ॐ अनुष्टुप्छन्दसे नमः मुखे ॥२॥ॐविघ्नेशदेवतायै नमः हृदये ॥३॥ॐ वं बीजाय नमः गुह्ये॥४॥ॐ
यं शक्तये नमः पादयोः ॥५॥ अथ करन्यासः । ॐ वं अङ्गुष्ठाभ्यां नमः ॥ ॐ क्रं तर्जनीभ्यां नमः ॥ ॐ तुं मध्यमाभ्यां नमः ॥
ॐ डां अनामिकाभ्यां नमः ॥ ॐ यं कनिष्ठिकाभ्यां नमः ॥ ॐ हुं करतलकरपृष्ठाभ्यां नमः ॥ अथ षडङ्गन्यासः । ॐ वं नमः
हृदयाय नमः ॥१॥ ॐ क्रं नमः शिरसे स्वाहा ॥ २ ॥ ॐ तुं नमः शिखायै वषट् ॥ ३ ॥ ॐ डां नमः कवचाय हुं ॥ ४ ॥ ॐ
यं नमः नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ हुं नमः अस्त्राय फट् ॥ ६ ॥ अथ वर्णन्यासः । ॐ वं नमः भ्रूमध्ये ॥ १ ॥ ॐ क्रं नमः
कण्ठे ॥ २ ॥ ॐ तुं नमः हृदये ॥ ३ ॥ ॐ डां नमः नाभौ ॥ ४ ॥ ॐ यं नमः लिङ्गे ॥ ५ ॥ ॐ हुं नमः पादयोः ॥ ६ ॥इति
वर्णन्यासं कृत्वा ॐ वक्रतुण्डाय हुं नमः इति सर्वाङ्गे व्यापकं न्यस्य ध्यायेत्—"उद्यद्दिनेश्वररुचिं निजहस्तपद्मे पाशाङ्कुशाभय
वरान्दधतं गजास्यम् ॥ रक्ताम्बरं सकलदुःखहरं गणेशं ध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥ १ ॥" इति ध्यात्वा स्वदेहे ॐ मं
मण्डूकादिपरतत्त्वान्तपीठदेवताभ्यो नमः इति न्यस्य पीठपूजां कुर्यात् । तद्यथा—पुष्पाक्षतानादाय स्ववामभागे श्रीगुरुभ्यो नमः
॥१॥ दक्षिणे गणपते नमः ॥२॥ मध्ये स्वेष्टदेवतायै नमः ॥३॥ पीठमध्ये ॐ मं मण्डूकाय नमः ॥१॥ॐकां कालाग्निरुद्राय नमः
॥२॥ ॐ आं आधारशक्त्यै नमः ॥३॥ॐ कूं कूर्म्माय नमः॥४॥ॐअं अनन्ताय नमः॥५॥ॐपृं पृथिव्यै नमः॥६॥ ॐक्षीं क्षीरसाग
राय नमः ॥७॥ ॐ रं रत्नद्वीपाय नमः ॥ ८ ॥ ॐ रं रत्नमण्डपाय नमः ॥ ९ ॥ ॐ कं कल्पवृक्षाय नमः ॥ १० ॥ ॐ रं रत्नवेदि
कायै नमः ॥११॥ ॐ रं रत्नसिंहासनाय नमः ॥१२॥ इत्युपर्युपरि संपूज्य आग्नेय्याम् ॐ धं धर्माय नमः ॥१३॥ नैर्ऋत्यां ॐ ज्ञां
ज्ञानाय नमः॥१४॥वायव्याम्—ॐ वैं वैराग्याय नमः॥१५॥ ईशान्यां ॐऐं ऐश्वर्याय नमः॥१६॥ पूर्वे ॐ अं अधर्माय नमः॥१७॥
दक्षिणे ॐ अं अज्ञानाय नमः ॥१८॥ पश्चिमे ॐ अं अवैराग्याय नमः ॥ १९ ॥ उत्तरे ॐ अं अनैश्वर्याय नमः ॥ २० ॥ इति
पूजयेत् ॥ ततो मध्ये आं आनंदकन्दाय नमः ॥२१॥ सं संविन्नालाय नमः ॥२२॥ ॐ सं सर्वतत्त्वकमलासनाय नमः ॥ २३ ॥
ॐ प्रं प्रकृतिमयपत्रेभ्यो नमः ॥२४॥ ॐ विं विकारामयकेसरेभ्यो नमः ॥ २५ ॥ ॐ पं पञ्चाशद्वर्णाढ्यकर्णिकाभ्यो नमः॥२६॥
ॐ अं अर्कमण्डलाय द्वादशकलात्मने नमः ॥ २७ ॥ ॐ सों सोमण्डलाय षोडशकलात्मने नमः ॥ २८ ॥ ॐ वं वह्निमण्ड
लाय दशकलात्मने नमः ॥ २९ ॥ ॐ सं सत्त्वाय नमः ॥ ३० ॥ ॐ रं रजसे नमः ॥ ३१ ॥ ॐ तं तमसे नमः ॥ ३२ ॥
ॐ अं आत्मने नमः ॥ ३३ ॥ ॐ पं परमात्मने नमः ॥ ३४ ॥ ॐ ह्रीं ज्ञानात्मने नमः ॐ मं मायातत्त्वाय० ॥ ३५ ॥
ॐ कं कलातत्त्वाय० ॥ ३६ ॥ ॐ विं विद्यातत्त्वाय० ॥ ३७ ॥ ॐ पं परतत्त्वाय नमः ॥ ३८ ॥ एवं पीठदेवताः संपूज्य
पीठशक्तीः प्रतिष्ठाप्य पूजयेत् । तत्राष्टदिक्षु मध्ये च क्रमेण ॐ तीव्रायै नमः ॥ १ ॥ ॐ चालिन्यै नमः ॥ २ ॥ ॐ नन्दायै
नमः ॥ ३ ॥ ॐ भोगदायै नमः ॥ ४ ॥ ॐ कामरूपिण्यै नमः ॥ ५ ॥ ॐ उग्रायै नमः ॥ ६ ॥ ॐ तेजोवत्यै
नमः ॥ ७ ॥ ॐ सत्यायै नमः ॥ ८ ॥ ॐ विघ्ननाशिन्यै नमः ॥ ९ ॥ इति विनायकस्य सर्वमन्त्राणामेताः पीठशक्तयो

ज्ञेयाः। ततः ॐ गं सर्वशक्तिकमलासनाय नमः इति मन्त्रेणासनं दत्त्वा तद्देशे ॐ वक्रतुण्डाय हुम् इति मूलमन्त्रेण * मूर्तिं प्रकल्प्य तस्यां गणेशमावाह्य पूर्वोक्तपद्धतिमार्गेण षोडशोपचारैः संपूज्य ततः आवरणार्चनं कुर्यात्। तत्र क्रमः यन्त्रोद्धारश्च-मध्ये षट्कोणमण्डले आग्नेयादिकोणेषु क्रमेण ॐ वं हृदयाय नमः ॥ १ ॥ ॐ क्रं शिरसे स्वाहा ॥ २ ॥ ॐ तुं शिखायै वषट् ॥ ३ ॥ ॐ डां कवचाय हुम् ॥ ४ ॥ इत्यभ्यर्च्य स्वाग्रे ॐ यं नेत्रत्रयाय वौषट् ॥५॥ दिक्षु ॐ हुं अस्त्राय फट् ॥६॥ इति प्रथमावरणार्चनम् ॥ १ ॥ ततः पूर्वादिष्वष्टदलेषु क्रमेण ॐ विद्यादिमायै नमः ॥ १ ॥ ॐ विधात्र्यै नमः ॥ २ ॥ ॐ भोगदायै नमः ॥ ३ ॥ ॐ विघ्नघातिन्यै नमः ॥ ४ ॥ ॐ निधिप्रदीपायै नमः ॥ ५ ॥ ॐ पापघ्न्यै नमः ॥ ६ ॥ ॐ पुण्यायै नमः ॥ ७ ॥ ॐ शशिप्रभायै नमः ॥ ८ ॥ इति द्वितीयावरणम् ॥ २ ॥ ततो दलाग्रेषु ॐ वक्रतुण्डाय नमः ॥ १ ॥ ॐ एकदंष्ट्राय नमः ॥ २ ॥ ॐ महोदराय नमः ॥ ३ ॥ ॐ गजास्याय नमः ॥ ४ ॥ ॐ लम्बोदराय नमः ॥ ५ ॥ ॐ विकटाय नमः ॥ ६ ॥ ॐ विघ्नराजाय नमः ॥ ७ ॥ ॐ धूम्रवर्णाय नमः ॥ ८ ॥ इति तृतीयावरणम् ॥३॥ ततो भूपुरे पूर्वादिक्रमेण [ पूर्वे ] ॐ लं इन्द्राय नमः ॥१॥ [ आग्नेय्याम् ] ॐ रं अग्नये नमः ॥ २ ॥ [ दक्षिणे ] ॐ मं यमाय नमः ॥ ३ ॥ [ नैर्ऋत्याम् ] ॐ क्षं निर्ऋतये नमः ॥ ४ ॥ [ पश्चिमे ] ॐ वं वरुणाय नमः ॥ ५ ॥ [ वायव्याम् ] ॐ यं वायवे नमः ॥ ६ ॥ [ उत्तरे ] ॐ कुं कुबेराय नमः ॥ ७ ॥ [ ऐशान्ये ] ॐ हं ईशानाय नमः ॥ ८ ॥ [ ईशानपूर्वयोर्मध्ये ] ॐ अं ब्रह्मणे नमः ॥ ९ ॥ निर्ऋतिवरुणयोर्मध्ये ॐ अं अनन्ताय नमः ॥ १० ॥ इति चतुर्थावरणम् ॥ ४ ॥ पुनः पूर्वादिदिक्षु इन्द्रादिसमीपे ॐ वं वज्राय नमः ॥ १ ॥ ॐ शं शक्त्यै नमः ॥ २ ॥ ॐ दं दण्डाय नमः ॥ ३ ॥ ॐ खं खड्गाय नमः ॥ ४ ॥ ॐ पां पाशाय नमः ॥ ५ ॥ ॐ अं अङ्कुशाय नमः ॥ ६ ॥ ॐ गं गदायै नमः ॥ ७ ॥ ॐ त्रिं त्रिशूलाय नमः ॥ ८ ॥ ॐ पं पद्माय नमः ॥ ९ ॥ ॐ चं चक्राय नमः ॥ १० ॥ इति पंचमावरणम् ॥५॥ एवं पञ्चावरणैर्गणनायकं संपूज्य षड्लक्षं मन्त्रं जपेत्। ततो जपान्ते इक्षु १ सक्तु २ रम्भाफल ३ चिपिट ४ तिल ५ मोदक ६ नारिकेल ७ लाजै ८ रित्यष्टभिर्द्रव्यैर्जपदशांशतो हुत्वा तद्दशांशेन तर्पणं तद्दशांशेन मार्जनं तद्दशांशेन शुद्धान् विप्रांश्च भोजयेत्। एवं कृते मन्त्रः सिद्धो भवति। अनन्तरं ततः सिद्धमन्त्रेण स्वकामनार्थं प्रयोगान् कुर्यात्। तत्र प्रकारः "ब्रह्मचर्यरतो मन्त्री जपेद्द्विसहस्रकम् ॥ षण्मासमध्याद्दारिद्र्यं नाशयत्येव निश्चितम् ॥ १ ॥ चतुर्थ्यादिचतुर्थ्यन्तं जपेद्दशसहस्रकम् ॥ प्रत्यहं जुहुयादष्टोत्तरं शतमतन्द्रितः ॥ २ ॥ पूर्वोक्तं फलमाप्नोति षण्मासाद्भक्तितत्परः ॥ आज्याक्तान्नस्य होमेन भवेद्धनसमृद्धिमान् ॥ ३ ॥ पृथुकैर्नारिकेलैर्वा मरिचैर्वा सहस्रकम् ॥ प्रत्यहं जुह्वतो मासाज्जायते धनसंचयः ॥ ४ ॥ जीरसिन्धुमरीचाक्तैरष्टद्रव्यैः सहस्रकम् ॥ जुह्वन्प्रतिदिनं पक्षात्स्यात्कुबेर इवार्थवान् ॥ ५ ॥ चतुःशतं चतुश्चत्वारिंशदाद्य दिनं प्रति ॥ तर्पयेन्मूलमन्त्रेण मण्डलादिष्टमाप्नुयात् ॥६॥ इति वक्रतुण्डगणपतिमन्त्रः प्रथमः ॥१॥ अथ गणपतेर्द्वितीयमन्त्रो मन्त्रमहोदधौ-"ॐ रायस्पोषस्य ददितानिधिदो रत्नधातुमान् ॥ रक्षो

* गणपतियन्त्रमत्र पूर्वं द्रष्टव्यम्।

हणो वलगहनो वक्रतुण्डाय हुम्॥" एकत्रिंशद्वर्णयुक्तो मन्त्रोऽभीष्टप्रदायकः॥ अस्य ऋष्यादिन्यासान्तं पूर्ववत्कृत्वा–ॐरायस्पोषस्य हृदयाय नमः ॥१॥ ॐ ददिता शिरसे स्वाहा ॥२॥ ॐ निधिदो रत्नधातुमान् शिखायै वषट् ॥३॥ ॐ रक्षोहणो कवचाय हुम् ॥४॥ ॐ वलगहनो नेत्रत्रयाय वौषट् ॥५॥ ॐ वक्रतुण्डाय हुम् अस्त्राय फट् ॥६॥ अन्यत्सर्वं पूर्ववत्॥इति गणपतेर्द्वितीयोमन्त्रः॥२॥ अथोच्छिष्टगणपतिमन्त्रप्रयोगस्तत्रैव ॥ 'ॐ हस्तिपिशाचिलिखे स्वाहा' इति नवाक्षरो मन्त्रः॥ अस्य श्रीउच्छिष्टगणेशमन्त्रस्य कङ्कोलऋषिः, विराट् छन्दः, उच्छिष्टगणपतिर्देवता अखिलाप्तये जपे विनियोगः॥ ॐ कं कङ्कोलऋषये नमः शिरसि ॥ १ ॥ ॐ विराट्छन्दसे नमः मुखे ॥ २ ॥ ॐ उच्छिष्टगणपतिदेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासं कृत्वा हृदयादिन्यासं कुर्य्यात् ॥ ॐ हस्तिहृदयाय नमः ॥१॥ ॐ पिशाचि शिरसे स्वाहा ॥२॥ ॐ लिखे शिखायै वषट् ॥ ३ ॥ ॐ स्वाहा कवचाय हुम् ॥ ४ ॥ ॐहस्तिपिशाचिलिखे स्वाहा ॥ अस्त्राय फट् ॥ ५ ॥ पञ्चाङ्गे नेत्रहीनं कार्य्यम् ॥ इति पञ्चाङ्गन्यासं कृत्वा ध्यायेत् ॥ "चतुर्भुजं रक्ततनुं त्रिनेत्रं पाशाङ्कुशौ मोदकपात्रदन्तौ ॥ करैर्दधानं सरसीरुहस्थमुन्मत्तमुच्छिष्टगणेशमीडे ॥१॥" इति ध्यात्वा पूर्वोक्ते पीठे उच्छिष्टगणपतिं पूजयेत्। तत्र प्रथमावरणे पूर्ववत् हृदयाद्यङ्गानि संपूजयेत् ॥१॥ द्वितीयावरणे अष्टसु दिक्षु ॐ ब्राह्म्यै नमः॥१॥ ॐ माहेश्वर्यै नमः ॥ २ ॥ ॐ कौमार्यै नमः ॥ ३ ॥ ॐ वैष्णव्यै नमः ॥ ४ ॥ ॐ वाराह्यै नमः ॥५॥ ॐ इन्द्राण्यै नमः ॥ ६ ॥ ॐ चामुण्डायै नमः ॥७॥ ॐ लक्ष्म्यै नमः ॥ ८ ॥ इति पूजयेत् ॥ २ ॥ तृतीयावरणे दशसु दिक्षु ॐ वक्रतुण्डाय नमः ॥ १ ॥ ॐ एकदंष्ट्राय० ॥ २ ॥ ॐ लम्बोदराय० ॥ ३ ॥ ॐ विकटाय० ॥ ४ ॥ ॐ धूम्रवर्णाय० ॥ ५ ॥ ॐ विघ्नराजाय० ॥ ६ ॥ ॐ गजाननाय० ॥७॥ ॐ विनायकाय० ॥८॥ ॐ गणपतये ॥९॥ ॐ हस्तिदन्ताय० ॥ १० ॥ इति पूजयेत् ॥ ३ ॥ चतुर्थावरणे पूर्वादिषु दिक्षु पूर्ववदिन्द्रादयो दशदिक्पालाः पूज्याः ॥४॥ पञ्चमावरणे वज्राद्यायुधानि पूजयेत्। एवं संपूज्य ॐ हस्तिपिशाचि लिखे स्वाहा इति लक्षमेकं मन्त्रान् जपेत् ॥ ततो जपान्ते जपदशांशतस्तिलहोमं कृत्वा तद्दशांशेन तर्पणं तद्दशांशेन मार्जनं तद्दशांशेन विप्रांश्च भोजयेत् ॥ एवं सिद्धे मन्त्रे काम्यान्प्रयोगान्मन्त्री साधयेत्। तत्प्रकारोऽपि (तत्रैव) स्वाङ्गुष्ठप्रमाणां रक्तचन्दनेन श्वेतार्केण वा गणेशप्रतिमां रम्यामुक्तलक्षणलक्षितां कृत्वा विधानेन प्रतिष्ठाप्य नित्यं मधुना तां संस्नाप्य कृष्णचतुर्दशीमारभ्य शुक्लचतुर्दशीपर्यन्तं सगुडं पायसं प्रत्यहं निवेद्य प्रत्यह सहस्र मन्त्रान् जपेत्। जपान्ते प्रत्यहं तावत् सघृततिलाहुतिं दद्यात् ॥ "गणेशोऽहमिति ध्यायन्नुच्छिष्टेनाऽऽवृतो रहः ॥ पक्षाद्राज्यमवाप्नोति नृपजोऽन्योऽपि वा नरः ॥१॥ कुलालमृत्स्नाप्रतिमा पूजितैवं सुराज्यदा॥ वल्मीकमृत्कृता लाभमेवमिष्टा प्रयच्छति ॥ २ ॥ गौडी सौभाग्यदा सैवं लावणी क्षोभयेदरीन् ॥ निम्बजा नाशयेच्छत्रून् प्रतिमेयं समर्चिता ॥ ३ ॥ मध्वक्तैर्होमतो लाजैर्वशयेदखिलं जगत ॥ सुप्तोऽधिशय्यमुच्छिष्टो जपञ्छत्रून् वशं नयेत् ॥ ४ ॥ कटुतैलान्वितै राजीपुष्पैर्विद्वेषयेदरीन् ॥ द्यूते विवादे समरे युक्तोऽयं जयमावहेत् ॥ ५ ॥ कुबेराख्यमनोर्जापान्निधीनां स्वामितामियात् ॥ लेभाते राज्यमनरि वानरेशविभीषणौ ॥ ६ ॥ रक्तवस्त्रांगरागाद्यस्तांबूलं निश्यदञ्जपेत् ॥ यद्वा निवेदितं तस्मै मोदकं भक्षयञ्जपेत् ॥ ७ ॥

पिशितं वा फलं वापि तेनतेन बलिं हरेत ॥" बलिमन्त्रोऽपि(तत्रैव)—ॐ गं हं क्रौं ग्लौं उच्छिष्टगणेशाय महायक्षायायं बलिः इत्येको नविंशतिवर्णात्मको बलिमन्त्रः ॥ इति उच्छिष्टगणपतिमन्त्रविधानम् ॥ अथोच्छिष्टगणपतिमन्त्रो द्वितीयोऽपि(तत्रैव)।ॐनमो भगवते एकदंष्ट्राय हस्तिमुखाय लम्बोदराय उच्छिष्टमहात्मने आँ क्रों ह्रीं गँ घे घे स्वाहा इति सप्तत्रिंशदक्षरो मन्त्रः ॥ अस्य मन्त्रस्य गणक ऋषिः–गायत्रीछन्दः–उच्छिष्टगणपतिर्देवता–अखिलाप्तये जपे विनियोगः ॥ ॐ गणकऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्री छन्दसे नमो मुखे ॥ २ ॥ ॐ उच्छिष्टगणतिदेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ अथ षडङ्गन्यासः ॥ ॐ नमो भगवते हृदयाय नमः ॥ १ ॥ ॐ एकदंष्ट्राय हस्तिमुखाय शिरसे स्वाहा ॥ २ ॥ॐ लम्बोदराय शिखायै वषट् ॥ ३ ॥ ॐ उच्छिष्ट महात्मने कवचाय हुम् ॥ ४ ॥ ॐ आं क्रों ह्रीं गं नेत्रत्रयाय वौषट् ॥ ५ ॥ घे घे स्वाहा अस्त्राय फट् ॥६॥ इति षडङ्गं कृत्वा ध्यायेत "शरान्धनुः पाशसृणी स्वहस्तैर्दधानमारक्तसरोरुहस्थम् ॥ विवस्त्रपत्न्यां सुरतप्रवृत्तमुच्छिष्टमम्बासुतमाश्रयेऽहम् ॥ १ ॥ इति ध्यात्वा पूर्वोक्ते पीठे गणपतिं संपूज्य पूर्ववल्लक्षावृत्त्या मन्त्रं जपेत । ततो जपान्ते घृतेन दशांशहोमादिपुरश्चरणं समाप्य स्वाभीष्ट सिद्धये वक्ष्यमाणविधानं कुर्य्यात । तदुक्तं मन्त्रमहोदधौ–कृष्णाष्टम्यादिकृष्णचतुर्दशीपर्य्यन्तं प्रत्यहमष्टोत्तरसहस्रं जप्त्वा तद्दशांशेन घृतं हुत्वा तर्पयेत् । एवं कृतो हि मन्त्रोऽयं सर्वार्थसिद्धिं प्रयच्छति ॥ धनं धान्यं सुतान्पौत्रान्सौभाग्यमतुलं यशः ॥ मूर्तिं कुर्य्याद्गणेशस्य शुभाहे निम्बदारुणा ॥ १ ॥ प्राणप्रतिष्ठां कृत्वाथ तदग्रे मन्त्रमाजपेत ॥ यं ध्यात्वा दासवत्सोऽपि वश्यो भवति निश्चितम् ॥ २ ॥ नदीजलं समादाय सप्तविंशतिसंख्यया ॥ मन्त्रयित्वा मुखं तेन प्रक्षाल्येशसभां व्रजेत ॥ ३ ॥ पश्येद्व दृश्यते येन स वश्यो जायते क्षणात ॥ चतुःसहस्रधत्तूरपुष्पाणि मनुनार्पयेत् ॥ ४ ॥ गणेशाय नृपादीनां जनानां वश्यता कृते ॥ सुन्दरीवामपादस्य रेणुमादाय तत्र तु ॥ ५ ॥ संस्थाप्य गणनाथस्य प्रतिमां प्रजपेन्मनुम् ॥ तां ध्यात्वा रविसाहस्रं सा समायाति दूरतः ॥ ६ ॥ श्वेतार्केणाथ निम्बेन कृत्वा मूर्तिं धृतांशुकाम् ॥ चतुर्थ्यां पूजयेद्रात्रौ रक्तैः कुसुमचन्दनैः ॥ ७ ॥ जप्त्वा सहस्रं तां मूर्तिं क्षिपेद्रात्रौ सरित्तटे ॥ स्वेष्टं कार्य्यं समाचष्टे स्वप्ने तस्य गणाधिपः ॥ ८ ॥ सहस्रं निम्बकाष्ठानां होमादुच्चाटयेदरीन् ॥ वज्रिणः समिधा होमाद्रिपुर्य्यमपुरं व्रजेत ॥ ९ ॥ वानरस्यास्थि संजप्तं क्षिप्तमुच्चाटयेद्गृहे ॥ जप्तं नरास्थि कन्याया गृहे क्षिप्तं तदार्तिकृत् ॥ १० ॥ कुलालस्य मृदा स्त्रीणां वामपादस्य रेणुना ॥ कृत्वा पुत्तलिकां तस्या हृदि स्त्रीनाम संलिखेत ॥११॥ निखनेन्मन्त्रसंजप्तैर्निम्बकाष्ठैः क्षिताविमाम ॥ सोन्मत्ता भवति क्षिप्रमुद्धृतायां सुखं भवेत् ॥१२॥ शत्रावेवं कृता सा तु लशुनेन समन्विता ॥ १३ ॥ शरावान्तर्गता सम्यक् पूजिता द्वारि विद्विषः ॥ निखाता पक्षमात्रेण शत्रूच्चाटनकृत्स्मृता ॥ १४ ॥ विषमे समनुप्राप्ते सितार्कनिम्बदारुजम् ॥ गणपं पूजितं सम्यक् कुसुमै रक्तचन्दनैः ॥ १५ ॥ मद्यभाण्डस्थितं हस्तमात्रे तं निखनेत्स्थले ॥ तत्रोपविश्य प्रजपेन्मत्री नक्तं दिवा मनुम् ॥ १६ ॥ सप्ताहमध्ये नश्यन्ति सर्वे घोरा उपद्रवाः ॥ शत्रवो वशतां यान्ति वर्द्धन्ते धनसंपदः ॥ १७ ॥ दुष्टस्त्रीवामपादस्य रजसा निजदेहजेः ॥ मलैर्मूत्रपुरीषाद्यैः कुम्भकारमृदापि च ॥ १८ ॥ एतैः

हि शीघ्रं मम हव्याय शर्वोम् ॐ सद्योजातंप्रपद्यामीत्यावाह्य ॥१॥ ॐ त्र्यम्बकं० सद्योजाताय वै नमोनमः इत्यासनम् ॥ २ ॥ त्र्यम्ब कं० भवे भवे नातिभवे भवस्व मामिति पाद्यम् ॥३॥ ॐ त्र्यम्बकं० भवोद्भवाय नम इत्यर्घ्यम् ॥ ४ ॥ ॐ त्र्यम्बकं० आपोहिष्ठामयो भुव इत्यादिमन्त्रत्रयेण स्नानम् ॥ ५ ॥ देवैस्तु वन्दिता धेनुः सर्वपापप्रणाशिनी ॥ तत्क्षीरस्नापितो देव नित्यं मे वरदो भव ॥ ॐ त्र्यम्बकं० पयःस्नानम्॥६॥कामतोऽकामतो वापि यन्मया दुष्कृतं कृतम् ॥ तत्सर्वं विलयं यातु दधिस्नानेन भो शिव॥१॥त्र्यम्बकं० इति दधिस्नानम् ॥ ७ ॥ रसानामुत्तमं त्वाज्यं देवानां च सदा प्रियम् ॥ तेन त्वं स्नापितो देव निधिकान्तिप्रदो भव ॥ ८ ॥ त्र्यम्बकं० इति घृतस्नानम् ॥ ८ ॥ यस्य धारणमात्रेण तृप्तिं याति पितामहः ॥ मधुना स्नापितो देव नित्यं शोकहरो भव ॥१॥ त्र्यम्बकं० मधुस्नानम् ॥ ९ ॥ यमलोकभयत्रस्तः शरणं त्वां गतः शिव ॥ खण्डस्नानेन देवेश मां कुरुष्व सुखान्वितम् ॥१॥ ॐ त्र्यम्बकं० इति शर्करोदकस्नानम् ॥ १० ॥ यस्य दर्शनमात्रेण शुद्धिं प्राणाश्च जीवितम् ॥ तेन चोत्तमतोयेन स्नातो देहि प्रियं ध्रुवम् ॥ १ ॥ ॐ त्र्यम्बकं० इति शुद्धोदकस्नानम् ॥ ११ ॥ अथाद्भिर्देवं तर्पयेत् ॥ ॐ भवं देवं तर्पयामि । ॐ शर्वं देवं तर्पयामि । ॐ ईशानं देवं तर्पयामि । ॐ पशुपतिं देवं तर्पयामि । ॐ रुद्रं देवं तर्पयामि । ॐ भीमं देवं तर्पयामि । ॐ महान्तं देवं तर्पयामीति तर्पयित्वा तत ॐ त्र्यम्बकं० ज्येष्ठाय नमः । इत्याचमनीयम् ॥ १२ ॥ ॐ त्र्यबकं० श्रेष्ठाय नमः इति मधुपर्कमाचमनं च ॥ १३ ॥ सुगन्धं चन्दनं देव कुङ्कुमेन समन्वितम् ॥ अर्चितोऽसि मया भक्त्या शिवलोकप्रदो भव ॥ ॐ त्र्यंबकं० इति गन्धम् ॥१४॥ अक्षय्यान्बन्धुपुत्रार्थान् कायं चैवाक्षिवाङ्मनः ॥ अन्ते चैवाक्षयं लोकमक्षतैरर्चितः कुरु । ॐ त्र्यंब कं० इत्यक्षतान् ॥ १५ ॥ संतानः परिजातश्च ये चान्ये सुरपादपाः ॥ तेषां पुष्पैर्मया देव पूजितः सुखदो भव । १ । ॐ त्र्यंबकं० कलविकरणाय नमः इति पुष्पाणि ॥ १६ ॥ धूपोऽयं गृह्यतां देव सुन्दरो गन्धवान्छुचिः ॥ ईप्सितं मे वर देहि परत्र च शुभां गतिम् ॥ १ ॥ ॐ त्र्यंबकं० सर्वभूतदमनाय नमः इति धूपम् ॥ १७ ॥ शुद्धा शुक्लाम्बरा वर्तिराज्येन च समन्विता ॥ दीपव र्तिप्रदानेन प्रीतः स्यादीश्वरो भव'॥ १ ॥ ॐ त्र्यंबकं० मनोन्मनाय नमः । इति दीपम् ॥ १८ ॥ सर्वमन्नप्रदानं च देवानां तु सदा प्रियम् ॥ तेन चान्नप्रदानेन सुप्रीतो वरदो भव ॥ ॐ त्र्यंबकं० भवोद्भवाय नमः । इति नैवेद्यम् ॥ आचमनं च ॥ १९ ॥ अथाष्टभिर्मन्त्रैरष्टौ पुष्पाणि० । ॐ भवाय देवाय नमः पुष्पं समर्पयामि ॥ १ ॥ ॐ शर्वाय देवाय० ॥ २ ॥ ॐ ईशानाय देवाय० ॥ ३ ॥ ॐ पशुपतये देवाय० ॥ ४ ॥ ॐ रुद्राय देवाय० ॥ ५ ॥ ॐ उग्राय देवाय० ॥ ६ ॥ ॐ भीमाय देवाय०॥७॥ ॐ महते देवाय० ॥ ८ ॥ इति पुष्पाणि समर्प्य ॥ ॐ अघोरेभ्यो० १ तत्पुरुषाय० २ ईशानः सर्व० ३ इति मन्त्रत्रयेणोपस्थाय नीराजनं कृत्वा । पुष्पाञ्जलिं समर्प्य प्रदक्षिणात्रयं कृत्वा साष्टाङ्गं प्रणमेत् । ततः शिवस्य मूर्ध्नि हिरण्यादिकलशेन संततां धारां मधुना सर्पिषा पयसा वेक्षुरसेन नारिकेलोदकेन चाम्ररसेन वा तदभावे उदकेन । ॐ नमस्तेरुद्रमन्यव० इत्येकादशानामनुवाका नामेकमेकं जपेत्सर्वेषां पारे पुनराराधयेत् । उत्तमाराधनेन तदेतद्विधानमुक्तम् ॥ ततः अभिषेकान्ते ॥ ॐ अनेन रुद्राभिषेककर्मणा

श्रीभवानीशङ्करमृत्युञ्जयमहारुद्रः प्रीयतामिति देवदक्षिणपार्श्वे जलमुत्सृजेत् ॥ ॐ तत्सद्ब्रह्म० ॥ ततस्तेनाभिषिक्तोदकेन [ अक्षिभ्यामित्यनुवाकेन ] ॐ अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यां छुबुंकादधि । यक्ष्मंशीर्षण्यंमस्तिष्कांजिह्वायाविवृहामिते १ ग्रीवाभ्यस्त उष्णिहाभ्युःकीकसाभ्योअनूक्यांदुयक्ष्मंदोषण्य । मंसाभ्यांबाहुभ्यांविवृहामिते २ आन्त्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि । यक्ष्मंमतस्नाभ्यांयक्नः प्लाशिभ्योविवृहामिते ३ ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यांयक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते ४ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ५ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥६॥ इति ऋग्वेदीयानुवाकम् ॥ वारुणैर्वा मन्त्रैः मस्तकाद्यपादान्तं संमृज्यात् । पापक्षयार्थी व्याधिविमोचनार्थी श्रीकामः पुष्टिकामो मोक्षार्थी च कुर्यादेवं कुर्वन् सिद्धिमाप्नोति ॥ तत आचार्याय दक्षिणां ददाति दश गाः सवत्साः सुवर्णभूषिताः ॥ वृषभैकादशस्तदलाभे एकां गां दद्यादित्याह भगवान् बौधायनः ॥ इति रुद्राभिषेकविधानम् ॥ अथ चण्डेश्वरमंत्रपुरश्चरणं शारदायाम् । मूलमन्त्रो यथा ॐ ध्वं फट् । इति त्र्यक्षरो मन्त्रः । अस्य चण्डेश्वरमन्त्रस्य त्रिकऋषिरनुष्टुप्छन्दश्चण्डेश्वरो देवता सर्वेष्टसिद्ध्यर्थे विनियोगः ॥ ॐ त्रिकऋषये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छन्दसे नमः मुखे ॥ २ ॥ ॐ चण्डेश्वरदेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ॐ दीप्तफट्हृदयाय नमः ॥ १ ॥ ॐ ज्वलफट् शिरसे स्वाहा ॥ २ ॥ ॐ ज्वालामालिनीफट् शिखायै वषट् ॥ ३ ॥ ॐ फट् कवचाय हुं ॥ ४ ॥ ॐ हनफट् नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ सर्वज्वालिनीफट् इत्यस्त्राय फट् ॥६॥ इति षडङ्गन्यासं कृत्वा ध्यायेत ॥ चण्डेश्वरं रक्ततनुं त्रिनेत्रं रक्तांशुकाढ्यं हृदि भावयामि ॥ ढक्कां त्रिशूलं स्फटिकाक्षमालां कमण्डलुं बिभ्रतमिन्दुचूडम् ॥१॥ एवं ध्यात्वा शिवपञ्चाक्षरोदिते पीठे मूलेन मूर्तिं प्रकल्प्य ॐ ध्वं चण्डेश्वराय नमः इति मन्त्रेण आवाहनादिपुष्पान्तैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ षट्कोणे हृदयादिषडङ्गानि संपूज्य अष्टदले ब्राह्म्याद्यष्टमातृकाः संपूजयेत् । ततो भूपुरे इन्द्रादिदशदिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत् । एवं चतुरावरणापूजां कृत्वा धूपादिनीराजनान्तैश्चंडेशं संपूज्य त्रिलक्षं मन्त्रं जपेत । वर्णलक्षं जपेन्मन्त्रं होमं कुर्याद्दशांशतः ॥ मधुरत्रयसंयुक्तैर्विशुद्धैस्तिलतण्डुलैः॥१॥ इति सिद्धे मनौ मन्त्री धनवाञ्जायतेऽचिरात् ॥ तर्पयेन्मनुनानेन नित्यमष्टोत्तरं शतम् ॥२॥ श्रियं प्राप्नोति महतीं पुत्रमित्रसमन्वितः ॥ प्रियङ्गुकुसुमैः फुल्लैस्तत्काष्ठज्वलितेऽनले ॥ ३ ॥ जुहुयादयुतं मन्त्री पुरक्षोभः प्रजायते ॥ साध्यवृक्षत्वचो लोणं पिष्ट्वा पिष्टसमन्वितम् ॥४॥ पुत्तलीं रुचिरां कृत्वा प्रतिष्ठाप्य समीरणम् ॥ छित्त्वा छित्त्वा प्रजुहुयादष्टोत्तरशतं निशि ॥५॥ सप्ताहमेवं कुर्वीत साध्यो दासो भवेत्स्वयम् ॥ शैवमन्त्रेषु निष्णातश्चण्डेश्वरमनुं भजेत् ॥६॥ सर्वान्कामानवाप्नोति परत्रेहचनन्दति॥ इति चण्डेश्वरमन्त्रप्रयोगः॥ अथ त्वरितरुद्रमन्त्रपुरश्चरणप्रयोगः । ( हेमाद्रिशान्तिसारशान्तिरत्नेषु) देवालयादिषु जपस्थानं प्रकल्प्य तत्र नित्यकर्मानन्तरं जपासने प्राङ्मुख उदङ्मुखो वा उपविश्य भस्मत्रिपुण्ड्रं रुद्राक्षमालां च धारयित्वा मूलेनाचम्य तेनैव प्राणा

नायम्य देशकालौ संकीर्त्य अमुककामनासिद्धयर्थं त्वरितरुद्रजपमहं करिष्ये । इति संकल्प्य पूर्वोक्तक्रमेण भूतशुद्धिं प्राणप्रतिष्ठा मन्तर्मातृकाबहिर्मातृकान्यासं श्रीकण्ठकादिकलान्यासं च कृत्वा षोडशोपचारैः शिवपूजां विप्राय रुद्रस्तवेन स्तुत्वा त्वरितरुद्रविधान न्यासादिकं कुर्यात् । तत्र मूलमन्त्रो यथा–ॐ यो रुद्रोऽग्नौ योऽप्सु य औषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमोस्तु ॥ १ इत्येकत्रिंशद्वर्णो ३१ मन्त्रः । अस्य त्वरितरुद्रमन्त्रस्य अथर्वणऋषिः अनुष्टुप् छन्दः त्वरितरुद्रसञ्ज्ञको देवता नमः इति बीजम् अस्तु इति शक्तिः त्वरितरुद्रप्रीत्यर्थं जपे विनियोगः । [ तत्रादौ मूलेन करशुद्धिं कृत्वा प्रणवं करतलयोर्विन्यसेत् ] ॐ अथर्वर्षये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छन्दसे नमः मुखे ॥ २ ॥ ॐ त्वरितरुद्रदेवतायै नमः हृदये ॥ ३ ॥ ॐ नमः इति बीजाय नमः गुह्ये ॥ ४ ॥ ॐ अस्तु शक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ॐ यो रुद्र अङ्गुष्ठाभ्यां नमः॥११॥ ॐ अग्नौ तर्जनीभ्यां नमः ॥ २ ॥ ॐ योप्सु मध्यमाभ्यां नमः ॥ ३ ॥ ॐ य औषधीषु अनामिकाभ्यां नमः ॥ ४ ॥ ॐ यो रुद्रो विश्वा भुवना विवेश कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ तस्मै रुद्राय नमोऽस्तु करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः । एवं हृदयादिन्यासः । अथ पदन्यासः । ॐ यः नमः पादयोः ॥ १ ॥ रुद्रः नमः जङ्घयोः ॥ २ ॥ अग्नौ नमः जानुनोः ॥ ३ ॥ यः नमः ऊर्वोः ॥ ४ ॥ अप्सु नमः गुल्फयोः ॥ ५ ॥ यः नमः मेढ्रे ॥ ६ ॥ औषधीषु नमः नाभौ ॥ ७ ॥ यः नमः उदरे ॥ ८ ॥ रुद्रः नमः हृदये ॥ ९ ॥ विश्वा नमः कण्ठे ॥ १० ॥ भुवना नमः मुखे ॥ ११ ॥ विवेश नमः नासिकायाम् ॥ १२ ॥ तस्मै नमः नेत्रयोः ॥ १३ ॥ रुद्राय नमः भ्रुवोः ॥ १४ ॥ नमः नमः ललाटे ॥ १५ ॥ अस्तु नमः शिरसि ॥ १६ ॥ अथ वर्णन्यासः । ॐ यः शिरसि ॥ १ ॥ रुद्रः ललाटे ॥ २ ॥ अग्नौ नेत्रयोः ॥ ३ ॥ यः कर्णयोः ॥ ४ ॥ अप्सु नासिकायाम् ॥ ५ ॥ यः मुखे ॥ ६ ॥ औषधीषु बाह्वोः ॥ ७ ॥ यः हृदये ॥ ८ ॥ रुद्रः नाभौ ॥ ९ ॥ विश्वा गुह्ये ॥ १० ॥ भुवना अपाने ॥ ११ ॥ विवेश ऊर्वोः ॥ १२ ॥ तस्मै जान्वोः ॥ १३ ॥ रुद्राय जंघयोः ॥ १४ ॥ नमः गुल्फयोः ॥ १५ ॥ अस्तु चरणयोः ॥ १६ ॥ एवं पञ्च न्यासा न्कृत्वा शुभदामुद्रां प्रदर्शयेत । ( अङ्गुल्यग्राणि मूले तु कृत्वाङ्गुष्ठेन पीडयेत्॥सा मुद्रा शुभदा प्रोक्ता सैव शान्तिप्रदायिनी ॥१॥ ) मुद्रादर्शनमन्त्रः । ॐ एषतेरुद्रभागः सहस्वस्राम्बिकयातंजुषस्वस्वाहा । इति मन्त्रेण मुद्रां दर्शयित्वा ध्यानं कुर्यात् । "रुद्रं चतुर्भुजं देवं त्रिनेत्रं वरदाभयम् ॥ दधानमूर्ध्वहस्ताभ्यां शूलं डमरुमेव च ॥ १ ॥ अङ्कसंस्थामुमां पद्मे दधानां च करद्वये ॥ आद्ये करद्वये कुम्भं मातुलुङ्गं च बिभ्रतीम् ॥ २ ॥(अथवा) चतुर्बाहुं त्रिनेत्रं च शुद्धस्फटिकसन्निभम् ॥ उग्रे कर्मणि चैवोग्रं मूर्तिं ध्याये दुमापतिम् ॥ १ ॥ द्विभुजं नागपाशं च शूलपाणिं जटाधरम् ॥ ध्यात्वैवं शंकरं पापान्मुच्यते मानसोद्भवात् ॥२॥ ( अथवा ) चतु

---

१ कामनाभेदेन मुद्रास्थानानि ( हेमाद्रौ )–"श्रीकामः शीर्ष्णि कुर्वीत तेजस्कामस्तु नेत्रयोः । मुखे त्वन्नाद्यकामस्तु ग्रीवायां रोगनाशनम ॥ हृदये सुखकामस्तु नाभौ ज्ञानप्रदं भवेत । प्रजाकामस्तु गुह्ये वै पशुकामस्तु जंघयोः ॥ जानुभ्यां ग्रामकामस्तु सर्वकामस्तु गुह्ययोः । वशीकरणकामस्तु वामबाहुं प्रदर्शयेत ॥ पापक्षयेऽभिचारे वा व्याधेरपगमे तथा । वहिः शरीरात्कुर्वीत शिवस्याग्रे तु संस्मरेत्" इति ॥

भुजं त्रिनेत्रं च शुद्धस्फटिकसन्निभम् ॥ अमृतेन च पूर्णौ द्वौ कलशौ हस्तयोर्द्वयोः ॥ १ ॥ हस्तद्वयेन योगस्य कृतमुद्रं स्थिरासनम् ॥ सर्वकामप्रदं शान्तं शङ्करं करुणाकरम् ॥ २॥ उग्रकर्मणि चैवोग्रमूर्तिं ध्यायेदुमापतिम् ॥ द्विभुजं नागपाशं च शूलपाणिं जटाधरम् ॥ ३ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य भेदपक्षे गन्धादिपूजनं कुर्यात् । एवं पूजनं कृत्वा मूलमन्त्रं जपेत् । अस्य पुरश्चरणमयुतद्वयजपात्मकं कुर्यात् । प्रत्यहं शिवं पूजयेत् । अधःशाय्येकभक्ताशी ब्रह्मचारी हविष्यभुक् ॥ अयुते द्वे जपेत्पूर्वं प्रत्यहं पूजयेच्छिवम् ॥ १ ॥ जुहुयात्तद्दशांशेन तद्दशांशेन तर्पणम् ॥ मार्जनं तद्दशांशेन दशांशेन तु भोजयेत् ॥ २ ॥ एवं कृते तु सिद्धिः स्यात्फलार्थं तु ततो जपेत् ॥ पुरश्चरणमेवं तु कृत्वा संपूज्य शंकरम् ॥ ३ ॥ जपेत्त्वरितरुद्रं तु सर्वकामसमृद्धये । श्रीकामः शान्तिकामो वा जपेल्लक्षमतंद्रितः ॥ ४ ॥ बिल्वसमिद्भिः श्रीकामः शान्तिकामः शमीमयैः ॥ जुहुयादाज्यसंमिश्रैस्तर्पणं मार्जनं तथा ॥ ५ ॥ जप्त्वा लक्षं तु पुत्रार्थी पायसं जुहुयात्ततः ॥ वित्तार्थी श्रीफलैर्होममायुष्कामस्तु दूर्वया ॥ ६ ॥ तिलैराज्येन संमिश्रैस्तेजस्कामो घृतेन वै ॥ व्रीहिभिः पशुकामस्तु राष्ट्रकामस्तु वै यवैः ॥ ७ ॥ पायसं सर्वकामेन होतव्यं शर्करान्वितम् ॥ मध्वाक्तान्याम्रपत्राणि तीव्रज्वरविनाशिने ॥ ८ ॥ हिमभूतज्वरेणैव गुडूचीभिर्हुनेद्ध्रुवम् ॥ सर्वरोगविनाशाय सूर्यस्याभिमुखो जपेत् ॥ ९ ॥ अयुते द्वे जपे होमः कार्य्योऽर्कसमिधा शुभः ॥ औदुम्बरैरन्नकामस्तेजस्कामस्तु खादिरैः ॥ १० ॥ अपामार्गसमिद्धोमाद्भूतबाधा विनश्यति ॥ ग्रहबाधाविनाशाय जपेदश्वत्थसन्निधौ ॥ ११ ॥ लवणान्वितदध्यक्तास्तीक्ष्णाग्राश्वत्थसंभवाः। हूयन्ते समिधः शुष्काः स्वाहान्तं मन्त्रमुच्चरेत् ॥ १२॥ दशपञ्चाहुतीर्हुत्वा गच्छगच्छेत्युदीरयेत् ॥ यावद्धोमो बलिर्देयः पुरुषाहारसंमितः ॥ १३ ॥ एवं कृते प्रमुच्येत पुमान् स्त्री वा महाग्रहात् ॥ यं जेतुमिच्छेत्पुरुषस्तत्स्थानाभिमुखो जपेत् ॥ जुहुयाच्छतपत्राणि स दुष्टः क्षयमाप्नुयात् ॥ १४ ॥ लाजाहोमेन कन्यार्थी कन्यामाप्नोति रूपिणीम् ॥ लाजाश्च मधुसंमिश्राः श्वेतपुष्पाणि वा पुनः ॥ १५॥ हूयन्ते हरिते देशे तस्य विश्ववशो भवेत् ॥ वामाङ्गमुन्नतं कार्य्यं स्त्रीवशित्वे विचक्षणैः ॥ १६ ॥ हस्त्यश्वामात्यशान्त्यर्थं तिलैश्चाज्येन संयुतैः ॥ होमस्थाने तु संस्थाप्य कुम्भमेकं जलान्वितम् ॥१७॥ मन्त्रं जप्त्वाष्टसाहस्रं कुम्भं स्पृश्य प्रयत्नतः॥अभिषेकं तु तेषां वै शालां प्रोक्ष्य प्रदक्षिणम् ॥ १८ ॥ ग्रहग्रामादिशान्तिस्तु सर्वैः कार्या तु पूर्ववत् ॥ वास्तुपूजा प्रकर्तव्या प्राच्यां दिशि पदे शुभे ॥ १९ ॥ ईशानाय बलिः कार्यः पशूनां पतये तथा ॥ एवं कृते पशूनां तु प्रजानां शान्तिमाप्नुयात् ॥ २० ॥ अद्भुतेषु च सर्वेषु निशायां ग्रामबाह्यतः ॥ उपविश्य जपेद्रुद्रं त्वरितं बलिभिः सह ॥ २१ ॥ होमः पलाशसमिधैः कर्तव्यो घृतसंयुतैः ॥ ईशानाय बलिः कार्य्यो यस्यां दिशि तदद्भुतम् ॥ २२ ॥ तदाशापतये चैव पशूनां पतये तथा ॥ वृष्टिकामो जपेल्लक्षं खिलैर्होमो घृतान्वितैः ॥ २३ ॥ बलिपूजा प्रकर्तव्या शिवस्य वरुणस्य च ॥ सर्वस्मिन्नपि चैवार्थे त्वरितस्य जपो भवेत् ॥ २४ ॥ अयुतद्वयजाप्यं तु यावल्लक्षं ततोऽधिकम् ॥ एवं कृते तु सिद्धिः स्यान्निष्कामः प्राप्नुयाच्छिवम् ॥ २५ ॥ ऐहिकामुष्मिकान् भोगान् भुक्त्वा सायुज्यमाप्नुयात् ॥ इति श्रीत्वरितरुद्रमन्त्रपुरश्चरणं समाप्तम् ॥ अथ पार्थिवलिङ्गपूजन

विधानम् ( मन्त्रमहोदध्यादिषु ) तत्रादौ प्रातर्नित्यकर्म्म समाप्य सुमुहूर्त्ते शिवालये पुण्यस्थाने वा गत्वा तत्र स्थानशुद्धिं संपाद्य स्वासने उदङ्मुख उपविश्य भस्मत्रिपुण्ड्ररुद्राक्षधारणं च कुर्यात् । ततः ॐ नमः शिवाय इत्यनेनाचम्य प्राणानायम्य गणपति स्मरणं कृत्वा देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्मा मम श्रुतिस्मृतिपुराणोक्तफलावाप्तये अमुककामनासिद्ध्यर्थं श्रीभवानीशङ्करप्रसन्नतार्थं पार्थिवलिङ्गपूजां करिष्ये । अथवा अमुककामोऽमुकसंख्यया एतावन्तं कालं पार्थिवलिङ्गानि स्वयं ब्राह्मणद्वारा वा पूजयिष्ये तदङ्गतया भूतशुद्धिं प्राणप्रतिष्ठां मातृकान्यासादिकर्म्म च करिष्ये ॥ इति संकल्प्य । पृथ्वि त्वयेति मन्त्रस्य मेरुपृष्ठऋषिः । सुतलं छन्दः । कूर्म्मो देवता । आसनोपवेशने विनियोगः । "ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥१॥" इति भूमिं प्रार्थ्य । ॐ पृथिव्यै नमः ॥ ॐ आधारशक्त्यै नमः ॥ ॐ विश्वशक्त्यै नमः ॥ ॐ चिच्छक्त्यै नमः । ॐ मायाशक्त्यै नमः ॥ इति गन्धपुष्पैः पूजयेत । ततो मूलेन शिखां बद्ध्वा आचम्य । स्वात्मदृष्ट्याचावलोकनेन दिव्यान् विघ्नान् । अस्त्राय फट् । इत्यभिमन्त्रितजलप्रक्षेपेणान्तरिक्षस्थान् ॥ "ॐ अपसर्पन्तु ये भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥१॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामविरोधेन ब्रह्मकर्म्म समारभे ॥२॥ इति मन्त्राभ्यां वामपार्ष्णिघातत्रयेण भौमान्तरिक्षगान् विघ्नानुत्सारये । ततः ॐ सर्वभूतनिवारकाय शार्ङ्गाय सशराम्त्रराजाय सुदर्शनाय हुं फट् इति छोटिकाभिस्तालत्रयेण च दिग्बन्धं विधाय ॐ अस्त्राय फट् इति करशुद्धिं कृत्वा । ॐ गुरुभ्यो नमः । ॐ परमगुरुभ्यो नमः । ॐ परात्परगुरुभ्यो नमः । ॐ परमेष्ठिगुरुभ्योनमः । ॐआचार्यगुरवे नमः । ॐ नमो महद्भ्यः इति नत्वा भूतशुद्धिं कुर्य्यात् । अथ भूतशुद्धिः ॥ हृदयस्थं प्रदीपकलिकाकारं जीव ॐ हंसः सोहमिति मन्त्रेण ब्रह्माण्डस्थितसहस्रदलपद्मान्तर्गतशिवेन संयोज्य । ॐ लँहाँ सद्योजाताय निवृत्तिकलात्मने हुं फट् इति पादादिजानुपर्य्यन्तं न्यसेत् ॥ १ ॥ ॐ वँहीँ वामदेवाय प्रतिष्ठाकलात्मने हुं फट् इति जान्वादिनाभिपर्य्यंतं० ॥ २ ॥ ॐ रँ हूँ अघोराय विद्याकलात्मनें हुं फट् इति नाभ्यादिहृदयांतं०॥३॥ ॐ यँहैँ तत्पुरुषाय शान्तिकलात्मने हुं फट् इति हृदयादि भ्रूमध्यान्तं० ॥ ४ ॥ ॐ हँ हौँ ईशानाय शान्त्यतीताय कलात्मने हुं फट् इति भ्रूमध्यादि ब्रह्मरन्ध्रान्तं च विन्यसेत् । एवं भूतानि संचिन्त्य जन्मान्तरे दुःखप्रदं पापपुरुषमसद्वासनात्मकं वामकुक्षिस्थितं ॐ यँ इति वायुबीजं पूरके षोडशवारं जपित्वा विशो ष्य ॐ रं इति वह्निबीजं कुम्भके चतुःषष्टिवारं जप्त्वा तं दहेत् । ततः ॐ यँ इति वायुबीजं रेचके द्वात्रिंशद्वारं जप्तेन तद्भस्म शरी राद्बहिर्निष्कास्य पुनः वँ इति षोडशधा सुधाबीजजप्तेन तद्भस्म संप्लाव्य लँ इति षोडशधा जप्तेन भूबीजेन घनीकृत्य कनका ण्डवत् विभाव्य नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मैवाहमिति भावयेत् । ततः ॐ हों ईशानाय नमः मूर्ध्नि ॥१॥ ॐ हें तत्पुरुषाय नमः मुखे ॥ २ ॥ ॐ हुं अघोराय नमः हृदि ॥ ३ ॥ ॐ हिं वामदेवाय नमः गुह्ये ॥ ४ ॥ हं सद्योजाताय नमः पादयोः ॥ ५ ॥ इति न्यसेत् । एवमुत्पन्ने देवात्मके देहे ब्रह्माण्डस्थितपरमात्मनः सकाशाज्जीवं हंसः सोहमिति हृदयमानीय स्वप्राणप्रतिष्ठां कुर्य्यात् ॥

इति भूतशुद्धिः ॥ ॥ अस्य प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः ऋग्यजुःसामानि च्छन्दांसि । प्राणशक्तिर्देवता । आँ बीजम् । ह्रीं शक्तिः । क्रौं कीलकम् । स्वशरीरप्राणप्रतिष्ठापने विनियोगः । ॐ ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि । ॐ ऋग्यजुःसामच्छंदोभ्यो नमः मुखे । ॐ प्राणशक्त्यै देवतायै नमः हृदये । ॐ आँ बीजाय नमः गुह्ये । ॐ ह्रीं शक्त्यै नमः पादयोः । ॐ क्रौं कीलकाय नमः सर्वाङ्गे ॥ इति ऋष्यादिन्यासः ॥ ॐ ह्रांआँअँकँखँगँघँङँआँआकाशवायुतेजोजलपृथिव्यात्मने आँअङ्गुष्ठाभ्यां नमः ॥ॐ ह्रींइँचँजँझँञँ ईशँब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः ॥ ॐ ह्रूँउँटँठँडँढँणँ ऊँ श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊँ मध्यमाभ्यां नमः॥ॐ ह्रैंऐंतँथँदँधँनँऐंवाँक्पाणिपादपायूपस्थात्मने ऐँ अनामिकाभ्यां नमः ॥ ॐ ह्रौंऔंपँफँबँभँमँऔं वचनादानगतिविसर्गानन्दात्मने औं कनिष्ठिकाभ्यां नमः ॥ ह्रःअँयँरँलँवँशँषँसँहँळँक्षँअँमनोबुद्ध्यहंकारचित्तज्ञानात्मने अः करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ ततः एवं हृदयादिन्यासं कुर्य्यात्॥ॐ ह्रांअँकँ० १९॥ आँ हृदयाय नमः॥१॥ॐ ह्रीं इँचँ० १७ ईं शिरसे स्वाहा॥२॥ ॐ ह्रूँउँटँ० १७ॐ शिखायै वषट् ॥ ३ ॥ ॐ ह्रैंऐंतँ० १७ ऐं कवचायहुम् ॥ ४ ॥ ॐ ह्रौं औं पँ० १९ औं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ ह्रः अँयँ० २४ अं अस्त्राय फट् ॥६॥ इति हृदयादिन्यासः ॥ अथ ध्यानम् । रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः पाशं कोदण्डमिक्षूद्भवमणिगुणमप्यङ्कुशं पञ्चबाणान् ॥ बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥ १ ॥ इति ध्यात्वा स्वहृदि करं निधाय ॐ आँह्रीं क्रौं यँरँलँवँशँषँसँहौंहंसः मम प्राणा इह प्राणाः ॥ १ ॥ ॐ आँह्रींक्रौं यँरँ० मम जीव इह स्थितः ॥२॥ ॐ आँह्रींक्रौं यँ० मम सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ ३ ॥ इति वारत्रयं पठित्वा पञ्चदशप्रणवावृत्तीः कृत्वा क्रमेण मम संस्कारा जाता इति भावयेत् । इति प्राणप्रतिष्ठां कृत्वा ततः पूर्वोक्तपद्धतिकाण्डोक्तमन्तर्मातृकाबहिर्मातृकान्यासं च कृत्वा पञ्चाक्षरोदितं श्रीकण्ठादिकलान्यासं च कुर्य्यात् । एवं न्यासं कृत्वा सूर्य्यायार्घ्यं दत्त्वा । ॐ सर्वाधारधरे देवि त्वद्रूपां मृत्तिकामिमाम् ॥ ग्रहीष्यामि प्रसन्ना त्वं लिङ्गार्थं भव सुप्रभे ॥१॥ इतिभूमिं प्रार्थ्य ॐ ह्रां पृथिव्यै नमः । इति षडर्णेनाभिमन्त्र्य । उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके त्वां च गृह्णामि प्रजया च धनेन च ॥ १ ॥ ॐ हराय नमः । इति शुचिस्थानात् ( पाषाणवेणुकीटकेशास्थिवालुकादिदोषरहितामीशानकोणगताम् ) मृदं शस्त्रेणोत्कीर्य सुस्निग्धां शुभ्रां मृदमादाय निःशर्करां कृत्वा प्रत्यहं पूजनाय संशुद्धे ताम्रादिपात्रे निदध्यात् । ततस्तां दृष्ट्यावलोकनेन संशोध्य । ॐ ( वँ ) इति अमृतबीजेनाभिमन्त्रितजलप्रक्षेपेण संपीड्य । तेन पिण्डं कृत्वा तस्मात्पिण्डादल्पां मृदमादाय ॐ ह्रीं ग्लौं गंगणपतये ग्लौं गं ह्रीं इत्येकादशा ११ क्षरमन्त्रेण बालगणेश्वरं वराभयलसत्पाणिपद्मं निर्माय ततः ॐ महेश्वराय नमः । इति मनोहरं लिङ्गमङ्गुष्ठादिदशांगुलान्तं संघट्टनं विधाय एवमन्यान्यपि लिङ्गानि यथा संकल्पितानि कृत्वा अवशिष्टमृदा ॐ ॐ ऐं हुं क्षं क्लीं कुमाराय नमः । इति दशाक्षरमन्त्रेण षण्मुखं कुमारं च कृत्वा पङ्क्त्यन्ते स्थापयेत् । तावत् पीठपूजा । पीठं जलेन प्रोक्ष्य तत्र पूर्वादिदिक्षु ॐ वामायै नमः ॥ १ ॥ ॐ ज्येष्ठायै नमः ॥ २ ॥ ॐ

रौद्र्यै नमः ॥३॥ काल्यै नमः ॥४॥ ॐ कलविकरण्यै नमः ॥५॥ ॐ बलविकरण्यै नमः ॥ ६ ॥ ॐ बलप्रमथिन्यै नमः ॥ ७ ॥ ॐ सर्वभूतदमन्यै नमः ॥ ८ ॥ ( मध्ये ) मनोन्मन्यै नमः ॥ ९ ॥ इति पीठशक्तीः संपूज्य । ॐ नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः इति पुष्पाञ्जलिना आसनं दत्त्वा तत्र स्वपुरतः ॐ शूलपाणये नमः इति पीठमध्ये संस्थापयेत् । ततः आचम्य प्राणानायम्य ॐ अस्य श्रीसदाशिवमन्त्रस्य वामदेव ऋषिः । पंक्तिश्छन्दः श्रीसदाशिवो देवता । ॐ बीजम् । नमः शक्तिः । शिवाय कीलकं मम साम्बसदाशिवप्रीत्यर्थे पार्थिवलिङ्गपूजने विनियोगः ॥ ॐ वामदेवऋषये नमः शिरसि ॥ १ ॥ ॐ पंक्तिच्छन्दसे नमः मुखे ॥ २ ॥ ॐ श्रीसदाशिवदेवतायै नमः हृदये ॥ ३ ॥ ॐ बीजाय नमः गुह्ये ॥४॥ ॐ नमः शक्तये नमः पादयोः ॥५॥ ॐ शिवाय कीलकाय नमः सर्वाङ्गे ॥६॥ इति ऋष्यादिन्यासः । ॐ अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ नं तर्जनीभ्यां नमः ॥ २ ॥ ॐ मं मध्यमाभ्यां नमः ॥ ३ ॥ ॐ शिं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ वां कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ यं करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवं हृदयादिषडङ्गन्यासं कुर्यात् । ॐ नं तत्पुरुषाय नमो हृदये ॥ १ ॥ ॐ मं अघोराय नमः पादयोः ॥ २ ॥ ॐ शिं सद्योजाताय नमो गुह्ये ॥ ३ ॥ ॐ वां वामदेवाय नमो मूर्ध्नि ॥ ४ ॥ ॐ यं ईशानाय नमो मुखे ॥ ५ ॥ एवं न्यासविधिं कृत्वा ध्यायेत् । अथ ध्यानम् ॥ ॐ ध्याये नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ॥ पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य प्राणप्रतिष्ठां कुर्यात् । अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि च्छन्दांसि क्रियामयवपुः प्राणाख्या देवता । आं बीजम् । ह्रीं शक्तिः । क्रौं कीलकम् देवे प्राणप्रतिष्ठापने विनियोगः ॐ ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि ॥ १ ॥ ॐ ऋग्यजुःसामच्छन्दोभ्यो नमो मुखे ॥२॥ ॐ प्राणाख्यदेवतायै नमः हृदि ॥३॥ ॐ आं बीजाय नमो गुह्ये ॥४॥ ॐ ह्रीं शक्तये नमः पादयोः ॥५॥ ॐ क्रौं कीलकाय नमः सर्वाङ्गे इति कृत्वा । ॐ आँह्रींक्रौंयँरँलँवँशँषँसँहँसः सोहं शिवस्य प्राणा इह प्राणाः ॥ १ ॥ ॐ आँह्रींक्रौंयँरँलँवँशँषँसँहँसः सोहं शिवस्य जीव इह स्थितः ॥ २ ॥ आँह्रींक्रौंयँरँलँवँशँषँसँहँसः सोहं शिवस्य सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुश्श्रोत्रघ्राणजिह्वापाणिपादपायूपस्थानि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ ३ ॥ एवं प्राणप्रतिष्ठां कृत्वा ध्यायेत्—बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः सर्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्मात्तवासाः । ध्येयो मुक्ताङ्गरागामृतरसकणिकाद्रिप्रभः पञ्चवक्त्रस्त्र्यक्षः कोटीरकोटिघृष्टितहिमरुचिः सर्वदा चन्द्रमौलिः ॥ इति ध्यात्वा नमस्कारं कुर्यात् । तद्यथा—नमोऽस्तु स्थाणुरूपाय ज्योतिर्लिङ्गामृतात्मने ॥ चतुर्मूर्तेश्च पुंछायाभासिताङ्गाय शंभवे ॥ २ ॥ सर्वज्ञज्ञानविज्ञानप्रदानैकमहात्मने ॥ नमस्ते देवदेवेश सर्वभूतहितेरत ॥ २ ॥ अनन्तकान्तिसंपन्न अनन्तासनसंस्थित ॥ अनन्तकान्तिसंभोग परकान्त नमोऽस्तु ते ॥ ३ ॥ वज्ररूप महारूप सर्वरूपोत्तमोत्तम ॥ पशुपाशार्णवासीन दृढव्रत नमोऽस्तु ते ॥ ४ ॥ स्वभावनिर्मला

कार सर्वोपाधिविनाशन ॥ योगियोगिन्महायोग योगीश्वर नमोऽस्तु ते ॥ ५ ॥ इति नत्वा स्थापितं लिङ्गं स्पृशन् ॐ भूः पुरुषं साम्बसदाशिवमावाहयामि ॥ १ ॥ ॐ भुवः पुरुषं साम्बसदाशिवमावाहयामि ॥ २ ॥ ॐ स्वः पुरुषं साम्बसदाशिवमावाहयामि ॥ ३ ॥ इत्यावाह्य । ॐ स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकम् ॥ तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन्सन्निधो भव ॥ १ ॥ इति पुष्पाञ्जलिं दत्त्वा ॐ ह्रीं ग्लौं गं गणपतये ग्लौं गं ह्रीं ॥ ११ ॥ इत्येकादशार्णमन्त्रेण गणपतिं संपूज्य ॐ ऐं हुं क्षुं क्लीं कुमाराय नमः ॥ १० ॥ इति दशाक्षरमन्त्रेण स्कन्दं पूजयेत् ॥ ३ ॥ अथ शिवपूजनम् ॥ तत्रादौ ध्यानम् । दक्षाङ्कस्थं गणपतिमुखं प्राम्मृशन्दक्षदोष्णा वामोरुस्थां नगपतनयाङ्के गुहं चापरेण ॥ इष्टाभीती परकरयुगे धारयन्निन्दुकान्तिरुयाद स्मांस्त्रिभुवननतो नीलकण्ठस्त्रिनेत्रः ॥ १ ॥ एवं ध्यात्वा ॐ नमोस्तुनीलग्रीवायसहस्राक्षायमीढुषेंअथोयेऽअस्यसत्वानोहंतेभ्योकरन्नमं ॥ १ ॥ श्रीसाम्बसदाशिवाय नमः पाद्यं समर्पयामि इति पाद्यं दद्यात् ॥ १ ॥ ॐ गायत्रीत्रिष्टुब्जगंत्यनुष्टुप्पंक्त्यासह ॥ बृहत्युष्णिहांककुपसूचीभिंःशम्यन्तु त्वा ॥ ॐ सांबसदाशिवाय नमः । अर्घ्यं समर्पयामि इत्यर्घ्यम् ॥ २ ॥ ॐ त्र्यंबकंयजामहेसुगंधिम्पुंष्टिवर्धनम् ॥ उर्वारुकमिंवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ सांबसदाशिवाय नमः आचमनं स० इत्याचमनम् ॥ ३ ॥ ॐ मधुवाताऋतायते० इति मधुपर्कम् ॥ ४ ॥ ॐ सांबसदाशिवाय नमः इत्याचमनीयम् ॥ ५ ॥ ॐ वरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऋतसदंन्यसिवरुणस्यऽऋतसदंनमसिंवरुणस्यऋतसदंनमासीद ॥ ६ ॥ ॐ सांबसदाशिवाय नमः जलस्नानं स० इति जलस्नानम् ॥ ६ ॥ ॐ पयंःपृथिव्यांपयऽओषंधीषुपयोंदिव्यंतरिंक्षेपयोंधाः॥पयंस्वतीःप्रदिशंःसंतुमह्यम् ॥ ॐ सांबसदाशिवाय नमः पयःस्नानं स० । इति पयःस्नानम् ॥ ७ ॥ ॐ दधिक्राव्णोंऽअकारिषंजिष्णोरश्वंस्यवाजिनंः ॥ सुरभिनोमुखांकरत्प्राणआयूं ँषितारिषत् ॥ ॐ सांबसदाशिवाय नमः । दधिस्नानं स० । इति दधिस्नानं पुनर्जलस्नानम् ॥८॥ ॐघृतंघृतपावानःपिबतु वसांवसापावानःपिबतांतरिंक्षस्यहविरंसिस्वाहां दिशंःप्रदिशऽआदिशोंविदिशंऽउद्दिशोंदिग्भ्यःस्वाहा ॐ सांबसदाशिवाय नमः घृतस्नानं समर्पयामि । इति घृतस्नानं पुनर्जलस्नानम् ॥ ९ ॥ ॐ मधुवातांऽऋतायतेमधुक्षरंतिसिंधवंःमाध्वीर्नःसंत्वोषधीः मधुनक्तंमुतोषसोमधुंमत्पार्थिवंरजंःमधुद्यौरस्तुनःपितामधुमान्नोवनंस्पतिर्मधुंमाँऽ२अस्तुसूर्यंःमाध्वीर्गावोंभवंतुनः ॥ ॐ सांबसदाशिवाय नमः मधुस्नानं स० । इति मधुस्नानं पुनर्जलस्नानम् ॥ १० ॥ ॐ अपांरसमुद्वयसंसूर्येसन्तंसमाहितम् ॥ अपांरसंस्ययोरसस्तंवोंगृह्णाम्युत्तममुंपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टंतमम् ॥ ॐ सांबसदाशिवायनमः शर्करोदकस्नानं स० इति शर्करोदकस्नानं पुनर्जलस्नानम् ॥ ११ ॥ ॐ पंचनद्यःसरस्वतीमपिंयन्तिसस्रों

तस्य ॥ सरस्वतीतुपंचधासोदेशेभवत्सरित् ॥ ॐ सांबसदाशिवाय नमः पंचामृतस्नानं स० इति पञ्चामृतस्नानम् ॥ १२ ॥
ॐशुद्धवालःसर्वशुद्धवालोमणिवालस्तऽआश्विनाःश्येतः श्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्णायामाऽअवलिप्तारौद्रानभोरूपाःपार्जन्याः
॥ ॐ सांबसदाशिवाय नमः शुद्धोदकस्नानं स० । इति शुद्धोदकस्नानम् ॥ १३ ॥ ततः स्नानांते ॐ नमोरुद्र०
इति षोडशभिर्ऋग्भिः अभिषेकं कुर्यात् ॥ ततः ॐ प्रमुञ्चधन्वनस्त्वमुभयोरात्न्योर्ज्याम् ॥ याश्चतेहस्तऽइषवःपरताभगवो
वप ॥ ॐ सांबसदाशिवायनमः वस्त्रं कौपीनं स० । इति वस्त्रकौपीनम् ॥ १४ ॥ ॐ विज्यंधनुः कपर्दिनोविशल्यो
बाणवाँ२उत ॥ अनेशन्नस्यवाऽइषवआभुरस्यनिषंगधिः ॥ ॐ सांबसदाशिवाय नमः आभरणं स० इत्याभरणम् ॥ १५ ॥ ॐ
ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः सबुध्न्या उपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ॐ सांबसदाशिवाय
नमः यज्ञोपवीतं समर्पयामि इति यज्ञोपवीतम् ॥ १६ ॥ आचमनं दद्यात् ॥ ॐ नमःश्वभ्यःश्वपतिभ्यश्चवोनमोनमोभवायच
रुद्रायचनमः शर्वायचपशुपतयेचनमोनीलग्रीवायचशितिकण्ठायचनमः कपर्दिने ॥ ॐ सांबसदाशिवाय नमः गन्धं स० । इति
गंधम् ॥ १७ ॥ नमः शम्भवायचमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच ॥ ॐ सांबसदाशिवाय
नमः अक्षतान् स० । इत्यक्षताः ॥ १८ ॥ नमःपार्याय्चावार्याचनमः प्रतरणायचोत्तरणायचनमस्तीर्थ्यायचकूल्यायचनमः
शष्प्यायचफेन्यायचनमः ॥ ॐ सांबसदाशिवाय नमः पुष्पं समर्पयामि । इति पुष्पाणि ॥ १९ ॥ ॐनमोबिल्मिनेचकवचिनेचनमो
वर्मिणेचवरूथिनेचनमः ॥ श्रुतायचश्रुतसेनायचनमोदुन्दुभ्यायचाहनन्यायचनमोधृष्णवे ॥ ॐ साम्बसदाशिवाय नमः बिल्वपत्रं
स० । इति बिल्पत्राणि ॥ २० ॥ ॐ काण्डात्काण्डात्प्ररोहन्ती परुषःपरुषस्परि॥एवानोदूर्वेप्रतनुसहस्रेणशतेन च ॥ ॐ सांबसदा
शिवाय नमः दूर्वां स० । इति दूर्वाम् ॥ २१ ॥ एवं पुष्पांतपूजां कृत्वा आवरणार्चनं कुर्यात् ॥ तद्यथा । ॐ अघोराय नमः ॥ १ ॥
ॐ पशुपतये नमः ॥ २ ॥ ॐ शिवाय नमः ॥ ३ ॥ ॐ विरूपाय नमः ॥४॥ ॐ विश्वरूपाय नमः ॥५॥ ॐ भैरवाय नमः ॥६॥
ॐ त्र्यम्बकाय नमः ॥ ७ ॥ ॐ शूलपाणये नमः ॥ ८ ॥ ॐ कपर्दिने नमः ॥ ९ ॥ ॐ ईशानाय नमः ॥ १० ॥ ॐ महेशाय नमः
॥११॥ इत्येकादश रुद्रान् संपूज्य ततः ॐ भगवत्यै नमः॥१॥ॐ उमादेव्यै नमः ॥२॥ ॐशंकरप्रियायै नमः ॥३॥ ॐ पार्वत्यै नमः
॥४॥ ॐ गौर्यै नमः ॥ ५ ॥ ॐ कालिन्द्यै नमः ॥ ६ ॥ ॐ काटिंग्यै नमः ॥७॥ ॐ विश्वधारिण्यै नमः । ८॥ ॐ विश्वेश्वर्यै नमः
॥ ९ ॥ ॐ विश्वमात्रे नमः ॥ १० ॥ ॐ शिवायै नमः ॥ ११ ॥ इति शक्तीः पूजयेत् । एवं सगणं रुद्रं संपूज्य वेद्यामष्टमूर्तीः
अक्षतादिना पूजयेत् । तद्यथा । प्राच्याम् ॐ शर्वाय क्षितिमूर्तये नमः ॥१॥ ईशान्याम् ॐ भवाय जलमूर्तये नमः ॥२॥ उदीच्याम्

ॐरुद्रायाग्निमूर्तये नमः ॥ ३ ॥ वायव्याम् ॐ उग्राय वायुमूर्तये नमः ॥ ४ ॥ प्रतीच्याम् ॐ भीमायाकाशमूर्तये नमः ॥ ५ ॥ नैर्ऋत्याम् ॐ पशुपतये यजमानमूर्तये नमः ॥ ६ ॥ दक्षिणस्याम् ॐ महादेवाय सोममूर्तये नमः ॥ ७ ॥ आग्नेय्याम्ॐईशानाय सूर्यमूर्तये नमः ॥ ८ ॥ इति संपूज्य प्रणालिकायां ह्रीं उमायै नमः इति पूजयेत् । तद्बहिः पूर्वादिषु इन्द्रादिदशदिक्पालान् संपूजयेत् ॥ इत्यावरणपूजा ॥ ततः ॐ नमः कपर्दिने चव्युप्तकेशाय चनमःसहस्राक्षाय चशतधन्वने चनमोगिरिशयाय चशिपिविष्टाय चनमोमीढुष्टमाय चेषुमते चनमोह्रस्वाय ॥ ॐ साङ्गाय साम्बसदाशिवाय नमः धूपं स० इति धूपम् ॥ २२ ॥ ॐ नमऽआशवे चाजिराय चनमः शीघ्र्याय चशीभ्याय चनमऽऊर्म्याय चावस्वन्याय चनमोनादेयाय चद्वीप्याय च ॥ ॐ साङ्गाय साम्बसदाशिवाय नमः दीपं स० इति दीपम् ॥ २३ ॥ ॐ नमोज्येष्ठाय चकनिष्ठाय चनमःपूर्वजाय चापरजाय चनमोमध्यमाय चापगल्भाय चनमोजघन्याय चबुध्न्याय चनमःसोभ्याय ॥ ॐ साङ्गाय साम्बसदाशिवाय नमः नैवेद्यं समर्पयामि । इति नैवेद्यम् ॥ २४ ॥ ॐ त्र्यंबकं यजामहे सुगंधिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ साङ्गाय साम्बसदाशिवाय नमः आचमनीयं समर्पयामि ॥ इत्याचमनम् ॥ २५ ॥ ॐ इमारुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ॥ यथाशमसद्द्विपदे चतुष्पदे विश्वम्पुष्टंग्रामेऽअस्मिन्ननातुरम् ॥ ॐ साङ्गाय साम्बसदाशिवाय ताम्बूलम् स० । इति ताम्बूलम् ॥२६॥ ॐ श्रीश्चते लक्ष्मीश्च० ॐसाङ्गाय साम्बसदाशिवाय नमः ऋतुफलं स० । इति ऋतुफलम् ॥ २७ ॥ ॐ हिरण्यगर्भःसमवर्ततताग्रेभूतस्यजातःपतिरेकआसीत् सदाधारपृथिवीन्द्यामुतेमांकस्मै देवाय हविषाविधेम ॥ ॐ साङ्गाय साम्बसदाशिवाय नमः दक्षिणां समर्पयामि॥इति दक्षिणाम्॥२८॥एवं संपूज्य साक्षतजलेन तर्पणं कार्य्यम् ॥ ॐ भवं देवं तर्पयामि ॥ १ ॥ ॐ शर्वं देवं तर्पयामि ॥ २ ॥ ॐ ईशानं देवं तर्पयामि ॥३॥ ॐ पशुपतिं देवं तर्पयामि ॥ ४ ॥ ॐ उग्रं देवं तर्पयामि ॥ ५ ॥ ॐ रुद्रं देवं तर्पयामि ॥ ६ ॥ ॐ भीमं देवं तर्पयामि ॥७॥ ॐ महान्तं देवं तर्पयामि ॥ ८ ॥ ॐ भवस्य देवस्यपत्नीं तर्पयामि ॥ १ ॥ ॐ शर्वस्य देवस्य पत्नीं तर्पयामि ॥२॥ ॐ ईशानस्य देवस्य पत्नीं तर्पयामि ॥ ३ ॥ ॐ पशुपतेर्देवस्य पत्नीं तर्पयामि ॥ ४ ॥ ॐ उग्रस्य देवस्य पत्नीं तर्पयामि ॥ ५ ॥ ॐ रुद्रस्य देवस्य पत्नीं तर्पयामि ॥ ६ ॥ ॐ भीमस्य देवस्य पत्नीं तर्पयामि ॥ ७ ॥ ॐ महतो देवस्य पत्नीं तर्पयामि ॥ ८ ॥ एवं तर्पणं कृत्वा कर्पूरखचिताभिरेकादशवर्तिकाभिः कर्पूरेण वा आरार्तिकं कुर्य्यात् ॥ तत्र नीराजनम्—ॐ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् ॥ सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥१॥ वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ॥ वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥२॥

शान्तं पद्मासनस्थं शशधरमुकुटं पंचवक्त्रं त्रिनेत्रं शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम्॥नागं पाशं च घण्टां डमरुकसहितं साङ्कुशं वामभागे नानालंकारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि ॥३॥ अथ शिवनीराजनम् ॥ जय गङ्गाधर हर जय गिरिजाधीशा ॥ त्वं मां पालय नित्यं कृपया जगदीशा । हर हर हर महादेव ॥ १ ॥ कैलासे गिरिशिखरे कल्पद्रुमविपिने गुञ्जति मधुकरपुञ्जे कुञ्जवने सुघने॥कोकिलकूजतखेलतहंसावनललिता । रचयति कलाकलापं नृत्यति मुदसहिता । हर हर हर महादेव ॥२॥ तस्मिन् ललितसुदेशे शाला मणिरचिता । तन्मध्ये हरनिकटे गौरी मुदसहिता॥ क्रीडा रचयति भूषारंजितनिजमीशम् । इन्द्रादिकसुरसेवित नामयते शीशम् ॥ हर हर हर महादेव ॥३॥ विबुधवधू बहु नृत्यति हृदये मुदसहिता । किन्नर गायन कुरुते सप्तस्वरसहिता॥धिनकत थैथै धिनकत मृदङ्ग वादयते।क्वणक्वण ललिता वेणुं मधुरं नादयते।हर हर हर महादेव ॥४॥ रुणरुण चरणे चरयति नूपुरमुज्वलिता । चक्रावर्ते भ्रमयति कुरुते तां धिकताम् ॥ तांतांलुपचुपतांतांवादयते । अङ्गुष्ठाङ्गुलिनादं लासकतां कुरुते ॥ हर हर हर महादेव ॥ ५ ॥ कर्पूरद्युतिगौरं पंचाननसहितम् । त्रिनयनशशिधरमौलिं विषधरकण्ठयुतम् । सुन्दरजटाकलापं पावकयुतभालम् । डमरुत्रिशूलपिनाकं करधृतनृकपालम् ॥ हर हर हर महादेव ॥ ६ ॥मुण्डै रचयति माला पन्नगमुपवीतम् । वामविभागे गिरिजारूपं अति ललितम् । सुन्दरसकलशरीरे कृतभस्माभरणम् । इति वृषभध्वजरूपं तापत्रयहरणम् । हर हर हर महादेव ॥ ७ ॥ शंखनिनादं कृत्वा झल्लरि नादयते । नीराजयते ब्रह्मा वेदऋचां पठते । अतिमृदुचरणसरोजं हृदिकमले धृत्वा । अवलोकयति महेशं ईशं अभिनत्वा ॥ हर हर हर महादेव ॥ ८ ॥ ध्यानं आरतिसमये हृदये अति कृत्वा ॥ रामत्रिजटानाथं ईशं अभिनत्वा ॥ सङ्गितमेवं प्रतिदिनपठनं यः कुरुते । शिवसायुज्यं गच्छति भक्त्या यः शृणुते ॥ हर हर हर महादेव ॥ ९ ॥ इति नीराजनम् ॥ प्रदक्षिणा ॥ ॐ येतीर्थानिप्रचरंतिसृकाहस्ता निषङ्गिणः । तेषाꣳसहस्रयोजनेवधन्वानि तन्मसि ॥ १ ॥ यानि कानि च पापानि जन्मांतरकृतानि च ॥ तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥ ॐसाम्बसदाशिवाय नमः प्रदक्षिणं समर्पयामीति प्रदक्षिणत्रयं कुर्यात्(शिवरहस्ये)प्रदक्षिणत्रयं कुर्यात्तथा पञ्च दशाथवा ॥ प्रदक्षिणत्रयान्न्यूनं नैव कार्य्यं महेश्वरे ॥ १ ॥ पूजां कृत्वा तु यः शम्भोर्न करोति प्रदक्षिणम् ॥ सा पूजा निष्फला ज्ञेया पूजकः स च दाम्भिकः ॥ २ ॥ भक्त्या करोति यः सम्यक् केवलं तु प्रदक्षिणम्॥ पूजा सर्वा कृता तेन स सम्यक् शिवपूजकः ॥ ३ ॥ अथ पुष्पाञ्जलिमन्त्राः ॥ ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ॥ तेहनाकम्महिमानःसचन्तयत्रपूर्व्वेसाध्याःसन्तिदेवाः ॥ १ ॥ ॐ साङ्गाय साम्बसदाशिवाय नमः मन्त्रपुष्पाञ्जलिं समर्पयामि । इति पुष्पाञ्जलिं दत्त्वा । "ॐ प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् । इति साष्टाङ्गं प्रणामं कुर्यात् । ततो यथाशक्ति पञ्चाक्षरमन्त्रं जपित्वा । गुह्यातिगुह्य॰ इति मन्त्रेण जपं समर्प्य । क्षमापराधमहिम्नप्रभृतिपुराणैः प्राकृतैश्च स्तवैःस्तुत्वा देवं प्रार्थयेत्॥ॐ अङ्गहीनं क्रियाहीनं विधिहीनं महेश्वर ॥ पूजितोसि मया देव तव क्षमस्व अस्मात्कृतम् ॥ १ ॥ यद्यप्युपहतैः पुष्पैरपास्तैर्भावदूषितैः ॥ केशकीटापविद्धैश्च

पूजितोऽसि मया प्रभो ॥२॥ अन्यत्रासक्तचित्तेन क्रियाहीनेन वा प्रभो ॥ मनोवाक्कायदुष्टेन पूजितोसि त्रिलोचन ॥ ३ ॥ यच्चो पहतपात्रेण कृतमर्घ्यादिकं मया ॥ तामसेन च भावेन तत्क्षमस्व मम प्रभो ॥ ४ ॥ मन्त्रणाक्षरहीनेन पुष्पेण विफलेन च ॥ पूजितो ऽसि महादेव तत्सर्वं क्षम्यतां मम ॥५॥ व्रतं संपूर्णतां यातु फलं चाक्षयमश्नुते ॥ अज्ञानयोगादुपचारकर्म यत्पूर्वमस्माभिरनुष्ठितं ते ॥ तदेव सोद्वासनकं दयालो पितेव पुत्रान्प्रतनो जुषस्व ॥६॥ अयं दानकालस्त्वहं दानपात्रं भवानेव दाता त्वदन्यं न याचे ॥ भवद्भक्तिमन्तःस्थिरां देहि मह्यं कृपाशील शम्भो कृतार्थोऽस्मि यस्मात् ॥७॥ ॐ नमओंकाररूपाय नमोऽक्षरवपुर्धृते ॥ नमो नादात्मने तुभ्यं नमो बिन्दुकलात्मने ॥८॥ अलिङ्गलिङ्गरूपाय रूपातीताय ते नमः ॥ त्वं माता सर्वलोकानां त्वमेव जगतः पिता ॥ ९ ॥ त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियः प्रियरूपधृक् ॥ त्वं गुरुस्त्वं गतिः साक्षात्त्वं पिता त्वं पितामहः ॥ १० ॥ नमस्ते भगवन् रुद्र भास्करामिततेजसे ॥ नमो भवाय रुद्राय रसायाम्बुमयाय च ॥ ११ ॥ शर्वाय क्षितिरूपाय सदासुरभिणे नमः ॥ पशूनां पतये तुभ्यं पावकामिततेजसे ॥ १२ ॥ भीमाय व्योमरूपाय शब्दमात्राय ते नमः ॥ महादेवाय सोमाय अमृताय नमोऽस्तु ते ॥ १३ ॥ उग्राय यजमानाय नमस्ते कर्मयोगिने ॥ पार्थिवस्य च लिङ्गस्य यन्मया पूजनं कृतम् ॥ १४ ॥ तेन मे भगवान् रुद्रो वाञ्छितार्थं प्रयच्छतु ॥ इति प्रार्थ्य ॥ अर्घ्योदकमादाय ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्म्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्कृतं यदुक्तं तत्सर्वं ब्रह्मार्पणं भवतु इति पठित्वा देवस्य चरणयोः क्षिपेत् ॥ ततः ॐ साधु वाऽसाधु वा कर्म्म यद्यदाचरितं मया ॥ तत्सर्वं कृपया देव गृहाणाराधनं मम ॥ १ ॥ इत्यर्घजलं किंचिद्देवोपरि निक्षिप्य। पुष्पांजलिमादाय " ॐ रश्मिरूपा महादेवा अत्र पूजितदेवताः ॥ सदा शिवाङ्गलीनास्ताः सन्तु सर्वाः सुखावहाः" ॥ १ ॥ इति देवोपरि निक्षिप्य। तेजोरूपं ध्यात्वा। ॐ गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वर ॥ यत्र ब्रह्मादयो देवा न विदुः परमं पदम् ॥ १ ॥ ॐ नमो महादेवाय इति पठित्वा संहारमुद्रया विसृजेत् ॥ ततो गणपतिस्कन्दौ विसृज्य ईशान्यां जलेन मण्डलं कृत्वा ॐ व्यापकमण्डलाय नमः। इति संपूज्य। ॐ चण्डेश्वराय नमः इति निर्मा ल्यनैवेद्यादिकं संस्थाप्य ध्यायेत्। चण्डेश्वरं रक्ततनुं त्रिनेत्रं रक्तांशुकाढ्यं हृदि भावयामि ॥ टङ्कं त्रिशूलं स्फटिकाक्षमालां कम ण्डलुं बिभ्रतमिन्दुचूडम् ॥ इति ध्यात्वा। ॐ चण्डेश्वराय नमः। इति निर्माल्येन संपूज्य ॐ धूं फट् चण्डेश्वर इमं बलिं गृह्ण स्वाहा इति तत्त्वमुद्रया चरणोदकधारादानेन समर्प्य ॐ। बलिदानेन संतुष्टश्चण्डेशः सर्वसिद्धिदः ॥ शान्तिं करोतु मे नित्यं शिवभक्तिं ददातु च ॥ १ ॥ लेह्यचोष्यान्नपानादि ताम्बूलं स्रग्विलेपनम् ॥ निर्माल्यभोजनं तुभ्यं ददामि श्रीशिवाज्ञया ॥ २ ॥ इति निर्माल्यपुष्पाञ्जलिं समर्प्य नाराचमुद्रां प्रदर्श्य गच्छगच्छेति विसृजेत्। " ॐ बाणरावणचण्डीशनन्दिभृङ्गिरिट्या दयः ॥ शङ्करस्य प्रसादोऽयं सर्वे गृह्णन्तु शांभवाः ॥ १ ॥ निर्माल्यसलिलं पीत्वा देवदेवस्य शूलिनः ॥ क्षयापस्मारकुष्ठा द्यैस्सद्यो मुच्येत पातकैः ॥ २ ॥ अकालमृत्युहरणं पुण्यं ब्रह्महत्याविनाशनम् ॥ व्याधिघ्नं भक्तकायस्य शिवनिर्णेजनोदकम् ॥३॥

इति निर्माल्यजलं पीत्वा प्रणमेत् । पुनर्निर्माल्यपुष्पादिकं लिङ्गं च नद्यादौ जलमध्ये क्षिपेत् ॥ अथ पार्थिवपूजनमहिमा ( मन्त्रम होदधौ ) " यो लिङ्गं पूजयेन्नित्यं शिवभक्तिपरायणः ॥ मेरुतुल्योऽपि तस्याशु पापराशिर्लयं व्रजेत् ॥ १ ॥ दोग्ध्रीणां तु गवां लक्षं योदद्याद्वेदपाठिने ॥ पार्थिवयोऽर्चयेल्लिङ्गं तयोर्लिङ्गार्चको वरः ॥ २ ॥ चतुर्दश्यां तथाष्टम्यां पौर्णमास्यां विधुक्षये ॥ पयसा स्नाप येल्लिङ्गं धरादानफलं व्रजेत् ॥ ३ ॥ लिङ्गपूजां विधायाग्रे स्तोत्रं वा शतरुद्रियम् ॥ प्रजपेत्तन्मना भूत्वा शिवलोके महीयते ॥ ४ ॥ यत्संख्याकं यजेल्लिङ्गं तन्मितं होममाचरेत् ॥ आज्यान्वितैस्तिलैरग्नौ घृतैर्वा पायसेन वा ॥ ५ ॥ शिवमन्त्रेण तस्यान्ते ब्राह्मणान्भो जयेच्छतम् ॥ एवं कृते समस्तेष्टसिद्धिर्भवति निश्चितम् " ॥ ६ ॥ अथ कामनाभेदेन संख्याभेद ( शान्तिसारे " देशिकात्सकलं ज्ञात्वा कुर्य्याल्लिङ्गं फलप्रदम् ॥ विद्यार्थी लिङ्गसाहस्रं धनार्थी च तदर्द्धकम् ॥ १ ॥ पुत्रार्थी सप्तसाहस्रं कन्यार्थी तु शतत्रयम् ॥ वन्ध्या लिङ्गायुतं कुर्यात्सर्वपापहरं शुभम् ॥ २ ॥ राज्यार्थी शतसाहस्रं कान्तार्थी शतपञ्चकम् ॥ मोक्षार्थी कोटिगुणितं भूकामश्च सहस्रकम् ॥ ३ ॥ रूपार्थी तु त्रिसाहस्रं तीर्थार्थी द्विसहस्रकम् ॥ सुहृत्कामः सहस्रं स्याद्वस्त्रार्थी शतमष्टकम् ॥ ४ ॥ मारणार्थी सप्त शतं मोहनार्थी शताष्टकम् ॥ उच्चाटनपरश्चैव सहस्रं तु यथोक्तवत् ॥ ५ ॥ स्तंभनं तु सहस्रेण जारणे च तदर्द्धवत् ॥ निगडान्मु क्तिकामस्तु सहस्रं सार्द्धमीरितम् ॥ ६ ॥ महाराजभये पञ्चशतं चौरादिसंकटे ॥ शतद्वयं च डाकिन्या भये पञ्चशतं परम् ॥ दरिद्रः पंचसाहस्रमयुतं सर्वकामदम् ॥ ७ ॥ मन्त्रमहोदधौ ॥ लक्षपार्थिवलिङ्गानां पूजनाद्भुवि मुक्तिभाक् ॥ लक्षं तु मृडलिङ्गानां पूजनात्पार्थिवो भवेत ॥ ८ ॥ या नारी मृडलिङ्गानि सहस्रं पूजयेत्सती ॥ भर्तुः सुखमखण्डं सा प्राप्यते पार्वती भवेत ॥ ९ ॥ नव नीतस्य लिङ्गानि संपूज्येष्टमवाप्नुयात् ॥ भस्मना गोमयस्यापि वालुकायास्तथा फलम् ॥१०॥ क्रीडन्ति पृथुका भूमौ कृत्वा लिङ्गं रजोमयम् ॥ पूजयन्ति विनोदेन तेपि स्युः क्षितिनायकाः ॥ ११ ॥ प्रातर्गोमयलिङ्गानि नित्यं पञ्चाणि पूजयेत् ॥ बृहतीबिल्वयोः पत्रैर्नैवेद्यं गुडमर्पयेत् ॥ १२ ॥ एवं मासत्रयं कुर्वन्ननल्पं लभते धनम् ॥ एकादशैव लिङ्गानि गोमयोत्थानि यो यजेत् ॥ १३ ॥ प्रातर्मध्याह्नयोः सायं निशीथे प्रतिवासरम् ॥ स सर्वाः संपदः पायात् पण्मासादेवमाचरन् ॥ १४ ॥ एकादश यजेन्नित्यं शालिपिष्टमयानि यः ॥ लिङ्गानि माससात्रेण स कल्मषचयं दहेत् ॥ १५ ॥ स्फाटिकं पूजितं लिङ्गमेनोनिकरनाशनम् ॥ सर्वकामप्रदं पुंसामुदुम्बरसमुद्भवम् ॥ १६ ॥ रेवाश्मजं सर्वसिद्धिप्रदं दुःखविनाशनम् ॥ यथाकथंचिल्लिङ्गस्य पूजा नित्यकृतेष्टदा ॥ १७ ॥ यो यजेत्पिचुमन्दोत्थैः पत्रैर्गोमयजं शिवम् ॥ क्रुद्धं महेश्वरं ध्यायन्स पराजयते रिपून् ॥ १८ ॥ " ( शान्तिसारे ) नित्यपूजने संख्या ॥ " एकं पापहरं प्रोक्तं द्विलिङ्गं चाथ सिद्धिदम् ॥ त्रिलिङ्गं सर्वकामानां कारणं परमाद्भुतम् ॥ १९ ॥ यत्फलं पाकयज्ञेषु हविर्यज्ञेषु यत्फलम् ॥ एकाहात्तदवाप्नोति लिङ्गार्चनरतः सदा ॥ २० ॥ गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ॥ दशाहात्तदवाप्नोति सम्यग्लिङ्गार्चने रतः ॥ २१ ॥ वाजपेयशतैरिष्ट्वा यल्लभन्ते द्विजोत्तमाः ॥ विप्रो विंशतिरात्रेण रुद्रभक्त्या तदाप्नुयात् ॥ २२ ॥ अश्वमेधसहस्रस्य सम्यगिष्टस्य यत्फलम् ॥ मासेन तदवाप्नोति रुद्रलिङ्गार्चने रतः ॥ २३ ॥ राजसूयसह

स्त्रस्य सम्यगिष्टस्य यत्फलम् ॥ मासेन तदवाप्नोति शिवलिङ्गार्चने रतः ॥ २४ ॥ सर्वतीर्थाभिषेकस्य सर्वदानफलानि च ॥ सर्वयज्ञफलं चैव उपवासफलानि च ॥ २५ ॥ सम्यगिष्टफलः सर्वक्षेमाचारः समाधिना ॥ नवमासात्समासाद्य ब्राह्मणो विजितेन्द्रियः ॥ सर्वमेतदवाप्नोति लिङ्गे योऽर्चयते शिवम् ॥ २६ ॥ यस्तु संवत्सरं पूर्णं पूजयेदेकलिङ्गकम् ॥ तस्य तुष्टः प्रयच्छामि गाणपत्यं न संशयः ॥ २७ ॥ माघे मासि समुद्युक्तस्त्रिसन्ध्यं योऽर्चयेच्छिवम् ॥ लभेत्षाण्मासिकं पुण्यं मासेनैव न संशयः ॥ २८ ॥ यथा माघे तथाऽऽषाढे कार्त्तिके तु विशेषतः ॥ त्रिषु पुण्यं समं ज्ञेयं मासेष्वेतेषु यत्फलम् ॥ २९ ॥ यस्तु पूजयते नित्यं लिङ्गं त्रिभुवनेश्वरम् ॥ स स्वर्गराज्यमोक्षाणां क्षिप्रं भवति भाजनम् ॥ ३० ॥ ( शिवनारदसंवादे ) " तत्रापि पार्थिवं लिङ्गं क्षिप्रं सिद्धिप्रदं भवेत् ॥ पार्थिवेन तु लिंगेन बहवः सिद्धिमागताः ॥ ३१ ॥ कृते रत्नमयं लिंगं त्रेतायां हेमसंभवम् ॥ द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे ॥ ३२ ॥ " ( लिङ्गमानं मन्त्रमहोदधौ ) " अङ्गुष्ठमानादधिकं वितस्त्यवधि सुन्दरम् ॥ पार्थिवं रचयेल्लिंगं न न्यूनं नाधिकं च तत ॥ ३३ ॥ " लिङ्गमाहात्म्यम् ( नदिभविष्ययोः ) " आयुष्मान्बलवाञ्छ्रीमान्पुत्रवान्धनवान्सुखी ॥ वरमिष्टं लभेल्लिंगं पार्थिवं यः समाचरेत् ॥ ३४ ॥ मृद्भस्मगोशकृत्पिण्डं ताम्रकांस्यमयं तथा ॥ कृत्वा लिंगं सकृत्पूज्य वसेत्कल्पायुतं दिवि ॥ ३५ ॥ इति पार्थिवलिंगपूजनप्रयोगः समाप्तः ॥ ॥

अथ दक्षिणामूर्तिशिवमन्त्रपुरश्चरणम् ॥ ( शारदातिलके ) ॥ मूलमंत्रो यथा " ॐ ह्रीं दक्षिणामूर्तये तुभ्यं वटमूलनिवासिने ॥ ध्यानैकनिरतांगाय नमो रुद्राय शंभवे ह्रीं ॐ "॥ ' षट्त्रिंशदक्षरो मंत्रः सर्वकामफलप्रदः ' अस्य श्रीदक्षिणामूर्तिशंभुमंत्रस्य शुक ऋषिः । अनुष्टुप्छंदः । दक्षिणामूर्तिशंभुर्देवता । सर्वेष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ शुकऋषये नमः शिरसि ॥१॥ ॐ अनुष्टुप्छंदसे नमः मुखे ॥ २ ॥ ॐ दक्षिणामूर्तिशंभुदेवतायै नमः हृदये ॥३॥ इति ऋष्यादिन्यासः ॥ ॐ ह्रीं दक्षिणामूर्तये ह्रीं अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ ह्रीं तुभ्यं ह्रीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ ह्रीं वटमूलनिवासिने ह्रीं मध्यमाभ्यां नमः ॥ ३ ॥ ॐ ह्रीं ध्यानैकनिरताङ्गाय ह्रीं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ ह्रीं नमो रुद्राय ह्रीं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ ह्रीं शंभवे ह्रीं करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः । एवं हृदयादिन्यासं कृत्वा अङ्गन्यासं कुर्य्यात् । ॐ ह्रीं नमः मूर्ध्नि ॥ १ ॥ ॐ दं नमः भाले ॥ २ ॥ ॐ क्षिं नमः नेत्रयोः ॥ ३ ॥ ॐ णां नमः श्रोत्रयोः ॥ ४ ॥ ॐ मूं नमः गण्डयोः ॥ ५ ॥ ॐ तंनमः नासिकयोः ॥ ६ ॥ ॐ यं नमः मुखे ॥ ७ ॥ ॐ तुं नमः दक्षिणबाहुमूले ॥ ८ ॥ ॐ भ्यं नमः दक्षिणकूर्परे ॥ ९ ॥ ॐ वं नमः दक्षिणमणिबंधे ॥ १० ॥ ॐ टं नमः दक्षिणहस्तांगुलीमूले ॥ ११ ॥ ॐ मूं नमः दक्षहस्तांगुल्यग्रे ॥ १२ ॥ ॐ लं नमः वामबाहुमूले ॥ १३ ॥ ॐ निं नमः वामकूर्परे ॥ १४ ॥ ॐ वां नमः वाममणिबंधे ॥ १५ ॥ ॐ सिं नमः वामहस्तांगुलीमूले ॥ १६ ॥ ॐ नें नमः वामहस्तांगुल्यग्रे ॥ १७ ॥ ॐ ध्यां नमः गले ॥ १८ ॥ ॐ नैं नमः स्तनयोः ॥ १९ ॥ ॐ कं नमः हृदये ॥ २० ॥ ॐ निं नमः नाभिमंडले ॥ २१ ॥ ॐ रं नमः कट्योः ॥ २२ ॥ ॐ तां नमः गुह्ये ॥ २३ ॥ ॐ गां नमः दक्षिणपादमूले ॥ २४ ॥

ॐ यं नमः दक्षिणजानुनि ॥ २५ ॥ ॥ ॐ नं नमः दक्षिणगुल्फे ॥ २६ ॥ ॐ मं नमः दक्षपादांगुलीमूले ॥ २७ ॥ ॐ रुं नमः दक्षपादाङ्गुल्यग्रे ॥ २८ ॥ ॐ द्रां नमः वामपादमूले ॥ २९ ॥ ॐ यं नमः वामजानुनि ॥ ३० ॥ ॐ शं नमः वाम गुल्फे ॥ ३१ ॥ ॐ मं नमः वामपादाङ्गुलीमूले ॥ ३२ ॥ ॐ वें नमः वामपादाङ्गुल्यग्रे ॥ ३३ ॥ ॐ ह्रीं नमः इति व्यापकेन सर्वाङ्गे न्यसेत् ॥ ३४ ॥ एवमङ्गन्यासं कृत्वा ध्यायेत् ॥ " हेमाचलतटे रम्ये सिद्धकिन्नरसेविते ॥ विविधद्रुमशाखाभिः सर्वतो वारितातपे ॥ १ ॥ सुपुष्पितैर्लताजालैराश्लिष्टकुसुमद्रुमैः ॥ शिलाविवरनिर्गच्छन्निर्झरानिलसेविते ॥ २ ॥ गायद्भृङ्गाङ्गनासंघे नृत्यद्बर्हिकदंबके ॥ कूजत्कोकिलसंघेन मुखरीतकृदिङ्मुखे ॥ ३ ॥ परस्परविनिर्मुक्तमात्सर्यमृगसेविते ॥ आद्यैः शुकाद्यैर्मुनिभिर जस्रं समुपस्थितम् ॥ ४ ॥ पुरंदरमुखैर्देवैः सेवायातैर्विलोकितम् ॥ वटवृक्षं महोच्छ्रायं पद्मरागफलोज्ज्वलम् ॥ ५ ॥ गारुत्मतमयैः पत्रैर्निबिडैरुपशोभितम् ॥ नवरत्नमयाकल्पैर्लम्बमानैरलंकृतम् ॥ ६ ॥ स्थलजैर्जलजैः पुष्पैरामोदितमलंकृतम् ॥ शृण्वद्भिर्वेदशास्त्राणि शुकवृन्दैर्निषेवितम् ॥ ७ ॥ संसारतापविच्छेदकुशलच्छायमद्भुतम् ॥ विचिन्त्य तस्य मूलस्थे रत्नसिंहा सने शुभे ॥ ८ ॥ आसीनममिताकल्पं शरच्चन्द्रनिभाननम् ॥ स्तूयमानं मुनिगणैर्दिव्यज्ञानाभिलाषिभिः ॥ ९ ॥ संस्मरेज्जगतामा द्यं दक्षिणामूर्तिमव्ययम् " इति विचिंत्य । "कैलासाद्रिनिभं शशांकशकलस्फूर्जज्जटामंडितं नासालोकनतत्परं त्रिनयनं वीरासना ध्यासितम् ॥ मुद्राटंककुरङ्गजानुविलसत्पाणिं प्रसन्नाननं कक्षाबद्धभुजङ्गमं मुनिवृतं वंदे महेशं परम्॥१॥"इति ध्यायेत्॥एवं ध्यात्वा पूर्वोक्ते शिवपंचाक्षरोदिते पीठे पाद्याद्यैः षोडशोपचारैर्यथाविधि दक्षिणामूर्त्याख्यं शिवं संपूज्य जपं कुर्यात् ॥ अस्य मन्त्रस्य सिद्ध्यर्थं विंशतिसहस्राधिकं लक्षत्रयात्मकं जपपुरश्चरणं कार्यम् ॥ ततो जपान्ते दशांशेन क्षीरसंयुतैः शुद्धैस्तिलैर्होमं कृत्वा तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि कुर्यात् ॥ तथा च ( शारदातिलके ) " अयुतद्वयसंयुक्तं गुणलक्षं जपेन्मनुम् ॥ तद्दशांशं तिलैः शुद्धैर्जुहुयात्क्षीरसंयुतैः ॥ १ ॥ एवं कृतपुरश्चर्यः सिद्धमन्त्रो भवेत्सुधीः ॥ भिक्षाहारो जपेन्मासं मनुमेनं जिते न्द्रियः ॥ २ ॥ नित्यं सहस्रमष्टार्द्धं परं विंदति वाङ्मयम् ॥ त्रिवारं जप्तमेतेन मनुना सलिलं पिबेत् ॥ ३ ॥ नित्यशो दक्षिणामूर्तिं ध्यायन्साधकसत्तमः ॥ शास्त्रव्याख्यानसामर्थ्यं लभते वत्सरांतरे ॥ ४ ॥ ब्राह्मीसैन्धवसिद्धार्थवचाकुष्ठकणोत्पलैः ॥ सुगन्धि संयुतैः कल्कैः शृतं ब्राह्मीरसे घृतम् ॥ ५ ॥ मनुनानेन संजप्तमयुतं साधु साधितम् ॥ निपीतं कविताकान्तिरक्षायुःश्रीधृति प्रदम् ॥ ६ ॥ " इति दक्षिणामूर्तिशिवमन्त्रपुरश्चरणं समाप्तम् ॥ अथ द्वितीयो दक्षिणामूर्तिमन्त्रः ॥ तत्रैव मूलं यथा ॥ ॐ नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रयच्छ स्वाहा ॥ द्वाविंश२२त्यक्षरो मनुः ॥ भूतशुद्ध्यादिश्रीकण्ठादिकलान्तन्यासं शिवपञ्चाक्षरवत् कृत्वा । अस्य श्रीदक्षिणामूर्तिमन्त्रस्य चतुर्मुखऋषिः गायत्रीछन्दः दक्षिणामूर्तिः वेदव्याख्यानतत्परो देवता सर्वेष्टसिद्धये विनि योगः ॥ ॐ चतुर्मुखऋषये नमः शिरसि । गायत्रीछन्दसे नमः मुखे । ॐ दक्षिणामूर्तिदेवतायै नमः हृदये । इति ऋष्यादिन्यासः ॥ ॐ आँ ॐ नमो भगवते अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ ईँ ॐ दक्षिणामूर्तये तर्जनीभ्यां नमः ॥ २ ॥ ॐ ऊँ ॐ मह्यं मध्यमाभ्यां

नमः ॥३॥ ॐ ऐं ॐ मेधां अनामिकाभ्यां नमः ॥४॥ ॐ औं ॐ प्रयच्छ कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ अः ॐ स्वाहा करतलकरपृष्ठाभ्यां नमः ॥६॥ इति करन्यासः ॥२॥ एवमेव हृदयादिन्यासं कृत्वा । पूर्वोक्तं 'हेमाचलतटे रम्ये' इत्यादि विचिंत्य ध्यायेत् । "स्फटिकरजतवर्णं मौक्तिकीमक्षमालाममृतकलशविद्याज्ञानमुद्राः कराग्रैः ॥ दधतमुरगकक्षं चन्द्रचूडं त्रिनेत्रं विधृतविविधभूषं दक्षिणामूर्तिमीडे ॥१॥" इति ध्यात्वा पञ्चाक्षरोदिते पीठे यजेत् ॥ अथ यंत्रपूजा ॥ शैवोक्तपीठपूजां विधाय मध्ये मूर्तिं संस्थाप्य पाद्यादिपुष्पान्तैरुपचारैः संपूज्य आवरणपूजां कुर्य्यात् ॥ तद्यथा ॥ षट्कोणकेसरेष्वग्न्यादिकोणेषु मध्ये दिक्षु च ॥ ॐ आँ ॐ हृदयाय नमः ॥ १ ॥ ॐ ईं ॐ शिरसे स्वाहा ॥ २ ॥ ॐ ऊं ॐ शिखायै वषट् ॥ ३ ॥ ॐ ऐं ॐ कवचाय हुम् ॥ ४ ॥ ॐ औं ॐ नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ अः ॐ अस्त्राय फट् ॥ ६ ॥ इत्यङ्गानि संपूज्य ॥ १ ॥ ततो बाह्ये पत्रेष्वष्टसु पूर्वादिक्रमेण ॐ सरस्वत्यै नमः ॥ १ ॥ ॐ ब्रह्मणे नमः ॥ २ ॥ ॐ सनकाय नमः ॥ ३ ॥ ॐ सनंदनाय नमः ॥ ४ ॥ ॐ सनातनाय नमः ॥५॥ ॐ शुकाय नमः ॥६॥ ॐ व्यासाय नमः ॥ ७ ॥ ॐ गणेश्वराय नमः ॥ ८ ॥ इति पूजयेत् ॥ २ ॥ ततस्तद्बहिः पूर्वादिचतुर्दिक्षु । ॐ सिद्धेभ्यो नमः ॥ १ ॥ ॐ गंधर्वेभ्यो नमः ॥२॥ ॐ योगीन्द्रेभ्यो नमः ॥ ३ ॥ ॐ विद्याधरेभ्यो नमः ॥४॥ इति पूजयेत् ॥३॥ तद्बहिः भूगृहे पूर्वादिषु इंद्रादिलोकपालान्पू० ॥४॥ तद्बहिः वज्राद्यायुधानि च संपूजयेत् ॥५॥ एवं पंचावरणपूजां कृत्वा प्रधानदेवं धूपदीपनैवेद्यतांबूलदक्षिणानीराजनैः संपूज्य स्तवेन स्तुत्वा लक्षमंत्रं जपेत् ॥ तथा च (शारदातिलके) "लक्षमेकं जपेन्मंत्रं ब्रह्मचारिव्रते स्थितः ॥ जुहुयात्सघृतैः पद्मैर्दशांशं संस्कृतेऽनले ॥ १ ॥ इत्थं पूजादिभिः सिद्धे मंत्रेऽस्मिन्साधकोत्तमः ॥ वल्लभो जायते वाचां बृहस्पतिरिवापरः ॥ २ ॥ मंत्रेणानेन संजप्तैर्विशुद्धैः सलिलैः सुधीः ॥ अभिषिंचेत्स्वशिरसि श्रियमारोग्यमाप्नुयात् ॥ ३ ॥ कंठमात्रे जले स्थित्वा जपेन्मंत्रसहस्रकम् ॥ प्रत्यहं मंडलादर्वाक्कवीनामग्रणीर्भवेत् ॥ ४ ॥ गौर्या पार्श्वस्थया सार्द्धं श्रीकामी चिंतयन्विभुम् ॥ अयुतं प्रजपेन्मंत्रं भूयसीं श्रियमाप्नुयात् ॥ ५ ॥ भुंजानः प्रयतो मंत्री गोमूत्रे शृतमोदनम् ॥ भिक्षान्नमथवा मंत्रमयुतद्वितयं जपेत् ॥ ६ ॥ अश्रुतान्वेदशास्त्रादीन् व्याचष्टे नात्र संशयः ॥ सिद्धगंधर्वमुनिभिर्योगीन्द्रैरपि सेविते ॥७॥ ज्ञानवागर्थिनां प्रीत्यै कथितो मंत्रनायको" ॥८॥ इति दक्षिणामूर्तिशिवमंत्रानुष्ठानम् * ॥

अथ आपदुद्धारबटुकभैरवमंत्रानुष्ठानविधानं (रुद्रयामले ।) कदाचिद्गिरिजा शंभुं पप्रच्छोपासनाविधिम् ॥ येनेदं सर्वलोकानां मनेप्सितफलं भवेत् ॥ १ ॥ श्रीपार्वत्युवाच ॥ प्राणनाथजगन्नाथ जगदादिजगन्मय ॥ शंभो शंकर देवेश बटुकाराधनं वद ॥ २ ॥ एकादशसहस्रं तु भजनं हि त्वयोदितम् ॥ विधिं तस्य विशेषेण ब्रूहि त्वं शंकराधुना ॥ ३ ॥ शिव उवाच ॥ सम्यक् पृष्टं त्वया देवि लोकदुःखविमोचनम् ॥ मया बटुकरूपं हि धृतं सर्वसुखावहम् ॥ ४ ॥ अन्ये देवास्तु कालेन प्रसन्नाः संभवंति हि ॥ बटुकः सेवितः सद्यः प्रसीदति ध्रुवं शिवे ॥ ५ ॥ दुःखे च सेवितः शीघ्रं दुःखं नाशयते क्षणात् ॥ सुखे च सेवितो नित्यं सुखं वर्द्धयते

---

* दक्षिणामूर्तियंत्रं पूर्वत्र द्रष्टव्यम् ।

बहु ॥ ६ ॥ तस्मात्सेव्यो नरैश्चायं सर्वकामफलाय वै ॥ सेवोपायं प्रवक्ष्यामि यथा सिद्धिर्भवेध्रुवम् ॥ ७ ॥ शृणु देवि प्रवक्ष्यामि बटुकस्य महात्मनः ॥ विधानं परमं गोप्यं ब्रह्मादीनां सुदुर्लभम् ॥ ८ ॥ मंत्रं वै वसुसंक्षेपात्कथयिष्यामि वल्लभे ॥ येन विज्ञानमात्रेण त्रैलोक्यं साधयेत्सुधीः ॥ ९ ॥ एकदा देवदेवेशि तपसे मंदराचलम् ॥ गतोऽहं परमानंदान्मूलप्रकृतिमीश्वरीम् ॥ १० ॥ चक्रे परमसंतुष्टां तपसा भावितात्मना ॥ साकाशरूपिणी देवी प्रोवाच वचनं मुदा ॥ ११ ॥ तुष्टाहं शंकर प्रीता वरं वरय दुर्लभम् ॥ शिव उवाच ॥ बटुकस्य विधानं मे परमं भक्तितो वरम् ॥ १२ ॥ परमाशयान्मंत्रस्य येन सिध्यति सर्वथा ॥ मनोरमाणि मंत्रस्य सर्वकार्याणिसांप्रतम् ॥ १३ ॥ इति वाक्यं च मे श्रुत्वा मूलभूता सनातनी ॥ उवाच यादृशं देवी विधानं शृणु वल्लभे ॥ १४ ॥ बटुकाख्यस्य देवस्य भैरवस्य महात्मनः ॥ ब्रह्मविष्णुमहेशाद्यैर्वन्दितस्य दयानिधेः ॥ १५ ॥ तत्र प्रयोगः ( शारदातिलके ) सुमुहूर्ते शिवालयादिषु कृतनित्यक्रियो धृतभस्मत्रिपुण्डरुद्राक्षः कूर्मसंशोधिते स्वासने उदङ्मुख उपविश्य मूलेनाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य मम मन्त्रसिद्धिपूर्वकश्रीआपदुद्धारप्रीत्यर्थमेकविंशतिलक्षात्मकं जपादिरूपपुरश्चरणमहं करिष्ये । इति सङ्कल्प्य तदङ्गत्वेन भूतशुद्धिं प्राणप्रतिष्ठामन्तर्मातृकाबहिर्मातृकान्यासं च कृत्वा पूर्वोक्तशिवपञ्चाक्षरोदितं श्रीकण्ठादिकलान्तंन्यासं च कृत्वा मूलमन्त्रन्यासं च कुर्यात् ॥ मूलमन्त्रो यथा--" ह्रीं बटुकाय आपदुद्धारणाय कुरुकुरु बटुकाय ह्रीं । इत्येकविंशतिवर्णो मन्त्रः ॥ अस्य मन्त्रस्य बृहदारण्यक ऋषिः। अनुष्टुप्छन्दः। आपदुद्धारणभैरवो देवता । ह्रीं बीजं वँशक्तिः ओँ कीलकम् । श्रीबटुकभैरवप्रीतये जपे विनियोगः ॥ ॐ बृहदारण्यऋषये नमः शिरसि ॥१॥ ॐ अनुष्टुप्छन्दसे नमः मुखे ॥२॥ ॐ श्रीबटुकभैरवदेवतायै नमः हृदि ॥३॥ ॐ ह्रीं बीजाय नमः गुह्ये॥४॥ ॐ वं शक्तये नमः पादयोः ॥५॥ ॐ आं कीलकाय नमः नाभौ ॥६॥ चतुर्विधपुरुषार्थसिद्ध्यर्थे विनियोगाय नमः सर्वाङ्गे ॥ ७ ॥ इति ऋष्यादिन्यासः ॥ ॐ ह्रों वों ईशानाय नमः अङ्गुष्ठयोः ॥१॥ ॐ ह्रें वें तत्पुरुषाय नमः तर्जन्योः ॥ २ ॥ ॐ ह्रुं वुं अघोराय नमः मध्यमयोः ॥ ३ ॥ ॐ ह्रिँ विं वामदेवाय नमः अनामिकयोः ॥४॥ ॐ ह्रं वं सद्योजाताय नमः कनिष्ठिकयोः । इति करन्यासः॥ॐ ह्रों वों ईशानाय नमः शिरसि॥१॥ ॐ ह्रें वें तत्पुरुषाय नमः वक्त्रे ॥२॥ ॐ ह्रुं वुं अघोराय नमः हृदि॥३॥ॐ ह्रिं विं वामदेवाय नमः गुह्ये ॥ ४ ॥ ॐ ह्रं वं सद्योजाताय नमः पादयोः ॥ ५ ॥ इति देहन्यासः ॥ ॐ ह्रों वों ईशानाय नमः ऊर्ध्ववक्त्रे ॥ १ ॥ ॐ ह्रें वें तत्पुरुषाय नमः पूर्ववक्त्रे ॥२॥ ॐ ह्रुं वुं अघोराय नमः दक्षिणवक्त्रे ॥ ३ ॥ ॐ ह्रिं विं वामदेवाय नमः उत्तरवक्त्रे ॥ ४ ॥ ॐ ह्रं वं सद्योजाताय नमः पश्चिमवक्त्रे ॥ ५ ॥ इति वक्त्रन्यासः ॥ एवं ह्रस्वशक्तिबीजमकाराढ्यं न्यासत्रयं कृत्वा एवमेव दीर्घशक्तिबीजवकारपुरःसरं अङ्गुल्यादिन्यासत्रयं पूर्ववत् कुर्यात् । अथ हृदयादिन्यासः ॥ ॐ ह्रां वां हृदयाय नमः ॥ १ ॥ ॐ ह्रीं वीं शिरसे स्वाहा ॥ २ ॥ ॐ ह्रूं वूं शिखायै वषट् ॥३॥ ॐ ह्रैं वैं कवचाय हुम्॥४॥ ॐ ह्रौं वौं नेत्रत्रयाय वौषट् ॥५॥ ॐ ह्रः वः अस्त्राय फट्॥६॥एवं षडङ्गन्यासं कृत्वा यथाकामनया ध्यायेत् ॥ अथ सात्त्विकध्यानम् ॥ "वंदे बालं स्फटिकसदृशं कुन्तलोल्लासिवक्त्रं दिव्याकल्पैर्नवमणिमयैः किङ्किणीनूपुराद्यैः॥दीप्ताकारं विशदव

सनं सुप्रसन्नं त्रिनेत्रं हस्ताब्जाभ्यां बटुकमनिशं शूलदण्डौ दधानम्" ॥ १ ॥ अथ राजसध्यानम् ॥ " उद्यद्भास्करसन्निभं त्रिनयनं रक्ताङ्गरागस्रजं स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः ॥ नीलग्रीवमुदारभूषणशतं शीतांशुचूडोज्ज्वलं बन्धूकारुणवाससं भयहरं वन्दे सदा भावये" ॥ २ ॥ अथ तामसध्यानम् ॥ "ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं महेशं दिग्वस्त्रं पिङ्गकेशं डमरुमथ सृणिं खड्गपाशाभयानि ॥ नागं घंटां कपालं करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किङ्किणीनूपुराढ्यम् ॥ ३ ॥" " सात्त्विकं ध्यानमाख्यातमपमृत्युनिवारणम् ॥ आयुरारोग्यजननमपवर्गफलप्रदम् ॥ १ ॥ राजसं ध्यानमाख्यातं धर्मकामार्थसिद्धिदम् ॥ तामसं शत्रुशमनं कृत्याभूतग्रहापहम् ॥ २ ॥ " एवं ध्यात्वा पीठपूजापूर्वकं यंत्रादिपूजां कुर्य्यात् । तद्यथा–ॐ धं धर्म्माय नमः ॥ १ ॥ ॐ ज्ञां ज्ञानाय नमः ॥ २ ॥ ॐ वैं वैराग्याय० ॥ ३ ॥ ॐ ऐं ऐश्वर्य्याय० ॥ ४ ॥ ॐ अं अधर्माय० ॥ ५ ॥ ॐ अं अज्ञानाय० ॥ ६ ॥ ॐ अं अवैराग्याय० ॥ ७ ॥ ॐ अं अनैश्वर्याय नमः ॥ ८ ॥ इति पीठदेवता गंधपुष्पैः संपूज्य । ॐ वामायै नमः ॥ १ ॥ ॐ ज्येष्ठायै नमः ॥२॥ ॐ रौद्र्यै नमः ॥३॥ ॐ काल्यै नमः ॥४॥ ॐ कलविकरण्यै नमः ॥ ५ ॥ ॐ बलविकरण्यै नमः ॥६॥ ॐ बलप्रमथिन्यै नमः ॥७॥ ॐ सर्वभूतदमन्यै नमः ॥८॥ ॐ मनोन्मन्यै नमः ॥९॥ इति पीठशक्तीः संपूज्य । ॐ नमो भगवते सकलगुणात्मशक्तियुक्ताय अनंताय योगपीठात्मने नमः । इति पुष्पाञ्जलिना आसनं दद्यात् । ततस्तत्र यथाविधि ताम्रकलशं संस्थाप्य तत्र वरुणमावाह्य संपूज्य तदुपरि पट्टवस्त्रं प्रसार्य्य तत्र शक्तिगंधाष्टकेन * भैरवयंत्रं लिखेत् । शक्तिगंधाष्टकं यथा–"चंदनागरुकर्पूरचौरकुंकुमरोचनाः ॥ जटामांसी कपियुता शक्तेर्गंधाष्टकं विदुः॥" अथ यंत्रोद्धारः ( रुद्रयामले ) " यंत्रोद्धारमिमं देवि त्रैलोक्ये चातिदुर्लभम् ॥ तद्यंत्रं च प्रवक्ष्यामि यत्र देवं च पूजयेत् ॥ १ ॥ मध्ये चाष्टदलं पद्मं कर्णिकाकेसरोज्ज्वलम् ॥ त्रिकोणं च ततः कृत्वा षट्कोणं च ततो न्यसेत् ॥ २ ॥ वर्तुलं चाष्टपत्रं च चतुरस्रं त्रयात्मकम् ॥ एवं यंत्रं च संपूज्य स्वस्थो भूत्वा जपेन्नरः ॥ ३ ॥ " एवं यंत्रं संलिख्य । अथवा यथाशक्ति सुवर्णनिर्मितं यंत्रं वा । तत्र सावयवां स्वर्णनिर्मितां भैरवप्रतिमां सात्त्विकादिध्यानप्रतिपादितां स्थापयेत् । ततः प्राणप्रतिष्ठां कृत्वा यथाविधि पूजयेत् । तद्यथा–" देवेश भक्तिसुलभ परिवारसमन्वित ॥ यावत्त्वां पूजयिष्यामि तावद्देव इहावह ॥ १ ॥ ॐ सद्यो जातं प्रपद्यामिसद्योजातायवैनमोनमः भवेभवेनातिभवेभवस्वमांभवोद्भवाय नमः । इति मंत्रेणावाहनमुद्रां प्रदर्श्य । मूलांते ॐ भगवन् भैरव इहागच्छ आवाहनीभव इत्यावाहयेत् ॥ १ ॥ ततः । ॐ वामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमः कलविकरणायनमोबलविकरणायनमः ॥ १ ॥ मूलं पठित्वा स्थापनीमुद्रां प्रदर्श्य स्थापनीभव इति संस्थापयेत् ॥ २ ॥

* बटुकभैरवयंत्रं पूर्वत्र द्रष्टव्यम् ।

तथेश्वरि ॥ २ ॥ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरंति ते ॥ यानि चात्यंतघोराणि तैरक्षास्मांस्तथा भुवम् ॥ ३ ॥ खड्गशूल गदादीनि यानि चास्त्राणि तेंबिके ॥ करपल्लवसंगीनि तैरस्मान्रक्ष सर्वतः ॥ ४ ॥ इति श्लोकचतुष्टयं पठित्वा सूर्यसदृशं द्वितीयं मायाबीजं ह्रीं ध्यात्वा सर्वांगं न्यसेत् ॥ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ॥ भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोस्तु ते॥ १ ॥ एतत्त वदनं सौम्यं लोचनत्रयभूषितम् ॥ पातु नः सर्वभूतेभ्यः कात्यायनि नमोस्तु ते ॥ २ ॥ ज्वालाकरालमत्युग्रमशेषासुरसूद नम् ॥ त्रिशूलं पातु नो भीतेर्भद्रकालि नमोस्तु ते ॥ ३ ॥ हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ॥ सा घंटा पातु नो देवि पापेभ्योऽनः सुतानिव ॥ ४ ॥ असुरासृग्वसापंकचर्चितस्ते करोज्ज्वलः ॥ शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ॥ ५ ॥ इति श्लोकपंचकं पठित्वा स्फटिकाभासं तृतीयं कामबीजं 'क्लीं' ध्यात्वा सर्वांगं न्यसेत ॥ इत्येकादशः ॥ ११ ॥ एवमेकादश न्यासान्कृत्वा पुनः षडंगन्यासं कुर्यात् ॥ तद्यथा—ॐ ऐं अङ्गुष्ठाभ्यां नमः ॥ ॐ ह्रीं तर्जनीभ्यां नमः ॥ ॐ क्लीं मध्यमाभ्यां नमः ॥ ॐ चामुण्डायै अनामिकाभ्यां नमः ॐ विच्चे कनिष्ठिकाभ्यां नमः॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे करतलकरपृष्ठाभ्यां नमः । इति मूलषडंगकरन्यासः ॥ ॐ ऐं हृदयाय नमः ॥ ॐ ह्रीं शिरसे स्वाहा ॥ ॐ क्लीं शिखायै वषट् ॥ ॐ चामुण्डायै कवचाय हुम् ॥ ॐ विच्चे नेत्रत्रयाय वौषट् ॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट् ॥ इति हृदयादिन्यासः॥ ॐ ऐं नमः शिखायाम् ॥ ॐ ह्रीं नमः दक्षिणनेत्रे ॥ ॐ क्लीं नमः वामनेत्रे ॥ ॐ चां नमः दक्षिणकर्णे ॥ ॐ मुं नमः वामकर्णे ॥ ॐ डां नमः दक्षिणनासायाम् ॥ ॐ यैं नमः वामनासायाम् ॥ ॐ विं नमः मुखे ॥ ॐ च्चें नमः गुह्ये ॥ इत्यक्षरन्यासं कृत्वा समस्तं मूलमन्त्रमुच्चार्याष्टशः व्यापकं चरेत् ॥ एवं न्यासं कृत्वा देवीं ध्यायेत् ॥ अथ ध्यानम् ॥ खड्गं चक्रगदेषुचापपरिघाञ्शूलं भुशुण्डीं शिरः शंखं संदधतीं करैस्त्रि नयनां सर्वांगभूषावृताम् ॥ यामस्तौत्स्वपिते हरौ कमलजो हंतु मधुं कैटभं नीलाश्मद्युतिमस्य पाददशकां सेवे महाकालिकाम् ॥ १ ॥ इति महाकालीध्यानम् ॥ अक्षस्रक्परशू गदेषुकुलिशं पद्मं धनुः कुण्डिकां दण्डं शक्तिमसिं च चर्म जलजं घंटां सुरा भाजनम् ॥ शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ २ ॥ इति महा लक्ष्मीध्यानम् ॥ घंटाशूलहलानि शङ्खमुसले चक्रं धनुः सायकं हस्ताब्जैर्दधतीं घनांतविलसच्छीतांशुतुल्यप्रभाम् ॥ गौरीदेहसमु द्भवां त्रिजगतामाधारभूतां महापूर्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम् ॥ ३ ॥ इति महासरस्वतीध्यानम् ॥ एवं ध्यात्वा । मानसोपचारैः संपूज्य । पीठपूजां कुर्यात् । पीठे । ॐ मण्डूकादिपरतत्त्वांतपीठदेवताभ्यो नमः । इति पूर्वोक्तपीठदेवताः संपूज्य । पूर्वाद्यष्टदिक्षु मध्ये च 'पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य' जयादिनवपीठशक्तीः स्थापयेत ॥ तद्यथा—ॐ जयायै नमः ॥ १ । ॐ विजयायै नमः ॥२॥ ॐ अजितायै नमः ॥ ३ ॥ ॐ अपराजितायै नमः ॥ ४ ॥ ॐ नित्यायै नमः ॥ ५ ॥ ॐ विला सिन्यै नमः ॥ ६ ॥ ॐ दोग्ध्र्यै नमः ॥ ७ ॥ ॐ अघारायै नमः ॥ ८ ॥ 'मध्ये' ॐ मङ्गलायै नमः ॥ ९ ॥ इति सम्पूज्य । ॐ नमो भगवते सकलगुणात्मशक्तियुक्ताय अनन्ताय योगपीठात्मने नमः । इति पीठे पुष्पाञ्जलिं दत्त्वा यन्त्रं पूजयेत् । अथ यंत्रो

द्वारः । मध्ये त्रिकोणं तद्बहिः षडस्रं तद्बहिरष्टदलं तद्बहिश्चतुर्विंशतिपत्रात्मकं तद्बाह्ये चतुरस्रं चतुर्द्वारयुतं भूपुरं चेति* देवीयन्त्रमष्ट गन्धेन विलिख्य तत्र त्रिकोणमध्ये मूलमन्त्रेण देवीं मूलेन पाद्यादिपुष्पांतोपचारैः संपूज्य यंत्रदेवान्पूजयेत् ॥ तद्यथा-त्रिकोणस्य 'पूर्वकोणे' ॐ ब्रह्मणे नमः । ॐ सरस्वत्यै नमः ॥ १ ॥ 'नैर्ऋत्ये' । ॐ विष्णवे नमः । ॐ श्रियै नमः ॥ २ ॥ 'वायव्ये' ॐ शिवाय नमः । ॐ उमायै नमः ॥३॥ 'उत्तरे' ॐ सिंहाय नमः । 'दक्षिणे' ॐ महिषाय नमः । इति पूजयेत् ॥ 'षट्कोणमंडले पूर्वादिषट्कोणेषु क्रमेण । ॐ नं नंदजायै नमः ॥ १ ॥ ॐ रं रक्तदंतिकायै नमः ॥ २ ॥ ॐ शां शाकंभर्यै नमः ॥ ३ ॥ 'ॐ दुं दुर्गायै नमः ॥ ४ ॥ ॐ भीं भीमायै नमः ॥ ५ ॥ ॐ भ्रां भ्रामर्य्यै नमः इति पूजयेत् ॥ ६ ॥ 'अष्टपत्रेषु पूर्वादिक्रमेण' ॐ ब्रां ब्राह्म्यै नमः ॥ १ ॥ ॐ मां माहेश्वर्य्यै नमः ॥ २ ॥ ॐ कौं कौमार्यै नमः ॥ ३ ॥ ॐ वैं वैष्णव्यै नमः ॥ ४ ॥ ॐ वां वाराह्यै नमः ॥ ५ ॥ ॐ नां नारसिंह्यै नमः ॥ ६ ॥ ॐ ऐं ऐन्द्र्यै नमः ॥ ७ ॥ ॐ चां चामुंडायै नमः ॥८॥ इति च पूजयेत् 'चतुर्विंशतिदलेष्वपि पूर्वादिक्रमेण । एवं ॐ विष्णुमायायै नमः ॥१॥ ॐ चेतनायै नमः ॥२॥ ॐ बुद्ध्यै नमः ॥ ३ ॥ ॐ निद्रायै नमः ॥ ४ ॥ ॐ क्षुधायै नमः ॥ ५ ॥ ॐ छायायै नमः ॥ ६ ॥ ॐ शक्त्यै नमः ॥ ७ ॥ ॐ तृष्णायै नमः ॥८॥ ॐ क्षान्त्यै नमः ॥ ॥ ९ ॥ ॐ जात्यै नमः ॥ १० ॥ ॐ लज्जायै नमः ॥ ११ ॥ ॐ शांत्यै नमः ॥ १२ ॥ ॐ श्रद्धायै नमः ॥ १३ ॥ ॐ कांत्यै नमः १४ ॥ ॐ लक्ष्म्यै नमः ॥ १५ ॥ ॐ धृत्यै नमः ॥ १६ ॥ ॐ वृत्यै नमः ॥ १७ ॥ ॐ श्रुत्यै नमः ॥ १८ ॥ ॐ स्मृत्यै नमः ॥ १९ ॥ ॐ तुष्ट्यै नमः ॥ २० ॥ ॐ पुष्ट्यै नमः ॥ २१ ॥ ॐ दयायै नमः ॥ २२ ॥ ॐ मात्रे नमः ॥२३॥ ॐ भ्रांत्यै नमः॥२४॥ इति पूजयेत् ॥ 'तद्बाह्ये भूगृहचतुष्कोणेषु' 'ईशान्याम्' गं गणपतये नमः ॥१॥ 'आग्नेय्याम्' क्षं क्षेत्रपालाय नमः॥२॥ 'नैर्ऋत्याम्' बं बटुकाय नमः ॥ ३ ॥ 'वायव्याम्' यों योगिनीभ्यो नमः इति पूजयेत् ॥ 'ततो भूपुरबाह्ये पूर्वादिक्रमेण' ॐ लं इंद्राय नमः ॥ १ ॥ रं अग्नये नमः ॥ २ ॥ मं यमाय नमः ॥ ३ ॥ क्षं निर्ऋतये नमः ॥ ४ ॥ वं वरुणाय नमः ॥ ५ ॥ यं वायवे नमः ॥ ६ ॥ सों सोमाय नमः ॥७॥ हं रुद्राय नमः ॥८॥ 'उर्ध्वम्' ब्रं ब्रह्मणे नमः ॥९॥ 'अधः' अं अनंताय नमः ॥ १० ॥ इति दिक्पालान्पूजयेत् ॥ तद्बहिः पूर्वादिषु' ॐ वज्राय नमः ॥ १ ॥ शक्तये नमः ॥ २ ॥ दंडाय नमः ॥ ३ ॥ खड्गाय नमः ॥ ४ ॥ पाशायनमः ॥ ५ ॥ अंकुशाय नमः ॥ ६ ॥ गदायै नमः ॥ ७ ॥ त्रिशूलाय नमः ॥ ८ ॥ पद्माय नमः ॥ ९ ॥ चक्राय नमः ॥ १० ॥ इत्यायुधानि पूजयेत् ॥ एवमावरणपूजां कृत्वा मूलेन धूपदीपनैवेद्यतांबूलदक्षिणादीनि भगवत्यै निवेद्य कर्पूरादिभिर्नीराजनं कृत्वा प्रदक्षिणामेकं विधाय मन्त्रपुष्पांजलिं च दत्वा साष्टाङ्गं प्रणम्य स्तवैः स्तुत्वा यथाविधि भगवतीं ध्यायन् वाग्यतो जपं कुर्यात् ॥ अस्य पुरश्चरणं लक्षचतुष्कम् ॥४॥ जपान्ते साज्येन पायसेन दशांशहोमः ॥ अन्यत्सर्वं पूर्ववत् ॥ तथा च-( मंत्रमहोदधौ ) " एवं ध्यात्वा जपेल्लक्षचतुष्कं तद्दशांशतः ॥ पायसान्नेन जुहुयात्पूजिते हेमरेतसि ॥ १ ॥

* देवीयन्त्रमन्त्र पूर्वं द्रष्टव्यम् ।

एवं सिद्ध मनौ मंत्री भवेत्सौभाग्यभाजनम् ॥ मार्कण्डेयपुराणोक्तं नित्यं चण्डीस्तवं पठेत् ॥ २ ॥ पुटितं मूलमंत्रेण जपन्नाप्नोति वांछितम् ॥ आश्विनस्य सिते पक्षे आरभ्याग्नितिथिं सुधीः ॥ ३ ॥ अष्टम्यंतं जपेल्लक्षं दशांशं होममाचरेत् ॥ प्रत्यहं पूजयेद्देवीं पठेत्सप्तशतीमपि ॥ ४ ॥ विप्रानाराध्य मंत्री स्वमिष्टार्थं लभतेऽचिरात् ॥ " ( डामरतंत्रे ) ऐं बीजमादीन्दुसमानदीप्तं ह्रीं सूर्यतेजोद्युतिमद्वितीयम् ॥ क्लीं मूर्ति वैश्वानरतुल्यरूपं तृतीयमानंत्यसुखाय चिंत्यम् ॥ १ ॥ चां शुद्धजांबूनदकांतितुर्यं मुं पंचमं रक्ततरं प्रकल्प्य ॥ डां षष्ठमुग्रार्तिहरं सुनीलं येः सप्तमं कृष्णतरं रिपुघ्नम् ॥२॥ वि पांडुरं चाष्टममादिसिद्धं च्चे धूम्रवर्णं नवमं विशालम्॥एतानि बीजानि नवात्मकस्य जप्तुः प्रदद्युः सकलार्थसिद्धिम् ॥ ३ ॥ नवबीजविशुद्धोयं मंत्रस्त्रैलोक्यपावनः ॥ एनं जपति यो मंत्री फलं तस्य वदाम्यहम् ॥ ४ ॥ वश्या भवंति कामिन्यो राजानोऽनुचरा इव ॥ न हस्तिसर्पदावाग्निचोरक्षत्रभयं भवेत् ॥५॥ सर्वाः समृद्धयस्तस्य जायंते चंडिकाज्ञया ॥ नश्यंति दारुणा रोगाः सत्यं सत्यं न संशयः ॥ ६ ॥ सहस्रमस्य मंत्रस्य नवबीजस्य यो जले ॥ नाभिमात्रे जपेत्सम्यक्कवित्वं लभते ध्रुवम् ॥ ७ ॥ अयुतं नवतत्त्वस्य राजबंधनसंकटैः ॥ जपेत्तदाशु मुच्येत यो मंत्री चंडिकाज्ञया ॥ ८ ॥ अस्मिन्नवाक्षरे मंत्रे महालक्ष्मीर्व्यवस्थिता ॥ तस्मात्सुसिद्धः सर्वेषां सर्वदिक्षु प्रदीपकः ॥ ९ ॥ इति नवार्णमंत्रप्रयोगः समाप्तः ॥ ॥ अथ अष्टाक्षरदुर्गामंत्रपुरश्चरणम् ॥ भूतशुद्ध्यादिकलान्यासांतं पूर्ववत् ज्ञातव्यम् । ( शारदातिलके ) मंत्रो यथा । ॐ ह्रीं हुं दुर्गायै नमः इत्यष्टाक्षरो मंत्रः ॥ अस्य मंत्रस्य नारद ऋषिर्गायत्रीच्छंदः । दुरिततापनिवारिणी दुर्गा देवता सर्वेष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ नारदऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्रीछंदसे नमः । मुखे ॥ २ ॥ ॐ दुर्गादेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ह्रां ॐ ह्रीं दुं दुर्गायै नमः । अंगुष्ठाभ्यां नमः ॥ १ ॥ ह्रां ॐ ह्रीं दुं दुर्गायै नमः । तर्जनीभ्यां नमः ॥ २ ॥ ह्रां ॐ ह्रीं दुं दुर्गायै नमः । मध्यमाभ्यां नमः ॥ ३ ॥ ह्रांॐ ह्रीं दुं दुर्गायै नमः । अनामिकाभ्यां नमः ॥ ४ ॥ ह्रां ॐ ह्रीं दुं दुर्गायै नमः । कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ह्रां ॐ ह्रीं दुं दुर्गायै नमः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेव हृदयादिन्यासं कृत्वा ध्यायेत् । अथ ध्यानम् ॥ "सिंहस्था शशिशेखरा मरकतप्रख्या चतुर्भिर्भुजैः शंखं चक्रधनुः शरांश्च दधती नेत्रैस्त्रिभिः शोभिता । आमुक्तांगदहारकंकणरणत्कांची क्वणन्नूपुरा दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लसत्कुंडिका ॥ १ ॥ एवं ध्यात्वा मानसोपचारैः संपूज्य पीठपूजां कुर्यात् । तद्यथा पीठे पूर्वोक्तमंडूकादिपरतत्त्वांतपीठदेवताः संपूज्य केसरेषु । ॐ आं प्रभायै नमः ॥ १ ॥ ॐ ईं मायायै नमः ॥ २ ॥ ॐ ऊं जयायै नमः ॥३॥ ॐ एं सूक्ष्मायै नमः ॥४॥ ॐ ऐं विशुद्धायै नमः ॥ ५ ॥ ॐ ओं नंदिन्यै नमः ॥ ६ ॥ ॐ औं सुप्रभायै नमः ॥ ७ ॥ ॐ अं विजयायै नमः ॥ ८ ॥ 'मध्ये' ॐ अः सर्वसिद्धिदायै नमः ॥ ९ ॥ इति पीठशक्तीः संपूज्य तदुपरि "ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हुं फट्" इत्यासनं दत्त्वा तत्र मूलेन मूर्तिं प्रकल्प्य आवाहनादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ 'षट्कोणे' आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च प्राचीक्रमेण ॥ ह्रां ॐ दुं ह्रीं दुर्गायै नमः हृदयाय नमः ॥ १ ॥ ह्रां ॐ ह्रीं दुं दुर्गायै नमः शिरसे स्वाहा ॥२॥ ह्रां ॐ ह्रीं दुं

दुर्गायै नमः । शिखायै वषट् ॥३॥ ह्रां ॐ ह्रीं दुं दुर्गायै नमः । कवचायहुं ॥ ४ ॥ ह्रौं ॐ ह्रीं दुं दुर्गायै नमः । नेत्रत्रयाय वौषट् ॥५॥ ह्रौं ॐ ह्रीं दुं दुर्गायै नमः अस्त्राय फट् ॥ इति षडंगानि पूजयेत् ॥ तद्बाह्ये अष्टदले प्राचीक्रमेण ॐ जं जयायै नमः ॥१॥ ॐ विं विजयायै नमः॥२॥ ॐ कीं कीर्त्यै नमः॥३॥ ॐ प्रीं प्रीत्यै नमः॥४॥ ॐ प्रं प्रभायै नमः॥५॥ ॐ शुं शुद्धायै नमः॥६॥ ॐ मं मेधायै नमः॥७॥ ॐ श्रुं श्रुत्यै नमः॥८॥ इति पूजयेत् ॥ "पत्राग्रेषु" ॐ चक्राय नमः ॥१॥ ॐ शंखाय नमः॥२॥ ॐ गदायै नमः ॥३॥ ॐ खड्गाय नमः ॥४॥ ॐ पाशाय नमः ॥५॥ ॐ अंकुशाय नमः॥६॥ ॐ शराय नमः॥७॥ ॐ चापाय नमः ॥८॥ इत्यस्त्राणि पूजयेत् । 'तद्बाह्ये भूपुरे' पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत ॥ इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् ॥ अस्य पुरश्चरणमष्टलक्षजपः ॥ तथा च—"वसुलक्षं जपेन्मंत्रं तिलैर्मधुरलोलितैः ॥ पयोंधसा वा जुहुयात्तत्सहस्रं जितेन्द्रियः॥१॥ इत्थं जपादिभिर्मंत्री मंत्रे सिद्धे विधानवित्॥कुर्यात्प्रयोगानेतेन मनुना स्वमनीषितान् ॥२॥ प्रतिष्ठाप्य विधानेनकलशान्नव शोभनान् ॥ रत्नहेमादिसंयुक्तान्पदेषु नवसु स्थितान् ॥ ३ ॥ मध्यस्थे पूजयेद्देवीमितरेषु जयादिकाः ॥ संपूज्य गंधपुष्पाद्यैरभिषिंचेन्नराधिपम् ॥ ४ ॥ राजा विजयते शत्रून्साधको विजयं श्रियम् ॥ प्राप्नोति रोगी दीर्घायुः सर्वव्याधिविवर्जितः ॥ ५ ॥ वंध्याभिषिक्ता विधिना लभते तनयं वरम् ॥ मंत्रेणानेन संजप्तमाज्यं क्षुद्रज्वरापहम् ॥ ६ ॥ गर्भिणीनां विशेषेण जप्तं भस्मादिकं तथा ॥ इत्यष्टाक्षरदुर्गामंत्रप्रयोगः समाप्तः ॥ ॥ अथ श्रीदुर्गाकवचप्रारंभः ॥ भैरव उवाच ॥ अधुना देवि वक्ष्येहं कवचं मंत्रगर्भकम् ॥ दुर्गाया सारसर्वस्वं कवचेश्वरसंज्ञकम् ॥ १ ॥ परमार्थप्रदं नित्यं महापातकनाशनम् ॥ योगिप्रियं योगगम्यं देवानामपि दुर्लभम् ॥ २ ॥ विना दानेन मंत्रस्य सिद्धिर्देवि कलौ भवेत् ॥ धारणादस्य देवेशि शिवस्त्रैलोक्यनायकः ॥ ३ ॥ भैरवो भैरवेशानि विष्णुर्नारायणो बली ॥ ब्रह्मा पार्वति लोकेशो विघ्नध्वंसी गजाननः॥४॥ सेनानीश्च महासेनो जिष्णुर्लेखर्षभः प्रिये ॥ सूर्यस्तमोपहो लोके चंद्रोमृतनिधिस्तथा ॥५॥ बहुनोक्तेन किं देवि दुर्गाकवचधारणात् ॥ मर्त्योप्यमरतां याति साधको मंत्रसाधकः॥६॥ कवचस्यास्य देवेशि ऋषिः प्रोक्तो महेश्वरः ॥ छंदोऽनुष्टुप्प्रियो दुर्गा देवताष्टाक्षरा स्मृता ॥ ७ ॥ चक्रबीजं च बीजं स्यान्मायाशक्तिरितीरिता ॥ ॐ मे पातु शिरो दुर्गा ह्रीं मे पातु ललाटकम् ॥ ८ ॥ दुं नेत्रेऽष्टाक्षरा पातु चक्री पातु श्रुती मम ॥ ९ ॥ कंठं गंडौ च मे पातु देवेशी रक्तकुंडला ॥ शत्रुर्नासां सदा पातु रक्तबीजनिषूदिनी ॥ १० ॥ लवणं पातु मे चोष्ठौ चामुंडा चंडघातिनी ॥ भेकी बीजं सदा पातु दन्तान्मे रक्तदंतिका ॥ ११ ॥ ॐ ह्रीं श्रीं पातु मे कंठं नीलकंठांकवासिनी ॥ ॐ ऐं क्लीं पातु मे स्कंधौ स्कंदमाता महेश्वरी ॥ १२ ॥ ॐ सौं क्लीं मे पातु बाहू देवेशी बगलामुखी ॥ ऐं श्रीं ह्रीं पातु मे हस्तौ शिवाशतनिनादिनी ॥ १३ ॥ ॐ सौं ऐं ह्रीं पातु मे वक्षो देवता विंध्यवासिनी ॥ ॐ ह्रीं श्रीं क्लीं पातु कुक्षिं मम मातंगिनी परा ॥ १४ ॥ ॐ श्रीं ह्रीं ऐं पातु मे पार्श्वौ हिमाचलनिवासिनी ॥ ॐ स्त्रीं हूं ऐं पातु पृष्ठं मम दुर्गतिनाशिनी ॥ १५ ॥ ॐ क्रीं हुं पातु मे नाभिं देवी नारायणी सदा ॥ ॐ ऐं क्लीं सौं सदा पातु कटिं कात्यायनी मम ॥ १६ ॥ ॐ ह्रीं श्रीं पातु शिश्नं मे देवी श्रीबगलामुखी ॥ ॐ ऐं सौः क्लीं सौः पातु गुह्यं

गुह्यकेश्वरपूजिता ॥ १७॥ ॐ ह्रीं ऐं श्रीं हसौः पायादूरू मम मनोन्मना ॥ ॐ जूं सः सौः पातु जानू जगदीश्वर पूजिता ॥ १८॥ ॐ ऐं क्लीं पातु मे जंघे मेरुपर्वतवासिनी ॥ ॐ ह्रीं श्रीं गीं सदा पातु गुल्फौ मम गणेश्वरी॥१९॥ ॐह्रीं दुं पातु मे पादौ पार्वती षोड शाक्षरी॥पूर्वे मां पातु ब्रह्माणी वह्नौ च वैष्णवी तथा ॥२०॥ दक्षिणे चंडिका पातु नैऋते नारसिंहिका ॥ पश्चिमे पातु वाराही वायव्ये मापराजिता ॥ २१ ॥ उत्तरे पातु कौमारी चैशान्यां शांभवी तथा ॥ ऊर्ध्वं दुर्गा सदा पातु पात्वधस्ताच्छिवा सदा ॥ २२ ॥ प्रभाते त्रिपुरा पातु निशीथे छिन्नमस्तका ॥ निशांते भैरवी पातु सर्वदा भद्रकालिका ॥ २३ ॥ अग्नेरम्बा च मां पातु जलान्मां जगदंबिका ॥ वायोर्मां पातु वाग्देवी वनाद्वनजलोचना ॥ २४ ॥ सिंहात्सिंहानना पातु सर्पात्सर्पांतकासना ॥ रोगान्मां राजमातंगी भूताद्भूतेशवल्लभा ॥ २५ ॥ यक्षेभ्यो यक्षिणी पातु रक्षोभ्यो राक्षसांतका ॥ भूतप्रेतपिशाचेभ्यः सुमुखी पातु मां सदा ॥ २६ ॥ सर्वत्र सर्वदा पातु ॐ ह्रीं दुर्गानवाक्षरा ॥ इत्येवं कवचं गुह्यं दुर्गासर्वस्वमु त्तमम् ॥ २७ ॥ मंत्रगर्भं महेशानि कवचेश्वरसंज्ञकम् ॥ वित्तदं पुण्यदं पुण्यं वर्म सिद्धिप्रदं कलौ ॥ २८ ॥ वर्म सिद्धिप्रदं गोप्यं परापररहस्यकम् ॥ श्रेयस्करं मनुमयं रोगनाशकरं परम् ॥ २९ ॥ महापातककोटिघ्नं मानदं च यशस्करम् ॥ अश्वमेध सहस्रस्य फलदं परमार्थदम् ॥ ३० ॥ अत्यंतगोप्यं देवेशि कवचं मंत्रसिद्धिदम् ॥ पठनात्सिद्धिदं लोके धारणान्मुक्तिदं शिवे॥३१॥ रवौ भूर्जे लिखेद्धीमान्कृत्वा कर्माह्निकं प्रिये ॥ श्रीचक्राग्रेष्टगंधेन साधको मंत्रसिद्धये ॥ ३२ ॥ लिखित्वा धारयेद्बाहौ गुटिकां पुण्यवर्द्धिनीम् ॥ किं किं न साधयेल्लोके गुटिका वर्मणोऽचिरात ॥ ३३ ॥ गुटिकां धारयेन्मूर्ध्नि राजानं वशमानयेत् ॥ धनार्थी धारयेत्कंठे पुत्रार्थी कुक्षिमंडले ॥ ३४ ॥ तामेवं धारयेन्मूर्ध्नि लिखित्वा भूर्जपत्रके ॥ श्वेतसूत्रेण संवेष्ट्य लाक्षया परिवे ष्टयेत् ॥ ३५ ॥ सुवर्णेनाथ संवेष्ट्य धारयेद्रक्तरज्जुना ॥ गुटिका कामदा देवी देवानामपि दुर्लभा ॥ ३६ ॥ कवचस्यास्य गुटिकां धृत्वा मुक्तिप्रदायिनीम् ॥ कवचस्यास्य देवेशि वर्णितु नैव शक्यते ॥ ३७ ॥ महिमानं महादेवि जिह्वाकोटिशतैरपि ॥ अदातव्य मिदं वर्म मंत्रगर्भं रहस्यकम् ॥ ३८ ॥ अवक्तव्यं महापुण्यं सर्वसारस्वतप्रदम् ॥ अदीक्षिताय नो दद्यात्कुटिलाय दुरात्मने ॥ ॥ ३९ ॥ अन्यशिष्याय दुष्टाय निंदकाय कुलार्थिनाम् ॥ दीक्षिताय कुलीनाय गुरुभक्तिरताय च ॥ ४० ॥ शांताय कुलशक्ताय शांताय कुलवासिने ॥ इदं वर्म्म शिवं दद्यात्कुलभागी भवेन्नरः ॥ ४१ ॥ इदं रहस्यं परमं दुर्गाकवचमुत्तमम् ॥ गुह्यं गोप्यतमं गोप्यं गोपनीयं स्वयोनिवत् ॥ ४१ ॥ इति देवीरहस्यतंत्रोक्तं श्रीदुर्गाकवचं समाप्तम् ॥ शम् ॥ ॥ अथ नवरात्रदुर्गापूजा प्रयोगः ॥ प्रतिपदि प्रातः कृताभ्यंगस्नानः नवे वाससी परिधाय चंदनमृगमदकुंकुमैस्त्रिपुंड्रं कृत्वा धृतपवित्रो नित्यक्रियां समाप्य दशघटिकामध्येऽभिजिन्मुहूर्ते वा कलशस्थापनार्थं शुद्धमृदा वेदिकां कृत्वा स्वासने प्राङ्मुखो देवीसंमुखो वा उपविश्य आचम्य प्राणानायम्य । ॐ सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥ लंबोदरश्च विकटो विघ्ननाशो विनायकः ॥ १ ॥ धूम्रके तुर्गणाध्यक्षो भालचंद्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ॥

संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ २ ॥ इत्यादिगणपतिस्मरणं कृत्वा । आनोभद्रा इत्यादि पूर्वोक्तं शान्तिसूक्तं पठित्वा लक्ष्मीनारायणादिदेवान् प्रणमेत् । ततो देशकालौ संकीर्त्य । अमुकगोत्रोऽमुकशर्मा ममेह जन्मनि दुर्गाप्रीतिद्वारा सर्वपापक्षयपूर्वकदीर्घायुर्विपुलधनपुत्रपौत्राद्यविच्छिन्नसंततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टप्रमुखचतुर्विधपुरुषार्थसिद्ध्यर्थं संवत्सरसुखप्राप्तिकामः शारदीयनवरात्रे प्रतिपदि विहितं कलशस्थापनं दुर्गापूजां कुमारीपूजादिकर्म करिष्ये तदंगत्वेन निर्विघ्नतार्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं चंडीसप्तशतीजपाद्यर्थं ब्राह्मणवरणं च करिष्ये । इति सङ्कल्प्य। गणपतिं ध्यायेत्। श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः क्षीराब्धौ रत्नदीपैः सुरतरुविमले रत्नसिंहासनस्थम् ॥ दोर्भिः पाशाङ्कुशेष्टाभयधृतिविशदं चंद्रमौलिं त्रिनेत्रं ध्यायेच्छांत्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥ १ ॥ इति गणपतिं ध्यात्वा। पुष्पाण्यादाय। "हे हेरंब त्वमेह्येहि अम्बिकात्र्यंबकात्मज ॥ सिद्धिऋद्धिपते त्र्यक्ष लक्षसूर्यसमप्रभ ॥ १ ॥ नागास्य नागहार त्वं गणराज चतुर्भुज ॥ भूषितः स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥ २ ॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ॥ इहागत्य गृहाण त्वं क्रतुं पूजां च रक्ष मे ॥ ३ ॥" ॐ गणानां त्वागणपतिठ्ंहवामहेप्रियाणांन्त्वाप्रियपतिठ्ंहवामहे निधीनान्त्वांनिधिपतिठ्ंहवामहेवंसोमम ॥ आहमंजानिगर्ब्भधमात्त्वमजासिगर्ब्भधम् ॥ १ ॥ ॐ भूर्भुवः स्वः सिद्धिऋद्धिसहितमहागणपतये नमः गणपतिमावाहयामि स्थापयामि । इति प्रतिमायामावाह्य ॐ सिद्धिऋद्धिसहितमहागणाधिपतये नमः इति नाममन्त्रेण षोडशोपचारैः सम्पूजयेत् । ततोऽर्घ्यपात्रे गन्धादिकं गृहीत्वा ॐ रक्षरक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ॥ भक्तानामभयंकर्ता त्राता भव भवार्णवात् ॥ १ ॥ द्वैमातुर कृपासिंधो षाण्मातुरग्रज प्रभो ॥ वरद त्वं वरं देहि वांछतं वांछितार्थद ॥ २ ॥ गृहाणार्घ्यमिदं देव सर्वदेवनमस्कृत ॥ अनेन सफलार्घ्येण फलदोस्तु सदा मम ॥ ३ ॥" इत्यर्घ्यं दद्यात् ॥ अथ प्रार्थना—विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ॥ नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमोनमस्ते ॥ १ ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय सुखदाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमोनमस्ते ॥ २ ॥ लम्बोदर नमस्तेस्तु सततं मोदकप्रिय ॥ अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ इति प्रार्थयेत् ॥ अथ पुण्याहवाचनम् ॥ ब्राह्मं पुण्यं महद्यच्च सृष्ट्युत्पादनकारकम् ॥ वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ १ ॥ भो ब्राह्मणाः ममास्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु इति पठेत् ॐ पुण्याहं ३ त्रिर्विप्रा ब्रूयुः । पुनन्तु मा देवजनाऽपुनन्तु मनसा धियः ॥ पुनंतु विश्वा भूतानिजातवेदःपुनीहिमा ॥ १ ॥ पृथिव्यामुद्धृतायां तु यत्कल्याणं पुराकृतम् ॥ ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवंतु नः ॥ भो ब्राह्मणाः ममास्य कर्मणः कल्याणं भवंतो ब्रुवंतु ॥

ॐ कल्याणम् ३ । यथेमांवांचङ्कल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्यांशूद्रायचार्यायचस्वायचारणायच ॥ प्रियोदेवानां दक्षिणायैदातुरिहभूयासमयम्मेकामः समृद्ध्यतामुपमादोनमतु ॥ २ ॥ सागरस्य यथा वृद्धिर्महालक्ष्म्यादिभिः कृता ॥ सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवंतु नः ॥१॥ भो ब्राह्मणा ममास्य कर्मणः ऋद्धिं भवन्तो ब्रुवंतु । ॐ ऋद्ध्यताम् । ३ ॐ सत्रस्यऽऋद्धिरस्यगन्मज्योतिरमृताऽअभूम ॥ दिवंपृथिव्याऽअध्यारुहामाविदामदेवान्त्स्वर्ज्योतिः ॥ ३ ॥ स्वस्तिस्तु याऽविनाशाख्या पुण्य कल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्ति ब्रुवंतुनः ॥ भो ब्राह्मणाः ममास्य कर्मणः स्वस्ति भवन्तो ब्रुवंतु । ॐ स्वस्ति ३ ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्ताक्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ ४ ॥ समुद्रमथनाज्जाता जगदानंदकारिका॥ हरिप्रिया च माङ्गल्या तां श्रियंच ब्रुवंतु नः॥भो ब्राह्मणाः ममास्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवंतु ॥ अस्तु श्रीः ॥ ३ ॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वंलोकम्मंऽइषाण ॥५॥ अस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् श्रीमहागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु ॥ अस्तु परिपूर्ण इति विप्रा ब्रूयुः ॥ इति पुण्याहवाचनम् ॥ ततो ब्राह्मणवरणपक्षे । स्वदक्षिणहस्ते गंधपुष्पतांबूलकमंडलुमुद्रिकासनमालावासांस्यादाय देशकालौ संकीर्त्य अद्यामुकगोत्रोऽमुकशर्माहं चतुर्विधपुरुषार्थसिद्ध्यर्थं संवत्सरसुखप्राप्तिकामो दुर्गाप्रीतिकामो वा अद्यप्रभृतिमहानवमीपर्यंतं प्रत्यहं वार्षिकशरत्कालीन ( वा वासंतीयकालीन ) दुर्गामहापूजापूर्वकनवार्णमंत्रजपसहितचंडीसप्तशतीपाठकरणार्थमेभिर्गंधपुष्पतांबूलकमंडलुमुद्रिकासनमालावासोभिरमुकगोत्रममुकशर्माणं ब्राह्मणं भवंतं वृणे । इति ब्राह्मणं वृणुयात् । वृतोस्मीति प्रतिवचनम् ।ॐ यथाविहितं कर्म्म कुरु इति प्रार्थ्य । ॐ यथाज्ञानं करवाणीति प्रतिवचनानंतरं ब्राह्मणं गन्धादिभिः सम्पूजयेत् । ततो गौरसर्षपान् गृहीत्वा । "ॐ अपसर्पंतु ये भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया ॥१॥ इति सर्वदिक्षु विकीर्य "सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपाः॥ पवनो दिक्पतिर्भूमिराकाशं खेचरामराः॥ब्रह्मशासनमास्थाय कुरुध्वमिह सन्निधिम् ॥" इति भूमिं स्पृष्ट्वा दिग्बंधं कुर्यात् । ततः आचम्य पंचगव्येन भूमिं प्रोक्ष्य ततः पूर्वोक्तमार्गेण भूतशुद्धिं प्राणप्रतिष्ठामंतर्मातृकाबहिर्मातृकान्यासं च कृत्वा नवार्णोक्तैकादशन्यासान्कुर्य्यात् । एवं न्यासविधिं विधाय कलशं स्थापयेत् । तत्र प्रयोगः ॥ महीद्यौरिति भूमिं स्पृष्ट्वा । ॐ महीद्यौःपृथिवीचनऽइमंयज्ञम्मिमिक्षिताम् ॥ पिपृतान्नोभरीमभिः ॥ १ ॥ इति भूमिं प्रार्थ्य तस्यां सुव्यंकुररोपणार्थं शुद्धमृदं प्रक्षिप्य । ॐ धान्यमसिधिनुहिदेवान्प्राणायत्त्वोदानायत्त्वाव्यानायत्त्वादीर्घामनुप्रसितिमायुषेधांदेवोवः सविताहिरण्यपाणिःप्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनांपयोसि ॥ २ ॥ इति तस्यां मृदि यवादीन्प्रक्षिप्य

ॐ आजिघ्रकलशम्मह्यात्वाविशन्त्विन्दवः ॥ पुनरूर्जानिवर्तस्वसानः सहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ ३ ॥ इति ताम्रकलशं मृन्मयं वा कलशं निधाय । वरुणस्योत्तम्भनमसिव्वरुणस्यस्कंभसर्ज्जनीस्थो व्वरुणस्यऋतसदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद ॥४॥ इति जलेनापूर्य । गंधद्वारेति गंधं प्रक्षिपेत् । ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ ५ ॥याऽओषधीरिति सर्वौषधीः॥ॐ याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामहꣳशतंधामानिसप्तच ॥६॥ काण्डात्काण्डादिति दूर्वाः ।ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥७॥ अश्वत्थेवेति पंचपल्लवान् । ॐ अश्वत्थेवोनिषदनम्पर्णेवोव्वसतिष्कृता गोभाजऽइत्किलासथयत्सनवथपूरुषम्॥८॥ स्योनापृथिवीति सप्तमृदः । ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी॥यच्छानःशर्म्मसप्रथाः॥९॥ याः फलिनीरिति फलम् । ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥ १० ॥ परिवाजेति पंचरत्नानि । ॐ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ११ ॥ हिरण्यगर्भेति हिरण्यम् । ॐ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातः पतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १२ ॥ युवासुवासा इति रक्तवस्त्रेण सूत्रेण वा वेष्टयेत् ॥ ॐ युवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवति जायमानः ॥ तं धीरासःकवयऽउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥ १३ ॥ पूर्णादर्वीति तंडुलपूर्णं ताम्रपात्रमुपरि न्यसेत ॥ ॐ पूर्णादर्व्विपरापतसुपूर्णापुनरापत ॥ व्वस्नेवव्विक्रीणावहाऽइषमूर्ज्जꣳशतक्रतो ॥ १४ ॥ तत्त्वायामीति वरुणमावाह्य । तत्त्वायामीति शुनः शेप ऋषिः । त्रिष्टुप् छन्दः । वरुणो देवता । वरुणावाहने विनियोगः । ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ १ ॥ ॐ भूर्भुवः स्वः वरुण इहागच्छ इह तिष्ठ । इत्यावाह्य ॐ अपांपतिवरुणाय नमः । इति नाममंत्रेण षोडशोपचारैः संपूज्य पुष्पाञ्जलिं दत्त्वा । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ १ ॥ इति तीर्थान्यावाहयेत्पूजयेच्च ॥ ततः कलशस्य मुखे विष्णुरित्यादि कलशाभिमन्त्रणं कृत्वा । 'देवदानवसंवादे' इत्यादि प्रार्थ्य वरुणं प्रणमेत् ॥ इति कलशस्थापनम् ॥ ततः कलशोपरि सिंहासनं निधाय तत्र सावयवां स्वर्णमयीं दुर्गाप्रतिमामग्न्युत्तारणपूर्वकं संस्थाप्य पल्लवैराच्छाद्य पूजयेत । अग्न्युत्तारणसूक्तस्तु पूर्वमुक्त एव । लेख्यमूर्तिश्चेत्तदा नाभिषेकः । अभिषेकादिकं तत्र न कर्त्तव्यं किं तु तदग्रे पात्रं स्थापयित्वा तस्मिन्नेव कर्तव्यम् ॥ अथ पूजा ॥ "ॐ आगच्छ वरदे देवि दैत्यदर्पनिषूदनि ॥ पूजां गृहाण सुमुखि नमस्ते शङ्करप्रिये ॥ १ ॥ सर्वतीर्थमयं वारि

सर्वदेवसमन्वितम् ॥ इमं घटं समागच्छ तिष्ठ देवि गणैः सह ॥ २ ॥ दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय ॥ बलिं पूजां गृहाण त्वमष्टभिः शक्तिभिः सह ॥ ३ ॥ शङ्खचक्रगदाहस्ते शुभ्रवर्णे शुभासने ॥ मम देवि वरं देहि सर्वैश्वर्यप्रदायिनि ॥ ४ ॥ एहि दुर्गे महाभागे रक्षार्थं मम सर्वदा ॥ आवाहयाम्यहं देवि सर्वकामार्थसिद्धये ॥ ५ ॥ अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु ॥ रक्षां कुरु सदा भद्रे विश्वेश्वरि नमोस्तु ते ॥ ६ ॥ ॐ हिरण्यवर्णांहरिणीं सुवर्णरजतस्रजाम् ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह ॥ १ ॥ ॐ भूर्भुवः स्वः भगवति दुर्गे इहागच्छ इह तिष्ठ ॥ इत्यावाहनम् ॥ नानाप्रभासमाकीर्णं नानावर्णविचित्रितम् ॥ आसनं कल्पितं देवि प्रीत्यर्थं तव गृह्यताम् ॥ ॐ तांमआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहम् ॥ २ ॥ ॐ दुर्गायै नमः आसनम् ॥ गङ्गादिसर्वतीर्थेभ्य आनीतं तोयमुत्तमम् ॥ पाद्यं तेहं प्रदास्यामि गृहाण परमेश्वरि ॥ ॐ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीम् ॥ श्रियं देवीमुपह्वयेश्रीर्मादेवीर्जुषताम् ॥ ३ ॥ इति पाद्यम् ॥ गन्धाक्षतैश्च संयुक्तं फलपुष्पयुतं तव ॥ अर्घ्यं गृहाण दत्तं मे प्रसीद परमेश्वरि ॥ ॐ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीम् ॥ पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियम् ॥ ४ ॥ इत्यर्घ्यम् ॥ गङ्गा गोदावरी चैव यमुना च सरस्वती ॥ ताभ्य आचमनीयार्थमानीतं तोयमुत्तमम् ॥ ॐ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदाराम् ॥ तांपद्मनीमींशरणमहंप्रपद्येऽअलक्ष्मीर्मेनश्यतांत्वांवृणे॥५॥ इत्याचमनीयम्॥ज्ञानमूर्ते भद्रकालि दिव्यमूर्ते सुरेश्वरि॥स्नानं गृहाण देवि त्वं नरायणि नामोस्तु ते॥ॐआदित्यवर्णेतपसोधि जातोवनस्पतिस्तव वृक्षोथबिल्वः॥तस्यफलानितपसानुदन्तुमयान्तरायाश्चबाह्याअलक्ष्मीः॥६॥इति स्नानम्॥ पंचामृतं मयानीतं पयोदधिसमन्वितम् ॥घृतं मधु शर्करया प्रीत्यर्थं प्रतिगृह्यताम्॥ॐ पंचनद्यःसरस्वतीमपियन्तिसस्रोतसः॥सरस्वतीतुपंचधासोदेशेभवत्सरित् ॥ इति पंचामृतस्नानम् ॥ ७ ॥ पुनः शुद्धोदकस्नानम् ॥ कामधेनुसमुत्पन्नं सर्वेषां जीवनं परम् ॥ पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥ ॐ पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसन्तुमह्यम् ॥८॥ इति पयःस्नानम् ॥ पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ॥ दध्यानीतं मया देवि स्नानार्थं प्रतिगृह्यताम् ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ ९ ॥ इति दधिस्नानम् नवनीतसमुत्पन्नं सर्वसंतोषकारकम् ॥ घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥ ॐ घृतंघृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यहविरसिस्वाहांदिशःप्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा॥१०॥इति घृतस्नानम् ॥ तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु॥तेजःपुष्टिकरं दिव्यं स्नानार्थं

प्रतिगृह्यताम् ॥ ॐ मधुवाताऽऋतायते मधुक्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः ॥ १ ॥ ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः मधुद्यौ
रस्तुनः पिता ॥२॥ ॐ मधुमान्नो वनस्पतिर्मधुमाꣳ२ऽअस्तु सूर्यः ॥ माध्वीर्गावो भवन्तु नः ॥ ३ ॥ ११ ॥ इति मधुस्नानम् ॥ इक्षुसारस
मुद्भूता शर्करा पुष्टिकारिका ॥ मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥ ॐ अपाꣳ रसमुद्वयसꣳ सूर्ये सन्तꣳ समाहितम् ॥ अपाꣳ
रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ १२ ॥ इति शर्करोदकस्नानम् ॥
मलयाचलसंभूतं चंदनागरुसंभवम् ॥ चंदनं देवदेवि त्वं स्नानार्थं प्रतिगृह्यताम् ॥ ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्व
भूतानां तामिहोपह्वये श्रियम् ॥ १३ ॥ इति गंधोदकस्नानम् ॥ नानासुगंधिद्रव्यं च चंदनं रजनीयुतम् ॥ उद्वर्तनं मयादत्तं स्नानार्थं प्रतिगृह्यताम् ॥
ॐ अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ॥ हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाꣳसं परिपातु विश्वतः ॥ १३ ॥
इत्युद्वर्तनस्नानम् ॥ ज्ञानमूर्ते भद्रकालि दिव्यमूर्ते सुरेश्वरि ॥ स्नानं गृहाण देवि त्वं नारायणि नमोस्तु ते ॥ ॐ वरुणस्योत्तंभनमसि वरुण
स्य स्कंभसर्जनीस्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऽऋतसदनमासीद ॥ १४ ॥ इति शुद्धस्नानम् ॥ स्नाना
न्ते आचमनीयम् ॥ निर्मितं तंतुभिः सूक्ष्मैर्नानावर्णविचित्रितम् ॥ वस्त्रं गृहाण मे देवि प्रीत्यर्थं प्रतिगृह्यताम् :॥ ॐ उपैतु मां देवसखः
कीर्तिश्च मणिना सह ॥ प्रादुर्भूतोस्मि राष्ट्रेस्मिन्कीर्तिमृद्धिं ददातु मे ॥ १५ ॥ इति वस्त्रम् ॥ आचमनम् ॥ कंचुकीमुपवस्त्रं च नानारत्नैः
समन्वितम् ॥ गृहाण त्वं मया दत्तं शंकरप्राणवल्लभे ॥ अलंकारान् महादिव्यान्नानारत्नविनिर्मितान् ॥ गृहाण देवमातस्त्वं प्रसीद
परमेश्वरि ॥ ॐ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ॥ अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ १६ ॥ इति कंचुकीमाभूष
णं च ॥ मलयाद्रिसमुद्भूतं कर्पूरागरुवासितम् ॥ मया निवेदितं भक्त्या चंदनं प्रतिगृह्यताम् ॥ केशरागरुसंयुक्तं चंदनादिसमन्वितम् ॥
कस्तूरिकासमायुक्तं कुंकुमं प्रतिगृह्यताम् ॥ ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्
॥ १७ ॥ इति गंधं कुंकुमं च ॥ अक्षताश्च सुरश्रेष्ठे कुंकुमाक्ताः सुशोभिताः ॥ मया निवेदिता भक्त्या प्रीत्यर्थं प्रतिगृह्यताम् ॥
ॐ अक्षन्नमीमदन्त ह्यव प्रिया ऽअधूषत ॥ अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥ १८ ॥ इत्यक्षतान् ॥ मंदा
रपारिजातानि पाटलीपंकजान्यपि ॥ मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥ ॐ मनसः काममाकूतिं वाचः सत्यमशीमहि ॥
पशूनाꣳ रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १९ ॥ इति पुष्पाणि ॥ सौभाग्यद्रव्यम् ॥ हरिद्रां कुंकुमं चैव सिंदूरादिसमन्वितम् ॥
सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि ॥ ( ॐ अहिरिव भोगैरिति सौभाग्यद्रव्यम् ॥ २० ॥ ) एवं पुष्पांतपूजां कृत्वा पूर्वोक्तनवार्ण

मंत्रोक्तावरणदेवताः संपूज्यांगपूजां कुर्यात् ॥ अथांगपूजा ॥ ॐ दुर्गायै नमः । पादौ पूजयामि ॥ ॐ महाकाल्यै नमः । गुल्फौ पूजयामि ॥ ॐ मंगलायै नमः । जानुनी पूजयामि ॥ ॐ कात्यायन्यै नमः । ऊरू पू० ॥ ॐ भद्रकाल्यै नमः । कटिं पू० ॥ ॐ कमलायै० । नाभिं पूज० ॥ ॐ शिवायै० । उदरं पूज० ॥ ॐ क्षमायै नमः । हृदयं पूज० ॥ ॐ स्कंदाय नमः । कंठं पूज० ॥ ॐ महिषासुरमर्दिन्यै० । नेत्रे पूज० ॥ ॐ उमायै० । शिरः पूज० ॥ ॐ विंध्यवासिन्यै नमः । सर्वांगं पूजयामि नमः ॥ देव्या दक्षिणे सिंहं पूजयामि ॥ वामे महिषं पूजयामि ॥ इत्यंगपूजां कुर्यात् ॥ दशाङ्गं गुग्गुलं धूपं चंदनागुरुसंयुतम् ॥ मया निवेदितं भक्त्या गृहाण परमेश्वरि ॥ ॐ कर्दमेन प्रजा भूता मयि सम्भव कर्दम ॥ श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥२०॥ इति धूपम् ॥ आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ॥ दीपं गृहाण देवि त्वं त्रैलोक्यतिमिरापहम् ॥ ॐ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ॥ नि च देवीं मातरं श्रियं वासय मे कुले॥२१॥इति दीपम्॥अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् । भक्ष्यभोज्यसमायुक्तं प्रीत्यर्थं प्रतिगृह्यताम् ॥ ॐ आर्द्रां पुष्करिणीं पुष्टिं पिंगलां पद्ममालिनीम् ॥ चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥२२॥ इति नैवेद्यम् ॥ (नैवेद्यमध्ये पानीयम् उत्तरापोशनं हस्तप्रक्षालनं मुखप्रक्षालनम् आचमनीयं च समर्पयामि ) ॥ मलयाचलसंभूतं कस्तूर्या च समन्वितम् ॥ करोद्वर्तनकं देवि गृहाण परमेश्वरि ॥ इति करोद्वर्तनम् ॥ इदं फलं मया देव स्थापितं पुरतस्तव ॥ तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ ॐआर्द्रांयः करिणीं यष्टींसुवर्णां हेममालिनीम् ॥ सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥२३॥ इति ऋतुफलम् ॥ पूगीफलं महद्दिव्यं नागवल्ल्या दलैर्युतम् ॥ कर्पूरैलासमायुक्तं तांबूलं प्रतिगृह्यताम् ॥ ॐ याःफलिनीर्याऽअफलाऽअंपुष्पायाश्चंपुष्पिणीः ॥ बृहस्पतिप्प्रसूतास्तानोंमुञ्चन्त्वर्ठहंसः ॥ २४ ॥ इति तांबूलम् ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ ॐ तांमऽआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यंप्रभूतंगावोदास्योश्वान्विंदेयंपुरुषानहम् ॥ २५ ॥ इति दक्षिणाम् ॥ कर्पूरार्तिक्यम् ॥ कदलीगर्भसंभूतं कर्पूरं च प्रदीपितम् ॥ आरार्तिक्यमहं कुर्वे पश्य मे वरदा भव ॥ ॐ इदर्ठंहविःप्प्रजननम्मेऽअस्तुदशवीरर्ठंसर्व्वगणर्ठंस्वस्तये ॥ आत्मसनिप्प्रजासनि पशुसनिलोकसन्यभयसनि ॥ अग्निःप्प्रजाम्बहुलाम्मेकरोत्त्वन्नम्पयोरेतोऽअस्म्मासुधत्त ॥ २६ ॥ इति कर्पूरार्तिक्यम् ॥ यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्तु प्रदक्षिणपदेपदे ॥ ॐ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ॥ सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ २७ ॥ इति ॥ प्रदक्षिणा ॥ नानासुगन्धपुष्पाणि यथाकालोद्भवानि च ॥ पुष्पाञ्जलिं मया दत्तं गृहाण परमेश्वरि ॥ १ ॥ ततः श्रीसूक्तं संपूर्णं प्राकृतनीराजनार्ति च यथाचारं पठित्वा पुष्पाञ्जलिं निवेदयेत

॥ २८ ॥ ततः साष्टाङ्गं प्रणामं कृत्वा प्रार्थयेत् ॥ ॐ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ॥ यत्पूजितं मया देवि परिपूर्णं तदस्तु मे ॥ १ ॥ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ॥ यशो देहि धनं देहि सर्वान्कामांश्च देहि मे ॥ २ ॥ जयंती मङ्गला काली भद्रकाली कपालिनी ॥ दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तु ते ॥ ३ ॥ दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम् ॥ पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् ॥ ४ ॥ भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि ॥ देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा ॥ ५ ॥ सर्वमङ्गलमांगल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यंबके गौरि नारायणि नमोस्तु ते ॥ ६ ॥ रूपं देहि यशो देहि भगं भवति देहि मे ॥ पुत्रान् देहि धनं देहि सर्वान्कामांश्च देहि मे ॥ ७ ॥ इति संप्रार्थ्य कुमारीपूजां कुर्यात् ॥ ततः ( प्रत्यहं बलिदानपक्षे माषभक्तेन कूष्मांडेन वा इक्षुदंडेन बलिदानं कार्यम् ॥ ततः अखंडदीपकं प्रतिष्ठापयेत् ) ॥ " अखंडदीपकं देव्याः प्रीतये नवरात्रकम् ॥ उज्ज्वालयेदहोरात्रमेकचित्तो धृतव्रतः" ॥ एवं देवीं संपूज्य चंडीपाठं कुर्यात् अथ चंडीपाठप्रकारः ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्मा अमुकयजमानेन वृतोऽहं वा ( धनकामः पुत्रकामः अमुकरोगनाशकामो वा इत्यादिविशिष्टफलोद्देशमुच्चार्य ) श्रीदुर्गाप्रीतिकामो वा मार्कण्डेयपुराणीयम् ॐ सावर्णिः सूर्यतनय इत्यारभ्य सावर्णिर्भविता मनुरित्यंतं चंडीसप्तशतीपाठं कवचार्गलाकीलकनवार्णमन्त्रजपसहितं करिष्ये इति संकल्प्य आसनं विधाय आधारे अन्यहस्तलिखितं पुस्तकं संस्थाप्य पूजयेत् ॥ ततोऽष्टोत्तरशतं नवार्णमन्त्रजपं कृत्वा ॐ नारायणाय नमः ॥ १ ॥ ॐ नराय नमः ॥ २ ॥ ॐ नरोत्तमाय नमः ॥ ३ ॥ ॐ देव्यै नमः ॥ ४ ॥ ॐ सरस्वत्यै नमः ॥ ५ ॥ ॐ व्यासाय नमः ॥ ६ ॥ इति नमस्कृत्य प्रणवमुच्चार्य कवचार्गलाकीलकानि पठित्वा मार्कण्डेयपुराणोक्तचंडीसप्तशतीस्तवपाठं कुर्यात् ॥ " तत्र तावत्पुस्तकवाचने नियमाः । हस्ते पुस्तकं न धार्यम् । स्वयं ब्राह्मणभिन्नेन च लिखितं विफलम् । अध्यायं समाप्य विरमेन्न तु मध्ये कदाचन ॥ कृते विरामे मध्ये तु अध्यायादि पठेत्पुनः ॥ ग्रंथार्थं बुध्यमानः स्पष्टाक्षरं नातिशीघ्रं नातिमंदं रसभावस्वरयुतं वाचयेत् ॥ अथ पाठविधानम् ॥ एषां श्रीचंडीसप्तशत्याः प्रथममध्यमोत्तमचरित्राणां ब्रह्मविष्णुरुद्रा ऋषयः । गायत्र्युष्णिगनुष्टुभश्छंदांसि महाकालीमहालक्ष्मीमहासरस्वत्यो देवताः । ऐंह्रींक्लीं बीजानि । अग्निवायुसूर्यास्तत्त्वानि । धर्मार्थकामसिद्ध्यर्थे सप्तशतीपाठे विनियोगः ॥ ॐ ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि । ॐगायत्र्युष्णिगनुष्टुप्छन्दोभ्यो नमः मुखे । ॐमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः हृदये । ॐऐंह्रींक्लींबीजेभ्यो नमः गुह्ये । ॐ अग्निवायुसूर्यतत्त्वेभ्यो नमः हृदयेइति ऋष्यादिन्यासः ॥ ॐ ह्रींहृदयाय नमः । ॐ चं शिरसे स्वाहा । ॐ डिं शिखायै वषट् । ॐ कां कवचाय हुम् । ॐ यैं नेत्रत्रयाय वौषट् । ॐ चण्डिकायै अस्त्राय फट् । इति हृदयादि० ॥ अथ चक्रन्यासः ॥ ॐ शम्भुतेजोज्ज्वलज्ज्वालामालिनि पावके ह्रां नंदायै अङ्गुष्ठाभ्यां नमः ॥ ॐ शंभुतेजोज्ज्वलज्ज्वालामालिनि पावके ह्रीं रक्तदंतिकायै तर्जनीभ्यां नमः ॐ शंभुतेजोज्ज्वलज्ज्वालामालिनि पावके ह्रूं शाकंभर्यै मध्यमाभ्यां नमः ॥ ॐ शम्भुतेजोज्ज्वलज्ज्वालामालिनि पावके ह्रैं दुर्गायै अनामिकाभ्यां नमः ॥ ॐ शम्भुतेजो

ज्ज्वलज्ज्वालामालिनि पावके ह्रौं भीमायै कनिष्ठिकाभ्यां नमः ॥ ॐ शम्भुतेजोज्ज्वलज्ज्वालामालिनि पावके ह्रः भ्रामर्यै करतल करपृष्ठाभ्यां नमः ॥ अथ हृदयादिन्यासः ॥ ॐ शम्भुतेजोज्ज्वलज्ज्वालामालिनि पावके ह्रां नंदायै हृदयाय नमः ॥ ॐ शम्भुतेजो० ह्रीं रक्तदंतिकायै शिरसे स्वाहा ॥ ॐ शम्भुतेजो० शाकंभर्य्यै शिखायै वषट् ॥ ॐ शम्भुतेजो ० ह्रैं दुर्गायै कवचायहुम् ॥ ॐ शम्भुतेजा०ह्रौं भीमायै नेत्रत्रयाय वौषट्॥ॐ शंभुतेजो०ह्रः भ्रामर्यै अस्त्राय फट् ॥ अथांगन्यासः ॥ ॐ वाराह्यै नमः पादयोः । ॐ नारसिंह्यै नमः नितंबे । ॐ चामुंडायै नमः नाभौ । ॐ माहेन्द्र्यै नमः कंठे । ॐ ब्राह्म्यै नमः पृष्ठे । ॐ वैष्णव्यै नमः दक्षिणभुजे । ॐ माहेश्वर्यै नमः वामभुजे । ॐ कौमार्यै नमः स्कन्धयोः ।ॐ कात्यायन्यै नमः मुखे । ॐ शिवदूत्यै नमः शिरसि ।ॐशिवायै नमः हृदि ॥ ॐ काल्यै नमः दक्षकुक्षौ । ॐ रक्तदंतिकायै नमः वामकुक्षौ । ॐशताक्ष्यै नमः पृष्ठवंशे । ॐ शाकंभर्यै नमः भ्रुवोः । इत्यंगन्यासः॥अथ खड्गिन्यादिन्यासः॥ ॐखड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा॥शङ्खिनी चापिनी बाणा भुशुंडी परिघायुधेति शिरसि १ ॥शूलेन पाहि नो देवि पाहि खड्गेन चांबिके॥घंटास्वनेन नः पाहि चापज्यानिःस्वनेन चेति मुखे ॥२॥ॐ प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ॥ भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरीति कंठे ॥ ३ ॥ ॐ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ॥ यानि चात्यर्थघोराणि तैरक्षास्मांस्तथा भुवमिति बाह्वोः ॥ ४ ॥ ॐ खड्गशूलगदादीनि यानि चास्त्राणि तेंबिके ॥ करपल्लवसङ्गीनि तैरस्मान्रक्ष सर्वतः इति हृदये ॥ ५ ॥ ॐ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ॥ भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोस्तु ते इत्युदरे ॥ ६ ॥ ॐ एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ॥ पातु नः सर्वभूतेभ्यः कात्यायनि नमोस्तु ते इति नाभौ ॥ ७ ॥ ॐ ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ॥ त्रिशूलं पातु नो भीतेर्भद्रकालि नमोस्तु ते इत्यूर्वोः ॥ ८ ॥ ॐ हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ॥ सा घण्टा पातु नो देवि पापेभ्यो नः सुतानिवेति जानुनोः ॥ ९ ॥ ॐ असुरासृग्वसापंकचर्चितस्ते करोज्ज्वलः ॥ शुभाय खड्गो भवतु चण्डिके त्वां नता वयमिति पादयोः ॥ १० ॥ एवं न्यस्तशरीरः साधकः सच्चिदानंदरूपिणीं महालक्ष्मीं ध्यायेत् ॥ अथ ध्यानम् ॥ अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुष्कुण्डिकां दंडं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम्॥ शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य कृताञ्जलिः सन् गुरुदेवात्मैक्यं विभाव्य स्तवस्यार्थानुसंधानपूर्वकं नातिशीघ्रं नातिमंदं मध्यमस्वरेण स्पष्टपदाक्षरं चण्डीस्तवं पठेत्॥ ततः स्तवपाठोत्तरम् । ॐह्रीं हृदयाय नमः । ॐ चं शिरसे स्वाहा । ॐ डिं शिखायै वषट् । ॐ कां कवचाय हुं । ॐ यैं नेत्रत्रयाय वौषट् । ॐ ह्रीं चंडिकायै अस्त्राय फट् ॥ इति षडङ्गन्यासं कृत्वा । नवार्णमंत्रमष्टोत्तरशतं जप्त्वा । अहंरुद्रेभिरिति वेदिकं देवीसूक्तं च नमो देव्यै महादेव्यै इति देवीसूक्तं च पठित्वा रहस्यत्रयं पठेत्॥तत्र प्राधानिकं रहस्यं सार्द्धत्रिंशच्छ्लोकात्मकम् । वैकृतिरहस्यमेकोनचत्वारिंशच्छ्लोकात्मकम् । मूर्तिरहस्यं पंचविंशतिश्लोकात्मकं गुरुचरणैः संशोधितं ग्राह्यमिति ॥ ततः पूर्वोक्तं षडंगन्यासं कृत्वा ध्यात्वा भगवतीं प्रार्थयेत् ॥ अपराधशतं कृत्वा जगदंबेति चोच्चरेत् ॥ यां गतिं सम

वाप्नोति न तां ब्रह्मादयः सुराः ॥ १ ॥ सापराधोस्मि शरणं प्राप्तस्त्वां जगदंबिके ॥ इदानीमनुकंप्योहं यथेच्छसि तथा कुरु ॥२॥ अज्ञानाद्विस्मृतेर्भ्रांत्या यन्न्यूनमधिकं कृतम् ॥ तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥ ३ ॥ कामेश्वरि जगन्मातः सच्चिदानंदविग्रहे गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि ॥ ४॥ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धिर्भवतु मे देवि त्वत्प्रसादान्म हेश्वरि ॥ ५ ॥ इति मंत्रेण देव्या दक्षिणकरे जपं समर्प्य यथासुखं विहरेत् ॥ ( मंत्रमहोदधौ ) मार्कण्डेयपुराणोक्तं नित्यं चंडीस्तवं पठन् ॥ पुटितं मूलमंत्रेण जपन्नाप्नोति वांछितम् ॥१॥ आश्विनस्य सिते पक्षे आरभ्याग्नितिथिं सुधीः ॥ अष्टम्यतं जपेल्लक्षं दशांशं होममाचरेत् ॥ २ ॥ प्रत्यहं पूजयेद्देवीं पठेत्सप्तशतीमपि ॥ विप्रानाराध्य मंत्रा स्वमिष्टार्थं लभतेऽचिरात् ॥ ३ ॥ एवं यः कुरुते स्तोत्रं नावसीदति जातुचित् ॥ चंडिकां प्रभजन्मर्त्यो धनैर्धान्यैर्यशश्चयैः ॥ ४ ॥ पुत्रैः पौत्रै धनारोग्यैर्युक्तो जीवेद्बहूः समाः ॥ इति संक्षेपतो नवरात्रदुर्गाविधानं समाप्तम् ॥ ॥ अथ कुमारीपूजनम् ॥ तच्च प्रत्यहं यथाशक्ति एकद्व्यादिक्रमेण कार्यम् ॥ तत्र प्रयोगः ॥ मंडपाभ्यंतरे कुंकुमादिभिरष्टदलं विरच्य तदुपरि स्थापितपीठे कन्यामुपवेश्य । स्वयं तत्संमुखः स्वासने उपविश्य । आचम्य । देशकालौ संकीर्त्य । भगवतीदुर्गाप्रसन्नतार्थं कुमारीपूजां करिष्ये । इति संकल्प्य । कुमारीणां पादौ प्रक्षाल्य तैलाभ्यंगव स्त्रगंधपुष्पस्रग्भिः संपूज्य । खंडलड्डुगुडसर्पिर्दधिक्षीरनारिकेलखंडादियाचितं भोजनं पानीयं च दत्त्वा तासु तृप्तासु स्वयमाचमनं ताभ्यो दद्यात् । ततः आचम्य क्षंतव्यमिति प्रार्थ्य कन्यादत्ताक्षतान्स्वशिरसि धृत्वा दक्षिणादानपूर्वकं विसृजेत् इति संक्षेपतःकुमारी पूजा॥अथ प्रत्येककुमार्यादिपूजनप्रकारः॥ ॐ मंत्राक्षरमयीं लक्ष्मीं मातृकारूपधारिणीम्॥नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्य हम् ॥ १ ॥ इत्यावाह्य । आसनं पाद्यं चोष्णोदकेन पादौ प्रक्षाल्यार्घ्याचमनीयस्नानवस्त्रकंचुकालंकारादि यथाशक्ति दत्त्वा सुगंधतै लेनानुलिप्य हरिद्राकुंकुमसिंदूरालक्तकांजनपुष्पमालाधूपदीपादिभिरभ्यर्च्य । पायसलड्डुगुडदधिक्षीरादिभिर्भोजयेत् ॥ भोजन काले नवार्णं सप्तशतीं वा पठेत् । ततो भोजनांते पानीयनानाफलतांबूलदक्षिणानीराजनपुष्पांजलीन्निवेदयेत्॥एवमन्यापि पूजयेत् । आवाहने मंत्रभेदाः । जगत्पूज्ये जगद्वंद्ये सर्वशक्तिस्वरूपिणि ॥ पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तु ते ॥ १ ॥ इति प्रथमां द्वि वर्षां पूजयेत् ॥ त्रिपुरां त्रिगुणाधारां त्रिवर्गज्ञानरूपिणीम् ॥ त्रैलोक्यवंदितां देवीं त्रिमूर्तिं पूजयाम्यहम् । २ ॥ इति त्रिवर्षाम् ॥ कलात्मिकां कलातीतां कारुण्यहृदयां शिवाम् ॥ कल्याणजननीं नित्यं कल्याणीं पूजयाम्यहम् ॥ ३ ॥ इति चतुर्वर्षाम् ॥ अ णिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ॥ अनंतभेदां तां तारां रोहिणीं पूजयाम्यहम् ॥ इति पंचवर्षाम् ॥ ४ ॥ कामचारीं शुभां कांतां कालचक्रस्वरूपिणीम् ॥ कामदां करुणोदारां कालीं संपूजयाम्यहम् ॥ ५ ॥ इति षड्वर्षाम् ॥ चंडवीर्यां चंडमयीं चंडमुंड प्रभंजनीम् ॥ ब्रह्मेशविष्णुनमितां चंडिकां पूजयाम्यहम् ॥ ६ ॥ इति सप्तवर्षाम् ॥ सुखानंदकरीं शांतां सर्वदेवनमस्कृताम् ॥ सर्वभूतात्मिकां देवीं शांभवीं पूजयाम्यहम् ॥ ७ ॥ इत्यष्टवर्षाम् ॥ दुर्गमे दुस्तरे युद्धे भयदुःखविनाशिनीम् ॥ पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् ॥ ८ ॥ इति नववर्षाम् ॥ सुंदरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम् ॥ सुभद्रजननीं देवीं सुभद्र

पूजयाम्यहम् ॥ ९ ॥ इति दशवर्षां नवमीं पूजयेत् ॥ ( यथोक्तवर्षालाभे द्विवर्षाद्यामपि पूजयेत् ) एतैर्मंत्रैर्द्विवर्षकन्यामारभ्य दश वर्षावधिकुमारीं क्रमेण स्वस्वमंत्रेण संपूज्य नमस्कारं कुर्यात् ॥ एवं कन्यादक्षिणभागे बटुमेकं वामे चैकं तथैकं पुरतः एवं बटुत्रयं मपि पूजयेत् ॥ कन्यापूजामाहात्म्यं ( देवीपुराणे ) न तथा तुष्यते शक्र होमदानजपेन तु । कुमारीभोजनेनात्र यथा देवी प्रसीदति ॥ १ ॥ पितरो वसवो रुद्रा आदित्या गणलोकपाः ॥ सर्वे ते पूजितास्तेन कुमारी येन पूजिता ॥ २ ॥ इति कुमारीपूजाविधानम् ॥ अथ कामनापरत्वेन चंडीपाठसंख्या ( वाराहीतंत्रे " शिव उवाच ॥ चंडीपाठफलं देवि शृणुष्व गदतो मम ॥ एकावृत्त्यादिपाठा नां यथावत्कथयामि ते ॥ १ ॥ उपसर्गोपशांत्यर्थं त्रिरावृत्तिं पठेन्नरः ॥ ग्रहोपशांतौ कर्तव्या पंचावृत्तिर्वरानने ॥ २ ॥ महाभये समुत्पन्ने सप्तावृत्तिमुदीरयेत् ॥ नवावृत्तौ भवेच्छांतिर्वाजपेयफलं लभेत् ॥ ३ ॥ राजवश्याय भूत्यै च रुद्रावृत्तिमुदीरयेत् ॥ अर्का वृत्त्या कामसिद्धिर्वैरिहानिश्च जायते ॥ ४ ॥ मन्वावृत्त्या रिपुर्वश्यस्तथा स्त्री वशतामियात् ॥ सौख्यं पंचदशावृत्त्या श्रियमाप्नोति मानवः ॥ ५ ॥ कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः ॥ राजभीतिविनाशाय विपक्षोच्चाटनाय च ॥ ६ ॥ कुर्यात्सप्तदशावृत्ती स्तथाष्टादशकं प्रिये ॥ महाऋणविमोक्षाय विंशावृत्तिं पठेन्नरः ॥७॥ पंचविंशावर्तनाद्धि भवेद्बंधविमोक्षणम् ॥ संकटे समनुप्राप्ते दुश्चि कित्स्यागमे सदा॥८॥जातिध्वंसे कुलोच्छेदे आयुषो नाशमागते ॥ वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये ॥९॥तथैव त्रिविधोत्पाते तथा चैवातिपातके ॥ कुर्याद्यत्नाच्छतावृत्तिं ततः संपद्यते शुभम् ॥१०॥ विपदस्तस्य नश्यंति अंते याति परां गतिम्॥जयवृद्धौ शता वृत्त्या राज्यवृद्धौ सदा पठेत् ॥११॥ मनसा चिंतितं देवि सिद्धिरष्टोत्तराच्छतात् ॥ शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते ॥ १२ ॥ सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा॥ भुक्त्वा कामान्यथाकामं नरो मोक्षमवाप्नुयात् ॥१३॥ यथाश्वमेधः क्रतुषु देवानां च यथा हरिः ॥ स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः ॥१४॥ नातःपरतरं स्तोत्रं किंचिदस्ति वरानने ॥ भुक्तिमुक्तिप्रदं पुण्यं पावनानां च पावनम् ॥ १५ ॥ " ( हरगौरीतंत्रे ) " श्रीकामः पुत्रकामो वा सृष्टिमार्गक्रमेण तु ॥ सावर्णिः सूर्यतनयः सावर्णिर्भविता मनुः ॥ १ ॥ जपेच्छक्रादिमारभ्य शुम्भदैत्यवधावधि आद्यमारभ्य प्रजपेत्पश्चाच्छेषं समापयेत् ॥ २ ॥ शांत्यादिकामः सर्वत्र स्थितिमार्गक्रमेण तु ॥ स्थितिपाठः सर्वकामे भुक्तिकामे च संहृतिः ॥ ३ ॥ संहारे चांत्यमारभ्य पश्चादादि समापयेत् ॥११॥ " आवृत्तिभेदेन दक्षिणापि तत्रैव"--पंचस्वर्णाः शतावृत्तौ पक्षावृत्तौ तु तत्त्रयम् ॥ पंचावृत्तौ स्वर्णमेकं त्रिरावृत्तौ तदर्ध कम् ॥ एकावृत्तौ पादमेकं दद्याद्वा शक्तितो बुधः ॥ " अथ संपुटितहोमे मंत्रसंख्या " मंत्रपुटं बीजपुटं दुर्गास्तोत्रं पठे त्सदा मंत्रबीजपुटा दुर्गा कामनासिद्धिदा सदा ॥ होमकाले सदा मंत्रं दुर्गामंत्रं पृथक् हुनेत् ॥ कामनाबीजसंयोगो दुर्गामंत्रेण संहुनेत् ॥ दुर्गास्तवनमंत्राणां संख्या सप्तशतं भवेत् ॥ कामनामन्त्रसंख्या च शतं चैव चतुर्दश ॥ मध्ये मन्त्रान् सप्तशतं होमकाले तु योजयेत ॥ पाठे मन्त्रपुटं वाच्यं होममंत्राःपृथक्पृथक् ॥ होमसंख्या च मंत्राणां शतं वै चैक विंशतिः ॥ पाठे बीजपुटं वाच्यं होमे बीजपुटं हुनेत् ॥ " अथ कवचाहुतिनिषेधः ( तंत्रांतरे ) " चंडीस्तवे प्रतिश्लोकमेकाहुतिरिहे

च्यते ॥ रक्षाकवचगैर्मन्त्रैर्होमं तत्र न कारयेत् ॥ मौर्ख्यात्कवचगैर्मंत्रैः प्रतिश्लोकं जुहोति यः ॥ स्याद्देहपतनं तस्य नरकं प्रतिपद्य ते ॥ अंधकाख्यो महादैत्यो दुर्गाहोमपरायणः ॥ कवचाहुतिजात्पापान्महेशेन निपातितः ॥ "अत्र रक्षाकवचगैर्मन्त्रैरित्यनेन शूलेन पाहिनो देवीत्यादिचतुर्मन्त्रैर्होमं न कारयेदिति ज्ञातव्यम् । केचित्कवचादित्रयस्य रहस्यत्रयस्य चापि होमं वर्जयन्ति" ॥ अथ कामनाभेदेन दुर्गापाठे संपुटितमन्त्रप्रयोगः ( कात्यायनीतन्त्रे ) प्रतिश्लोकमाद्यंतयोः प्रणवेन जपेन्मन्त्रसिद्धिः ॥ १ ॥ प्रणवं व्याहृतित्रयं च श्लोकादौ पठित्वा जपेन्मन्त्रसिद्धिः ॥ २ ॥ सप्रणवां सव्याहृतिकां गायत्रीमादावन्ते वा कृत्वा श्लोकं जपेत्तदा महाफलम् ॥ ३ ॥ प्रतिश्लोकमादावन्ते 'जातवेदसे' इति ऋचं जपेत् सर्वकामसिद्धिः ॥ ४ ॥ अपमृत्युवारणाय रोगारिक्षयमृत्यून्मूलनमभीप्सितो सर्वापद्विनिवारणाय च शताक्षरत्र्यंबकमन्त्रेण संपुटीकृत्य श्लोकं पठेत् । ( गायत्री० जातवेदसे० त्र्यंबकेतिमन्त्र त्रयमिलितः शताक्षरः ) ॥ ५ ॥ प्रतिश्लोकं 'शरणागतदीनार्त्त–' इति श्लोकं पठेत्सर्वकार्यसिद्धिः ॥ ६ ॥ प्रतिश्लोकम् 'करोतु सा नः शुभ०, इत्यर्धं पठेत्सर्वकामाप्तिः ॥ ७ ॥ स्वाभीष्टवरप्राप्त्यै 'एवं देव्या वरं लब्ध्वा' इति श्लोकं पठेत् ॥ ८ ॥ सर्वापत्ति वारणाय प्रतिश्लोकम् 'दुर्गे स्मृता' इति पठेत् । अस्य केवलस्यापि श्लोकस्य कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः ॥९॥ 'सर्वा बाधा' इत्यस्य लक्षजपेऽपि पूर्वोक्तं फलम् ॥ १० ॥ 'इत्थं यदा यदा बाधा' इति श्लोकस्य लक्षजपे महामारीशान्तिः ॥ ११ ॥ 'कांसोस्मि' इत्यृचः प्रतिश्लोकं पठेल्लक्ष्मीप्राप्तिः ॥ १२ ॥ 'रोगानशेषान्' इति श्लोकस्य प्रतिश्लोकं पाठे सकलरोगनाशः तन्मन्त्रजपेपि सः ॥ १३ ॥ 'इत्युक्ता सा तदा देवी गम्भीरा' इति प्रतिश्लोकं पाठे पृथग्जपे वा विद्याप्राप्तिर्वाग्वैकृतनाशश्च ॥ १४ ॥ 'भगवत्या कृतं सर्वम्०' इत्यादिद्वादशोत्तरशताक्षरीमन्त्रः सर्वकामदः सर्वापन्निवारणश्च ॥ १५ ॥ 'देवि प्रपन्नार्तिहरे' इति श्लोकस्य यथाकार्यं लक्षायुतसहस्रशतान्यतमे जपे प्रतिश्लोकं पाठे वा सर्वापन्निवृत्तिः सर्वकार्ये सिद्धिः ॥ १६ ॥ एषु प्रयोगेषु प्रतिश्लोकं दीपाग्रे केवलमेव वा नमस्कारकरणे अतिशीघ्रं सिद्धिः ॥ १७ ॥ प्रतिश्लोकं क्लीं कामबीजसम्पुटितस्यैकचत्वारिंशद्दिनं त्रिरावृत्तौ पुत्रप्राप्तिः ॥ १८ ॥ ह्रीं मायाबीजपुटितस्य फट्पल्लवसहितस्य सप्तदिनपर्यंतं त्रयोदशावृत्तौ उच्चाटनसिद्धिः सर्वोपद्रवनाशश्च ॥ १९ ॥ श्रींलक्ष्मीबीजपुटितस्य एकोनपंचाशद्दिनपर्यंतं पंचदशावृत्तौ लक्ष्मीप्राप्तिः ॥ २० ॥ ऐं बीजसम्पुटितस्य शतावृत्त्या विद्याप्राप्तिः ॥ २१ ॥ इति कामनापरत्वे संपुटितमन्त्रप्रयोगः ॥ ॐ ह्रीं ऐं क्लीं श्रीं जगदम्बिकायै नमः ॥ अथ शतचण्डीविधानं ( शांतिसारे रुद्रयामले च ) ॥ "शतचण्डीविधानं च प्रोच्यमानं शृणुष्व तत् । सर्वोपद्रवनाशार्थं शतचंडीं समारभेत् ॥ षोडशस्तंभसंयुक्तं मंडपं पल्लवोज्ज्वलम् । वसुकोणयुतां वेदीं मध्ये कुर्यात्त्रिभागतः ॥ पक्वेष्टरचितां रम्यामुच्छ्राये हस्तसंमिताम् । पंचवर्णरजोभिश्च कुर्यान्मंडलकं शुभम् ॥ पंचवर्णवितानं च किंकणीजालमंडितम् । आचार्येण समं विप्रान् वरयेद्दश सुव्रतान् ॥ ऐशान्यां स्थापयेत्कुम्भं पूर्वोक्तविधिना हरेः ॥ वारुण्यां च प्रकर्त्तव्यं कुण्डं लक्षणलक्षितम् ॥ मूर्तिं देव्याः प्रकुर्वीत सुवर्णस्य पलेन वै । तदर्द्धेन तदर्द्धेन तदर्द्धेन महामते ॥ अष्टादशभुजां देवीं कुर्याद्वाष्टकरामपि । पट्टकूलयुगच्छन्नां

वेदीमध्ये निधापयेत् ॥ देवीं संपूज्य विधिवज्जपं कुर्युर्दश द्विजाः ॥ शतमादौ शतं चान्ते जपेन्मन्त्रं नवार्णकम्॥चण्डीसप्तशतीमध्ये सम्पुटोऽयमुदाहृतः ॥ एकं द्वे त्रीणि चत्वारि जपेद्दिनचतुष्टयम् । रूपाणि क्रमशस्तद्वत्पूजनादिकमाचरेत् ॥ पंचमे दिवसे प्रातर्होमं कुर्याद्विधानतः । गुडूचीपायसं दूर्वांतिलान्छुक्तान्यवानपि॥चंडीपाठस्य होमे तु प्रतिश्लोकं दशांशतः ॥ होमं कुर्याद्ग्रहादिभ्यश्चर्वाज्यस मिधः क्रमात् ॥ हुत्वा पूर्णाहुतिं दद्याद्द्विजेभ्यो दक्षिणां क्रमात् । कपिलां गां नीलमणिं श्वेताश्वं छत्रचामरम्॥अभिषेकं ततःकुर्युर्यज मानस्य ऋत्विजः ॥ एवं कृते महेशान सर्वसिद्धिः प्रजायते ॥ इति ॥" (मंत्रमहोदधौ विशेषः) " शतचंडीविधानं तु प्रवक्ष्ये प्रीतये नृणाम् ॥ नृपोपद्रव आपन्ने दुर्भिक्षे भूमिकंपने ॥ अतिवृष्ट्यामनावृष्टौ परचक्रभये क्षये॥ सर्वे विघ्ना विनश्यंति शतचंडीविधौ कृते॥ रोगाणां वैरिणां नाशो धनपुत्रसमृद्धयः ॥ शंकरस्य भवान्या वा प्रासादनिकटे शुभम् ॥ मण्डपं द्वारवेद्याढ्यं कुर्य्यात्सध्वजतो रणम् ॥ तत्र कुंडं प्रकुर्वीत प्रतीच्यां मध्यतोपि वा ॥ स्नात्वा नित्यकृतिं कृत्वा वृणुयाद्दश वाडवान् ॥ जितद्रियान्सदाचारान्कुली नान्सत्यवादिनः । व्युत्पन्नाश्चण्डिकापाठरतॉंछ्ज्ञादयावतः ॥ मधुपर्कविधानेन वस्त्रस्वर्णादिदानतः ॥ जपार्थमासनं मालां दद्या त्तेभ्योपि भोजनम् ॥ ते हविष्यान्नमश्नन्तो मंत्रार्थगतमानसाः ॥ भूमौ शयानाः प्रत्येकं जपेयुश्चंडिकास्तवम् ॥ मार्कंडेयपुराणोक्तं दशकृत्वः सुचेतसः ॥ नवार्णं चंडिकामंत्रं जपेयुश्चायुतं पृथक् ॥ यजमानः पूजयेच्च कन्यानां दशकं शुभम् ॥ द्विवर्षाद्या दशाब्दां ताः कुमारीः परिपूजयेत् ॥ वेद्यां विरचिते रम्ये सर्वतोभद्रमंडले ॥ घटं संस्थाप्य विधिवत्तत्रावाह्यार्चयेच्छिवाम् ॥ तदग्रे कन्य काश्चापि पूजयेद्ब्राह्मणानपि ॥ उपचारैस्तु ॥ विविधः पूर्वोक्तावरणान्यपि ॥ एवं चतुर्दिनं कृत्वा पंचमे होममाचरेत्॥ पायसान्नैस्त्रि मध्वाक्तैर्द्राक्षारंभाफलैरपि ॥ मातुलिंगैरिक्षुखंडैर्नारिकेलैः पुरैस्तिलैः ॥ जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिः ॥ सप्तशत्या दशावृत्त्या प्रतिश्लोकं हुतं चरेत् ॥ अयुतं च नवार्णेन स्थापिताग्नौ विधानतः ॥ कृत्वावरणदेवानां होमं तन्नाममंत्रतः ॥ कृत्वा पूर्णाहुतिं सम्य ग्देवमग्निं विसर्ज्य च । अभिषिंचेच्च यष्टारं विप्रौघः कलशोदकैः ॥ निष्कं सुवर्णमथ वा प्रत्येकं दक्षिणां दिशेत् ॥ भोजयेच्च शतं विप्रान्भक्ष्यभोज्यैः पृथग्विधैः॥तेभ्योपि दक्षिणां दत्त्वा गृह्णीयादाशिषस्ततः॥एवं कृते जगद्वश्यं सर्वे नश्यंत्युपद्रवाः॥राज्यं धनं यशः पुत्रानिष्टमन्यल्लभेत सः ॥ एतद्दशगुणं कुर्याच्चंडीसाहस्रजं विधिः ॥ " ( क्रोडतंत्रे तु विशेषः ) " यदायदा सतां हानिरात्मनो ग्लानिरेव च॥तदा कार्या शतावृत्ती रिपुघ्ना भूतिवर्धना ॥ १ ॥ दुःस्वप्नदर्शने घोरे महामारीसमुद्भवे॥पुष्टिप्रदा शतावृत्तिः कार्या चायुःक्षये तथा ॥ २ ॥ महाभये छेदयोगे दुर्भिक्षे मरणेपि च ॥ कुर्यात्तत्र शतावृत्तिं देवीमाहात्म्यमुत्तमम् ॥ ३ ॥ अद्भुते च समु त्पन्ने बांधवानां महोत्सवे ॥ कुर्याच्चंडीशतावृत्तिं सर्वसंपत्तिकारणम् ॥ ४ ॥ शतावृत्त्या भवेदायुः शतावृत्त्या समागमः ॥ वश्या भवंति राजानः श्रियमाप्नोति संपदा ॥ ५ ॥ धनार्थी प्राप्नुयादर्थं पुत्रकामो लभेत्सुतम् ॥ विद्यार्थी प्राप्नुयाद्विद्यां रोगी रोगात्प्रमु च्यते ॥ ६ ॥ चतुर्वर्गफलावाप्तिकारणं रिपुनाशनम् ॥ चंडीशतावृत्तिफलं नास्ति यज्ञे वरानने ॥ ७ ॥ विधिमत्र प्रवक्ष्यामि शृणु ष्व वरवर्णिनि ॥ निमंत्रयेत पूर्वेद्युर्विप्रान्विद्यासमन्वितान्॥ ८ ॥ अलोलुपानृजून्शांतान्देव्या भक्तिसमन्वितान् ॥ मंत्रोपतंत्रतंत्रज्ञा

ऽशतावृत्तौ नियोजयेत् ॥ ९ ॥ उत्तराशास्थिते हंसे शुक्लपक्षे तथा शुभे ॥ ज्ञार्केंदुभृगुजीवेषु सुयोगे सुतिथौ तथा ॥ १० ॥ पातकककचघंटादिदोषहीने स्थिरोदये ॥ न विदध्याद्धरौ सुप्ते भूकंपाकालवर्षणे ॥ ११ ॥ वज्रपाते महोत्पाते गुर्वादित्यादिके तथा ॥ महागुरौ विघ्ने च संवेशे कार्यवस्तुनः ॥ १२ ॥ शतावृत्त्यादियागं तु न विदध्यात्कदाचन ॥ त्रिपंचसप्तभिर्वापि नवैकादशभिस्तथा ॥ १३ ॥ अदीर्घदिवसैः क्षिप्रं विदध्याच्चंडिकामखम् ॥ अयुग्मब्राह्मणैः कार्या शतावृत्तिः सुसिद्धये ॥ १४ ॥ त्रिपंचसप्तभिर्वापि विप्रैः पंचदशैरपि ॥ देवीमाहात्म्यपठनं युग्मैर्विप्रैः कृतं तु यत् ॥ १५॥ निष्फलं च भवेत्सर्वं भूतिनाशः प्रजायते ॥ अष्टमी नवमी वापि यदि स्याद्वा चतुर्दशी ॥ १६ ॥ शतावृत्तिर्नवावृत्तिः पक्षावृत्तिः क्रमेण च ॥ शताश्वमेधगोमेधवाजपेयफलप्रदा ॥ १७ ॥ अतः किं बहुनोक्तेन चण्डीपाठफलं प्रिये ॥ प्रत्येकावर्तनं देवि हयमेधेन संमितम् ॥ १८ ॥ इति शतचण्डीविधानम् ॥ अथ सहस्रचंडीविधानपि (रुद्रयामले) "सहस्रचंडीं विधिवच्छृणु विष्णो महामते ॥ राज्यभ्रंशो ह्यकस्माच्चेज्जनमारे महाभये ॥ गजमारेऽश्वमारे च परचक्रभये तथा ॥ इत्यादिविविधे दुःखे क्षयरोगादिजे भये॥सहस्रं चंडिकापाठान्कुर्याद्वा कारयेत्तथा ॥ जापकास्तु शतं प्रोक्ताः विंशद्धस्तश्च मंडपः ॥ भोज्याः सहस्रं विप्रेंद्रा गोशतं दक्षिणां दिशेत्॥गुरवे द्विगुणं देयं शय्यादानं तथैव च ॥ सप्तधान्यं च भूदानं श्वेताश्वं च मनोहरम् ॥ पंचनिष्कमिता मूर्तिः कर्तव्या वर्धमानतः ॥ अष्टादशभुजा देवी सर्वायुधविभूषिता ॥ अन्नं वारि च दातव्य सहस्रं प्रत्यहं विभो ॥ शतं वा नियताहारः प्रायो मानेन वर्तयेत् । एवं यश्चंडिकापाठं सहस्रं तु समाचरेत् ॥ तस्य स्यात्कार्यसिद्धिस्तु नात्र कार्या विचारणा ॥ इति सहस्रचण्डीविधानम् ॥ अथ शतचण्डीसहस्रचण्डीप्रयोगः ॥ तत्र यजमानः पूर्वोक्तचंद्रताराादिबलान्विते सुमुहूर्ते शंकरस्य भवान्या वा प्रासादसमीपे सुसमे भूप्रदेशे स्वाभीष्टमामानां भूमिं स्वीकृत्य खननसंप्लावनमार्जनसंलेपनादिभिः संशोध्य । तत्र मण्डपं चिकीर्षुः गणेशकूर्मानंतवसुधाद्विजान् संपूज्य पंचगव्येन संप्रोक्ष्य श्वेतसर्षपान् विकीर्य भूम्यै अर्घ्यं दद्यात् । ततः शतचंड्यां षोडशहस्तम् (सहस्रचंड्यां विंशतिहस्तात्मकम् ) चतुर्द्वारतोरणपताकादियुतं निर्वातं मंडपं विधाय तन्मध्ये मण्डपतृतीयांशेन चतुर्हस्तां वा अष्टकोणयुतां वा चतुरस्रां पक्वेष्टकरचितां रम्यां हस्तोच्छ्रितां वेदिं कृत्वा । तत्पश्चिमे शतचंड्यां द्विहस्तं सहस्रचंड्यां चतुर्हस्तं कुंडं पद्माकृतिं चतुरस्रं वा मेखलायोनिकण्ठनाभिनालयुतं कुर्यात् ( ग्रहमखपक्षे तदीशान्यां हस्तमात्रां द्व्यंगुलवप्रां ग्रहवेदिमपि कुर्यात् ) एवं कुण्डग्रंथोक्तविधिना मण्डपादि रचयित्वा शतचंड्यां पलसुवर्णेन सहस्रचंड्यां पलपंचकेन मूर्त्यध्यायप्रतिपादितां महिषमर्दिनीप्रतिमां सावयवां कुर्यात् । एतत्सर्वमधिवासनदिनात्पूर्वं विधेयम् ॥ अथानुष्ठानारंभदिनकृत्यम् ॥ प्रारंभदिने सुमुहूर्ते सपत्नीको यजमानः प्रातस्तिलतैलाभ्यंगपूर्वकमुष्णोदकेन मङ्गलस्नानं कृत्वा शुक्लधौतवासांसि परिधाय यथायोग्यालंकृतो धृतकुंकुमकेशरान्यतममङ्गलत्रिपुंड्रतिलकः संपूर्णकलशहस्तः ॥ 'ॐ भद्रंकर्णेभिरि' ति मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविश्य । स्वासने प्राङ्मुख उपविश्य । दक्षिणपार्श्वे संभारान् संस्थाप्य । पत्न्या समा

रध्यः । आचम्य । प्राणानायम्य । ॐ आनोभद्रा । इति शांतिपाठं पठित्वा लक्ष्मीनारायणादिस्मरणं च कुर्यात् ॥ ततस्ताम्रपात्रे कुशजलगन्धपुष्पाणि कृत्वा । देशकालौ संकीर्त्य । अमुकगोत्रोऽमुकशर्माहं ममामुककामनासिद्ध्यर्थं सनवग्रहमखां शतचण्डीं ( सहस्रचण्डीं वा ) ब्राह्मणद्वारा कारयिष्ये ॥ तदंगतया विहितं गणेशपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धमाचार्यादिवरणं च करिष्ये । इति संकल्प्य । सुमुखश्चैकदंतश्चेत्यादिस्मरणपूर्वकं गणपतिपूजनपुण्याहवाचननांदीश्राद्धानि पूर्ववत्कृत्वाचार्यादिवरणं कुर्यात् ॥ अथाचार्यादिवरणप्रयोगः ॥ तत्र तावत् । आचार्यादीनुदङ्मुखानासनेषूपवेश्य स्वयं प्राङ्मुख उपविश्य । आचम्य । प्राणानायम्य । आचार्यस्य पादप्रक्षालनं कृत्वा । देशकालौ संकीर्त्य । अमुककार्यसिद्ध्यर्थं करिष्यमाणशतचंडीविधानयज्ञकर्मणि अमुकगोत्रोत्पन्नममुकवेदशाखाध्यायिनममुकशर्माणं ब्राह्मणमेभिर्गंधाक्षतपुष्पतांबूलस्वर्णांगुलीयकासनमालाकमंडलुवासोभिराचार्यत्वेन त्वामहं वृणे । इति वृत्वा ॐ वृतोस्मीति प्रतिवचनानन्तरमाचार्यहस्ते यज्ञकंकणं बद्ध्वा गंधादिभिः संपूज्य ॐ आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मम यज्ञेस्मिन्नाचार्यो भव सुव्रत ॥ १ ॥ इति प्रार्थयेत् । ततो नवऋत्विग्वरणमेकतंत्रेण पृथक् वा कुर्यात् । तद्यथा । सर्वेषां पादप्रक्षालनं कृत्वा । देशकालौ संकीर्त्य । अद्य करिष्यमाणशतचंडीविधानकर्मणि अमुकामुकगोत्रोत्पन्नानमुकामुकशर्मणो नव विप्रानेभिर्गंधाक्षतपुष्पतांबूलस्वर्णांगुलीयकासनमालाकमंडलुवासोभिराचार्येण सह नवार्णमंत्रजपपूर्वकं मार्कंडेयपुराणोक्तचंडीसप्तशतीस्तवशतसंख्यापरिमितपाठकरणार्थम् ऋत्विक्त्वेन युष्मानहं वृणे । इति वृत्वा । वृताः स्म इति तैरुक्ते प्रत्येकहस्ते वरणद्रव्याणि समर्प्य यज्ञकंकणं बद्ध्वा गंधादिभिः संपूज्य । " ॐ ऋत्विजश्च यथापूर्वं शक्रादीनां मखेऽभवन् ॥ यूयं तथा मे भवितुमृत्विजोऽर्हथ सत्तमाः ॥ १ ॥ अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ॥ सुप्रसन्नैः प्रकर्तव्यं शांतिकं विधिपूर्वकम् ॥ २ ॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ॥ अनुगृह्णंतु मामद्य शतचंड्याख्यकर्मणि ॥ ३ ॥ शतचंडीजपे पूज्याः संतु मे नियमान्विताः ॥ अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ॥ ४ ॥ चंडीध्यानरता नित्यं प्रसन्नमनसः सदा ॥ भालीकभाषिणः सन्तु मा सन्तु परनिंदकाः ॥५॥ ममापि नियमा ह्येते भवंतु भवतामपि ॥ इति प्रार्थ्यार्घ्यं निवेदयेत् ॥ ( एवं शतचंडीजपे ऋत्विजो नव ९ आचार्यो दशमः १० ) ( सहस्रचंड्यां शतमृत्विजः अष्टौ द्वारपालाश्च ) तत आचार्यादीनां सर्वेषां मधुपर्कपूजां कृत्वा प्रत्येकं वस्त्रद्वयम् । आसनम् अर्घ्यपात्रम् आचमनपात्रं जलपात्रं सुवर्णांगुलीयककर्णभूषणरुद्राक्षमाला

१ कामनाभेदेन पृथक्पृथक् संकल्पाः । ममेह जन्मनि दुर्गाप्रीतिद्वारा सर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनधान्यपुत्रपौत्राद्यनवच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थं दुर्गाप्रीतिकामो वा अनावृष्ट्यादिदुरितशांत्यर्थं वा नृपोपद्रवशांत्यर्थं वा दुर्भिक्षनिवारणार्थं वा भूमिकंपदाघनिवृत्त्यर्थं वा परचक्रभयराज्यभ्रंशादिभयविनाशार्थं वा विपूचिकाकालस्फोटकालज्वराद्यमुकजनमारमहारोगोपशांत्यर्थं वा नानाकेतूदयोल्कापातादिदोषनिवृत्त्यर्थं वा । मम जीवच्छरीराऽविरोधेनामुकरोगस्य समूलनाशनेनापमृत्युनिवारणद्वारा क्षिप्रारोग्यार्थं वा । अमुकराजकीयाभियोगनिवृत्त्यर्थं वा मम जन्मराशेः सकाशान्नामराशेः सकाशाद्वा जन्मलग्नाद्वर्षलग्नाद्गोचराद्वा चतुर्थाष्टमद्वादशाद्यनिष्टस्थानस्थिताऽमुकग्रहसूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशार्थं सर्वदा तृतीयैकादशशुभस्थानस्थितवद्धुतमफलप्राप्त्यर्थमथ वा अमुकमारकग्रहदशान्तर्दशातत्सम्बंधिदशाचोपदशादिनदशावा षष्ठाष्टमद्वादशादिनिषिद्धभावाधिपतिदशाजनितपीडाल्पायुराधिदैवाधिभौतिकाध्यात्मजनितक्लेशनिवृत्त्यर्थम्, आयुरारोग्यप्राप्त्यर्थं मदपुत्रत्वभार्यावंध्यत्वदोषनिवृत्तिपूर्वकसत्पुत्रप्राप्त्यर्थं शतचंडीविधानं ब्राह्मणद्वारा करिष्ये । इति संकल्पः कार्य्यः ॥

दि च यथाशक्ति दद्यात् । आचार्याय द्विगुणं देयम् ॥ तत आचार्यो देशकालौ संकीर्त्य–यजमानेन वृतोहमाचार्यकर्म करिष्ये । इति संकल्प्य । ॐ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥१॥ भूतप्रेतपिशाचाद्या ह्यपक्रामन्तु राक्षसाः ॥ स्थानादस्माद्व्रजंत्वन्यत्स्वीकरोमि भुवं त्विमाम् ॥ इत्युक्त्वा ईशानादिसर्वदिक्षु गौरसर्षपान् विकीर्य आचमनं कृत्वा पंचगव्येन कुशैः । पावमानसूक्तेन 'आपोहिष्ठामयोभुव' इतित्र्यृचेन च मण्डपं सर्वत्र प्रोक्ष्य कृतांजलिः 'स्वस्तिनऽइन्द्र' इति मंत्रं वारत्रयं पठेत् ( ततो मण्डपपक्षे मंडपदेवतापूजां ध्वजपताकोच्छ्रयणं च कुर्यात ) ततो मध्यवेद्याः पश्चिमतः सुखासने प्राङ्मुख उपविश्य । ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ १ ॥ इति भूमिं प्रार्थ्य । ॐ पृथ्वीकूर्मानंतदेवताभ्यो नमः । इति संपूज्य । भूमिं वामपादाघातत्रयं कृत्वा यथोपदेशं विस्तरतः संक्षेपेण वा भूतशुद्ध्यादि कलामातृकान्यासांतं पूर्ववत् कृत्वा नवार्णविध्युक्तैकादश न्यासान् कुर्यात् अथवा एकादशमेवैकं न्यासं कुर्यात् ( ते च न्यासाः पत्रे ( २०३ ) द्रष्टव्याः ) ततो योनिमुद्रां प्रदर्श्य श्रीमहालक्ष्मीं ध्यायेत् । "श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला ॥ रक्तमध्या रक्तपादा नीलजंघोरुरुन्मदा ॥ १ ॥ सुचित्रजघना चित्रमाल्यांबरविभूषणा ॥ चित्रानुलेपना कान्तिरूपसौभाग्यशालिनी ॥ २ ॥ अष्टादशभुजा पूज्या सा सहस्रभुजा सती ॥ आयुधान्यत्र वक्ष्यन्ते दक्षिणाधःकरक्रमात् ॥ ३ ॥ अक्षमाला च कमलं बाणोसिः कुलिशं गदा ॥ चक्रं त्रिशूलं परशुः शङ्खो घंटा च पाशकः ॥ ४ ॥ शक्तिर्दंडश्चर्म चापं पानपात्रं कमण्डलुः ॥" इति ध्यानं कृत्वा मानसोपचारैः संपूज्य पात्रासादन कुर्यात् । ततो मध्यवेद्यां सर्वतोभद्रं तन्मध्यकोष्ठेषु अष्टदलं च लिखित्वा तत्र ब्रह्मादिमण्डलदेवताः स्वस्वमन्त्रेण संस्थाप्य षोडशोपचारैः संपूज्य । तन्मध्ये पीठपूजां कुर्यात् तद्यथा । ॐ मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति पीठदेवताः संपूज्य । पूर्वादिषु । ॐ जयायै नमः ॥ १ ॥ विजयायै नमः ॥ २ ॥ अजितायै० ॥ ३ ॥ अपराजितायै० ॥ ४ ॥ नित्यायै० ॥ ५ ॥ विलासिन्यै० ॥ ६ ॥ दोग्ध्र्यै नमः ॥ ७ ॥ घोरायै नमः ॥ ८ ॥ मध्ये मङ्गलायै नमः ॥ ९ ॥ इति पीठशक्तीः पूजयेत् । ॐ ह्रीं सर्वशक्तिकमलासनाय सर्वात्मसंसर्गयोगपीठात्मने नमः । इति पुष्पाञ्जलिनासनं दत्त्वा तत्र महीद्यौइत्यादिपूर्वोक्तमंत्रैर्बृहत्ताम्रकलशं संस्थाप्य । तस्मिन् गन्धपुष्पफलसर्वौषधीदूर्वापञ्चपल्लवपञ्चरत्नसुवर्णसप्तमृत्तिकादीनि तत्तन्मन्त्रेण निक्षिप्य कौशेयवस्त्रद्वयेन संवेष्ट्य तदुपरि ताम्रपूर्णपात्रं निधाय कलशे 'तत्त्वायामीति' वरुणमावाह्य संपूज्य । कलशदेवताः स्मृत्वा । 'कलशस्य मुखे विष्णुः' इत्यभिमन्त्र्य । 'देवदानवसंवादे' इत्यादि प्रार्थयेत् । ततः कलशोपरिष्ठपूर्णपात्रे रक्तवस्त्रेऽष्टगन्धेन यन्त्रं लिखेत् ( अथवा ) ताम्रपात्रे लिखितं यन्त्रं स्थापयेत् । ( यन्त्रप्रकारः * ) मध्ये त्रिकोणं तद्बहिः षट्कोणं तद्बाह्ये वृत्तं तद्बाह्येऽष्टौ दलानि तद्बाह्ये चतुर्विंशतिदलानि तद्बाह्ये चतुर्द्वारं ( चतुरस्रत्रयमिति यन्त्रं विलिख्य तत्र सिंहासने शतचण्ड्यां पलसुवर्णेन ( सहस्रचंड्यां पंचपलेन ) तदर्धेन तदर्धार्धेन वाष्टादशभुजाम् अष्टभुजां वा सिंहारूढां

*अत्रत्य चण्डिकायन्त्रं पूर्वत्र द्रष्टव्यम् ।

पूर्वोक्तध्यानयुतां देवीमूर्तिं कारयित्वा अग्न्युत्तारणपूर्वकं संस्थाप्य प्राणप्रतिष्ठां कृत्वा पूजयेत् ॥( प्राणप्रतिष्ठामन्त्राः पूर्वमुक्ता एव ) अथ पूजनप्रकारः ॥ स्ववामे कर्पूरादियुतगङ्गाजलपूर्णं कलशं निधाय संपूज्य । 'कलशस्य मुखे विष्णुः' इत्यादि पठित्वा कलश मुद्रां प्रदर्श्य दक्षिणतः शंखं संपूज्य शंखमुद्रां प्रदर्श्य शंखोदकेनात्मानं पूजाद्रव्याणि च प्रोक्ष्य नवरात्रोक्तविधानवत् मूलेन श्रीसूक्तेन वा आवाहनादिपुष्पान्तैरुपचारैः भगवतीं संपूज्य आवरणपूजां कुर्य्यात् ॥ अथावरणपूजा ॥ पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य प्रदक्षिणक्रमेण पूजयेत् । तद्यथा-त्रिकोणमध्ये मूलमन्त्रेण देवीं गन्धादिभिः संपूज्य त्रिकोणस्य ( पूर्वकोणे ) ॐ सरस्वतीसहिताय ब्रह्मणे नमः ॥ १ ॥ ( नैर्ऋत्याम् ) ॐ श्रीसहिताय विष्णवे नमः ॥ २ ॥ ( वायव्याम् ) ॐ उमासहिताय शिवाय नमः ॥ ३ ॥ ( उत्तरे ) ॐ सिंहाय नमः ॥ ४ ॥ ( दक्षिणे )ॐ महिषाय नमः ॥ ५ ॥( इति त्रिकोणदेवताः पूजयेत) (षट्कोणमण्डले) पूर्वादिषट्कोणे वामक्रमेण ॐ नं नंदजायै नमः ॥१॥ ॐ रं रक्तदंतिकायै नमः ॥ २ ॥ ॐ शां शाकंभर्यै नमः ॥ ३ ॥ ॐ दुं दुर्गायै नमः ॥ ४ ॥ ॐ भीं भीमायै नमः ॥ ५ ॥ॐ भ्रां भ्रामर्य्यै नमः ॥ ६ ॥ ( अष्टदले वाममार्गक्रमेण ) ॐ ब्रां ब्राह्म्यै नमः ॥ १ ॥ ॐ मां माहेश्वर्य्यै नमः ॥ २ ॥ ॐ कौं कौमार्यै नमः ॥ ३ ॥ ॐ वैं वैष्णव्यै नमः ॥ ४ ॥ ॐ वां वाराह्यै नमः ॥ ५ ॥ ॐ नां नारसिंह्यै नमः ॥ ६ ॥ॐ ऐं ऐन्द्र्यै नमः ॥ ७ ॥ ॐ चां चामुंडायै नमः ॥८॥ ( ततश्चतुर्विंशतिदलेष्वपि तेनैव क्रमेण ) ॐ विं विष्णुमायायै नमः ॥ १ ॥ॐ चें चेतनायै नमः ॥ २ ॥ ॐ बुं बुद्ध्यै नमः ॥३॥ ॐ निं निद्रायै नमः ॥ ४ ॥ ॐ क्षुं क्षुधायै नमः ॥ ५ ॥ ॐछां छायायै नमः ॥ ६ ॥ ॐ शं शक्त्यै नमः ॥ ७ ॥ ॐ तृं तृष्णायै नमः ॥ ८ ॥ ॐ क्षां क्षांत्यै नमः ॥ ९ ॥ॐ जां जात्यै नमः ॥ १० ॥ ॐ लं लज्जायै नमः ॥ ११ ॥ ॐ शां शांत्यै नमः ॥ ॥ १२ ॥ ॐ श्रं श्रद्धायै नमः ॥ १३ ॥ॐ कां कांत्यै नमः ॥ १४ ॥ ॐ लं लक्ष्म्यै नमः ॥१५॥ ॐ धृं धृत्य नमः ॥१६॥ ॐ वृं वृत्त्यै नमः ॥ १७ ॥ ॐ श्रुं श्रुत्यै नमः ॥ १८॥ॐ स्मृं स्मृत्यै नमः ॥ १९ ॥ॐ तुं तुष्ट्यै नमः ॥ २० ॥ ॐ पुं पुष्ट्यै नमः ॥ २१ ॥ ॐ दं दयायै नमः ॥ २२ ॥ ॐ मां मात्रे नमः ॥ २३ ॥ ॐ भ्रां भ्रांत्यै नमः ॥ २४ ॥ ततो बहिर्भूगृहचतुष्कोणेषु । ( ईशान्याम् ) ॐ गं गणपतये नमः ॥ १ ॥ ( आग्नेय्याम् ) ॐ क्षं क्षेत्रपालाय नमः ॥ २ ॥ ( नैर्ऋत्याम् ) ॐ बं बटुकाय नमः ॥ ३ ॥( वायव्याम् )ॐ यों योगिनीभ्यो नमः ॥ ४ ॥ पुनः ( पूर्वादिषु ) प्रदक्षिणक्रमेण ॥ ॐ लं इंद्राय नमः ॥ १ ॥ ॐ रं अग्नये नमः ॥ २ ॥ ॐ मं यमाय नमः ॥ ३ ॥ ॐ क्षं निर्ऋतये नमः ॥ ४ ॥ ॐ वं वरुणाय नमः ॥ ५ ॥ ॐ यं वायवे नमः ॥ ६ ॥ ॐ सों सोमाय नमः ॥ ७ ॥ ॐ हं रुद्राय नमः ॥८॥ ॐ ब्रं ब्रह्मणे नमः ॥९॥ (अधः) ॐ अं अनंताय नमः इति पूजयेत् । तद्बाह्ये ॐ वज्राय नमः ॥ १ ॥ शक्तये नमः ॥ २ ॥ दंडाय नमः ॥ ३ ॥ खड्गाय नमः ॥ ४ ॥ पाशाय नमः ॥ ५ ॥ अंकुशाय नमः ॥ ६ ॥ गदायै नमः ॥ ७ ॥ त्रिशूलाय नमः ॥८॥ पद्माय नमः ॥९॥चक्राय नमः ॥ १० ॥ इत्यायुधानि च पूजयेत । एवमावरणपूजां कृत्वा देव्यै हरिद्राकुंकुमसिंदूररक्तचंदनालक्तकपरिमलद्रव्याणि समर्पयेत् ॥ अथांगपूजा ॥ ॐ दुर्गायै नमः पादौ

पूजयामि ॥ ॐ गिरिजायै नमः गुल्फौ पूजयामि ॥ ॐ अपर्णायै नमः जानुनी पूजयामि ॥ ॐ हरिप्रियायै नमः ऊरू० ॥ ॐ पार्वत्यै० कटिं पू० । ॐ आर्यायै नमः नाभिं० । ॐ जगन्मात्रे० उदरं० ।ॐ मंगलायै०कुक्षिं० । ॐ शिवायै० हृदयं० । ॐ माहेश्वर्य्यै० कंठं० । ॐ विश्ववंद्यायै० स्कंधौ० । ॐ काल्यै० बाहू० । ॐ आद्यायै हस्तौ० । ॐ वरदायै मुखं० । ॐ ण्यै० नासिकां० । ॐ कमलाक्ष्यै०नेत्रे० । ॐ अंबिकायै० शिरः० । ॐ देव्यै० सर्वांगं पूजयामि । इत्यंगपूजां कृत्वा ततः पूर्वोक्त मंत्रैर्धूपदीपनानाविधनैवेद्यतांबूलपूगीफलदक्षिणादिमंत्रपुष्पांतपूजां कृत्वा राजोपचारान्निवेद्य शतवर्तिकाभिर्दशभिर्वा कर्पूरगर्भिता भिर्महानीराजनं प्रदक्षिणामेकां नमस्कारांश्च कृत्वा । 'नमो देव्यै महादेव्यै' इत्यादिमंत्रैः स्तुतिं कृत्वा यथासंभवं छत्रचामरव्यजन घंटागीतनृत्यवाद्यादि समर्प्य कूष्मांडनारीकेलकदलीफलेक्षुदंडादिबलिं दत्त्वा अखण्डदीपकं प्रतिष्ठापयेत् । ततो योगिनीक्षेत्रपा लपूजां कुर्यात् ॥ अथ चतुषष्टियोगिनीपूजा ॥ देव्यग्रे रक्तवस्त्रोपरि तंडुलान्नेन गोधूमैर्वा अष्टौ पङ्क्तिरूपेण चतुःषष्टिकोष्ठानि कृत्वा तत्र क्रमेण । ॐ जये इहागच्छ इहतिष्ठ इत्यावाहयेत् ॥१॥ एवं ॐ विजये इहागच्छ इहतिष्ठ ॥२॥ॐ जयंति इहा० ॥ ३ ॥ ॐ अपराजिते इहा० ॥ ४ ॥ ॐ दिव्ययोगिनि० ॥ ५ ॥ ॐ महायोगिनि ॥ ६ ॥ ॐ सिद्धयोगिनि० ॥ ७ ॥ ॐ गणेश्वरि० ॥ ॥ ८ ॥ ( इति प्रथमाष्टकम् ) ॐ प्रेतासनि इहा० ॥ ९ ॥ ॐ डाकिनि इहा० ॥ १० ॥ ॐ कालि इहा० ॥ ११ ॥ ॐ कालरात्रि इहा० ॥ १२ ॥ ॐ निशाचरि इहा० ॥ १३ ॥ ॐ टङ्कारिणि इहा० ॥ १४ ॥ ॐ रुद्रवेतालिनि इहा० ॥ १५ ॥ ॐ हुङ्कारिणि इहा० ॥ १६ ॥ ( इति द्वितीयाष्टकम् ) ॐ ऊर्ध्वकेशि इहा० ॥ १७ ॥ ॐ विरूपाक्षि इहा० ॥ १८ ॥ ॐ शुष्कांगि इहा० ॥ ॥ १९ ॥ ॐ नरभोजिनि इहा० ॥ २० ॥ ॐ फट्कारिणि इहा० ॥ २१ ॥ ॐ वीरभद्रे इहा० ॥२२ ॥ॐ धूम्रांगि इहा० ॥२३॥ ॐ कलहप्रिये इहा० ॥ २४ ॥ ( इति तृतीयाष्टकम् ) ॐ राक्षसि इहा० ॥ २५ ॥ ॐ रक्ताक्षि इहा० ॥ २६ ॥ ॐ विश्वरूपे इहा० ॥ २७ ॥ ॐ भयंकरि इहा० ॥ २८ ॥ ॐ वीरकौमारि इहा० ॥ २९ ॥ ॐ चंडिके इहा० ॥ ३० ॥ ॐ वाराहि इहा० ॥ ॥ ३१ ॥ ॐ मुंडधारिणि इहा० ॥ ३२ ॥ ( इति चतुर्थाष्टकम् ) ॐ भैरवि इहा० ॥ ३३ ॥ ॐ ध्वांक्षिणि इहा० ॥ ३४ ॥ ॐ धूम्रांगि इहा० ॥ ३५ ॥ ॐ प्रेतवाराहि इहा० ॥ ३६ ॥ ॐ खड्गिनि इहा० ॥ ३७ ॥ ॐ दीर्घलम्बोष्ठि इहा० ॥ ३८ ॥ ॐ मालिनि इहा० ॥ ३९ ॥ ॐ मन्त्रयोगिनि इहा० ॥ ४० ॥ ( इति पञ्चमाष्टकम् ) ॐ कालिनि इहा० ॥ ४१ ॥ ॐ चक्रिणि इहा० ॥ ४२ ॥ ॐ कंकालि इहा० ॥ ४३ ॥ ॐ भुवनेश्वरि इहा० ॥४४॥ॐ शटकि इहा० ॥ ४५ ॥ ॐ महामारि इहा०॥४६॥ ॐ यमदूति इहा० ॥ ४७ ॥ ॐ करालिनि इहा० ॥ ४८ ॥ ( इति षष्ठाष्टकम् ) ॐ केशिनि इहा० ॥ ४९ ॥ ॐ मर्दिनि इहा० ॥ ५० ॥ ॐ रोमजंघे इहा० ॥ ५१ ॥ ॐ निवारिणि इहा० ॥ ५२ ॥ ॐ विशालिनि इहा० ॥ ५३ ॥ ॐ कार्मुकि इहा० ॥ ५४ ॥ ॐ लोलि० इहा० ॥५५॥ ॐ अधोमुखि इहा० ॥५६॥ ( इति सप्तमाष्टकम् ) ॐ मुण्डाग्रधारिणि इहा० ॥५७॥ ॐ व्याघ्रि इहा० ॥ ५८ ॥ ॐ कांक्षिणि इहा० ॥ ५९ ॥ ॐ प्रेतरूपिणि इहा० ॥ ६० ॥ ॐ धूर्जटि इहा० ॥ ६१ ॥ ॐ

घोरि इहा० ॥ ६२ ॥ ॐ करालि इहा० ॥ ६३ ॥ ॐ विषलम्बिनि इहागच्छ इहतिष्ठ ॥ ६४ ॥ ( इत्यष्टमाष्टकम् ) एवमावाह्य । ॐ मनोजूतिरिति प्रतिष्ठाप्य ॐ चतुःषष्टियोगिनीभ्यो नमः । इति नाममन्त्रेण षोडशोपचारैः सम्पूज्य पायसबलिं दद्यात् ॥ ततस्तत्रैव एकदेशे ॐ बं बटुकाय नमः । ॐ क्षं क्षेत्रपालाय नमः । इति संपूज्य ॥ ॐ बं बटुकाय पिंगलभासुरनेत्राय बलिं गृहाण गृहाण भक्ष भक्ष कन्दन कन्दन ह्रीं ह्रूं स्वाहा।इति मन्त्रेण बटुकाय क्षेत्रपालाय पायसादिनानाद्रव्यबलिंदत्त्वा।हस्तौ प्रक्षाल्याचामेत्॥ ततः अनेन पूजनेन श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यः प्रीयन्तामिति देवीदक्षिणतो जलमुत्सृज्य देव्यग्रे कुमारीपूजां कुर्यात् । तद्यथा । देशकालौ संकीर्त्य । शतचण्डीजपांगत्वेन कुमारीपूजां करिष्ये इति संकल्प्य । नवार्णमन्त्रेण पूर्वोक्तं षडङ्गन्यासं कृत्वा । ॐ मन्त्राक्षरमयीं देवीं मातृणां रूपधारिणीम् ॥ नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥ १ ॥ इत्यावाह्य पूर्वोक्त नवरात्रविधिना यथासम्भव पूजयेत् । कुमार्यश्च प्रत्यहं शतं नव वा यथाशक्ति वा पूज्याः प्रत्यहमेकवृद्ध्या वा पूजयेत् । ततो ब्राह्मणसुवासिनीपूजा । एवं देवीकुमार्यादिपूजा प्रत्यहं कार्या । द्वितीयदिने द्विगुणा २ तृतीये त्रिगुणा ३ चतुर्थे च चतुर्गुणा४ विधेया । इति पूजाप्रयोगः । अथ पाठक्रमः । तावत् दुर्गापुरतो मृद्वासनेषूपविष्टाः सर्वे विप्राः पूर्वोक्तनवार्णमन्त्रकृताङ्गन्यासाः समाहितमनसो वाग्यताः भगवतीं स्मरन्तो मन्त्रार्थगतमानसाः कवचार्गलाकीलकानि सकृज्जप्त्वा प्रत्येकं शतं नवार्णमन्त्रं च जप्त्वा । ग्रन्थार्थं बुध्यमानाः स्पष्टाक्षरं नातिशीघ्रं नातिमन्दं रसभावस्वरयुतं मार्कंडेयपुराणोक्तं सप्तशतीस्तवं जपेयुः । ततो जपान्ते रहस्यत्रयं पुनर्नवार्णमन्त्रशतं रहस्यत्रयं च जपेयुः । एकस्मिन्दिने अनेकावृत्तौ तु कवचादीनां प्रत्यावृत्तौ नावृत्तिः । एवं प्रथमदिने एकावृत्तिः॥ द्वितीये द्वे तृतीये तिस्रः३चतुर्थे चतस्रः४रूपाणीत्येवं जपं कुर्युः । यजमानसहिताः सर्वे भूमौ शयानाः नित्यं क्षीरान्नभोजनाः अशक्तौ हविष्यमश्नंतः संतुष्टास्त्यक्तमत्सरा ब्रह्मचर्यास्पृश्यास्पर्शादिनियमांश्चरेयुः । एवं शतसहस्रावृत्तयः संपद्यन्ते । ( क्रोडतन्त्रे त्रिपञ्चसप्तनवभिर्दिनैः पक्षेण वा पुनः ॥ अदीर्घदिवसैः क्षिप्रं विदध्याच्चण्डिकामखमित्यपि लिखितम्) प्रत्यहं सहस्रं शतं दश वा ब्राह्मणान् भोजयेत् । प्रत्यहं रात्रौ जागरणं कार्यम् । ततः पञ्चमेऽह्नि होमः । नवरात्रे तु नवम्यामेव होमः । चतुर्दश्यष्टमीनवम्यन्यतमदिने समाप्तिः कार्या । अथ होमप्रयोगः । देशकालौ संकीर्त्य मया ब्राह्मणद्वारा कृतस्य शतचंडीजपस्य तत्संपूर्णतासिद्ध्यर्थं जपदशांशेन तिलादिमिश्रपायसद्रव्येण होमं करिष्ये । तदंगत्वेन कुंडसंस्कारपूर्वकमग्निप्रतिष्ठापनं च करिष्ये । इति संकल्प्य । सामान्यतो गणपतिपूजनं विधाय कुंडे स्थंडिले वा पञ्चभूसंस्कारान् कृत्वा तत्र शतनामानमग्निं प्रतिष्ठाप्य सुसमिध्य ध्यायेत [ अत्र केचित्तु पुण्याहवाचनं तथा नान्दीश्राद्ध सर्वतोभद्रादिमण्डलपूजन च कुर्वन्ति ] तत ईशान्यां दिशि ग्रहवेद्यां तत्तन्मंत्रेण सूर्यादिग्रहान्संस्थाप्य संपूज्य तदीशान्यां पूर्ववत्कलशं स्थापयेत । ततः पूर्ववत यन्त्रावरणदेवतापूजां देवीपूजां च कृत्वा ततोऽग्निसमीपमागत्य कुशकंडिकां कृत्वा आघारावाज्यभागौ हुत्वा देशकालौ संकीर्त्य क्रियमाणे शतचण्डीजपाङ्गहोमे इदं हवनीय द्रव्यं यथादवतमस्तु न मम इति त्याग कृत्वा । सूर्यादिग्रहेभ्योऽर्कादिसमिच्चरुतिलाज्यद्रव्यैरष्टाविंशतिसंख्याकाभिराहुतिभि

स्तैरेव द्रव्यैरधिप्रत्यधिदेवताभ्यश्चतुश्चतुःसंख्याकाभिः । विनायकादिदिक्पालान्तक्रतुसंरक्षकदेवताभ्यश्च द्विद्विसंख्याका भिश्च जुहुयात् । ततः सर्वतोभद्रमण्डलस्थदेवताहोमं कृत्वा प्रधानदेवतामहाकालीमहालक्ष्मीमहासरस्वतीभ्यो गुडूचीपायसदूर्वातिलपलाशपुष्पसर्षपपूगीफललाजायवबिल्वफलरक्तचन्दनगुग्गुलुद्राक्षारम्भाफलद्रव्यैस्त्रिमध्वक्तैरिक्षुखण्डैर्नारिकेलशकलैर्जातीफलैर्मातुलुङ्गैरन्यैर्मधुरवस्तुभिश्च तिलमिश्रघृताक्तपायसेन वा ( शूलेन पाहि नो देवि इत्यादि चतुर्मन्त्रवर्जसप्तशत्या दशावृत्त्या प्रतिश्लोकं जुहुयुः ) तैरेव द्रव्यैर्नवार्णमन्त्रजपदशांशेनापि जुहुयुः । अध्यायसमाप्तौ उवाचस्थले च पत्रपुष्पैर्होमः कार्यः । एवं प्रधानदेवहोमं कृत्वा पूर्वोक्तजयादिपीठशक्तिभ्यो यन्त्रावरणदेवताभ्यश्च योगिनीभ्यश्च एकैकयाहुत्या साज्यं पायसं च जुहुयात् । ततः स्विष्टकृदादिप्रायश्चित्तहोमान्तं कृत्वा इन्द्रादिलोकपालेभ्यः सूर्यादिग्रहेभ्यः क्षेत्रपालादिभ्यश्च माषभक्तबलींस्तत्तन्मन्त्रैर्दद्यात् । ततो हस्तौ पादौ प्रक्षाल्याचम्य । 'समुद्रादूर्मिः' इत्यादिमन्त्रैः । नवार्णमन्त्रेण 'नमो देव्यै महादेव्यै' इत्यादिमन्त्रैश्च पूर्णाहुतिं दत्त्वा प्रणीताविमोकादिकर्म्मशेषं समाप्य होमान्ते जले चण्डिकां संपूज्य मूलमन्त्रेण होमदशांशेन दुग्धमिश्र जलेन । ॐ देवीं चंडिकां तर्पयामीत्युक्त्वा तर्पणं कार्यम् ॥ ततस्तर्पणदशांशेन मूलमन्त्रान्ते । आत्मानमभिषिंचामि नमः । इति यजमानमूर्ध्न्यभिषेकः कार्यः । ततो यजमानःआचार्यादीन् वस्त्राद्यैः संपूज्य तेभ्यो निष्कं सुवर्णं वा गोमिथुनानि च प्रत्येकं दक्षिणां दद्यात् । आचार्याय द्विगुणं देयम् । सति संभवे कपिलगोनीलमणिश्वेताश्वच्छत्रचामरभूमिशय्यासप्तधान्यानि यथासंभवं दद्यात् । तत आचार्यादयः कलशोदकेन सपत्नीकं सकुटुंबं यजमानं वेदमंत्रैः ' सुरास्त्वा० ' इत्यादिपौराणिकैर्ग्रहमंत्रैश्चाभिषिंचेयुः । ततो यजमानो ग्रहाणामुत्तरपूजां कृत्वा ग्रहाग्निं विसृज्य । देवीं पंचोपचारैः संपूज्य ॥ महाबलिं दद्यात् ॥ ( तत्र क्षत्रियादिनाऽश्वमेषच्छाग महिषाणामन्यतरो देयः ) विप्रेण तु कूष्मांडबिल्वफलमिक्षवश्च देयाः । तद्यथा । देवीं द्रोणपुष्पबिल्वपत्राम्रदलजातीचंपकैः संपूज्य कर्ता उदङ्मुखः पूर्वमुखं देव्यभिमुखं वा बलिं गंधादिनाभ्यर्च्य । पशुस्त्वं बलिरूपेण मम भाग्यादुपस्थितः ॥ प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥१॥ चंडिकाप्रीतिदानेन दातुरापद्विनाशनम् ॥ चामुंडाबलिरूपाय बले तुभ्यं नमोस्तु मे ॥ २ ॥ यज्ञार्थं बलयः सृष्टाः स्वयमेव स्वयंभुवा ॥ अतस्त्वां घातयाम्यद्य तस्माद्यज्ञे वधोऽवधः ॥ ३ ॥ " इति बलिमभिमन्त्र्य ॐ ह्रीं श्रीं इति मंत्रपुष्पं क्षिप्त्वा । " रसना त्वं चंडिकायाः सुरलोकप्रसाधकः ॥ १ ॥ " ॐ ह्रां ह्रीं खड्ग आं हुं फट् । इति खड्ग मन्यद्वा शस्त्रं संपूज्य । ॐ कालिकालि यज्ञेश्वरि लोहदंडायै नमः । इति बलिं छेदयित्वा । ॐ ऐं ह्रीं कौशिकि रुधिरेणाप्यायताम् । इति देव्यै निवेद्य । ततो माषपिष्टमयं शत्रुं कृत्वा खड्गेन च्छेदयित्वा स्कंदाय विशिखाय च दत्त्वा बलिशेष रक्षोभ्यो हरेत् । मंत्रस्तु । ॐ ह्रीं स्फुरस्फुर कुंभ २ सृनु २ गुलु २ धुनु २ मारय २ विद्रावय २ विदारय २ कंपय २ कंपातय २ पूरय २ ॐ ह्रीं ॐ हुं फट् हुंमर्दय २ हुम् । ततः शेषबलिं बहिर्दद्यात् ॥ "बलिं गृह्णंत्विमं देवा आदित्या वसवस्तथा ॥ मरुतश्चा

१ मधुरत्रयमाह कात्यायनः । 'आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते ।'

श्विनौ रुद्राः सुपर्णाः पन्नगाः खगाः ॥ असुरा यातुधानाश्च पिशाचोरगराक्षसाः ॥ डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥ जृंभकाः सिद्धगंधर्वा नागा विद्याधरा नगाः ॥ दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥ जगतां शांतिकर्तारो ब्रह्माद्याश्च महर्षयः । मा विघ्नं मा च मे पापं मा संतु परिपंथिनः ॥ सौम्या भवंतु तृप्ताश्च भूतप्रेताः सुखावहाः॥" इति मंत्रान् पठेत् । अयं बलिः शूद्रेण दुर्ब्राह्मणेन वा नेयः । ततः स्नात्वा तिलकं धृत्वा देवीं प्रार्थयेत् ॥ तत्र मंत्राः । " खड्गिनी शूलिनी घोरा० ॥ १ ॥ शूलेन पाहि नो देवि० ॥ ४ ॥ नमो देव्यै महादेव्यै० ॥ ६ ॥ रूपं देहि यशो देहि भगं भगवति देहि मे ॥ पुत्रान् देहि धनं देहि सर्वान्कामांश्च देहि मे ॥ १ ॥ महिषघ्नि महामाये चामुंडे मुंडमालिनि ॥ आयुरारोग्यमैश्वर्यं देहि देवि नमोस्तु ते ॥ २॥ इति देवीं संप्रार्थ्य । गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धिर्भवतु मे देवि प्रसादात्तव सुंदरि ॥ १ ॥ इति देव्यै जपं निवेद्य । देशकालौ संकीर्त्य कृतस्य कर्मणः सांगतासिद्ध्यर्थं कुमारीर्ब्राह्मणसुवासिनीर्भोजयिष्ये । इति संकल्प्य पूजापूर्वकं ब्राह्मणशत नानाभक्ष्यभोज्यैः संभोज्य तेभ्यो भूयसीं दक्षिणां दत्त्वा प्रदक्षिणां कृत्वा आशिषो गृह्णीयात् । ततो मूल मंत्रेण पुष्पेण देवीमुद्वास्य तेनैव षडंगं कृत्वा । " उत्तिष्ठ ब्रह्मण० ॥१॥ उत्तिष्ठ देवि चंडेशि शुभां पूजां प्रगृह्य च ॥ कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ॥२॥ " इति विसृज्य प्रतिमामाचार्याय दत्त्वा मंत्रं पठेत् ॥ "त्रैलोक्यमातर्देवि त्वं सर्वभूतदयान्विते ॥ दानेनानेन संतुष्टा सुप्रीता वरदा भव ॥ १ ॥ ततः यस्यस्मृत्या० ॥ १ ॥ प्रमादात्कुर्वतां० ॥ २ ॥ " इत्यादि पठित्वा कर्मेश्वरार्पणं कृत्वा सुहृद्युक्तो भुंजीत । एतद्दशगुणो विधिः सहस्रचंड्यां तद्दशगुणो विधिरयुतचंड्यां च ज्ञेयः शेष शतचंडीवत् ॥ एवं कृते जगद्वश्यं सर्वे नश्यंत्युपद्रवाः ॥ राज्यं धनं यशः पुत्रानिष्टमन्यल्लभेत सः ॥१॥ इति पण्डितश्रीचतुर्थीलालगौडविरचिते ऽनुष्ठानप्रकाशे शतचण्डीविधानप्रयोगः ॥ श्रीचंडिकार्पणमस्तु ॥ ॥ अथ देव्यथर्वशीर्षम् ॥ ॐ सर्वेवैदेवादेवीमुपतस्थुःकासि त्वंमहादेवीसाब्रवीदहंब्रह्मस्वरूपिणीमत्तःप्रकृतिपुरुषात्मकंजगच्छून्यंचाशून्यंचअहमानन्दानानन्दौअहंविज्ञानाविज्ञानेअहंब्रह्माब्रह्मणी द्रेब्रह्मणीवेदितव्ये ॥ इति वाथर्वणीश्रुतिः ॥ अहंपञ्चभूतानिअहंपञ्चतन्मात्राणिअहमखिलंजगत्वेदोहमवेदोहंविद्याहमविद्याहम् अजाहमनजाहम्अधश्चोर्ध्वंचतिर्यञ्चाहम्अहँ रुद्रेभिर्वसुभिश्चरामिअहमादित्यैरुतविश्वेदेवैःअहंमित्रावरुणावुभौबिभर्मिअहमिन्द्राग्नीअहमश्विनावुभौअहँसोमन्त्वष्टारंपूषणंभगंदधामिअहविष्णुमुरुक्रमं ब्रह्माणमुतप्रजापतिं दधामि अहंदधामि द्रविणँ हविष्मतेसुप्राव्येयजमानायसुन्वते अहँराष्ट्रीसङ्गमनीवसूनाचिकितुषीप्रथमायज्ञियानाम् अहँसुवे पितरमस्य मूर्द्धन्मम योनिरप्स्वात् समुद्रेयएवंवेदसदैवीँ सम्पदमाप्नोतितेदेवाअब्रुवन् " नमो देव्यै महादेव्यै शिवायै सततं नमः ॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्॥तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टां दुर्गां देवीं शरणं प्रपद्यामहेऽसुरान्नाशयित्र्यै तेनमः देवींवाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सानोमन्द्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु । कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम् । सरस्वतीमदितिंदक्षदुहितरं नमामः । पावनां शिवाम् । महालक्ष्म्यैचविद्महेसर्वशक्त्यैचधीमहि । तन्नोदेवीप्रचो

दयात् । अदितिर्ह्यजनिष्टदक्षयादुहितातव । तांदेवा अन्वजायन्ते भद्रा अमृतबन्धवः कामेयोनिः कमलावज्रपाणिर्गुहाहंसामातलिश्वा अभिन्द्रः पुनर्गुहा सकलामायया चापृथक्‍ क्लेशाविश्वमातादिविद्याः । एषात्मशक्तिः एषाविश्वमोहिनीपाशाङ्कुशधनुर्बाणधरा । एषाश्रीमहाविद्या । यएवंवेदसशोकंतरति । नमस्तेभगवतिमातरस्मान्पाहिसर्वतः । सैषावैष्णवावसवः सैषैकादशरुद्राः सैषाद्वादशादित्याः सैषाविश्वेदेवाः सोमपाअसोमपाश्चसैषायातुधानाअसुररक्षांसिपिशाचयक्षसिद्धाः सैषासत्त्वरजस्तमांसिसैषाब्रह्मविष्णुरुद्ररूपिणी सैषाप्रजापतीन्द्रमनवः सैषाग्रहनक्षत्रज्योतिष्कलाकाष्ठादिविश्वरूपिणीतामहं प्रणौमिनित्यम् । पापापहारिणीदेवीभुक्तिमुक्तिप्रदायिनी । अनन्तांविजयांशुद्धांशरण्यांसर्वदाशिवाम् ॥ वियदाकारसंयुक्तंवीतिहोत्रसमन्वितम् ॥ अर्द्धेन्दुलसितं देव्याबीजंसर्वार्थसाधकम् । एवमेकाक्षरंमन्त्रं यतयः शुद्धचेतसः ॥ ध्यायन्तिपरमानन्दमयाज्ञानाम्बुराशयः ॥ वाङ्मयाब्रह्मभूस्तस्मातषष्ठवक्त्रसन्वितम् ॥ सूर्योवामश्रोत्रबिंदुसंयुक्ताष्टतृतीयकम् । नारायणेनसंमिश्रोवायुश्चाधारयुक्तयः । विच्चेनवार्णकोणस्यमहानानंददायकः । हृत्पुण्डरीकमध्यस्थांप्रातःसूर्यसमप्रभाम् ॥ पाशाङ्कुशधरांसौम्यांवरदाभयहस्तिकाम् ॥ त्रिनेत्रांरक्तवसनां भक्तकामदुहंभजे । भजामित्वांमहादेविमहाभयविनाशिनि । महादारिद्र्यशमनिमहाकारुण्यरूपिणि ॥ यस्याः स्वरूपंब्रह्मादयोनजानन्तितस्मादुच्यते अज्ञेया । यस्या अन्तोनलभ्यतेतस्मादुच्यतेऽनन्ता । यस्यालक्षंनोपलक्ष्यतेतस्मादुच्यतेअलक्ष्या । यस्याजननंनोपलक्ष्यते तस्मादुच्यते अजा । एकैवसर्वत्रवर्ततेतस्मादुच्यते एका । एकैवविश्वरूपिणीतस्मादुच्यतेऽनेका । अतएवोच्यतेऽज्ञेयानन्तालक्ष्याजैकानेकामंत्राणांमातृकादेवीशब्दानांज्ञानरूपिणी ज्ञानानांचिन्मयातीताशून्यानांशून्यसाक्षिणी । यस्याः परतरंनास्तिसैषादुर्गाप्रकीर्तिता । तांदुर्गांदुर्गमांदेवींदुराचारविघातिनीम् ॥ नमामिभवभीतोहंसंसारार्णवतारिणीम् ॥ इदमथर्वशीर्षंयोऽधीते सपञ्चाथर्वशीर्षफलमाप्नोति । इदमथर्वशीर्षमज्ञात्वायोऽर्चांस्थापयति । शतलक्षंप्रजप्त्वापि नार्चाशुद्धिं च विन्दति। शतमष्टोत्तरंचास्यपुरश्चर्याविधिः स्मृतः ॥ दशवारंपठेद्यस्तुसद्यः पापात्प्रमुच्यते । महादुर्गाणि तरति महादेव्याः प्रसादतः । सायमधीयानोदिवसकृतंपापंनाशयति । प्रातरधीयानोरात्रिकृतंपापं नाशयति । सायंप्रातः प्रयुजानोऽपापोभवति । निशीथेतुरीयसंध्यायांजप्त्वावाक्सिद्धिर्भवति । नूतनायांप्रतिमायांजप्त्वादेवतासान्निध्यंभवति । भौमाश्विन्यांमहादेवीसन्निधौजप्त्वामहामृत्युंतरति । समहामृत्युंतरति । यएवंवेद । इत्युपनिषत्॥इतिदेव्यथर्वशीर्षं समाप्तम्॥

श्रीगणेशाय नमः ॥ अथ लक्ष्मीमंत्रानुष्ठानविधानम् ॥ ( शारदातिलके ) अथ वक्ष्ये श्रियो मंत्रान् श्रीसौभाग्यफलप्रदान् ॥ यस्याः कटाक्षमात्रेण त्रैलोक्यमपि वर्द्धते ॥ १ ॥ तत्र तावल्लक्ष्म्या एकाक्षरमंत्रपुरश्चरणप्रयोगः । मंत्रस्वरूपं यथा ॥ श्रीं ॥ इत्येकाक्षरो बीजमंत्रः ॥ १ ॥ ऐं श्रीं ह्रीं क्लीं इति चतुर्बीजात्मको मंत्रः ॥ २ ॥ अस्य लक्ष्मीबीजमंत्रस्य भृगुर्ऋषिः निचृच्छंदः श्रीलक्ष्मीः देवता शं बीजम् । ईं शक्तिः ॥ रं कीलकम् ॥ सर्वेष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ भृगुऋषये नमः शिरसि॥१॥ॐ निचृच्छंदसे नमः मुखे ॥ २ ॥ ॐ श्रीदेवतायै नमः हृदये ॥ ३ ॥ ॐ शं बीजाय नमः गुह्ये ॥ ४ ॥ ईं शक्तये नमः पादयोः ॥ ५ ॥ रं कीलकाय नमः सर्वाङ्गे ॥ ६ ॥ इति ऋष्यादिन्यासः ॥ ॐ श्रां अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ श्रीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ श्रूं मध्यमाभ्यां नमः

॥ ३ ॥ ॐ श्रैं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ श्रौं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ श्रः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेव हृदयादिन्यासं कृत्वा ध्यायेत् ॥ ( एकाक्षरमंत्रध्यानम् ) कांत्या कांचनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् ॥ बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां क्षौमाबद्धनितंबबिंबलसितां वंदेऽरविंदस्थिताम् ॥ १ ॥ ( अथ चतुरक्षरमंत्रध्यानम् ) माणिक्यप्रतिमप्रभाहिमनिभैस्तुंगैश्चतुर्भिर्गजैर्हस्ताग्राहितरत्नकुंभसलिलैरासिच्यमानां मुदा ॥ हस्ताब्जैर्वरदानमंबुजयुगाभीतीर्दधानां हरेः कांतां कांक्षितपारिजातलतिकां वंदे सरोजासनाम् ॥ २ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य पीठपूजां कुर्यात् ॥ ॐ मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति पीठदेवताः संपूज्य पूर्वादिषु ॐ विभूत्यै नमः ॥ १ ॥ ॐ उन्नत्यै नमः ॥ २ ॥ ॐ कान्त्यै नमः ॥ ३ ॥ ॐ सृष्ट्यै नमः ॥ ४ ॥ ॐ कीर्त्यै नमः ॥ ५ ॥ ॐ सन्नत्यै नमः ॥ ६ ॥ ॐ पुष्ट्यै नमः ॥ ७ ॥ ॐ उत्कृष्टायै नमः ॥ ८ ॥ ( मध्ये ) ॐ ऋद्ध्यै नमः ॥ ९ इति पीठशक्तीः पूजयेत् ॥ तदुपरि श्रीकमलासनाय नमः इत्यासनं दत्त्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ ( षट्कोणे ) आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च ॐ श्रीं हृदयाय नमः ॥ १ ॥ ॐ श्रीं शिरसे स्वाहा ॥ २ ॥ ॐ श्रूं शिखायै वषट् ॥ ३ ॥ ॐ श्रैं कवचाय हुं ॥ ४ ॥ ॐ श्रौं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ श्रः अस्त्राय फट् ॥ ६ ॥ इति षडंगानि पूजयेत् । तद्बहिरष्टदले पूर्वादिचतुर्दिक्षु क्रमेण ॐ वासुदेवाय नमः ॥ १ ॥ ॐ संकर्षणाय नमः ॥२॥ ॐ प्रद्युम्नाय नमः ॥ ३ ॥ ॐ अनिरुद्धाय नमः ॥ ४ ॥ ( कोणदलेषु ) ॐ दमकाय नमः ॥ ५ ॥ ॐ सलिलाय नमः ॥ ६ ॥ ॐ गुग्गुलाय नमः ॥ ७ ॥ ॐ कुरुंडकाय नमः ॥ ८ ॥ इति पूजयेत् ( ततो देवीदक्षिणभागे ) ॐ शंखनिधये नमः ॥ १ ॥ ॐ वसुधायै नमः ॥ २ ॥ ( देवीवामे ) ॐ पद्मनिधये नमः ॥ १ ॥ ॐ वसुमत्यै नमः ॥ २ ॥ इति पूजयेत् । ( ततोऽष्टदलाग्रेषु पूर्वादिक्रमेण ) । ॐ बलाकायै नमः ॥ १ ॐ विमलायै नमः ॥ २ ॥ ॐ कमलायै नमः ॥ ३ ॥ ॐ नवमालिकायै नमः ॥ ४ ॥ ॐ विभीषिकायै नमः ॥ ५ ॥ ॐ मालिकायै नमः ॥ ६ ॥ ॐ शांकर्य्यै नमः ॥ ७ ॥ॐ वसुमालिकायै नमः ॥ ८ ॥ इति पूजयेत् ॥ तद्बाह्ये इन्द्रादीन् दशदिक्पालान् पूजयेत् ॥ तद्बाह्ये वज्राद्यायुधानि च पूजयेत् ॥ इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य स्तवेन स्तुत्वा जपं कुर्यात् ॥ अस्य पुरश्चरणं द्वादशलक्षजपः । अन्यत्सर्वं पूर्ववत् ॥ तथा च " भानुलक्षं जपेन्मंत्रं दीक्षितो विजितेंद्रियः ॥ श्रियमभ्यर्चयेन्नित्यं सुगंधिकुसुमादिभिः ॥ १ ॥ तत्सहस्रं प्रजुहुयात्कमलैर्मधुरोक्षितैः ॥ जपान्ते जुहुयान्मन्त्री तिलैर्वा मधुराप्लुतैः ॥ २ ॥ बैल्वैः फलैर्वा जुहुयात्त्रिभिर्वा साधकोत्तमः ॥ इत्थं यो भजते देवीं विधिना साधकोत्तमः ॥ ३ ॥ धनधान्यसमृद्धिः स्याच्छ्रियमाप्नोत्यनिंदिताम् ॥ ४ ॥ वक्षःप्रमाणे सलिले स्थित्वा मंत्रमिमं जपेत् ॥ त्रिलक्षं संयतो मंत्री देवीं ध्यात्वार्कमंडले ॥ ५ ॥ स भवेदल्पकालेन रमाया वसतिः स्थिरा ॥ विष्णुगेहस्थबिल्वस्य मूलमास्थाय मन्त्रवित् ॥ ६ ॥ त्रिलक्षं प्रजपेन्मन्त्रं वांछितं लभते धनम् ॥ अशोकवह्नौ जुहुयात्तंडुलैराज्यलोलितैः ॥ ७ ॥ वशयत्यचिरादेव त्रैलोक्यमपि मंत्रवित् ॥ जुहु

यात्तंडुलैः शुद्धैरर्काग्नौ नियुतं वशी ॥ ८ ॥ राज्यश्रियमवाप्नोति राजपुत्रो महीयसीम् ॥ जुहुयात्खादिरे वह्नौ तंडुलैर्मधुरोक्षितैः॥९॥ राजा वश्यो भवेच्छीघ्रं महालक्ष्मीश्च वर्द्धते ॥ बिल्वछायामधिवसन्बिल्वमिश्रहविष्यभुक् ॥ १० ॥ संवत्सरद्वयं हुत्वा तत्फलै रथवांबुजैः ॥ साधकेंद्रो महालक्ष्मीं चक्षुषा पश्यति ध्रुवम् ॥ ११ ॥ हविषा घृतसिक्तेन पायसेन ससर्पिषा ॥ हुत्वा श्रियमवाप्नोति नियुतं मंत्रवित्तमः ॥ १२ ॥ मधुरक्तारुणांभोजैर्जुहुयाल्लक्षमादरात् ॥ न मुंचति रमा तस्य वंशमाभूतसंप्लवम् ॥ इत्येकाक्षर चतुरक्षरलक्ष्मीमंत्रपुरश्चरणप्रयोगः ॥ ॥ अथ दशाक्षरलक्ष्मीमंत्रप्रयोगः ॥ ( मंत्रो यथा ) " नमः कमलवासिन्यै स्वाहा" इति दशाक्षरो मंत्रः । अस्य मंत्रस्य दक्षऋषिः । विराट् छंदः । लक्ष्मीर्देवता । इष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ दक्षऋषये नमः शिरसि ॥ १ ॥ ॐ विराट्छंदसे नमः मुखे ॥ २ ॥ ॐ लक्ष्मीदेवतायै नमः हृदि ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ॐ देव्यै नमः अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ पद्मिन्यै नमः तर्जनीभ्यां नमः ॥ २ ॥ ॐ विष्णुपत्न्यै नमः मध्यमाभ्यां नमः ॥ ३ ॥ ॐ वरदायै नमः अनामिकाभ्यां नमः ॥ ४ ॥ ॐ कमलरूपायै नमः कनिष्ठिकाभ्यां नमः ॥ ५ ॥ इति करन्यासः ॥ एव नेत्रहीनं हृदयादिपंचांगन्यासं कृत्वा ध्यायेत ( ध्यानम् ) आसीना सरसीरुहे स्मितमुखी हस्तांबुजैर्बिभ्रती दानं पद्मयुगाभये च वपुषा सौदामिनीसंनिभा ॥ मुक्तादामविराजमानपृथुलोत्तुंगस्तनोद्भासनी पायान्नः कमला कटाक्षविभवैरानंदयंती हरिम् ॥ १ ॥ इति ध्यात्वा । पूर्वोक्तावरणपूजां कृत्वा जपं कुर्यात । अस्य पुरश्चरणं दशलक्षजपः । तथा च । " दशलक्षं जपेन्मंत्रं मंत्रविद्विजितेंद्रियः ॥ दशांशं जुहुयान्मंत्री मधुराक्तैः सरोरुहैः ॥ १ ॥ समुद्रगायां सरिति कंठमात्रे जले स्थितः ॥ त्रिलक्षं प्रजपेन्मंत्री साक्षाद्वैश्रवणो भवेत् ॥ २ ॥ आराध्योत्तरनक्षत्रे देवीं स्रक्चंदनादिभिः ॥ नंद्यावर्तभवैः पुष्पैः सहस्रं जुहुयात्ततः ॥ ३ ॥ पौर्णमास्यां फलैर्बैल्वैर्जुहुयान्मधुराप्लुतैः ॥ पंचम्यां विशदांभाजैः शुक्रवारे सुगंधिभिः ॥४॥ अन्यैर्वा विशदैः पुष्पैः प्रतिमासं विशालधीः॥सभवेदब्दमात्रेण सर्वदासंपदांनिधिः॥५॥इतिदशाक्षरलक्ष्मीमंत्रप्रयोगःसमाप्तः॥ अथ महालक्ष्मीमंत्रपुरश्चरणम् ॥ मंत्रो यथा " ॐ ऐं ह्रीं श्रीं क्लीं सौं जगत्प्रसूत्यै नमः " इति द्वादशाक्षरो मंत्रः ।अस्य मंत्रस्य ब्रह्मा ऋषिः । गायत्री छंदः । महालक्ष्मीर्देवता । सर्वेष्टसिद्ध्यर्थे विनियोगः । ॐब्रह्मऋषये नमःशिरसि॥१॥ॐगायत्रीछंदसेनमःमुखे॥२॥ ॐ महालक्ष्मीदेवतायै नमः हृदि ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ततो मूलेन हस्तौ संशोध्य ॐ ऐं नमः अङ्गुष्ठाभ्यां नमः॥१॥ ॐ ह्रीं नमः तर्जनीभ्यां नमः॥ २ ॥ ॐ श्रीं नमः मध्यमाभ्यां नमः ॥ ३ ॥ ॐ क्लीं नमः अनामिकाभ्यां नमः ॥४॥ ॐ सौं नमः कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ जगत्प्रसूत्यै नमः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ ॐ ऐंह्रीं श्रींक्लीं सौंजगत्प्रसूत्यै नमः इति मूर्द्धादिचरणांतं व्यापकं न्यसेत् ॥ ७ ॥ इति करन्यासः ॥ ॐ ऐं नमः मूर्ध्नि ॥ १ ॥ ॐ ह्रीं नमः मुखे ॥ २ ॥ ॐ श्रीं नमः वक्षसि ॥ ३ ॥ ॐ क्लीं नमः गुह्ये ॥ ४ ॥ ॐ सौं नमः पादयोः ॥ इति पंचबीजानि विन्यसेत् ॥ ॐ जं नमः त्वचि ॥१॥ ॐ गं नमः रक्ते ॥ २ ॥ ॐ त्प्रं नमः मांसे ॥ ३ ॥ ॐ सू नमः मेदसि ॥ ४ ॥ ॐ त्यैं नमः अस्थिन ॥ ५ ॥ ॐ नं नमः मज्जा

याम् ॥ ६ ॥ ॐ मं नमः शुक्रे ॥ ७ ॥ इति सप्तवर्णान् सप्तधातुषु हृदये न्यसेत् । ॐ ऐं ज्ञानाय अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ ह्रीं ऐश्वर्याय तर्जनीभ्यां नमः ॥ २ ॥ ॐ श्रीं शक्तये मध्यमाभ्यां नमः ॥ ३ ॥ ॐ क्लीं बलाय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ सौं वीर्याय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ जगत्प्रसूत्यै तेजसे नमः करतलकरपृष्ठाभ्यां नमः इति करन्यासः ॥ एवमेव हृदयादिन्यासं कृत्वा ध्यायेत् ॥ तत्रादावुद्यानस्मरणम् ॥ "चंपकाशोकपुंनागपाटलैरुपशोभितम् । लवंगमालतीबिल्वदेवदारुनमेरुभिः ॥ १ ॥ मंदारपारिजाताद्यैः कल्पवृक्षैः सुपुष्पितैः ॥ चन्दनैः कर्णिकारैश्च मातुलुंगैश्च वंजुलैः ॥ २ ॥ दाडिमीलकुचांकोलैः पूगैः कुरवकैरपि ॥ कदलीकुंदमदारनारिकेरैरलंकृतैः ॥ ३ ॥ अन्यैः सुगंधिपुष्पाद्यैर्वृक्षसंघैश्च मण्डितम् ॥ मालतीमल्लिकाजातीकेतकीशतपत्रकैः ॥ ४ ॥ पारंतीतुलसीनंद्यावर्तैर्दमनकैरपि ॥ सर्वर्तुकुसुमोपेतैर्नमद्भिरुपशोभितम् ॥ ५ ॥ मंदमारुतसंभिन्नकुसुमामोदिदिङ्मुखम् ॥ तस्य मध्ये सदोत्फुल्लैः कुमुदोत्पलपंकजैः ॥ ६ ॥ सौगंधिकैश्च कल्हारैर्नवैः कुवलयैरपि ॥ हंससारसकारंडभ्रमरैश्चक्रनामभिः ॥ ७ ॥ अन्यैः कलकलारावैर्विहंगैरुपशोभितम् ॥ महासरसि तन्मध्ये पुलिनेऽतिमनोहरे ॥ ८ ॥ परितः पारिजाताद्यं मंडपं मणिकुट्टिमम् ॥ उद्यदादित्यसंकाशं भास्वरं शशिशीतलम् ॥ ९ ॥ चतुर्द्वारसमायुक्तं हैमप्राकारशोभितम् ॥ रत्नापक्लृप्तिसंशोभि कपाटाष्टकसंयुतम् ॥ १० ॥ नवरत्नसमाक्लृप्तं तुंगगोपुरतोरणम् ॥ हेमदंडि समालंबि ध्वजावलिपरिष्कृतम् ॥ ११ ॥ नवरत्नसमाबद्धस्तंभराजिविराजितम् ॥ सहस्रदीपसंयुक्तदीपं दंडविराजितम ॥ १२ ॥ तप्तहाटकसंक्लृप्तवातायनमनोहरम् ॥ नानावर्णांशुकोद्बद्धसुवर्णशतकोटिभिः ॥ १३ ॥ किंकिणीमल्लिकायुक्तपताकाभिरलंकृतम् ॥ जातरूपमयैरत्नविचित्रैरतिविस्तृतैः ॥ १४ ॥ माणिक्यरत्नैर्वैडूर्य्यस्वर्णमालावलीयुतैः ॥ अंतरांतरसंबद्धरत्नैर्दृष्टिमनोहरैः ॥ १५ ॥ विचित्रैश्चित्रवर्णैश्च वितानैरुपशोभितम् ॥ सर्वरत्नसमायुक्तं हेमकुट्टिममुज्ज्वलम् ॥ १६ ॥ केतकीमालतीजातीचंपकोत्पलकेसरैः ॥ मल्लिकातुलसीजातीनंद्यावर्तकदंबकैः ॥ १७ ॥ एतैरन्यैश्च कुसुमैरलंकृतमहीतलम् ॥ अंबुकाश्मीरकस्तूरीमृगनाभितमालकैः ॥ १८ ॥ चंदनागरुकर्पूरैरामोदितदितदिगंतरम् ॥ एवं सचिंत्य मनसा मंडपं सुमनोहरम् ॥ १९ ॥ तन्मध्ये भावयेन्मन्त्री पारिजातं मनोहरम् ॥ तस्याधस्तात्स्मरेन्मन्त्री रत्नसिंहासनं शुभम् ॥२०॥ "तस्मिन्संचिंतयेद्देवीं महालक्ष्मीं मनोरमाम्" ॥ (अथ ध्यानम्) "बालार्कद्युतिमिंदुखण्डविलसत्कोटीरहारोज्ज्वलां रत्नाकल्पविभूषितां कुचनतां शालेः करैर्मंजरीम् ॥ पद्मं कौस्तुभरत्नमप्यविरतं संबिभ्रतीं सस्मितां फुल्लांभोजविलोचनत्रययुतां ध्यायेत्परां देवताम् ॥ १ ॥ सिंजन्मंजीरसंशोभिपदांभोजविराजिताम् ॥ नवरत्नगणाकीर्णा कांचीदामविभूषिताम् ॥ २ ॥ मुक्तामाणिक्यवैदूर्यसंबद्धोदरबंधनाम् ॥ विभ्राजमानां मध्येन वलित्रितयशोभिताम् ॥ ३ ॥ जाह्नवीसरिदावर्तशोभिनाभिविभूषिताम् ॥ पाटीरपंककर्पूरकुंकुमालंकृतस्तनीम् ॥ ४ ॥ वारिवाहविनिर्मुक्तमुक्तादामगरीयसीम् ॥ वहंतीमुत्तरासंगं दुकूलपरिकल्पिताम् ॥ ५ ॥ तप्तकांचनसन्नद्धवैदूर्यांगदभूषणाम् ॥ पद्मरागस्फुरद्दर्णकंकणाढ्यकरांबुजाम् ॥ ६ ॥ माणिक्यशकलाबद्धमुद्रिकाभिरलंकृताम् ॥ तप्तहाटकसंक्लृप्तमालाग्रैवेयशोभिताम् ॥ ७ ॥ विचित्रविविधाकल्पकंबुसंकाशकंधराम् ॥ उद्यद्दिनकराकारमणिताटंकमंडिताम् ॥८॥

रत्नांकितलसत्स्वर्णकर्णपूरोपशोभिताम् ॥ जपाविद्रुमलावण्यललिताधरपल्लवाम् ॥ ९ ॥ दाडिमीफलबीजाभदंतपंक्तिविभूषि
ताम् ॥ कलंककार्श्यनिर्मुक्तशरच्चंद्रनिभाननाम् ॥ १० ॥ पुंडरीकदलाकारनयनत्रयसुंदरीम् ॥ भ्रूलताजितकंदर्पकरकार्मुकविभ्र
माम् ॥ ११ ॥ विलसत्तिलपुष्पश्रीविजयोद्यतनासिकाम् ॥ ललाटकांतिविभवविजितार्द्धसुधाकराम् ॥ १२ ॥ सांद्रसौरभसंपन्न
कस्तूरीतिलकांकिताम् ॥ मत्तालिमालाविलसदलकाढ्यमुखांबुजाम् ॥ १३ ॥ पारिजातप्रसूनश्रीवाहिधम्मिल्लबंधनाम् ॥ अनर्घ्यरत्न
घटितमुकुटांकितमस्तकाम् ॥ १४ ॥ सर्वलावण्यवसतिं भवनं विभ्रमश्रियः ॥ तेजसां जन्मभूमिं तां महालक्ष्मीं मनोहराम् ॥ १५ ॥"

एवं ध्यात्वा मानसोपचारैः संपूज्य पूर्वोक्ते श्रीबीजोदिते पीठे मूलेन * मूर्तिं प्रकल्प्यापाद्यादिपुष्पांतैरुपचारैः संपूज्यावरणपूजां कुर्यात्॥
तद्यथा ( लक्ष्म्या दक्षभागे ) ॐ शङ्करनंदनाय नमः ॥ १ ॥ ( वामभागे ) ॐ पुष्पधन्वने नमः ॥ २ ॥ ततः षट्दले ( पूज्य
पूजकयोर्मध्ये प्राचीं प्रकल्प्य ) आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च । ॐ ऐं ज्ञानाय नमः हृदयाय नमः ॥ १ ॥ ॐ ह्रीं ऐश्व
र्याय नमः शिरसे स्वाहा ॥ २ ॥ ॐ श्रीं शक्त्यै नमः शिखायै वषट् ॥ ३ ॥ ॐ क्लीं बलाय नमः कवचाय हुं ॥ ४ ॥ ॐ सौं
वीर्याय० नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ जगत्प्रसूत्यै नमः अस्त्राय फट् ॥ ६ ॥ इति षडंगानि पूजयेत् ॥ ततोऽष्टदलेषु पूर्वादि
क्रमेण । ॐ उमायै नमः ॥ ॥ ॐ श्रियै नमः ॥ २ ॥ ॐ सरस्वत्यै नमः ॥ ३ ॥ ॐ दुर्गायै नमः ॥ ४ ॥ ॐ धरिण्यै नमः
॥ ५ ॥ ॐ गायत्र्यै नमः ॥ ६ ॥ ॐ देव्यै नमः ॥ ७ ॥ ॐ उषायै नमः ॥ ८ ॥ इति पूजयेत् ॥ ( दक्षिणे ॐ जाह्नव्यै
नमः ॥ १ ॥ ( वामे ) ॐ यमुनायै नमः ॥ २ ॥ इति सम्पूज्य । ( पुनर्दक्षिणपार्श्वे ) ॐ शंखनिधये नमः ॥ १ ॥ (वामपार्श्वे )
ॐ पद्मनिधये नमः ॥ २ ॥ ( पश्चिमे ) ॐ वरुणाय नमः ॥ ३ ॥ इति पूजयेत् । ( तद्बहिर्द्वादशदलेषु पूर्वादिक्रमेण ) ॐ मेषाय
नमः ॥ १ ॥ ॐ वृषाय नमः ॥ २ ॥ ॐ मिथुनाय नमः ॥ ३ ॥ ॐ कर्काय नमः ॥ ४ ॥ ॐ सिंहाय नमः ॥
॥ ५ ॥ ॐ कन्यायै नमः ॥६॥ ॐ तुलायै नमः ॥ ७ ॥ ॐ वृश्चिकाय नमः ॥ ८ ॥ ॐ धनुषे नमः ॥ ९ ॥ ॐ मकराय नमः ॥
॥ १० ॥ ॐ कुम्भाय नमः ॥ ११ ॥ ॐ मीनाय नमः ॥ १२ ॥ इति राशीन् पूजयेत ॥ ( तद्बहिः ) ॐ सूर्याय नमः ॥ १ ॥
ॐ चन्द्रमसे नमः ॥ २ ॥ ॐ मंगलाय नमः ॥ ३ ॥ ॐ बुधाय नमः ॥ ४ ॥ ॐ बृहस्पतये नमः ॥ ५ ॥ ॐ शुक्राय नमः ॥
॥ ६ ॥ ॐ शनैश्चराय नमः ॥ ७ ॥ ॐ राहवे नमः ॥ ८ ॥ ॐ केतवे नमः ॥ ९ ॥ इति ग्रहान् पूजयेत् ॥ ( तद्बाह्ये ) ॐ ऐरा
वताय नमः ॥ १ ॥ ॐ पुंडरीकाय नमः ॥ २ ॥ ॐ वामनाय नमः ॥ ३ ॥ ॐ कुमुदाय नमः ॥ ४ ॥ ॐ अंजनाय नमः ॥ ५ ॥
ॐ पुष्पदंताय नमः ॥ ६ ॥ ॐ सार्वभौमाय नमः ॥ ७ ॥ ॐ सुप्रतीकाय नमः ॥ ८ ॥ इत्यष्टौ दिग्गजान्पूजयेत् ॥ ( तद्बहिः )
भूपुरे पूर्वादिदिक्षु । ॐ इंद्राय नमः ॥ १ ॥ ॐ अग्नये नमः ॥ २ ॥ ॐ यमाय नमः ॥ ३ ॥ ॐ निर्ऋतये नमः ॥ ४ ॥ ॐ
वरुणाय नमः ॥ ५ ॥ ॐ वायवे नमः ॥ ६ ॥ ॐ कुबेराय नमः ॥ ७ ॥ ॐ ईशानाय नमः ॥ ८ ॥ ( उर्ध्वम ) ॐ ब्रह्मणे

* अत्रत्यं लक्ष्मीयंत्रं पूर्वं द्रष्टव्यम् ।

नमः ॥ ९ ॥ ( अधः ) ॐ अनंताय नमः ॥ १० ॥ इति दशदिक्पालान् पूजयेत् ॥ ( तद्बाह्ये ) ॐ बज्राय नमः ॥ १ ॥ ॐ शक्तये नमः ॥२॥ ॐ दंडाय नमः ॥३॥ ॐ खड्गाय नमः ॥४॥ ॐ पाशाय नमः ॥ ५ ॥ ॐ अंकुशाय नमः ॥ ६ ॥ ॐ गदायै नमः ॥ ७ ॥ ॐ त्रिशूलाय नमः ॥ ८ ॥ ॐ पद्माय नमः ॥ ९ ॥ ॐ चक्राय नमः ॥ १० ॥ इत्यायुधानि पूजयेत् ॥ एवं सप्तावरणपूजां कृत्वा धूपदीपनैवेद्यतांबूलदक्षिणादिभिर्भगवतीं संपूज्य नीराजनं कृत्वा साष्टांगं प्रणम्य स्तोत्रैः स्तुत्वा जपं कुर्यात् । अस्य पुरश्चरणं द्वादशलक्षजपः ॥ जपांते दशांशेन घृतपद्मबिल्वफलैर्होमं कृत्वा तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि कुर्यात् ॥ तथा च ( शारदातिलके ) " एवं संचिंत्य यो देवीं हविष्याशी जितेंद्रियः ॥ भानुलक्षं जपेन्मंत्रं दशांशं जुहुयाद्घृतैः ॥१॥ जुहुयाच्छ्रीफलैः पद्मैः प्रत्येकमयुतं ततः ॥ तर्पयेत्सलिलैः शुद्धैः सुगंधिरयुतद्वयम् ॥ २ ॥ आगमोक्तेन विधिना सुगंधैः सुमनोहरैः ॥ पूजयेद्गंधपुष्पाद्यैर्देवीमन्वहमादरात् ॥ ३ ॥ दूर्वाभिराज्यसिक्ताभिर्जुहुयादायुषे नरः ॥ दशरात्रे समिद्धेऽग्नौ अष्टोत्तरसहस्रकम् ॥ ४ ॥ गुडूचीमाज्यसंसिक्तां जुहुयात्सप्तवासरम् ॥ अष्टोत्तरसहस्रं यः स जीवेच्छरदां शतम् ॥ ५ ॥ हुत्वा तिलान्घृताभ्यक्तान्दीर्घमायुरवाप्नुयात् ॥ आरभ्यार्कदिनं मंत्री दशरात्रं दिनेदिने ॥ ६ ॥ आज्याक्तार्कसमिद्धोमादारोग्यं लभते ध्रुवम् ॥ कंठमात्रोदके स्थित्वा ध्यात्वा देवीं दिवाकरे ॥ ७ ॥ ऊर्ध्वबाहुर्दशशतमष्टोत्तरमिमं हुनेत् ॥ आरोग्यं लभते सद्यो वांछितान्यपि मंत्रवित् ॥ ८ ॥ शालिभिर्जुहुतो नित्यमष्टोत्तरसहस्रकम् ॥ अचिरादेव महती लक्ष्मीः संजायते ध्रुवम् ॥ ९ ॥ प्रसूनैर्जुहुयान्मंत्री लक्ष्मीवल्लीसमुद्भवैः ॥ नंद्यावर्तसमुत्थैश्च सिद्धार्थैश्च घृतप्लुतैः ॥ १० ॥ महतीं श्रियमाप्नोति मान्यते सर्वजंतुभिः ॥ मरीचजीरकोन्मिश्रैर्नारिकेलरजः प्लुतैः ॥११॥ सगुडैराज्यसंपक्वैरपूपैराज्यलोलितैः ॥ जुहुयात्पयआहारो मंत्रविद्विजितेंद्रियः ॥ १२ ॥ अष्टोत्तरशतं नित्यं मंडलाद्धनदो भवेत् ॥ हविषा गुडमिश्रेण जुहुयादर्थवान्भवेत् ॥ १३ ॥ जपापुष्पाणि जुहुयादष्टोत्तरसहस्रकम् ॥ गृहीत्वा प्रजपेद्भस्म नागवल्लीसमन्वितम् ॥ १४ ॥ तिलकं तनुयातेन सर्ववश्यकरं भवेत् ॥ ब्रह्मवृक्षसमित्पुष्पैर्ब्राह्मणान्वशयेद्वशी ॥ १५ ॥ जातीपुष्पैश्च राजानं वैश्यान् रक्तोत्पलैः शुभैः ॥ शूद्रान्नीलोत्पलैर्हुत्वा वशयेन्मंत्रविन्नरः ॥ १६ ॥ पुष्पैर्मधुकजैर्हुत्वा वशमानयति स्त्रियः ॥ कृत्वा नवपदात्मानं मंडलं यंत्रभूषितम् ॥ १७ ॥ अभिषेकं प्रकुर्वीत विधिना सर्वसिद्धये ॥ कलशान्स्थापयेत्तेषु पदेषु शुभलक्षणान् ॥ १८ ॥ चन्दनालिप्तसर्वांगान्दूर्वाशतसमन्वितान् ॥ दुकूलवेष्टितानेतान्पूरयेत्तीर्थवारिणा ॥ ॥ १९ ॥ नवरत्नसमाबद्धं कर्षकांचनकल्पितम् ॥ मध्यकुम्भे क्षिपेत्पद्मं यन्त्राढ्यं देशकोत्तमः ॥ २० ॥ चन्दनोशीरकर्पूरजातीकंकोलकुंकुमम् ॥ कुष्ठागरुतमालैलायुतं संपिष्य भागतः ॥ २१ ॥ विलोड्य सर्वकुम्भेषु रत्नान्यपि विनिक्षिपेत् ॥ लक्ष्मीदूर्वासहाभद्रासहदेवीमधुव्रताः ॥ २२ ॥ मुशलीं शक्रवल्लीं च क्रांतापामार्गपत्रकान् ॥ प्रियङ्गुमुद्गगोधूमव्रीहींश्च सतिलान्यवान् ॥ २३ ॥ शालितण्डुलमाषांश्च प्रक्षाल्यैतेषु निक्षिपेत् ॥ धात्रीलकुचबिल्वानां कदलीनारिकेलयोः ॥ २४ ॥ फलान्यपि विनिक्षिप्य पुष्पाण्येतानि निक्षिपेत् ॥ पद्मसौगन्धिकं जातिं मल्लिकां बकुलं तथा ॥ २५ ॥ चम्पकाशोकपुन्नागतुलसीकेतकोद्भवम्

पल्लवानिवटाश्वत्थप्लक्षोदुम्बरशाखिनाम् ॥ २६ ॥ ब्रह्मकूर्चं विनिक्षिप्य चषकैः सुफलान्वितैः ॥ पिधाय कुंभवक्राणि क्षौमैराच्छादयेत्ततः ॥ २७ ॥ आवाह्य कलशमध्ये महालक्ष्मीं प्रपूजयेत् ॥ यजेदुमाद्याः शिष्टेषु कलशेष्वष्टसु क्रमात् ॥ २८ ॥ गन्धैर्मनोहरैः पुष्पैर्धूपदीपसमन्वितैः ॥ निवेद्य भक्ष्यभोज्यानि तान्स्पृष्ट्वा प्रजपेन्मनुम् ॥ २८ ॥ त्रिसहस्रं जपस्यांते साध्यमानीय संयुतम् ॥ संस्थाप्य स्थंडिले पीठं तस्मिंस्तं विनिवेशयेत् ॥ ३० ॥ रम्यैरावरणैर्वस्त्रैरलंकृत्य तमादरात् ॥ सुमङ्गलाभिर्नारीभिः क्षिप्तपुष्पाक्षतान्वितम् ॥ ३१ ॥ अर्चितानां द्विजातीनामाशीर्वादपुरःसरम् ॥ नदत्सु पंचवाद्येषु मुहूर्ते शोभने सुधीः ॥ ३२ ॥ मध्यस्थं कुम्भमुत्सृज्य महालक्ष्मीमनुस्मरन् ॥ अभिषिंचेत्क्रमादन्यैः कलशैरपि देशिकः ॥ ३३ ॥ करेणास्य शिरः स्पृष्ट्वा प्रयुंजीताशिषं गुरुः ॥ भद्रमस्तु शिवं चास्तु महालक्ष्मीः प्रसीदतु ॥ ३४ ॥ रक्षन्तु त्वां सदा देवाः संपदः सन्तु सर्वदा ॥ अथोत्थायाभिषिक्तः सन्वाससी परिधाय च ॥ ३५ ॥ यथाविधि समाचम्य दण्डवत्प्रणमेद्गुरुम् ॥ वस्त्राभरणैर्धान्यैर्धनैर्गोमहिषादिभिः ॥ ३६ ॥ दासीदासैश्च विधिवत्तोषयेद्देवताधिया ॥ ब्राह्मणान्भोजयेत्पश्चाद्दीनांधकृपणैः सह ॥ ३६ ॥ महांतमुत्सवं कुर्याद्भवने बंधुभिः सह ॥ तदा कृतार्थमात्मानं मन्यते मनुजोत्तमः ॥ ३८ ॥ अभिषिक्तो नरपतिः परान्विजयतेऽचिरात् ॥ पदेच्छुः पदमाप्नोति राजपुत्रो न संशयः ॥ ३९ ॥ अभिषिक्ता सती वन्ध्या सूते पुत्रं महामतिम् ॥ महारोगेषु जातेषु कृत्याद्रोहेषु देशिकः ॥ ४० ॥ भूतेषु दुर्निमित्तादौ विदध्यादभिषेचनम् ॥ सर्वसंपत्करं पुंसां सर्वसौभाग्यसिद्धिदम् ॥ ४१ ॥ सर्वरोगप्रशमनं सर्वापद्विनिवारणम् ॥ गर्भरक्षाकरं स्त्रीणां दीर्घायुर्जनकं परम् ॥ ४२ ॥ प्रसूतानामपि स्त्रीणां सूतिकागाररक्षकम् ॥ प्रनष्टपुष्पगर्भाणां पुष्पगर्भाभिरक्षणम् ॥ ४३ ॥ आसन्नशत्रुभीतीनां नाशनं च महीभृताम् ॥ अभिषेकमिमं प्राहुरागमार्थविशारदाः ॥ ४४ ॥ सर्वदुःखप्रशमनं सर्वापद्विनिवारणम् ॥ बहुना किमिहोक्तेन परमस्मान्न विद्यते ॥४५॥ इतिश्रीशारदातिलकेमहालक्ष्मीमन्त्रपुरश्चरणं समाप्तम् ॥ अथ सप्तविंशतिवर्णात्मकमहालक्ष्मीमन्त्रप्रयोगः । मन्त्रो यथा । "ॐ श्रीह्रींश्रीं कमलेकमलालयेप्रसीदप्रसीदश्रींह्रींश्रीमहालक्ष्म्यैनमः". इति सप्तविंशत्यक्षरो मन्त्रः॥ अस्य मन्त्रस्य दक्षऋषिः । विराट् छन्दः।महालक्ष्मीर्देवता।सर्वेष्टसिद्धये विनियोगः ॥ ॐ दक्षऋषये नमः शिरसि ॥ १ ॥ ॐ विराट्छंदसे नमः मुखे ॥ २ ॥ ॐ महालक्ष्मीदेवतायै नमःहृदि॥इति ऋष्यादिन्यासः ॥ श्रींह्रींश्रींप्रसीदकमलेश्रींह्रींश्रीं अङ्गुष्ठाभ्यां नमः ॥ १ ॥ श्रींह्रींश्रींप्रसीदकमलेश्रींह्रींश्रीं तर्जनीभ्यां नमः ॥ २ ॥ श्रींह्रींश्रींप्रसीदकमले श्रींह्रींश्रींमध्यमाभ्यां नमः ॥ ३ ॥ श्रींह्रींश्रींप्रसीदकमलेश्रींह्रींश्रीं अनामिकाभ्यां नमः ॥ ४ ॥ श्रींह्रीं श्रींह्रींप्रसीदकमले श्रीं ह्रीं श्रीं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ इति करन्यासः । एवं नेत्रहीनं पंचांगहृदयादिन्यासं कुर्यात् ॥ एवं न्यासविधिं कृत्वा ध्यायेत् । "सिन्दूरारुणकांतिमब्जवसतिं सौंदर्यवारांनिधिं कोटीरांगदहारकुण्डलकटीसूत्रादिभिर्भूषिताम् ॥ हस्ताब्जैर्वसुपत्रमब्जयुगलादर्शौ वहंती परामावीतांपरिचारिकाभिरनिशं ध्यायेत्प्रियां शार्ङ्गिणः ॥ १ ॥" इति ध्यात्वा मानसोपचारैः संपूज्य पूर्वोक्ते श्रीवीजपीठे पुष्पांतैरुपचारैः महालक्ष्मीं संपूज्य आवरणपूजां कुर्यात् ॥ षट्कोणकेसरेषु दिक्षु च ॥ श्रीं ह्रींश्रींप्रसी

द कमले श्रीं ह्रीं श्रीं हृदयाय नमः ॥१॥ श्रीं ह्रीं श्रीं प्रसीदकमले श्रीं ह्रीं श्रीं शिरसे स्वाहा ॥२॥ श्रीं ह्रीं श्रीं प्रसीदकमले श्रीं ह्रीं श्री शिखायै वषट् ॥३॥ श्रीं ह्रीं श्रीं प्रसीदकमले श्रींह्रींश्री कवचाय हुं ॥४॥ श्रीं ह्रीं श्रीं प्रसीदकमले श्रीं ह्रीं श्रीं अस्त्राय फट् । इति पंचांगानि पूजयेत् ॥ तद्बहिरष्टदलमूले पूर्वादिक्रमेण ॐ श्रीधराय नमः ॥ १ ॥ ॐ हृषीकेशाय नमः ॥ २ ॥ ॐ वैकुण्ठाय नमः ॥ ३ ॥ ॐ विश्वरूपाय नमः ॥ ४ ॥ ॐ वासुदेवाय नमः ॥ ५ ॥ ॐ संकर्षणाय नमः ॥ ६ ॥ ॐ प्रद्युम्नाय नमः ॥ ७ ॥ ॐ अनिरुद्धाय नमः ॥ ८ ॥ इति पूजयेत् ॥ ततः पूर्वादिदिग्दलमध्येषु ॐ भारत्यै नमः ॥ १ ॥ ॐ पार्वत्यै नमः ॥ २ ॥ ॐ चांद्यै नमः ॥ ३ ॥ ॐ शच्यै नमः ॥ ४ ॥ ( विदिग्दलमध्ये ) ॐ दमकाय नमः ॥ ५ ॥ ॐ सलिलाय नमः ॥ ६ ॥ ॐ गुग्गुलवे नमः ॥ ७ ॥ ॐ कुरुंटकाय नमः ॥ ८ ॥ इति पूजयेत् ॥ ततो दलाग्रेषु पूर्वादिक्रमेण । ॐ अनुरागाय नमः ॥ १ ॥ ॐ संवादाय नमः ॥२॥ ॐ विजयाय नमः ॥ ३ ॥ ॐ वल्लभाय नमः ॥ ४ ॥ ॐ मदाय नमः ॥ ५ ॥ ॐ हर्षाय नमः ॥ ६ ॥ ॐ बलाय नमः ॥ ७ ॥ ॐ तेजसे नमः ॥ ८ ॥ इति महालक्ष्मीबाणान् पूजयेत् ॥ ततो भूपुरे इन्द्रादीन् दशदिक्पालान् तद्बाह्ये व ज्राद्यायुधानि च पूजयेत् । इत्यावरणपूजां कृत्वा धूपादिनीराजनांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं लक्षजपः ॥ तथा च ( शार दायाम् ) लक्षं जपेत्फलैर्बैल्वैर्जुहुयान्मधुरोक्षितैः ॥ दशांशं संस्कृते वह्नौ प्राक्प्रोक्तेनैव वर्त्मना ॥१॥ अनेन विधिना देवीं महालक्ष्मी मुपासते ॥ ये तेषु निवसेल्लक्ष्मीरस्मरंती निजालयम् ॥ २ ॥ उत्पलैर्जुहुयाल्लक्षं चंदमांभसि लोलितैः ॥ शत्रूणां लभते राज्यं विना युद्धेन पार्थिवः ॥ ३ ॥ जपन् राजसभां गच्छेत्संभाष्येत तया नरः ॥ दूर्वा देवी महालक्ष्मीर्विष्णुकांता मधुव्रता ॥ ४ ॥ मुसली शक्रवल्ली च सदा भद्रांजलिप्रिया ॥ हरिचंदनकर्पूरचन्दनाकोलरोचना ॥ ५ ॥ मालूककेसरौ कुष्ठं सर्वं पिष्ट्वा निशारसैः ॥ अष्टोत रसहस्रं तु जपित्वा तिलकक्रियाम् ॥ ६ ॥ कुर्वंतो मन्त्रिणः सर्वे वशे तिष्ठन्त्यहर्निशम् ॥ श्रियो मन्त्रं भजेन्मन्त्री श्रीसूक्तान्यपि संय जेत् ॥ ७ ॥ भूयसीं श्रियमाकांक्षन्सत्यवादी भवेत्सदा ॥ प्रत्यगाशामुखोऽश्रीयात्स्थितपूर्वप्रियं वदेत् ॥ ८ ॥ पूजये द्गंधपुष्पाद्यैरात्मानं नियतः शुचिः ॥ शयीत शुद्धशय्यायां तरुण्या सह नान्यथा ॥ ९ ॥ नग्नो नावतरेदंभस्तैलाभ्यक्तो न भक्षयेत् ॥ हरिद्रां न मुखे लिंपेन्न स्वपेदशुचिः क्वचित् ॥ १० ॥ न वृथा विलिखेद्भूमिं न बिल्वं द्रोणमंबुजम् ॥ धारयेन्मूर्ध्नि नैवाद्याच्छोणतैलं च केवलम् ॥ ११ ॥ मलिनो न भवेज्जातु कुत्सितान्नं न भक्षयेत् ॥ द्रोणपंकजबिल्वानि पद्भ्यां जातु न लंघयेत् ॥ १२ ॥ महदेवीमिंद्रवल्लीं श्रीवल्लीं विष्णुवल्लभाम् ॥ कन्यांबुजप्रवालं च धारयेन्मूर्ध्नि सर्वदा ॥ १३ ॥ इत्याचारपरो नित्यं विष्णुभक्तो दृढव्रतः ॥ श्रियमाप्नोति महतीं देवानामपि दुर्लभाम् ॥ इति सप्तविंशत्यक्षरलक्ष्मीमंत्रप्रयोगः ॥ अथ लक्ष्मीस्तोत्रप्रारंभः ॥ सिंहासनगतः शक्रः संप्राप्य त्रिदिवं पुनः ॥ देवराज्ये स्थितो देवीं तुष्टावाब्जकरां ततः ॥ १ ॥ इन्द्र उवाच ॥ नमस्ये सर्वभूतानां जननीमब्जसंभवाम् ॥ श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थलस्थिताम् ॥ २ ॥ पद्मालयां पद्मकरां पद्मपत्रनिभेक्षणाम् ॥ वंदे पद्ममुखीं देवीं पद्मनाभप्रियामहम् ॥ ३ ॥ त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनी ॥ सन्ध्या

रात्रिः प्रभा धृतिर्मेधा श्रद्धा सरस्वती॥४॥यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ॥।आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥५॥ आन्वीक्षिकी त्रयी वार्ता दंडनीतिस्त्वमेव च ॥ सौम्या सौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरितम् ॥६॥ का त्वन्या त्वामृते देवि सर्वं यज्ञमयं वपुः ॥ अध्यास्ते देवदेवस्य योगचिंत्यं गदाभृतः ॥ ७ ॥ त्वया देवि परित्यक्तं सकलं भवनत्रयम् ॥ विनष्टप्रायमभवत्त्वये दानीं समेधितम् ॥ ८ ॥ दाराः पुत्रास्तथाऽगारं सुहृद्धान्यं धनादिकम् ॥ भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम् ॥ ९ ॥ शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम् ॥ देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ॥ १० ॥ त्वमंबा सर्वभूतानां देवदेवो हरिः पिता ॥ त्वयैतद्विष्णुना चांब जगद्व्याप्तं चराचरम् ॥ ११ ॥मा नः कोशं तथा कोष्ठं मा गृहं मा परिच्छदम् ॥ मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि ॥ १२ ॥ मा पुत्रान्मा सुहृद्वर्गान्मा पशून्मा विभूषणम् ॥ त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलाश्रये ॥ १३ ॥ सत्त्वेन सत्यशौचाभ्यां तथा शील्यादिभिर्गुणैः ॥ त्यज्यंते ते नराः सद्यः संत्यक्ता ये त्वयाऽमले ॥ १४ ॥ त्वयावलोकिताः सद्यः शीला द्यैरखिलैर्गुणैः ॥ कुलैश्वर्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि ॥ १५ ॥ स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ॥ स शूरः स च विक्रान्तो यस्त्वया देवि वीक्षितः ॥ १६ ॥ सद्यो वैगुण्यमायांति शीलाद्याः सकला गुणाः ॥ पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ १७ ॥ न ते वर्णयितुं शक्ता गुणाञ्जिह्वाऽपि वेधसः ॥ प्रसीद देवि पद्माक्षि माऽस्मांस्त्याक्षीः कदाचन ॥ १८ ॥ पराशर उवाच ॥ एवं श्रीः संस्तुता सम्यक्प्राह हृष्टा शतक्रतुम् ॥ शृण्वतां सर्वदेवानां सर्वभूतस्थिता द्विज ॥ १९ ॥ श्रीरुवाच ॥ परितुष्टास्मि देवेश स्तोत्रेणानेन ते हरे ॥ वरं वृणीष्व यस्त्विष्टो वरदाऽहं तवागता ॥ २० ॥ इन्द्र उवाच ॥ वरदा यदि मे देवि वरार्हो यदि वाऽप्यहम् ॥ त्रैलोक्यं न त्वया त्याज्यमेष मेऽस्तु वरः परः ॥ २१ ॥ स्तोत्रेण यस्तवैतेन त्वां स्तोष्यत्यब्धिसंभवे ॥ स त्वया न परित्याज्यो द्वितीयोऽस्तु वरो मम ॥ २२ ॥ श्रीरुवाच ॥ त्रैलोक्यं त्रिदशश्रेष्ठ न संत्यक्ष्यामि वासव॥दत्तो वरो मयाऽयं ते स्तोत्राराधनतुष्टया ॥ २३ ॥ यश्च सायं तथा प्रातः स्तोत्रेणानेन मानवः ॥ मां स्तोष्यति न तस्याहं भविष्यामि पराङ्मुखी ॥ २४ ॥ पराशर उवाच ॥ एवं वरं ददौ देवी देवराजाय वै पुरा ॥ मैत्रेय श्रीर्महाभागा स्तोत्राराधनतोषिता ॥ २५ ॥ भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वमुदधेः पुनः ॥ देवदानवयत्नेन प्रसूताऽमृतमंथने ॥ २६ ॥ एवं यथा जगत्स्वामी देवराजो जनार्दनः ॥ अवतारं करोत्येषा तथा श्रीस्तत्सहायिनी ॥ २७ ॥ पुनश्च पद्मा संभूता यदाऽऽदित्योऽभवद्धरिः ॥ यदा च भार्गवो रामस्तदाऽभूद्धरणी त्वियम् ॥ २८ ॥ राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि ॥ अन्येषु चावतारेषु विष्णोरेषाऽनपायिनी ॥ २९ ॥ देवत्वे देवदेहेयं मानुषत्वे च मानुषी ॥ विष्णोर्देहानुरूपं वै करोत्येषाऽऽत्मनस्तनुम् ॥ ३० ॥ यश्चैवं शृणुयाज्जन्म लक्ष्म्या यश्च पठेन्नरः ॥ श्रियो न विच्युतिस्तस्य गृहे यावत्कुलत्रयम् ॥ ३१ ॥ पठ्यते येषु चैवैष गृहेषु श्रीस्तवो मुने ॥ अलक्ष्मीः कलहाधारा न तेष्वास्ते कदाचन ॥ ३२ ॥ एतत्ते कथितं ब्रह्मन् यन्मां त्वं परिपृच्छसि ॥ क्षीराब्धौ श्रीर्यथा जाता पूर्वं भृगुसुता सती ॥ ३३ ॥ इति सकलविभूत्यवाप्तिहेतुः स्तुतिरियमिंद्रमुखोद्गता हि लक्ष्म्याः ॥ अनुदिनमिह पठ्यते नृभिर्यैर्वसति न तेषु कदाचिदप्यलक्ष्मीः॥३४॥

इति श्रीविष्णुपुराणे लक्ष्मीस्तोत्रं समाप्तम् ॥ अथान्यदपि लक्ष्मीस्तोत्रम् ॥ त्रैलोक्यपूजिते देवि कमले विष्णुवल्लभे ॥ यथात्वम चला कृष्णे तथा भव मयि स्थिरा ॥ १ ॥ कमला चंचला लक्ष्मीश्चला भूतिर्हरिप्रिया ॥ पद्मा पद्मालया संपदुच्चैः श्री पद्मधारिणी ॥ २ ॥ द्वादशैतानि नामानि लक्ष्मीं संपूज्य यः पठेत् ॥ स्थिरा लक्ष्मीर्भवेत्तस्य पुत्रदारादिभिः सह ॥ इति लक्ष्मीस्तोत्रं द्वितीयम् ॥ अथ लक्ष्मीकवचप्रारंभः ॥ अथ वक्ष्ये महेशानि कवचं सर्वकामदम् ॥ यस्य विज्ञानमात्रेण भवेत्साक्षात्सदाशिवः ॥ १ ॥ नार्चनं तस्य देवेशि मंत्रमात्रं जपेन्नरः ॥ स भवेत्पार्वतीपुत्रः सर्वशास्त्रपुरस्कृतः ॥ २ ॥ विद्यार्थिना सदा सेव्या विशेषे विष्णुवल्लभा ॥ ॐ अस्याश्चतुरक्षरविष्णुवनितायाः कवचस्य श्रीभगवान् शिव ऋषिः । अनुष्टुप् छंदः । वाग्भवा देवता । वाग्भवं बीजम् ॥ लज्जा शक्तिः । रमा कीलकम् ॥ कामबीजात्मकं कवचं मम सुकवित्वपांडित्यसमृद्धिसिद्धये विनियोगः ॥ ऐंकारो मस्तके पातु वाग्भवा सर्वसिद्धिदा ॥ ३ ॥ ह्रीं पातु चक्षुषोर्मध्ये चक्षुर्युग्मे च शांकरी ॥ जिह्वायां मुखवृत्ते च कर्णयोर्दंतयोर्नसि ॥ ४ ॥ ओष्ठाधारे दंतपंक्तौ तालुमूले हनौ पुनः ॥ पातु मां विष्णुवनिता लक्ष्मीः श्रीवर्णरूपिणी ॥ ५ ॥ कर्णयुग्मे भुजद्वंद्वे स्तनद्वंद्वे च पार्वती ॥ हृदये मणिबंधे च ग्रीवायां पार्श्वयोर्द्वयोः ॥ ६ ॥ पृष्ठदेशे तथा गुह्ये वामे च दक्षिणे तथा ॥ उपस्थे च नितंबे च नाभौ जंघाद्वये पुनः ॥ ७ ॥ जानुचक्रे पदद्वंद्वे घुटिकांगुलिमूलके ॥ सधातुप्राण शक्त्या वा सीमन्यां मस्तके तथा ॥ ८ ॥ सर्वांगे पातु कामेशी महादेवी समुन्नतिः ॥ पुष्टिः पातु महामाया उत्कृष्टिः सर्वदावतु ॥ ९ ॥ ऋद्धिः पातु सदा देवी सर्वत्र शंभुवल्लभा ॥ वाग्भवी सर्वदा पातु पातु मां हरगेहिनी ॥ १० ॥ रमा पातु महादेवी पातु माया स्वराट् स्वयम् ॥ सर्वांगे पातु मां लक्ष्मीर्विष्णुमाया सरस्वती ॥ ११ ॥ विजया पातु भवने जया पातु सदा मम ॥ शिवदूती सदा पातु सुंदरी पातु सर्वदा ॥ १२ ॥ भैरवी पातु सर्वत्र भेरुंडा सर्वदावतु ॥ त्वरिता मां पातु नित्यमुग्रतारा सदावतु ॥ १३ ॥ पातु मां कालिका नित्यं कालरात्रिः सदावतु ॥ नव दुर्गाः सदा पान्तु कामाख्या सर्वदावतु ॥ १४ ॥ योगिन्यः सर्वदा पान्तु मुद्राः पान्तु सदा मम ॥ मात्राः पान्तु सदा देव्यश्चक्रस्थो योगिनीगणः ॥ १५ ॥ सर्वत्र सर्वकार्येषु सर्वकर्मसु सर्वदा ॥ पातु मां देवदेवी च लक्ष्मीः सर्वसमृद्धिदा ॥ १६ ॥ इति ते कथितं दिव्यं कवचं सर्वसिद्धये ॥ यत्र तत्र न वक्तव्यं यदीच्छेदात्मनो हितम् ॥ १७ ॥ शठाय भक्तिहीनाय निंदकाय महेश्वरि ॥ न्यूनांगे ह्यतिरिक्तांगे दर्शयेन्न कदाचन ॥ १८ ॥ न स्तवं दर्शयेद्दिव्यं संदर्श्य शिवहा भवेत् ॥ कुलीनाय महेशाय दुर्गाभक्तिरताय च ॥ १९ ॥ वैष्णवाय विशुद्धाय दद्यात्कवचमुत्तमम् ॥ निजशिष्याय शांताय धनिने कुलिने तथा ॥ २० ॥ दद्यात्कवचमित्युक्तं सर्वतंत्रसमन्वितम् ॥ शनौ मंगलवारे च रक्तचन्दनकैस्तथा ॥ २१ ॥ सुतिथौ शुभयोगे च श्रवणायां रवेर्दिने ॥ विलिखेत्प्रपठेत्स्तोत्रं शून्यागारे सुरालये ॥ २२ ॥ कुमारीं पूजयित्वा च यजेद्देवीं सनातनीम् ॥ घृताद्यैः सोपकरणैः पुष्पधूपैर्विशेषतः ॥ २३ ॥ ब्राह्मणान्भोजयित्वा च पूजयेत्परमेश्वरीम् ॥ आखेटकमुपाख्यानं तत्र कुर्याद्दिनत्रयम् ॥ २४ ॥

तदा धरेन्महारक्षां शंकरेण प्रभाषिताम् ॥ मारणद्वेषणादीनि लभते नात्र संशयः ॥ २५ ॥ स भवेत्पार्वतीपुत्रः सर्वशास्त्रपुरस्कृतः ॥ गुरुर्देवो हरः साक्षात्पत्नी तस्य हरिप्रिया ॥ अभेदेन यजेद्यस्तु तस्य सिद्धिरदूरतः ॥ २६ ॥ पठति य इह मर्त्यो नित्यमार्द्रान्तरात्मा जपफलमनुवेलं लप्स्यते यद्विशेषम् ॥ स भवति पदमुच्चैः सम्पदां पादनम्रक्षितिपमुकुटलक्ष्मीर्लक्षणानां चिराय ॥ २७ ॥ इति विश्वसारे श्रीलक्ष्मीकवचं समाप्तम् ॥ श्रीमहालक्ष्म्यै नमः ॥ शम् ॥ अथ श्रीसूक्तविधानम् ॥ ( ऋग्विधाने ) य इच्छेद्वरदां देवीं श्रियं नित्यं कुले स्थिताम् ॥ स शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ॥१॥ श्रियः पंचदशर्चं च श्रीकामः सततं जपेत् ॥ आवाहयेच्छ्रियं पद्मे पंचभिः कनकेन वा ॥ २ ॥ उपहारानुपहरेच्छुक्लान्भक्ष्यान्पयो दधि ॥ स्थालीपाकं च शालीनां पयसा संप्रकल्पयेत् ॥ ३ ॥ चान्द्रायणकृतात्मा तु प्रपद्येत्प्रयतः श्रिये ॥ सर्वौषधीभिः पाठाभिः स्नात्वाऽद्भिः पावनैरपि ॥ ४ ॥ श्रीसूक्तं यो जपेद्भक्त्या तस्याऽलक्ष्मीर्विनश्यति ॥ जुहुयाद्यश्च धर्मज्ञो हविष्येण विशेषतः ॥ ५ ॥ ॥ अथ प्रयोगः ॥ तत्रादौ चान्द्रायणादिद्वारा प्रायश्चित्तं सम्पाद्य पूर्वदिने अयुतगायत्रीजपं कृत्वा प्रारंभदिने प्रातर्नद्यादौ स्नात्वा सन्ध्यादिनित्यकर्म्म समाप्य सर्वौषधियुक्तैरुष्णोदकैर्मङ्गलस्नानं कृत्वा नवे शुक्लवाससी परिधाय यथायोग्यालंकृतो देवालयादिषु विविक्ते देशे जपस्थानं प्रकल्पयेत् ॥ ततः स्वासने प्राङ्मुख उपविश्य सपवित्रकरः। आचम्य प्राणानायम्य। ॐ 'सुमुखश्च०' इत्यादिगणपतिस्मरणं कुर्य्यात्। ततो देशकालौ संकीर्त्य। मम अनन्ताव्यवच्छिन्नशाश्वतलक्ष्मीप्राप्तिद्वारा सुखसम्पदायुरारोग्यप्राप्त्यर्थं श्रीमहालक्ष्मीदेवताप्रीत्यर्थं च अमुकसंख्यया श्रीसूक्तजपं करिष्ये। तदंगत्वेन न्यासध्यानादिकर्म्म करिष्ये। इति च सङ्कल्प्य न्यासं कुर्य्यात्। तद्यथा। अस्य हिरण्यवर्णामित्यादिपञ्चदशर्चस्य श्रीसूक्तस्य आनन्दकर्दमचिक्लीतेंदिरासुता ऋषयः आद्यानां तिसृणामनुष्टुप्छन्दः चतुर्थ्याः प्रस्तारपंक्तिश्छन्दः। पञ्चमीषष्ठ्योस्त्रिष्टुप्छन्दः। ततोष्टानामनुष्टुप्छन्दः। अन्त्यायाः प्रस्तारपंक्तिश्छन्दः। श्रीविश्वावसुर्देवता स्थिरलक्ष्मीप्राप्तये न्यासे जपे विनियोगः। ॐ आनन्दकर्दमचिक्लीतेंदिरासुतऋषिभ्यो नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्प्रस्तारपंक्तित्रिष्टुबनुष्टुप्प्रस्तारपंक्तिच्छन्दोभ्यो नमः मुखे ॥ २ ॥ ॐ श्रीविश्वावसुदेवताभ्यां नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ अथ सूक्तन्यासः। ॐ हिरण्यवर्णां हरिणीम्० इति शिरसि ॥ १ ॥ ॐ तांमआव ह० नेत्रयोः ॥ २ ॥ ॐ अश्वपूर्वामिति कर्णयोः ॥ ३ ॥ ॐ कांसोस्मितामिति नासिकयोः ॥ ४ ॥ ॐ चन्द्रांप्रभासामिति मुखे ॥ ५ ॥ ॐ आदित्यवर्णे इति गले ॥ ७ ॥ उपैतुमामिति बाह्वोः ॥ ७ ॥ ॐ क्षुत्पिपासेति हृदि ॥ ८ ॐ गन्धद्वारामिति नाभौ ॥ ९ ॥ ॐ मनसःकाममिति गुह्ये ॥ १० ॥ ॐ कर्दमेनेति गुदे ॥ ११ ॥ ॐ आपःसृजंत्विति ऊर्वोः ॥ १२ ॥ ॐ आर्द्रां पुष्करिणीमिति जानुनोः ॥ १३ ॥ ॐ आर्द्रां यस्करिणीमिति जंघयोः ॥ १४ ॥ ॐ तांमआवह इति पादयोः ॥१५॥ एवमेताः प्रणवादिनमोंता विन्यस्य ध्यायेत् "या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी गम्भीरा

वर्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया ॥ या लक्ष्मीर्दिव्यरूपैर्मणिगणखचितैः स्नापिता हेमकुंभैः सा नित्यं पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥ १ ॥ " एवं ध्यात्वा मानसोपचारैः सम्पूजयेत् ॥ ततः स्वपुरतः पीठे चतुर्द्वारचतुरस्रत्रयावृतमष्टदलं कमलं विधाय ॐ मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः ॥ इति पीठदेवताः संपूज्य । ॐ विभूत्यै नमः ॥१॥ ॐ उन्नत्यै नमः ॥२॥ ॐ कांत्यै नमः ॥३॥ ॐ सृष्ट्यै नमः ॥४॥ ॐ कीर्त्यै नमः ॥५॥ ॐ संनत्यै नमः ॥६॥ ॐ पुष्ट्यै नमः ॥७॥ ॐ उत्कृष्ट्यै नमः ॥८॥ ( मध्ये ) ॐ ऋद्ध्यै नमः ॥ ९ ॥ इति पीठशक्तीः संपूजयेत् । तत्र ॐ श्रीं कमलासनाय नमः इत्यासनं दत्त्वा तत्र स्वर्णमयीं महालक्ष्मीप्रतिमां सावयवां संस्थाप्य प्राणप्रतिष्ठां कृत्वा ॐ हिरण्यवर्णामित्यादिश्रीसूक्तेनावाहनादिश्वेतपुष्पांतैरुपचारैः संपूज्य पूर्वोक्तैकाक्षरप्रयोगवदावरणपूजां कृत्वा धूपदीपशुक्लभक्ष्यान् पयो दधि शुक्लानुपहारांश्च निवेद्य नीराजनांतं कृत्वा पूर्वोक्तस्तवेन स्तुत्वा सूक्तं पठेत् ॥ ॐ हिरण्यवर्णां हरिणींसुवर्णरजतस्रजाम् ॥ चन्द्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥१॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहम् ॥२॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीम् ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषताम् ॥३॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीम् ॥पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियम् ॥४॥ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदाराम् ॥ तांपद्मिनीमीशरणमहंप्रपद्येऽअलक्ष्मीर्मेनश्यतांत्वांवृणे ॥५॥ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदंतुममांतरायाश्चबाह्याअलक्ष्मीः ॥६॥ उपैतुमांदेवसखः कीर्तिश्चमणिनासह ॥ प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥७॥ क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहम् ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ॥८॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥९॥ मनसः काममाकूतिंवाचः सत्यमशीमहि ॥पशूनांरूपमन्नस्यमयिश्रीः श्रयतांयशः ॥१०॥ कर्दमेनप्रजाभूतामयिसंभवकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीम् ॥११॥ आपः सृजंतुस्निग्धानिचिक्लीतवसमेगृहे । निचदेवींमातरंश्रियंवासयमेकुले ॥१२॥ आर्द्रांपुष्करिणींपुष्टींपिंगलांपद्ममालिनीम् । चंद्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ १३ ॥ आर्द्रांयष्करिणींयष्टींसुवर्णांहेममालिनीम् ॥ सूर्यांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ १४ ॥ तांमऽआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विन्देयंपुरुषानहम् ॥ १५ ॥ यः शुचिः प्रयतोभूत्वाजुहुयादाज्यमन्वहम् ॥ श्रियः पंचदशर्चंचश्रीकामः सततं जपेत् ॥ १६ ॥ इतिश्रीसूक्तम् ॥ एवं यथासंकल्पितसंख्यया सूक्तं पठित्वा प्रत्यहं तत्संख्यया वा समिद्धेऽग्नौ घृतहोमं कृत्वा । भगवतीं प्रार्थयेत् । " सरसिजनिलये सरोजहस्ते धवलतरांशुकगंधमाल्यशुभ्रे ॥ भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ १ ॥ धनमग्निर्धनंवायुर्धनंसूर्योधनंवसुः ॥ धनमिंद्रोबृहस्पतिर्वरुणंधन

मश्विनौ ॥ २ ॥ वैनतेयसोमंपिबसोमंपिबतुवृत्रहा ॥ सोमंधनस्यसोमिनोमह्यंददातुसोमिनः ॥ ३ ॥ नक्रोधोनचमात्सर्यंनलोभोना शुभामतिः ॥ भवन्तिकृतपुण्यानांभक्तानांजाप्यसूक्तके ॥ ४ ॥ पद्मानने पद्मऊरूपद्माक्षिपद्मसंभवे ॥ तन्मेभजसिपद्माक्षियेनसौ रूयं लभाम्यहम् ॥ ५ ॥ विष्णुपत्नींक्षमांदेवींमाधवींमाधवप्रियाम् । विष्णुप्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥ ६ ॥ महालक्ष्म्य चविद्महेविष्णुपत्न्यैचधीमहि ॥ तन्नोलक्ष्मीः प्रचोदयात् ॥ ७ ॥ पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ॥ विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥ ८ ॥ आनंदः कर्दमः श्रीदश्चिक्लीतइतिविश्रुताः ॥ ऋषयः श्रियपुत्राश्चमयिश्री र्देवीदेवता ॥ ९ ॥ ऋणरोगादिदारिद्र्यं पापञ्च अपमृत्यवः ॥ भयशोकमनस्तापानश्यंतुममसर्वदा ॥ १० ॥ श्रीवर्चस्यमायुष्यमारो ग्यमाविधात्पवमानंमहीयते ॥ धनंधान्यंपशुंवहुपुत्रलाभंशतसंवत्सरं दीर्घमायुः ॥ ११ ॥ इति प्रार्थना ॥ (ऋग्विधाने) चन्द्रामिति तु पद्मानि जुहुयात्सर्पिषा द्विजः ॥ आदित्यवर्णेत्यनया बिल्वहोमो विधीयते ॥ बिल्वमध्यएवाग्निः स्यात्स्थालीपाकं हुनेद्द्विजः ॥ दशसाहस्रिको होमः श्रीकामः प्रथमो विधिः ॥ हुत्वा तु प्रयुतं सम्यगनंतं विंदते श्रियम् ॥ अयुतं शतकृत्वस्तु हुत्वा शुक्लानि स र्पिषा ॥ अनंतामव्यवच्छिन्नां शाश्वतीं विंदते श्रियम् ॥ अशक्तौ जप एवोक्तो दशसाहस्रिको वरः ॥ जप्त्वा तु प्रयुतं सम्यगनंतं विंदते श्रियम्॥अयुतं शतकृत्वस्तु जप्त्वा श्रियमुपाश्नुते॥ अप्स्वेव जुहुयान्नित्यं पद्मान्ययुतशो निशि ॥ दृष्ट्वा श्रियं तूपरमेत्किलासत्त्वाद्बिभे तवै॥बिल्वाशी बिल्वनिलये जुहुद्बिल्वानि सर्पिषा॥एकविंशतिरात्रेण परां सिद्धिं नियच्छति॥येनयेन च कामेन जुहोति प्रयतः श्रियै ॥ पद्मान्यथापि बिल्वानि स स कामः समृध्यति॥न जातु कृपणोर्थाय श्रियमावाहयेत्क्वचित्॥न च किंचनकामेन होमः कार्यः कथंचन॥ महद्वा प्रार्थ्यमानेन राज्यकामेण वा पुनः॥वाचः परं प्रार्थयिता यतात्मायुक्तः श्रियं जपेत् ॥(विष्णुधर्मोत्तरेपि) "श्रीसूक्तं यो जपेद्भक्त्या तस्याऽलक्ष्मीर्विनश्यति । जुहुयाद्यश्च धर्मज्ञो हविष्येण विशेषतः ॥ श्रीसूक्तेन तु पद्मानां घृताक्तानां भृगूत्तम । अयुतं होमये द्यस्तु वह्नौ भक्तियुतो नरः ॥ पद्महस्तद्वयालाभ भजन्तमुपतिष्ठति । दशायुतं तु पद्मानां जुहुयाद्यस्तथा जले ॥ नापैति तत्कुलाल्ल क्ष्मीर्विष्णोर्वक्षोगता यथा ॥ घृताक्तानां तु बिल्वानां हुत्वा रामायुतं तथा । बहुवित्तमवाप्नोति स यावन्मनसेच्छति ॥बिल्वानां लक्ष होमेन कुले लक्ष्मीमुपाश्नुते॥पद्मानामथ बिल्वानां कोटिहोमं समाचरेत्॥सत्यलोकमवाप्नोति देवेंद्रत्वमपि ध्रुवम्॥संपूज्य देवीं वरदां यथावत्पद्मैः सितैर्वा कुसुमैस्तथान्यैः ॥ क्षीरेण धूपैः परमान्नभक्ष्यैर्लक्ष्मीमवाप्नोति विधानतश्च ॥ इति लक्ष्मीसूक्तविधानं समाप्तम्॥

अथ सरस्वतीमंत्रानुष्ठानम् ॥ तत्र तावद्दशाक्षरात्मकवागीश्वरीमंत्रप्रयोगः । भूतशुद्ध्यादिनिवृत्त्यादिकलामातृकान्यासांतं पूर्ववत्कर्त्त व्यम् । मंत्रो यथा ("ॐ वदवदवाग्वादिनि स्वाहा" इति दशाक्षरो मंत्रः ॥ अस्य मंत्रस्य कण्वः ऋषिः विराट् छंदः वाग्देवता। विद्या प्राप्त्यर्थे जपे विनियोगः ॥ ॐ कण्वऋषये नमः शिरसि ॥ १ ॥ ॐ विराट्छन्दसे नमः मुखे ॥ २ ॥ ॐ वागीश्वरीसरस्वतीदेवतायै नमः हृदि ॥ ३ ॥ इति ऋष्यादिन्यासः॥ ॐ वं नमः शिरसि ॥ १ ॥ ॐ दं नमः दक्षश्रवणे ॥२॥ ॐ वं नमः वामश्रवणे ॥ ३ ॥ ॐ दं नमः दक्षिणनेत्रे । ४ ॥ ॐ वां नमः वामनेत्रे ॥ ५ ॥ ॐ ग्वां नमः दक्षिणनासायाम् ॥६॥ ॐ दिं नमः वामनासायाम् ॥७॥ ॐ निं

नमः मुखे ॥ ८ ॥ॐ स्वां नमः लिंगे ॥ ९ ॥ ॐ हां नमो गुदे ॥ १० ॥ इति मंत्रवर्णन्यासः ॥ॐ अंकंखंगंघंङंआं अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ इंचंछंजंझंञंईं तर्जनीभ्यां नमः ॥ २ ॥ ॐ उंटंठंडंढंणंऊं मध्यमाभ्यां नमः ॥ ३ ॥ ॐ एंतंथंदंधंनंऐं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ ओंपंफंबंभंमंऔं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ अंयंरंलंवंअः करतलकरपृष्ठाभ्यां नमः इति करन्यासः ॥ एवं हृदयादिषडङ्गन्यासं कुर्यात् ॥ अथ ध्यानम् ॥ तरुणशकलमिंदोर्बिभ्रती शुभ्रकांतिः कुचभरनमिताङ्गी सन्निषण्णा सिताब्जे ॥ निजकरकमलोद्यल्लेखनीपुस्तकश्रीः सकलविभवसिद्ध्यै पातु वाग्देवता नः ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य पीठे आधारशक्त्यादिपरतत्त्वान्तपीठदेवताः पूर्ववत् संपूज्य पीठशक्तीः पूजयेत् ॥ तद्यथा–प्राचीक्रमेण । ॐ मेधायै नमः ॥ १ ॥ ॐ प्रज्ञायै नमः॥२॥ॐ प्रभायै नमः ॥३॥ॐ विद्यायै नमः ॥४॥ॐ श्रियै नमः ॥५॥ॐ धृत्यै नमः ॥६॥ॐ स्मृत्यै नमः ॥७॥ॐ बुद्ध्यै नमः॥८॥ ( मध्ये ) ॐ विद्येश्वर्यै नमः ॥ ९ ॥ इति पीठशक्तीः संपूज्य । वर्णाब्जेनासनं दत्त्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादिपुष्पांतैरुपचारैः संपूज्यावरणपूजां कुर्यात् । तत्र षट्कोणे आग्नेयादिकेसरेषु मध्ये दिक्षु च । ॐ अंकंखंगंघंङंआं हृदयाय नमः ॥ १ ॥ ॐ इंचंछंजंझंईं शिरसे स्वाहा ॥ २ ॥ ॐ उंटंठंडंढंणऊं शिखायै वषट् ॥ ३ ॥ ॐ एंतंथंदंधंनंऐं कवचाय हुं ॥ ४ ॥ ॐ ओंपंफंबंभंमं औं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ अंयंरंलंवंअः अस्त्राय फट् ॥ ६ ॥ इत्यंगानि पूजयेत् । तद्बहिरष्टदलेषु पूर्वादिक्रमेण । ॐ योगायै नमः ॥ १ ॥ ॐ सत्यायै नमः ॥ २ ॥ ॐ विमलायै नमः ॥ ३ ॥ ॐ ज्ञानायै नमः ॥ ४ ॥ ॐ बुद्ध्यै नमः ॥ ५ ॥ ॐ स्मृत्यै नमः ॥ ६ ॥ ॐ मेधायै नमः ॥ ७ ॥ ॐ प्रज्ञायै नमः ॥ ८ ॥ इति पूजयेत् ॥ ततो दलाग्रेषु ॐ ब्राह्म्यै नमः ॥ १ ॥ ॐ माहेश्वर्यै नमः ॥ २ ॥ ॐ कौमार्यै नमः ॥ ३ ॥ ॐ वैष्णव्यै नमः ॥ ४ ॥ ॐ वाराह्यै नमः ॥ ५ ॥ ॐ इन्द्राण्यै नमः ॥ ६ ॥ ॐ चामुण्डायै नमः ॥ ७ ॥ॐ महालक्ष्म्यै नमः ॥ ८ ॥ इति पूजयेत् ॥ तद्बाह्ये चतुरस्रे भूपुरे पूर्वादिषु इन्द्रादिदशदिक्पालान् संपूज्य तद्बाह्ये वज्राद्यायुधानि च पूजयेत् ॥ एवमावरणपूजां कृत्वा धूपादिनीराजनांतपूजां समाप्य ॥ स्तवेन स्तुत्वा जपं कुर्यात् । अस्य पुरश्चरणं दशलक्षजपः ॥ तथा च ( शारदायाम् ) “ दक्षलक्षं जपेन्मन्त्रं दशांशं जुहुयात्ततः ॥ पुण्डरीकैः पयोभ्यक्तैस्तिलैर्वा मधुराप्लुतैः ॥ १ ॥ एवं संपूजयेन्मन्त्री जपहोमादितत्परः ॥ ब्रह्मचर्यरतः शुद्धः शुद्धदंतनखादिकः ॥ २ ॥ संस्मरन्सर्ववनिताः सततं देवताधिया ॥ कवित्वं लभते धीमान् मासैर्द्वादशभिर्ध्रुवम् ॥ ३ ॥ कृत्वा तन्मन्त्रितं तोयं सहस्रं प्रत्यहं पिबेत् ॥ महाकविर्भवेन्मन्त्री वत्सरेण न संशयः ॥ ४ ॥ उरोमात्रे जले स्थित्वा ध्यायेन्मार्तण्डमण्डले ॥ स्थितां देवीं प्रतिदिनं त्रिसहस्रं जपेन्मनुम् ॥ ५ ॥ लभते मण्डलात्सिद्धिं वाचमप्रतिमां भुवि ॥ पलाशबिल्वकुसुमैर्जुहुयान्मधुरोक्षितैः ॥ ६ ॥ समिद्भिर्वा तदुत्थाभिर्यशः प्राप्नोति वाक्पतेः ॥ होमोय सर्वसौभाग्यलक्ष्मीवश्यप्रदो भवेत् ॥ ७ ॥ राजवृक्षसमुद्भूतैः प्रसूनैर्मधुराप्लुतैः ॥ तत्समिद्भिश्च जुहुयात्कवित्वमतुलं भवेत् ॥ ८ ॥ इत्थं दशाक्षरः प्रोक्तः सिद्ध्यै वाचमिच्छताम् ॥ इति दशाक्षरसरस्वतीमन्त्रप्रयोगः ॥ ॥ अथ षोडशवर्णात्मकसरस्वतीमन्त्रप्रयोगः ॥ ( मन्त्रो यथा ) “ ऐं नमो भगवति

वदवदवाग्देविस्वाहा" इति षोडशाक्षरो मन्त्रः ॥ अस्य मंत्रस्य कण्व ऋषिः । विराट् छन्दः । सरस्वती देवता । ऐं बीजम् । स्वाहा शक्तिः । सर्वेष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ कण्वऋषये नमः शिरसि ॥१॥ ॐ विराट्छन्दसे नमः मुखे ॥२॥ ॐ सरस्वतीदेवतायै नमः हृदये ॥३॥ ॐ ऐं बीजाय नमः गुह्ये ॥४॥ ॐ स्वाहा शक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः । ॐ ऐं अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ नमस्तर्जनीभ्यां नमः ॥ २ ॥ ॐ भगवति मध्यमाभ्यां नमः ॥ ३ ॥ ॐ वदवद अनामिकाभ्यां नमः ॥ ४ ॥ ॐ वाग्देवि कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ स्वाहा करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेव हृदयादिन्यासं कृत्वा ध्यायेत् ॥ शुभ्रां स्वच्छविलेपमाल्यवसनां शीतांशुखण्डोज्ज्वलां व्याख्यामक्षगुणं सुधाढ्यकलशं विद्यां च हस्तांबुजैः ॥ बिभ्राणां कमलासनां कुचनतां वाग्देवतां सुस्मितां वंदे वाग्विभवप्रदां त्रिनयनां सौभाग्यसंपत्करीम् ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य पूर्वोक्ते पीठे पाद्यादिपुष्पांतैरुपचारैः सम्पूज्य आवरणपूजां कुर्यात् ॥ ( षट्कोणे ) आग्नेयादिकोणेषु मध्ये दिक्षु च ॐ हृदयाय नमः ॥ १ ॥ ॐ नमः शिरसे स्वाहा ॥ २ ॥ ॐ भगवति शिखायै वषट् ॥ ३ ॥ ॐ वदवद कवचाय हुं ॥ ४ ॥ ॐ वाग्देवि नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ स्वाहा अस्त्राय फट् इति षडङ्गानि पूजयेत् । अन्यत्सर्वं पूर्ववत् ॥ अस्य पुरश्चरणमष्टलक्ष जपः ॥ तथा च " हविष्याशी जपेत्सम्यग्वसुलक्षमनन्यधीः ॥ दशांशं जुहुयादंते तिलैराज्यपरिप्लुतैः ॥१॥ पिबेत्तन्मन्त्रितं तोयं प्रातःकाले दिनेदिने ॥ विद्वान्वत्सरतो मन्त्री भवेन्नास्ति विचारणा ॥ २ ॥ अभिषिंचेज्जलैर्जप्तैरात्मानं स्नानकर्मणि ॥ तर्पयेत्तां जलैः शुद्धैरतिमेधामवाप्नुयात् ॥३॥ पुष्पगन्धादिकं जप्तं सर्वं तद्धारयेत्सुधीः ॥ सभायां पूज्यते सद्भिर्वादे च विजयी भवेत् ॥ ४ ॥ इति षोडशाक्षरात्मकमंत्रप्रयोगः ॥ अथैकादशाक्षरमंत्रप्रयोगः ॥ मंत्रो यथा-"ॐ ह्रींऐंह्रीं ॐ सरस्वत्यै नमः " इत्येकादशाक्षरो मंत्रः ॥ अस्य मंत्रस्य कण्व ऋषिः। विराट् छंदः। सरस्वती देवता । ऐं बीजम् । नमः शक्तिः । सर्वेष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐकण्वऋषये नमः शिरसि ॥१॥ ॐ विराट् छंदसे नमः मुखे ॥ २ ॥ ॐ सरस्वतीदेवतायै नमः हृदि ॥ ३ ॥ ॐऐं बीजाय नमः गुह्ये ॥४॥ ॐ नमः शक्तये नमः पादयोः ॥५॥ इति ऋष्यादिन्यासः ॥ ॐ ॐ नमो ब्रह्मरंध्रे ॥१॥ ॐ ह्रीं नमो भ्रूमध्ये ॥२॥ ॐ ऐं नमः दक्षिणनेत्रे ॥३॥ ॐ ह्रीं नमः वामनेत्रे ॥४॥ ॐ ॐ नमः दक्षिणनासिकायाम् ॥ ५ ॥ ॐ सं नमः वामनासायाम् ॥ ६ ॥ ॐ रं नमः दक्षिणकर्णे ॥ ७ ॥ ॐ स्वं नमः वामकर्णे ॥ ८ ॥ ॐ त्यैं नमः मुखे ॥ ९ ॥ ॐ नं नमः लिंगे ॥ १० ॥ ॐ मं नमः गुदे ॥ ११ ॥ इति मंत्रवर्णन्यासः । ऐं अंगुष्ठाभ्यां नमः ॥ १ ॥ ऐं तर्जनीभ्यां नमः ॥ २ ॥ ऐं मध्यमाभ्यां नमः ॥ ३ ॥ ऐं अनामिकाभ्यां नमः ॥ ४ ॥ ऐं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ऐं करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ एवमेव हृदयादिषडंगन्यासं कृत्वा ध्यायेत् ॥ " वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुंदप्रभां चन्द्रार्धांकितमस्तकां निजकरैः संबिभ्रतीमादरात् ॥ वीणामक्षगुणां सुधाढ्यकलशं विद्यां च तुंगस्तनीं दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढां भजे * ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य

* अत्रत्यं सरस्वतीयन्त्रं पूर्वत्र द्रष्टव्यम् ।

पूर्वोक्ते पीठे मूलेन मूर्तिं प्रकल्प्य आवाहनादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ तद्यथा–देव्याः ( दक्षिणपार्श्वे ) ॐ संस्कृतायै वाङ्मय्यै नमः ॥ १ ॥ ( वामपार्श्वे ) ॐ प्राकृतायै वाङ्मय्यै नमः ॥ २ ॥ इति संपूज्य षट्कोणे आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च ऐं हृदयाय नमः ॥ १ ॥ ऐं शिरसे स्वाहा ॥ २ ॥ ऐं शिखायै वषट् ॥ ३ ॥ ऐं कवचायहुम् ॥ ४ ॥ ऐं नेत्रत्रयाय वौषट् ॥ ५ ॥ ऐं अस्त्राय फट् ॥ इति षडंगानि पूजयेत् ॥ तद्बहिरष्टदले पूर्वादिक्रमेण । ॐ प्रज्ञायै नमः ॥ १ ॥ ॐ मेधायै नमः ॥ २ ॥ ॐ श्रुत्यै नमः ॥ ३ ॥ ॐ शक्त्यै नमः ॥ ४ ॥ ॐ स्मृत्यै नमः ॥ ५ ॥ ॐ वागीश्वर्यै नमः ॥ ६ ॥ ॐ मत्यै नमः ॥ ७ ॥ ॐ स्वस्त्यै नमः ॥ ८ ॥ इति पूजयेत् ॥ ततो दलाग्रेषु ॐ ब्राह्म्यै नमः ॥ १ ॥ ॐ माहेश्वर्यै नमः ॥ २ ॥ ॐ कौमार्यैनमः ॥ ३ ॥ ॐ वैष्णव्यै नमः ॥ ४ ॥ ॐ वाराह्यै नमः ॥ ५ ॥ ॐ इन्द्राण्यै नमः ॥ ६ ॥ ॐ चामुंडायै नमः ॥ ७ ॥ ॐ महालक्ष्म्यै नमः ॥ ८ ॥ इति पूजयेत् ॥ तद्बाह्ये भूपुरे पूर्वादिक्रमेण इंद्रादिदशदिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत् । एवम्आवरणपूजां कृत्वाधूपादिनीराजनांतं संपूज्य जपं कुर्य्यात् ॥ अस्य पुरश्चरणं द्वादशलक्षजपः ॥ तथा च । जपेद्वा दशलक्षाणि तत्सहस्रं सितांबुजैः ॥ नागचंपकपुष्पैर्वा जुहुयात्साधकोत्तमः ॥ १ ॥ इति संपूजयेद्देवीं साक्षाद्वाग्वल्लभो भवेत् ॥ दशाक्षरसमुक्तानि कर्म्माण्यत्रापि साधकः ॥ २ ॥ एवमुक्तेषु मन्त्रेषु दीक्षितो यतमानसः ॥ एवं यो भजते भक्त्या स भवेद्भुक्तिमुक्तिभाक् ॥ ३ ॥ सुसितैर्गंधकुसुमैः पूजा सारस्वते विधौ ॥ दूर्वां बीजांकुरं पुष्पं गजवृक्षसमुद्भवम् ॥ ४ ॥ उत्पलानि प्रशस्तानि सिंदुवारांकुराणि च ॥ भजन्सारस्वतीं नित्यमेतानि परिवर्जयेत् ॥ ५ ॥ आम्रातं गृञ्जनं बिल्वं कलंजं लशुनं तथा ॥ तैलं पलांडु पिण्याकं शार्ङ्गाक्षमपि भोजने ॥ ६ ॥ सर्वं पर्युषितं त्याज्यं सदा सारस्वतार्थिनाम् ॥ नाचरेन्निशि ताबूलं स्त्रियं गच्छेद्दिवा न च ॥ ७ ॥ न सन्ध्ययोः स्वपेज्जातु नाशुचिः किंचिदुच्चरेत् ॥ प्रदोषेषु भवेन्मौनी दिग्वस्त्रां न विलोकयेत् ॥ ८ ॥ न पुष्पितां स्त्रियं गच्छेन्न निंदेद्वामलोचनाम् । न मृषावचनं ब्रूयान्नाक्रमेत्पुस्तकं सुधीः ॥ ९ ॥ अक्षराढ्यानि पत्राणि नोपेक्षेत न लंघयेत् ॥ चतुर्दश्यष्टमीपर्वप्रतिपद्ग्रहणेषु च ॥ १० ॥ संक्रमेषु च सर्वेषु विद्यां नैव पठेद्द्विजः ॥ व्याख्याने संत्यजेन्निद्रामालस्यं जृम्भणं बुधः ॥ ११ ॥ क्रोधं निष्ठीवनं तद्वन्नीचाङ्गस्पर्शनं तथा ॥ मनुष्यसर्पमार्जारमण्डूकनकुलादयः ॥ १२ ॥ अन्तरा यदि गच्छेयुस्तदा व्याख्यां परित्यजेत् ॥ निशासु दीपध्वंसेषु पाठं सद्यः परित्यजेत् ॥ १३ ॥ ज्ञात्वा दोषानिमान्सम्यग्भक्त्या यो भारतीं यजेत् ॥ वाचां सिद्धिमवाप्नोति वाचस्पतिरिवापरः ॥ १४ ॥ इति शारदातिलके सरस्वतीमन्त्रानुष्ठानप्रयोगः समाप्तः ॥ अथ सरस्वतीस्तोत्रम् ॥ अस्य श्रीवाग्वादिनीशारदामन्त्रस्य मार्कंडेय आश्वलायन ऋषिः । स्रग्धरानुष्टुप्छन्दांसि । श्रीसरस्वती देवताश्रीसरस्वतीप्रसादसिद्ध्यर्थे जपेविनियोगः ॥ अथ ध्यानम् ॥ "शुक्लां ब्रह्मविचासारपरमामाद्यां जगद्व्यापिनीं वीणापुस्तकधारिणीमभयदां जाड्यांधकारापहाम् ॥ हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां वंदे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥ १ ॥ ब्रह्मोवाच ॥ ह्रींह्रींहृद्यैक

विद्ये शशिरुचिकमलाकल्पविस्पष्टशोभे भव्ये भावानुकूले कुमतिवनमहे विश्ववन्द्यांघ्रिपद्मे ॥ पद्मे पद्मोपविष्टे प्रणतजनमनोमोदसंपादयित्रि प्रोत्प्लुष्टाज्ञानकूटे हरिनिजदयिते देवि ससारसारे ॥ १ ॥ ऐंऐंऐं इष्टमन्त्रे कमलभवमुखांभोजरूपे स्वरूपे रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे ॥ न स्थूले नैव सूक्ष्मेप्यविदितविभवे नापि विज्ञाततत्त्वे विश्वे विश्वांतराले सुरवरनमिते निष्कले नित्यशुद्धे ॥ २ ॥ ह्रींह्रींह्रीं जाप्यतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते मातर्मातर्नमस्ते दहदह जडतां देहि बुद्धिं प्रशस्ताम् ॥ विद्ये वेदान्तगीते श्रुतिपरिपठिते मोक्षदे मुक्तिमार्गे मार्गातीतप्रभावे भव मम वरदा शारदे शुभ्रहारे ॥३॥ ध्रींध्रींध्रीं धारणाख्ये धृतिमतिनुतिभिर्नामभिः कीर्त्तनीये नित्येनित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे ॥ पुण्ये पुण्यप्रभावे हरिहरनमिते वर्णशुद्धे सुवर्णे मात्रे मात्रार्थतत्त्वे मतिमति मतिदे माधवप्रीतिनादे ॥४॥ ह्रीं क्षीं धीं ह्रीं स्वरूपे दहदह दुरितं पुस्तकव्यग्रहस्ते संतुष्टाकारचित्ते स्मितमुखि सुभगे जृम्भणिस्तंभविद्ये ॥ मोहे मुग्धप्रबोधे मम कुरु सुमतिं ध्वांतविध्वंसिनित्ये गीर्वाग्गौर्भारति त्वं कविवृषरसनासिद्धिदा सिद्धिसाध्या ॥५॥ सौंसौंसौं शक्तिबीजे कमलभवमुखांभोजभूतस्वरूपे रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे ॥ न स्थूले नैव सूक्ष्मेप्यविदितविभवे जाप्यविज्ञानतत्त्वे विश्वे विश्वांतराले सुरगणनमिते निष्कले नित्यशुद्धे ॥६॥ स्तौमि त्वां त्वां च वन्दे भज मम रसनां मा कदाचित्त्यजेथा मा मे बुद्धिर्विरुद्धा भवतु न च मनो देवि मे यातु पापम् ॥ मा मे दुःखं कदाचिद्विपदि च समयेऽप्यस्तु मे नाकुलत्वं शास्त्रे वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठा कदाचित् ॥ ७ ॥ इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो वाण्या वाचस्पतेरप्यतिमतिविभवो वाक्पटुर्नष्टपंकः ॥ स स्यादिष्टार्थलाभः सुतमिव सततं पाति तं सा च देवी सौभाग्यं तस्य लोके प्रसरति कविता विघ्नमस्तं प्रयाति ॥ ८ ॥ ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः ॥ सारस्वतो नरः पाठात्स स्यादिष्टार्थलाभवान् ॥ ९ ॥ पक्षद्वयेपि यो भक्त्या त्रयोदश्येकविंशतिः ॥ अविच्छेदं पठेद्धीमान्ध्यात्वा देवीं सरस्वतीम् ॥ १० ॥ शुक्लांबरधरां देवीं शुक्लाभरणभूषिताम् ॥ वांछितं फलमाप्नोति स लोके नात्र संशयः ॥ ११ ॥ इति ब्रह्मा स्वयं प्राह सरस्वत्याः स्तवं शुभम् ॥ प्रयत्नेन पठेन्नित्यं सोऽमृतत्वं प्रयच्छति ॥ १२ ॥ इति ब्रह्मपुराणे ब्रह्मणा कृतं सरस्वत्याः स्तोत्रम् ॥ ॥ अथ अन्नपूर्णामंत्रप्रयोगः ॥ ( मंत्रमहोदधौ ) " अन्नपूर्णेश्वरीमंत्रं वक्ष्येऽभीष्टप्रदायकम् ॥ कुबेरो यामुपास्याशु लब्धवान्निधिनाथताम् ॥ १ ॥ शंभोः सख्यं दिगीशत्वं कैलासाधीशतामपि ॥ अथ प्रयोगः ॥ मंत्रो यथा–" ॐ ह्रीं श्रींक्लीं नमः भगवति माहेश्वरि अन्नपूर्णे स्वाहा" इति विंशतिवर्णो मंत्रः । अस्य अन्नपूर्णामंत्रस्य द्रुहिणः ऋषिः । कृतिः छंदः । अन्नपूर्णेशी देवता । ह्रीं बीजम् । स्वाहा शक्तिः । ममाखिलसिद्ध्यर्थे जपे विनियोगः ॥ ॐ द्रुहिणऋषये नमः शिरसि ॥ १ ॥ ॐ कृतिच्छंदसे नमः मुखे ॥ २ ॥ ॐ अन्नपूर्णादेवतायै नमः हृदि ॥ ३ ॥ ॐ ह्रीं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ स्वाहाशक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ ह्रां अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ ह्रीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ ह्रूं मध्यमाभ्यां नमः ॥ ३ ॥ ॐ ह्रैं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ ह्रौं कनिष्ठि

काभ्यां नमः ॥ ५ ॥ ॐ ह्रः करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ एवमेव हृदयादिषडंगन्यासं कुर्य्यात् । ॐ नमः मुखे ॥ १ ॥ ॐ ह्रीं नमः दक्षिणनासिकायाम् ॥ २ ॥ ॐ श्रीं नमः वामनासिकायाम् ॥ ३ ॥ ॐ क्लीं नमः दक्षिणनेत्रे ॥ ४ ॥ ॐ नमो नमः वामनेत्रे ॥ ५ ॥ ॐ भगवति नमः दक्षिणकर्णे ॥ ६ ॥ ॐ माहेश्वरि नमः वामकर्णे ॥ ७ ॥ ॐ अन्नपूर्णे नमः लिंगे ॥ ८ ॥ ॐ स्वाहा नमः गुदे ॥ ९ ॥ इति मंत्रन्यासः ॥ एवं न्यासविधिं कृत्वा ध्यायेत् ॥ "तप्तस्वर्णनिभा शशांकमुकुटा रत्नप्रभाभासुरा नानावस्त्रविराजिता त्रिनयना भूमीरमाभ्यां युता ॥ दर्वीहाटकभाजनं च दधती रम्भोच्चपीनस्तनी नृत्यंतं शिवमाकलय्य मुदिता ध्येयान्नपूर्णेश्वरी ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य पीठपूजां कुर्यात् ॥ तद्यथा–मंडूकादि परतत्त्वांतपीठदेवताः संपूज्य पूर्वादिक्रमेण । ॐ जयायै नमः ॥ १ ॥ ॐ विजयायै नमः ॥ २ ॥ ॐ अजितायै नम ॥ ३ ॥ ॐ अपराजितायै नमः ॥ ४ ॥ ॐ नित्यायै नमः ॥ ५ ॥ ॐ विलासिन्यै नमः ॥ ६ ॥ ॐ दोग्ध्र्यै नमः ॥ ७ ॥ ॐ अघोरायै नमः ॥ ८ ॥ ( मध्ये ) ॐ मंगलायै नमः ॥ ९ ॥ इति पीठशक्तीः पूजयेत्॥ॐ ह्रीं अन्नपूर्णात्मने नमः ॥ इत्यासनं दत्त्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ तद्यथा–"त्रिकोणवेदपत्राष्टपत्रषोडशपत्रके ॥ भूपुरेण युते यंत्रे * प्रदद्यान्माययासनम् " आग्नेयादिकोणत्रितये क्रमेण । ॐ ह्रौं नमः शिवाय ॥ १ ॥ इति मंत्रेण शिवं पूजयेत ॥ १ ॥ ततो द्वितीयकोणे "ॐ नमो भगवते वराहरूपाय भूर्भुवः स्वः पतये भूपतित्वं मे देहि दापय स्वाहा" इति त्रयस्त्रिंशद्वर्णात्मकमंत्रेण वराहं पूजयेत् ॥ २ ॥ तृतीयकोणे ॐ 'नमो नारायणाय' इति माधवं पूजयेत् ॥ ३ ॥ तद्बाह्ये ॐ ह्रां हृदयाय नमः ॥ १ ॥ ॐ ह्रीं शिरसे स्वाहा ॥ २ ॥ ॐ ह्रूं शिखायै वषट् ॥ ३ ॥ ॐ ह्रैं कवचाय हुं ॥ ४ ॥ ॐ ह्रौं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ ह्रः अस्त्रायफट् ॥ ६ ॥ इति षडंगानि पूजयेत् ॥ ( ततो देव्या वामे ) ग्लौं अन्नंमह्यन्नंमेदेह्यन्नाधिपतयेममान्नंप्रदापयस्वाहाग्लौं इति धरां पूजयेत् ( ततो दक्षभागे श्रीं अन्नंमह्यन्नंमेदेह्यन्नाधिपतयेममान्नंप्रदापयस्वाहाश्रीं इति लक्ष्मीं पूजयेत् ॥ २ ॥ ततश्चतुर्दले ( पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य ) प्राच्यादिक्रमेण ॐ परायै नमः ॥ १ ॥ ह्रीं भुवनेश्वर्य्यै नमः ॥ २ ॥ श्रीं कमलायै नमः ॥ ३ ॥ क्लीं सुभगायै नमः ॥ ४ ॥ इति पूजयेत् ॥ तद्बहिरष्टदले प्राच्यादिक्रमेण । ॐ ब्राह्म्यै नमः ॥ १ ॥ ॐ माहेश्वर्य्यै नमः ॥ २ ॥ ॐ कौमार्य्यै नमः ॥ ३ ॥ ॐ वैष्णव्यै नमः ॥ ४ ॥ ॐ वाराह्यै नमः ॥ ५ ॥ ॐ इंद्राण्यै नमः ॥ ६ ॥ ॐ चामुंडायै नमः ॥ ७ ॥ ॐ महालक्ष्म्यै नमः ॥ ८ ॥ इति पूजयेत् ॥ तद्बाह्ये षोडशदले तेनैव क्रमेण नं अमृतायै नमः ॥१॥ मं मानदायै नमः ॥२॥ भं तुष्ट्यै नमः ॥३॥ गं पुष्ट्यै नमः॥४॥ वं प्रीत्यै नमः ॥५॥ तीं रत्यै नमः ॥६॥ भां ह्रियै नमः ॥ ७ ॥ हें श्रियै नमः ॥ ८ ॥ श्वं स्वधायै नमः ॥ ९ ॥ रिं स्वाहायै नमः ॥ १० अं ज्योत्स्नायै नमः ॥ ११ ॥ भं हैमवत्यै नमः ॥ १२ ॥ पूं छायायै नमः ॥ १३ ॥ णं पूर्णिमायै नमः ॥ १४ ॥ स्वां नित्यायै नमः ॥ १५ ॥ ह्रां अमावास्यायै

* अन्नपूर्णापूजायन्त्रमत्रत्यं पूर्वं द्रष्टव्यम् ।

नमः ॥ १६ ॥ इति पूजयेत् । तद्बहिः पूर्वादिदशदिक्षु । इंद्रादिदशदिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत् । इत्यावरणार्चनं कृत्वा धूपदीपनैवेद्याचमनीयतांबूलदक्षिणानीराजनैर्भगवतीं मूलेन संपूज्य स्तवेन स्तुत्वा जपं कुर्य्यात् ॥ अस्य पुरश्चरणं लक्षजपः । घृतसहितेन चरुणा दशांशहोमः । तद्दशांशेन तर्पणं तद्दशांशेन मार्ज्जनं तद्दशांशेन ब्राह्मणभोजनं च कार्य्यम् ॥ इत्थं जपादिभिः सिद्धे मंत्रेऽस्मिन्धनसंचयैः ॥ कुबेरसदृशो मंत्री जायते जनवंदितः ॥ इत्यन्नपूर्णामंत्रपुरश्चरणं समाप्तम् ॥ ॥ अथान्नपूर्णाकवचम् ॥ देव्युवाच ॥ कथिता अन्नपूर्णाया याया विद्याः सुदुर्ल्लभाः ॥ कृपया कथिताः सर्वाः श्रुताश्चाधिगता मया ॥ १ ॥ सांप्रतं श्रोतुमिच्छामि कवचं मंत्रविग्रहम् ॥ ईश्वर उवाच ॥ शृणु पार्वति वक्ष्यामि सावधानावधारय ॥ २ ॥ ब्रह्मविद्यास्वरूपं च महदैश्वर्यदायकम् ॥ पठनाद्धारणान्मर्त्यस्त्रैलोक्यैश्वर्यभाग्भवेत् ॥ ३ ॥ त्रैलोक्यरक्षणस्यास्य कवचस्य ऋषिः शिवः ॥ छंदो विराट् देवता च अन्नपूर्णासमृद्धिदा ॥ ४ ॥ धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥ ह्रीं नमो भगवत्यंते माहेश्वरिपदं ततः ॥ ५ ॥ अन्नपूर्णे ततः स्वाहा चैषा सप्तदशाक्षरी ॥ पातु मामन्नपूर्णा सा या ख्याता भुवनत्रये ॥ ६ ॥ विमायाप्रणवाद्यैषा तथा सप्तदशाक्षरी ॥ या त्वन्नपूर्णा सर्वांगे रत्नकुंभान्नपात्रदा ॥ ७ ॥ श्रीबीजाद्या तथैवैषा द्विरंध्राणी तथा मुखम् ॥ प्रणवाद्या भ्रुवौ पातु कंठं वाग्बीजपूर्विका ॥ ८ ॥ कामबीजादिका चैषा हृदयं तु महेश्वरी ॥ ऐंश्रींह्रीं च नमोंते च भगवतिपदं ततः ॥ ९ ॥ माहेश्वरिपदं चान्नपूर्णे स्वाहेति पातु मे ॥ नाभिमेकोनविंशार्णा पायान्माहेश्वरी सदा ॥ १० ॥ तारं मायारमाकामः षोडशार्णा ततः परम् ॥ शिरःस्था सर्वदा पातु विंशत्यर्णात्मिका परा ॥ ११ ॥ अन्नपूर्णा महाविद्या ह्रीं पातु भुवनेश्वरी ॥ शिरः श्रींह्रीं तथा क्लीं च त्रिपुटा पातु मे गुदम् ॥१२॥ षड्दीर्घभाजा बीजेन षडङ्गानि पुनंतु माम् ॥ इन्द्रो मां पातु पूर्वे च वह्निकोणेनलोऽवतु ॥ १३ ॥ यमो मां दक्षिणे पातु नैर्ऋत्यां नैर्ऋतिश्च माम् ॥ पश्चिमे वरुणः पातु वायव्यां पवनोऽवतु ॥ १४ ॥ कुबेरश्चोत्तरे पातु ऐशान्यां शङ्करोऽवतु ॥ ऊर्द्ध्वाधः पातु सततं ब्रह्मानन्तो यथाक्रमात् ॥ १५ ॥ वज्राद्याश्चायुधाः पान्तु दशदिक्षु यथाक्रमात् ॥ इति ते कथितं पुण्यं त्रैलोक्यरक्षणं परम् ॥ १६ ॥ यद्धृत्वा पठनाद्देवा सर्वैश्वर्यमवाप्नुयुः ॥ ब्रह्मा विष्णुश्च रुद्रश्च धारणात्पठनाद्यतः ॥ १७ ॥ सृजत्यवति हंत्येव कल्पेकल्पे पृथक्पृथक् ॥ पुष्पाञ्जल्यष्टकं देव्यै मूलेनैव पठेत्ततः ॥ १८ ॥ युगायुतकृतायास्तु पूजायाः फलमाप्नुयात् ॥ वाणी वक्रे वसेत्तस्य सत्यंसत्यं न संशयः ॥ १९ ॥ अष्टोत्तरशतं चास्य पुरश्चर्याविधिः स्मृतः ॥ भूर्जे विलिख्य गुटिकां स्वर्णस्थां धारयेद्यदि ॥ २० ॥ कण्ठे वा दक्षिणे बाहौ सोऽपि पुण्यवतां वरः ॥ ब्रह्मास्त्रादीनि शस्त्राणि सद्गात्रं प्राप्य पार्वति ॥ माल्यानि कुसुमान्येव सुखदानि भवंति हि ॥ २१ ॥ इति भैरवतन्त्रेऽन्नपूर्णाकवचं समाप्तम् ॥ ॥ अथान्नपूर्णास्तोत्रम् ॥ ॐ नमः कल्याणदे देवि नमः शंकरवल्लभे ॥ नमो भुक्तिप्रदे देवि अन्नपूर्णे नमोऽस्तु ते ॥ १ ॥ नमो मायागृहीताङ्गि नमः शङ्करवल्लभे ॥ माहेश्वरि नमस्तुभ्यमन्नपूर्णे नमोऽस्तु ते ॥ २ ॥ अन्नपूर्णे हव्यवाहपत्नीरूपे हरप्रिये ॥ कलाकाष्ठास्वरूपे च अन्नपू० ॥ ३ ॥ उद्यद्भानुसहस्राभे नयनत्रयभूषिते ॥ चन्द्रचूडे महादेवि अन्नपूर्णे० ॥ ४ ॥ विचित्रवसने देविअन्नदानरतेऽनघे॥

शिवनृत्यकृतामोदे अन्नपू० ॥ ५ ॥ षट्कोणपद्ममध्यस्थे षडङ्गयुवतीमये ॥ ब्रह्मण्यादिस्वरूपे च अन्नपू० ॥ ६ ॥ देवि चन्द्रकृता पीठे सर्वसाम्राज्यदायिनि ॥ सर्वानन्दकरे देवि अन्नपू० ॥ ७ ॥ साधकाभीष्टदे देवि भवदुःखविनाशिनि ॥ कुचभारनते देवि अन्नपू० ॥ ८ ॥ इन्द्राद्यर्चितपादाब्जे रुद्रादिरूपधारिणि ॥ सर्वसंपत्प्रदे देवि अन्नपू० ॥ ९ ॥ पूजाकाले पठेद्यस्तु स्तोत्रमेतत्समाहितः ॥ तस्य गेहे स्थिरा लक्ष्मीर्जायते नात्र संशयः ॥ १० ॥ प्रातःकाले पठेद्यस्तु मंत्रजापपुरःसरम् ॥ तस्यैवान्नसमृद्धिः स्याद्वर्द्धमाना दिनेदिने ॥ ११ ॥ यस्मै कस्मै न दातव्यं न प्रकाश्यं कदाचन ॥ प्रकाशात्सिद्धिहानिः स्यात्तस्माद्यत्नेन गोपयेत् ॥ इत्यन्नपूर्णास्तोत्रं समाप्तम् ॥ ॥ * अथ गङ्गामन्त्रपुरश्चरणप्रयोगः ॥ ( मन्त्रमहोदधौ ) मन्त्रो यथा—"ॐ नमः शिवायै नारायण्यै दशहरायै गङ्गायै स्वाहा " इति विंशतिवर्णात्मको मन्त्रः । अस्य श्रीगङ्गामन्त्रस्य वेदव्यास ऋषिः।कृतिश्छन्दः।गङ्गा देवता। ममाभीष्टसिद्धयर्थे जपे विनियोगः । ॐ वेदव्यासऋषये नमः शिरसि ॥ १ ॥ ॐ कृतिच्छन्दसे नमो मुखे ॥ २ ॥ ॐ गङ्गादेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ॐ नमः अङ्गुष्ठाभ्यां नमः ॥१॥ ॐ शिवायै तर्जनीभ्यां नमः ॥२॥ ॐ नारायण्यै मध्यमाभ्यां नमः ॥ ३ ॥ ॐ दशहरायै अनामिकाभ्यां नमः ॥४॥ ॐ गङ्गायै कनिष्ठिकाभ्यां नमः ॥५॥ ॐ स्वाहा करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेव हृदयादिषडङ्गन्यासं कृत्वा ध्यायेत् । " उत्फुल्लामलपुण्डरीकरुचिरा कृष्णेशविंध्यात्मिका कुम्भेष्टाभयतोयजानि दधती श्वेतांबरालंकृता ॥ हृष्टास्या शशिशेखराखिलनदीशोणादिभिः सेविता ध्येया पापविनाशिनी मकरगा भागीरथी साधकैः ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य पीठपूजां कुर्यात् ॥ ॐ मण्डूकादिपरतत्त्वांतदेवताभ्यो नमः इति पूर्ववत् पीठदेवताः संपूज्य । पूर्वादिषु ॐ जयायै नमः ॥ १ ॥ ॐ विजयायै नमः ॥ २ ॥ ॐ अजितायै० ॥ ३ ॥ ॐ अपराजितायै० ॥ ४ ॥ ॐ नित्यायै ॥ ५ ॥ ॐ विलासिन्यै० ॥ ६ ॥ ॐ दोग्ध्र्यै नमः ॥ ७ ॥ ॐ अघोरायै० ॥ ८ ॥ ( मध्ये ) ॐ मङ्गलायै० नमः ॥ ९ ॥ इति पीठशक्तीः पूजयेत् ॥ ततो मूर्तिं प्रकल्प्य आवाहनादिपुष्पतिरुपचारैर्गंगां संपूज्य । आवरणपूजां कुर्यात् ॥ षट्कोणे आग्नेयादिकेसरेषु ।ॐ नमः हृदयाय नमः ॥ १ ॥ ॐ शिवायै शिरसे स्वाहा ॥ २ ॥ ॐ नारायण्यै शिखायै वषट् ॥ ३ ॥ ॐ दशहरायै कवचाय हुं ॥ ४ ॥ ॐ गंगायै नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ स्वाहा अस्त्राय फट् ॥ ६ ॥ इति षडङ्गानि पूजयेत् ॥ तद्बहिरष्टदलेषु प्राचीक्रमेण । ॐ रुद्राय नमः ॥ १ ॥ ॐ हरये नमः ॥ २ ॥ ॐ विधये नमः ॥ ३ ॥ ॐ सूर्य्याय नमः ॥ ४ ॥ ॐ हिमाचलाय नमः ॥ ५॥ ॐ मेनायै नमः ॥ ६ ॥ ॐ भगीरथाय नमः ॥ ७ ॥ ॐ अपां पतये नमः ॥ ८ ॥ इति पूजयेत् ॥ ततो दलाग्रेषु । ॐ मीनाय नमः ॥ १ ॥ ॐ कूर्माय नमः ॥ २ ॥ ॐ मण्डूकाय नमः ॥ ३ ॥ ॐ मकराय नमः ॥ ४ ॥ ॐ हंसेभ्यो नमः ॥ ५ ॥ ॐ कारंडवेभ्यो नमः ॥ ६ ॥ ॐ बकेभ्यो नमः ॥ ७ ॥ ॐ सारसकेभ्यो नमः ॥८॥ इति पूजयेत् ॥ तद्बाह्ये चतुरस्रे भूपुरे पूर्वादिदशदिक्षु इन्द्रादिदशदिक्पालान् तद्बहिर्वज्राद्यायुधानि च पूजयेत्।

* अत्रत्य गङ्गायन्त्रं पूर्वत्र द्रष्टव्यम् ।

एवमावरणपूजां कृत्वा धूपदीपादिनमस्कारांतैरुपचारैः संपूज्य स्तवेन स्तुत्वा जपं कुर्यात् । अस्य पुरश्चरणं लक्षजपः । तथा च
लक्षं जपेद्दशांशेन जुहुयात्सघृतैस्तिलैः ॥ एवं संसाधितो मन्त्रोऽभीष्टं यच्छति मंत्रिणाम् ॥ १ ॥ ज्येष्ठशुक्लदशम्यां तां विशेषेण
भजेद्बुधः ॥ दद्याद्दशभ्यो विप्रेभ्यो दशप्रस्थमितांस्तिलान् ॥ २ ॥ जप्त्वा सहस्रं हुत्वा चोपोष्य तत्र विकल्मषः ॥ सर्वभोगसमायुक्तो
जायते मानवो भुवि ॥३॥ इति विंशतिवर्णात्मकश्रीगंगामन्त्रप्रयोगः ॥ अथ दशहरागंगास्तोत्रम् ॥ ( स्कांदे काशीखंडे च ) तत्रादौ
स्नानार्चनविधिं विधाय पश्चाज्जलांतरे स्थित्वा देशकालौ संकीर्त्य मम दशविधपापप्रणाशनार्थं श्रीभगवतीगंगाप्रीत्यर्थं
च ज्येष्ठे मासि सिते पक्षे प्रतिपदमारभ्य दशमीपर्यंतं प्रतिदिनमुत्तरोत्तरवृद्ध्या दशहरास्तोत्रजपमहं करिष्ये । इति
संकल्प्य पठेत् । ब्रह्मोवाच ॥ नमः शिवायै गंगायै शिवदायै नमोनमः ॥ नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमो
नमः ॥ १ ॥ नमस्ते रुद्ररूपिण्यै शांकर्य्यै ते नमोनमः ॥ सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ॥ २ ॥ सर्वस्य सर्वव्याधीनां भिष
क्छ्रेष्ठ्यै नमोनमः ॥ स्थाणुजङ्गमसम्भूते विषहंत्र्यै नमोनमः ॥ ३ ॥ भोगोपभोगदायिन्यै भोगवत्यै नमोनमः ॥ मन्दाकिन्यै नमस्ते
ऽस्तु स्वर्गदायै नमोनमः ॥ ४ ॥ नमस्त्रैलोक्यभूषायै जगद्धात्र्यै नमोनमः ॥ नमस्त्रिशुक्लसंस्थायै तेजोवत्यै नमोनमः ॥ ५ ॥ नन्दा
यै लिङ्गधारिण्यै नारायण्यै नमोनमः ॥ नमस्ते विश्वमुख्यायै रेवत्यै ते नमोनमः ॥ ६ ॥ बृहत्यै ते नमस्तुभ्यं लोकधात्र्यै नमो
नमः ॥ नमस्ते विश्वमित्रायै नन्दिन्यै ते नमोनमः ॥ ७ ॥ पृथ्व्यै शिवामृतायै च सुवृषायै नमोनमः ॥ शान्तायै च वशिष्ठायै वरदायै
नमोनमः ॥ ८ ॥ उस्रायै सुखदोग्ध्र्यै च सञ्जीविन्यै नमोनमः ॥ ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमोनमः ॥ ९ ॥ प्रणतार्तिप्रभं
जिन्यै जगन्मात्रे नमोऽस्तु ते ॥ सर्वापत्प्रतिपक्षायै मङ्गलायै नमोनमः ॥ १० ॥ शरणागतदीनार्तपरित्राणपरायणे ॥ सर्वस्यार्तिहरे
देवि नारायणि नमोऽस्तु ते ॥ ११ ॥ निर्लेपायै दुर्गहंत्र्यै दक्षायै ते नमोनमः ॥ परात्परतरे तुभ्यं नमस्ते मोक्षदे सदा ॥ १२॥गंगे
ममाग्रतो भूया गंगे मे देवि पृष्ठतः ॥ गंगे मे पार्श्वयोरेहि त्वयि गंगेऽस्तु मे स्थितिः ॥ १३ ॥ आदौ त्वमन्ते मध्ये च सर्वं त्वं गां
गते शिवे ॥ त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः ॥ १४ ॥ गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ॥ य इदं पठति
स्तोत्रं भक्त्या नित्यं नरोऽपि यः ॥ १५ ॥ शृणुयाच्छ्रद्धया युक्तः कायवाक्चित्तसम्भवैः ॥ दशधा संस्थितैर्दोषैः सर्वैरेव प्रमुच्यते
॥ १६ ॥ सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते ॥ ज्येष्ठमासि सिते पक्षे दशमी हस्तसंयुता ॥ १७ ॥ तस्यां दशम्यामेतच्च
स्तोत्रं गङ्गाजले स्थितः ॥ यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः ॥ सोऽपि तत्फलमाप्नोति गङ्गां सम्पूज्य यत्नतः ॥ १८ ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ॥ परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥१९॥ पारुष्यमनृतं चैव पैशून्यंचापिसर्वशः॥
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥२०॥ परद्रव्येष्वभिध्यानं मनसानिष्टचिंतनम्॥ वितथाभिनिवेशश्च मानसंत्रिविधंस्मृतम्
॥ २१ ॥ एतानि दश पापानि हर त्वं मम जाह्नवि ॥ दशपापहरा यस्मात्तस्माद्दशहरा स्मृता ॥ २२॥ त्रयस्त्रिंशच्छतं पूर्वान्पितॄनथ
पितामहान् ॥ उद्धरत्येव संसारान्मंत्रेणानेन पूजिता ॥२३॥ॐनमो भगवत्यै दशपापहरायै गङ्गायै नारायण्यैरेवत्यै शिवायैदक्षायै

अमृतायै विश्वरूपिण्यै नन्दिन्यै ते नमोनमः ॥२४॥ सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलशोद्यत्सोत्पलामत्यभीष्टाम् ॥ विधिहरिहररूपां सेन्दुकोकीरजुष्टां कलितसितदुकूलां जाह्नवीं तां नमामि ॥ २५ ॥ आदावादिपितामहस्य निगमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् ॥ भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥२६॥ गङ्गागङ्गेति यो ब्रूयाद्योजनानां शतैरपि ॥ मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ २७ ॥ इति गंगा स्तोत्रं समाप्तम् ॥ अथ शीतलामन्त्रप्रयोगः ( मन्त्रमहोदधौ ) मन्त्रो यथा–"ॐ ह्रीं श्रीं शीतलायै नमः"इति नवाक्षरो मंत्रः ॥ अस्य मन्त्रस्य उपमन्युर्ऋषिः । बृहती छन्दः । शीतला देवता । ममाभीष्टसिद्ध्यर्थे जपे विनियोगः॥ॐउपमन्युऋषये नमः शिरसि ॥१॥ ॐ बृहतीछन्दसे नमः मुखे ॥ २ ॥ ॐ शीतलादेवतायै नमः हृदि ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ह्रां श्रां अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ह्रीं श्रीं तर्जनीभ्यां नमः ॥ २ ॥ ह्रूं श्रूं मध्यमाभ्यां नमः ॥ ३ ॥ ह्रैं श्रैं अनामिकाभ्यां नमः ॥ ४ ॥ श्रौं ह्रौं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ह्रः श्रः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ ६ ॥ एवं हृदयादिन्यासं कृत्वा ध्यायेत् । "दिग्वाससं मार्जनिकां च शूर्पं करद्वये संदधतीं घनाभाम् ॥ श्रीशीतलां सर्वरुजार्तिनष्टौ रक्तांगरागस्रजमर्चयामि ॥ ॥ १ ॥ एवं ध्यात्वा मानसोपचारैः संपूज्य अथवा स्वपुरतः प्रतिमायां भगवतीं शीतलां शीतजलेन पाद्यादिषोडशोपचारैः संपूज्य स्तवेन स्तुत्वा जपं कुर्यात् । अस्य पुरश्चरणमयुतजपः । तथा च–अयुतं प्रजपेन्मंत्रं पायसेन सहस्रकम् ॥ जुहुयात्पूर्वत्पीठे स्फोटानां नाशिनी त्रियम् ॥१॥ नाभिमात्रे जले स्थित्वा यः सहस्रं जपेन्मनुम् ॥ तेन संमार्जितास्तीव्राः स्फोटा नश्यंति तत्क्षणात् ॥ २ ॥ इति शीतलामंत्रप्रयोगः ॥ ॥ अथ शीतलास्तोत्रम् ॥ ॐ अस्य श्रीशीतलास्तोत्रस्य महादेव ऋषिः । अनुष्टुप् छंदः । शीतला देवता । लक्ष्मीर्बीजम् । भवानी शक्तिः । सर्वविस्फोटकनिवृत्तये जपे विनियोगः ॥ ईश्वर उवाच ॥ वंदेहं शीतलां देवीं रासभस्थां दिगंबराम् ॥ मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् ॥ १ ॥ वंदेहं शीतलां देवीं सर्वरोगभयापहाम् ॥ यामासाद्य निवर्तेत विस्फोटकभयं महत् ॥ २ ॥ शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः ॥ विस्फोटकभयं घोरं क्षिप्रं तस्य प्रणश्यति ॥ ३ ॥ यस्त्वामुदकमध्ये तु धृत्वा पूजयते नरः ॥ विस्फोटकभयं घोरं गृहे तस्य न जायते ॥ ४ ॥ शीतले ज्वरदग्धस्य पूतिगंधयुतस्य च ॥ प्रनष्टचक्षुषः पुंसस्त्वामाहुर्जीवनौषधम् ॥ ५ ॥ शीतले तनुजान्रोगान्नृणां हरसि दुस्त्यजान् ॥ विस्फोटकविजीर्णानां त्वमेकामृतवर्षिणी ॥ ६ ॥ गलगंडग्रहा रोगा ये चान्ये दारुणा नृणाम् ॥ त्वदनुध्यानमात्रेण शीतले यांति संक्षयम् ॥ ७ ॥ न मंत्रो नौषधं तस्य पापरोगस्य विद्यते ॥ त्वामेकां शीतले धात्रीं नान्यां पश्यामि देवताम् ॥ ८ ॥ मृणालतंतुसदृशीं नाभिहृन्मध्यसंस्थिताम् ॥ यस्त्वां संचिंतयेद्देवि तस्य मृत्युर्न जायते ॥ ९ ॥ अष्टकं शीतलादेव्या यो नरः प्रपठेत्सदा ॥ विस्फोटकभयं घोरं गृहे तस्य न जायते ॥ १० ॥ श्रोतव्यं पठितव्यं च श्रद्धाभक्तिसमन्वितैः ॥ उपसर्गविनाशाय परं स्वस्त्ययनं महत् ॥ ११ ॥ शीतले त्वं जगन्माता शीतले त्वं जगत्पिता ॥ शीतले त्वं जगद्धात्री शीतलायै नमोनमः

॥ १२ ॥ रासभो गर्दभश्चैव खरो वैशाखनंदनः ॥ शीतलावाहनश्चैव दूर्वाकंदनिकृंतनः ॥ १३ ॥ एतानि खरनामानि शीतलाग्रे तु यः पठेत् ॥ तस्य गेहे शिशूनां च शीतलारुङ् न जायते ॥ शीतलाष्टकमेवेदं न देयं यस्य कस्यचित् ॥ १४ ॥दातव्यं च सदा तस्मै श्रद्धाभक्तियुताय वै ॥ १५ ॥ इति श्रीस्कंदपुराणे शीतलास्तोत्रं संपूर्णम् ॥ श्रीशीतलाभगवत्यै नमः ॥ ॥ अथ पृथ्वीमंत्रपुरश्चरणप्रयोगः ॥ ( शारदातिलके ) मंत्रो यथा । " ॐ नमो भगवत्यै धरिण्यै धरणिधरे धरे स्वाहा " इत्येकोनविंशतिवर्णात्मको मंत्रः ॥ अस्य मंत्रस्य वराह ऋषिः । निचृच्छंदः । पृथ्वी देवता । सर्वेष्टसिद्ध्यर्थे जपे विनियोगः । ॐ वराहऋषये नमः शिरसि ॥ १ ॥ ॐ निचृच्छंदसे नमः मुखे ॥ २ ॥ ॐ पृथ्वी देवतायै नमः हृदये ॥ ३ ॥ ॐ बीजाय नमः गुह्ये ॥ ॥ ४ ॥ ॐ स्वाहाशक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ नमः हृदयाय नमः ॥ १ ॥ ॐ भगवत्यै शिरसे स्वाहा ॥ २ ॥ ॐ धरिण्यै शिखायै वषट् ॥ ३ ॥ ॐ धरणिधरे कवचाय हुं ॥ ४ ॥ ॐ धरे नेत्रत्रयाय वौषट् ॥५॥ ॐ स्वाहा अस्त्राय फट् ॥ ६ ॥ एवं षडंगन्यासं कृत्वा ध्यायेत् ॥ " श्यामां विचित्रांशुकरत्नभूषणां पद्मासनां तुंगपयोधराननाम् ॥ इंदीवरे द्वे नवशालिमंजरीं शुकं दधानां वसुधां यजामहे ॥ १ ॥ " इति ध्यात्वा पूर्वोक्ते विष्णोः पीठे भगवतीं पृथ्वीं पुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् । तद्यथा-षट्कोणे आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च पूर्ववत् षडंगानि पूजयेत् ॥ तद्बहिरष्टदले प्राचीक्रमेण चतुर्दिग्दलेषु ॐ भूम्यै नमः ॥ १ ॥ ॐ अग्नये नमः ॥ २ ॥ ॐ अद्भ्यो नमः ॥ ३ ॥ ॐ वायवे नमः ॥ ४ ॥ इति पूजयेत् ॥ तत आग्नेयादिकोणदलेषु तत्तत्कलां यजेत् । तद्यथा-ॐ निवृत्त्यै नमः ॥ १ ॥ ॐप्रतिष्ठायै नमः ॥२॥ ॐ विद्यायै नमः ॥ ३ ॥ ॐ शांत्यै नमः ॥ ४ ॥ ॐ शांत्यतीतायै नमः ॥ ५ ॥ इति भूम्यादिकलां पूजयेत् ॥ तद्बाह्ये भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत् ॥ इत्यावरणपूजां कृत्वा धूपादिनीराजनांतं संपूज्य जपं कुर्यात् ॥ अस्य पुरश्चरणं लक्षजपः ॥ तथा च- " लक्षमेनं जपेन्मंत्री धराहृदयमादरात् ॥ ससर्पिषा पायसेन जुहुयात्तद्दशांशतः ॥ १ ॥ एवं सिद्धे मनौ मंत्री साधयेत्स्वमनोरथान् ॥ मधुत्रितयसंयुक्तैर्जुहुयादरुणोत्पलैः ॥ २ ॥ सहस्रं भूसमृद्धिः स्यात्तथा नीलोत्पलैर्भवेत् ॥ प्रियंगुपुष्पैर्मध्वक्तैर्धनधान्यमहाश्रियः ॥ ३ ॥ मंजरीशालिसंभूतां मधुरत्रयलोलिताम् ॥ जुहुयात्साधिते वह्नौ मंडलस्याद्धरापतिः ॥ ४ ॥ शुक्रवारे दिनमुखे गृहीत्वा साध्यभूमृदम् ॥ तामंभसि विनिःक्षिप्य शोधितेऽत्र चरुं पचेत् ॥ ५ ॥ पयोघृताभ्यां सहितं जुहुयात्तं हुताशने । षण्मासं शुक्रवारेषु हुत्वैवं प्राप्नुयाद्धराम् ॥ ६ ॥ धरामेवं जपेन्मंत्री पशुरत्नधरादिभिः ॥ धराया वल्लभः स स्यान्नात्र कार्या विचारणा ॥ ७ ॥ इति पृथ्वीमंत्रपुरश्चरणं समाप्तम् ॥ ॥ अथ पृथ्वीस्तोत्रम् ॥ ( देवीभागवते ) श्रीनारायण उवाच । जयेजये जलाधारे जलशीले जयप्रदे ॥ यज्ञसूकरजाये च जयं देहि जयावहे ॥१॥ मंगले मंगलाधारे मांगल्ये मंगलप्रदे ॥ मंगलार्थं मंगलेशे मंगलं देहि मे भवे ॥ २ ॥ सर्वाधारे च सर्वज्ञे सर्वशक्तिसमन्विते ॥ सर्वकामप्रदे देवि सर्वेष्टं देहि मे भवे ॥ ३ ॥ पुण्यस्वरूपे पुण्यानां बीजरूपे सनातनि ॥ पुण्याश्रये पुण्यवतामालये

पुण्यदे भवे ॥ ४ ॥ सर्वसस्यालये सर्वसस्याढ्ये सर्वसस्यदे ॥ सर्वसस्यहरे काले सर्वसस्यात्मिके भवे ॥ ५ ॥ भूमे भूमिपसर्वस्वे भूमिपालपरायणे ॥ भूमिपानां सुखकरे भूमिं देहि च भूमिदे ॥ ६ ॥ इदं स्तोत्रं महापुण्यं प्रातरुत्थाय यः पठेत् ॥ कोटिजन्मसु स भवेद्बलवान्भूमिपेश्वरः ॥ ७ ॥ भूमिदानकृतं पुण्यं लभ्यते पठनाज्जनैः ॥ भूमिदानहरात्पापान्मुच्यते नात्र संशयः ॥ ८ ॥ अंबुवाचीभूकरणपापात्स मुच्यते ध्रुवम् ॥ अन्यकूपे कूपखननपापात्स मुच्यते ध्रुवम् ॥ ९ ॥ परभूमिहरात्पापान्मुच्यते नात्र संशयः ॥ भूमौ वीर्यत्यागपापाद्भूमौ दीपादिस्थापनात् ॥ १० ॥ पापेन मुच्यते सोपि स्तोत्रस्य पठनान्मुने ॥ अश्वमेधशतं पुण्यं लभते नात्र संशयः ॥ ११ ॥ भूमिदेव्या महास्तोत्रं सर्वकल्याणकारकम् ॥ इति भूमिस्तोत्रम् ॥ अथ भूमौ शंखादिस्थापने दोषाः। ( देवीभागवते । स्कं० ९ अ० ९ श्लो० ३९ ) वसुधोवाच । मुक्तां शुक्तिं हरेरर्चां शिवलिंगं शिवां तथा ॥ शंखं प्रदीपं यंत्रं च माणिक्यं हीरकं तथा ॥ १ ॥ यज्ञसूत्रं च पुष्पं च पुस्तकं तुलसीदलम् ॥ जपमालां पुष्पमालां कर्पूरं च सुवर्णकम् ॥ २ ॥ गोरोचनं चंदनं च शालग्रामजलं तथा ॥ एतान् वोढुमशक्ताहं क्लिष्टा च भगवञ्छृणु ॥ ३ ॥ श्रीभगवानुवाच ॥ द्रव्याण्येतानि ये मूढा अर्पयिष्यंति सुंदरि ॥ यास्यंति कालसूत्रं ते दिव्यं वर्षशतं त्वयि ॥ ४ ॥ (तत्रैव अ० १० श्लो० १२) कामी भूमौ च रहसि वीर्यत्यागं करोति यः। भूमिरेणुप्रमाणं च वर्षं तिष्ठति रौरवे ॥ १ ॥ भूमौ दीपं योर्पयति सचांधः सप्तजन्मसु ॥ भूमौ शंखं च संस्थाप्य कुष्ठं जन्मांतरे लभेत् ॥ २ ॥ मुक्तं माणिक्यहीरौ च सुवर्णं च मणिं तथा ॥ पंच संस्थापयेद्भूमौ स चांधः सप्तजन्मसु ॥ ३ ॥ शिवलिंगं शिवामर्चां यश्चार्पयति भूतले ॥ शतमन्वंतरं यावत् कृमिभक्षः स तिष्ठति ॥ ४ ॥ शंखं यंत्रं शिलातोयं पुष्पं च तुलसीदलम ॥ यश्चार्पयति भूमौ च स तिष्ठेन्नरके ध्रुवम् ॥ ५ ॥ जपमालां पुष्पमालां कर्पूरं रोचनं तथा ॥ यो मूढश्चार्पयेद्भूमौ स याति नरकं ध्रुवम् ॥ ६ ॥ भूमौ चंदनकाष्ठं च रुद्राक्षं कुशमूलकम् ॥ संस्थाप्य भूमौ नरके वसेन्मन्वन्तरावधि ॥ ७ ॥ पुस्तकं यज्ञसूत्रं च भूमौ संस्थापयेन्नरः ॥ न भवेद्विप्रयोनौ च तस्य जन्मान्तरे जनिः ॥ ८ ॥ अथ गायत्रीपुरश्चरणप्रयोगः ॥ अथो वक्ष्यामि गायत्रीं तत्त्वरूपां त्रयीमयीम् ॥ यया प्रकाश्यते ब्रह्म सच्चिदानन्दलक्षणम् ॥ १ ॥ तत्र चन्द्रताराादिबलान्विते पूर्वोक्ते सुमुहूर्ते शिवालयादिपवित्रस्थले जपस्थानं प्रकल्प्य गोमयोपलेपनादिभिः संशोध्य तत्रासन भूमौ कूर्मशोधनं दीपस्थानशोधनं च कृत्वा अनुष्ठानारंभं कुर्यात् तद्यथा-कर्ता प्रारंभात्पूर्वदिने ब्राह्मे मुहूर्ते चोत्थाय नद्यादौ स्नात्वा प्रातःसंध्यादिनित्यकर्म समाप्य आचार्यमाहूय संपूज्य तदनुज्ञया स्वासने प्राङ्मुख उपविश्य सपवित्रकरः आचम्य प्राणानायम्य सामान्यतो गणपत्यादिस्मरणं कृत्वा देहशुद्ध्यर्थं प्रायश्चित्तं कुर्यात् ॥ देशकालौ संकीर्त्य करिष्यमाणगायत्रीपुरश्चरणेऽधिकारसिद्ध्यर्थं कृच्छ्रत्रयममुकप्रत्याम्नायेनाहमाचरिष्ये इति संकल्प्य धेनुदानतिलहोमसुवर्णादिप्रत्याम्नायद्वारा कृच्छ्राणि संपाद्य कृतांजलिः अमुकशर्मणो मम गायत्रीपुरश्चरणे अनेन कृच्छ्रत्रयानुष्ठानेनाधिकारसिद्धिरस्त्विति विप्रान् वदेत् । विप्रा अधिकारसिद्धिरस्त्विति ब्रूयुः । पुनर्देशकालौ संकीर्त्य करिष्यमाणपुरश्चरणांगत्वेन मन्त्रसिद्ध्यर्थं गायत्र्या अयुतजपं करिष्ये

इति संकल्प्य स्वयं विप्रद्वारा वा कुर्यात्। एवं सप्रणवव्याहृतिगायत्र्ययुतं जप्त्वा तर्पणं कुर्यात्। तद्यथा—ॐ तत्सवितुरित्यस्याऽऽचार्यं ऋषिं विश्वामित्रं तर्प्पयामि ॥ १ ॥ ॐ गायत्रीछन्दसं तर्पयामि ॥ २ ॥ ॐ सवितारं देवं तर्पयामि ॥ ३ ॥ इति तर्पणं कृत्वा रुद्रं नमस्कृत्य कद्रुद्रायेत्यादीनि रुद्रसूक्तानि सकृज्जपेत् ॥ इति पूर्वदिनकृत्यम् ॥ ततो जपप्रारंभदिने सुमुहूर्ते सपत्नीको यजमानः सुगन्धतैलाभ्यङ्गपूर्वकमुष्णोदकेन मंगलस्नानं कृत्वा शुक्लधौतवासांसि परिधाय यथायोग्यालंकृतो धृतकुंकुमादित्रिपुण्ड्रतिलकः सपवित्रोपग्रहः स्वासने प्राङ्मुख उपविश्य आचम्य देशकालौ संकीर्त्य मम इह जन्मनि जन्मान्तरेषु च कृतकायिकवाचिकमानसिकसांसर्गिकसमस्तपापक्षयार्थं पुत्रपौत्रधनधान्याभिवृद्ध्यर्थं चतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सप्रणवव्याहृतिपूर्वकचतुर्विंशतिलक्षजपात्मकगायत्रीपुरश्चरणं ( स्वयं ) विप्रद्वारा वा करिष्ये तदंगत्वेन गणेशपूजनं स्वस्तिपुण्याहवाचन मातृकापूजनं नांदीश्राद्धमाचार्यजपकर्तृवरणं च करिष्ये, इति संकल्प्य गणेशपूजनादिनान्दीश्राद्धान्तं पूर्ववत् कृत्वा नान्दीश्राद्धान्ते सविता प्रीयतामिति पठित्वा आचार्यजपकर्तृवरणं कुर्यात्। तद्यथा—आचार्य जपकर्तृश्चोदङ्मुखानासनेषूपवेश्यस्वयंप्राङ्मुख उपविश्य सर्वेषां पादप्रक्षालनं कृत्वा दक्षिणहस्ते वरणद्रव्याणि गृहीत्वा देशकालौ संकीर्त्य मम सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं करिष्यमाणगायत्रीजपपुरश्चरणकर्मणि अमुकगोत्रोत्पन्नममुकवेदशाखाध्यायिनममुकशर्माणं ब्राह्मणमेभिर्गंधाक्षतताम्बूलस्वर्णांगुलीयकासनमालाकमण्डलुयुग्मवासोभिर्जपकरणार्थमाचार्यत्वेन त्वामहं वृणे इत्याचार्यं वृत्वा ॐ वृतोऽस्मीति प्रतिवचनानंतरं हस्ते यज्ञकंकणं बद्ध्वा गन्धपुष्पादिभिः पूजां कुर्यात्। ततो जापकवरणं देशकालौ संकीर्त्य मम सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं करिष्यमाणगायत्रीपुरश्चरणकर्मणि नानागोत्रोत्पन्नानमुकाऽमुकशर्मणो विप्रानेभिर्गंधाक्षतताम्बूलस्वर्णांगुलीयकासनमालाकमंडलुवासोभिर्विहितजपकरणार्थं जापकत्वेन युष्मानहं वृणे। ॐ वृताः स्म इति प्रतिवचनानंतरं पृथक्पृथक् हस्ते यज्ञकंकणं बद्ध्वा गन्धादिभिः संपूज्य प्रार्थयेत् ॥ ॐ अस्य यागस्य निष्पत्तौ भवंतोऽभ्यर्थिता मया ॥ सुप्रसन्नैः प्रकर्त्तव्यो मद्यागोविधिपूर्वकम् ॥ १ ॥ अङ्गीकुर्वंतु कर्मैतत्कल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्युक्ता जपार्थे स्थिरबुद्धयः ॥ २ ॥ अस्मिन्यज्ञे मया पूज्याः संतु मे नियमान्विताः ॥ अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ॥ ३ ॥ जपध्यानरता नित्यं प्रसन्नमनसः सदा ॥ अदुष्टभाषणाः सन्तु मा सन्तु परनिन्दकाः ॥ ४ ॥ ममापि नियमा ह्येते भवन्तु भवतामपि ॥ ५ ॥ इति प्रार्थ्य मधुपर्कपूजांकृत्वा प्रत्येकं वस्त्रद्वयमासनमर्घ्यपात्रमाचमनपात्रं जलपात्रं सुवर्णांगुलीयकं मालां च दद्यात् ॥ ( अत्र जापकास्त्वेकविंशतिः न्यूनाधिका वा कार्याः ) ततः सर्वे जापका आचम्य प्राणानायम्य । "ॐ सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपा ॥ पवमानो दिक्पतिर्भूराकाशं खेचरामराः ॥ ब्रह्मशासनमास्थाय कल्पध्वमिह सन्निधिम्" इति प्रार्थयेयुः ॥ ततो देशकालौ संकीर्त्य ममामुकशर्मणो यजमानस्य वा सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थम् ( यजमानानुज्ञया ) गायत्रीपुरश्चरणांतर्गतामुकसहस्रसंख्यापरिमितिविहितगायत्रीजपं करिष्ये तदंगत्वेन भूतशुद्धिं प्राणप्रतिष्ठामंतर्मातृकाबहिर्मातृकान्यासं च करिष्ये। इति संकल्प्य।

पूर्वोक्तपद्धतिकाण्डमार्गेण भूतशुद्ध्यादिबहिर्मातृकान्यासांतं कृत्वा गायत्रीन्यासं कुर्यात्। तद्यथा- ॐ प्रणवस्य ब्रह्मा ऋषिः। गायत्री छंदः। परमात्मा देवता। शरीरशुद्ध्यर्थं जपे विनियोगः। ॐ ब्रह्मऋषये नमः शिरसि। ॐ गायत्रीछंदसे नमः मुखे ॥२॥ ॐ परमात्मदेवतायै नमः हृदये ॥३॥ इति प्रणवन्यासः। सप्तव्याहृतीनां जमदग्निभारद्वाजात्रिगौतमकश्यपविश्वामित्रवसिष्ठाः ऋषयः। गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छंदांसि। अग्निवायुसूर्यबृहस्पतिवरुणेंद्रविश्वेदेवा देवताः। न्यासे जपे च विनियोगः॥ ॐ जमदग्निभारद्वाजात्रिगौतमकश्यपविश्वामित्रवसिष्ठऋषिभ्यो नमः शिरसि ॥१॥ ॐ गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीछंदोभ्यो नमः मुखे ॥२॥ ॐ अग्निवायुसूर्यबृहस्पतिवरुणेंद्रविश्वेदेवदेवताभ्यो नमः हृदये ॥ ३ ॥ इति व्याहृतिऋष्यादिन्यासः। ॐ गायत्र्या विश्वामित्रऋषिः। गायत्री छंदः। सविता देवता। न्यासे जपे च विनियोगः॥ ॐ विश्वामित्रऋषये नमः शिरसि। ॐ गायत्रीछन्दसे नमो मुखे। ॐ सवितृदेवतायै नमः हृदये। इति गायत्र्या ऋष्यादिन्यासः। ॐ शिरसः प्रजापतिः ऋषिः ब्रह्माग्निवायुसूर्या देवताः। यजुश्छंदः। प्राणायामे विनियोगः। ॐ प्रजापतिऋषये नमः शिरसि। ॐ यजुश्छंदसे नमः मुखे। ॐ ब्रह्माग्निवायुसूर्यदेवताभ्यो नमः हृदये। इति शिरस ऋष्यादिन्यासः॥ ॐ भूः अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ भुवः तर्जनीभ्यां नमः ॥ २ ॥ ॐ स्वः मध्यमाभ्यां नमः ॥ ३ ॥ ॐ तत्सवितुर्वरेण्यम् अनामिकाभ्यां नमः ॥ ४ ॥ ॐ भर्गोदेवस्य धीमहि कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ धियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः। एवमेव हृदयादिन्यासं कुर्यात्। ततः। ॐ भूः नमः हृदये ॥१॥ ॐ भुवः नमो मुखे ॥२॥ ॐ स्वः नमो दक्षांसे ॥३॥ ॐ महः नमो वामांसे ॥४॥ ॐ जनः नमो दक्षिणोरौ ॥५॥ ॐ तपः नमो वामोरौ ॥ ६ ॥ ॐ सत्यं नमः जठरे ॥ ७ ॥ इति व्याहृतिन्यासः॥ अथ गायत्रीवर्णन्यासः। ॐ तत् नमः पादद्वयांगुलिमूलयोः ॥ १ ॥ ॐ सं नमः गुल्फयोः ॥ २ ॥ ॐ विं नमः जानुनोः ॥ ३ ॥ ॐ तुं नमः पादमूलयोः ॥ ४ ॥ ॐ वं नमः लिंगे ॥ ५ ॥ ॐ रें नमः नाभौ ॥ ६ ॥ ॐ णिं नमः हृदये ॥ ७ ॥ ॐ यं नमः कण्ठे ॥ ८ ॥ ॐ भं नमः हस्तद्वयाङ्गुलीमूलयोः ॥९॥ ॐ र्गी नमः मणिबंधयोः ॥ १० ॥ ॐ दें नमः कूर्परयोः ॥ ११ ॥ ॐ वं नमः बाहुमूलयोः ॥ १२ ॥ ॐ स्यं नमः आस्ये ॥ १३ ॥ ॐ धीं नमः नासापुटयोः ॥ १४ ॥ ॐ मं नमः कपोलयोः ॥ १५ ॥ ॐ हिं नमः नेत्रयोः ॥ १६ ॥ ॐ धिं नमः कर्णयोः ॥ १७ ॥ ॐ यों नमः भ्रूमध्ये ॥ १८ ॥ ॐ यों नमः मस्तके ॥ १९ ॥ ॐ नं नमः पश्चिमवक्त्रे ॥ २० ॥ ॐ प्रं नमः उत्तरवक्त्रे ॥ २१ ॥ ॐ चों नमः दक्षिणवक्त्रे ॥ २२ ॥ ॐ द नमः पूर्ववक्त्रे ॥ २३ ॥ ॐ यात् नमः उर्ध्ववक्त्रे ॥ २४ ॥ इति गायत्र्यक्षरन्यासः॥ ॐ तत् नमः शिरसि ॥ १ ॥ ॐ सवितुर्नमः भ्रुवोर्मध्ये ॥ २ ॥ ॐ वरेण्यं नमः नेत्रयोः ॥३॥ ॐ भर्गो नमः मुखे ॥४॥ ॐ देवस्य नमः कंठे ॥५॥ ॐ धीमहि नमः हृदये ॥६॥ ॐ धियो नमः नाभौ ॥७॥ ॐ यो नमः गुह्ये ॥८॥ ॐ नः नमः जानुनोः ॥९॥ ॐ प्रचोदयात् नमः पादयोः ॥१०॥ ॐ आपोज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोमिति शिरसि ॥११॥ इति पदन्यासः। ततः ॐ तत्सवितुर्वरेण्यं नमः नाभ्यादिपादांगुलीपर्यंतम् ॥१॥ ॐ भर्गोदेवस्य धीमहि नमः

हृदयादि नाभ्यन्तम्॥२॥ॐ धियो यो नः प्रचोदयात् नमः मूर्द्धादिहृदयांतम् ॥३॥ इति विन्यस्य षडंगन्यासं कुर्यात्॥ ॐ तत्सवितु ब्रह्मणे हृदयाय नमः ॥ १ ॥ ॐ वरेण्यं विष्णवे शिरसे स्वाहा ॥ २ ॥ ॐ भर्गोदेवस्य रुद्राय शिखायै वषट् ॥ ३ ॥ ॐ धीमहि ईश्वराय कवचाय हुं ॥ ४ ॥ॐ धियो यो नः सदाशिवाय नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ प्रचोदयात् सर्वात्मने अस्त्राय फट् ॥ ६ ॥ इति षडंगन्यासं कृत्वा ध्यायेत ॥ अथ ध्यानम् ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटां तत्त्वार्थ वर्णात्मिकाम् सावित्रीं वरदाभयांकुशकशां पाशं कपालं गुणं शंखं चक्रमथारविंदयुगलं हस्तैर्वहंतीं भजे ॥ १ ॥ इति ध्यात्वा। ॐ लं पृथिव्यात्मकं गन्धं समर्पयामि ॥ १ ॥ ॐ हँ आकाशात्मकं पुष्पं समर्पयामि ॥ २ ॥ ॐ यँ वाय्वात्मकं धूपं समर्प यामि ॥ ३ ॥ ॐ रँ तेजआत्मकं दीपं समर्पयामि ॥ ४ ॥ ॐ वँ अमृतात्मकं नैवेद्यं समर्पयामि ॥ ५ ॥ ॐ सँ सर्वात्मकं मंत्रपुष्पं समर्पयामि ॥ ६ ॥ इति मानसोपचारैः संपूज्य (भेदपक्षे) त्रिकोणपीठपूजां कुर्य्यात् ॥ तद्यथा-पूर्वादिचतुर्दिक्षु मध्ये च। ॐ प्रभूताय नमः ॥ १ ॥ ॐ विमलाय नमः ॥ २ ॥ ॐ साराय नमः ॥ ३ ॥ ॐ समाराध्याय नमः ॥ ४ ॥ (मध्ये) ॐ पर मसुखाय नमः ॥ ५ ॥ इति संपूज्य तद्बहिः। ॐ अं अनन्ताय नमः ॥ १ ॥ ॐ पृं पृथिव्यै नमः ॥ २ ॥ ॐ अं अमृतसागराय नमः ॥ ३ ॥ ॐ रं रत्नद्वीपाय नमः ॥ ४ ॥ ॐ हें हेमगिरये नमः ॥ ५ ॥ ॐ नं नन्दनोद्यानाय नमः ॥६॥ ॐ कं कल्पवृक्षेभ्यो नमः ॥ ७ ॥ ॐ मं मणिभूषितभूतलाय नमः ॥ ८ ॥ ॐ सं सोममंडलाय नमः ॥ ९ ॥ ॐ अं अग्निमंडलाय नमः ॥ १० ॥ ॐ सूं सूर्यमंडलाय नमः ॥ ११ ॥ इति पीठदेवताः संपूजयेत्। ततः (पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य) पूर्वादिक्रमेण। ॐ रां दीप्तायै नमः ॥ १ ॥ ॐ रीं सूक्ष्मायै नमः ॥ २ ॥ ॐ रूं जयायै नमः ॥ ३ ॥ ॐ रें भद्रायै नमः ॥ ४ ॥ ॐ रैं विभूत्यै नमः ॥ ५ ॥ ॐ रों विमलायै नमः ॥ ६ ॥ ॐ रौं अमोघायै नमः ॥ ७ ॥ ॐ रं विद्युतायै नमः ॥ ८ ॥ (मध्ये) ॐ रः सर्वतोमुख्यै नमः ॥ ९ ॥ इति पीठशक्तीः संस्थाप्य गंधपुष्पैः पूजयेत। तन्मध्ये ॐ ब्रह्मविष्णुशिवात्मकाय सौराय योगपीठात्मने नमः। इति पुष्पांजलिना आसनं दत्त्वा। तत्र सर्वतोभद्रमध्ये गायत्रीयंत्रं विलिख्य तदुपरि "ॐ महीद्यौः" इत्यादिमंत्रः पूर्णपात्रांतं पूर्ववत्ताम्रकलशं सस्थाप्य। "तत्त्वायामि" इति वरुणमावाह्य संपूज्य। कलशस्य मुखे विष्णुरित्याद्यभिमंत्र्य। देवदानवसंवादे इत्यादि प्रार्थयेत्। ततः तदुपरि पट्टवस्त्रे शक्तिगंधाष्टकेन * यंत्र विलिख्य तन्मध्ये मूलमंत्रेण। पलस्वर्णमयीं पूर्वोक्तध्यानप्रतिपादितां भगवत्या गायत्र्याः प्रतिमां सावयवां वा त्रिकोणाकारामग्न्युत्तारणपूर्विकां संस्थाप्य प्राणप्रतिष्ठां कृत्वा मूलेन तस्यां भगवतीं वेदमातरं श्रीगायत्रीमावाह्य पुरुषसूक्तेन श्रीसूक्तेन पाद्यादिपुष्पांतैरुपचारैः संपूज्य। आवरणार्चनं कुर्य्यात्। तद्यथा-तत्र त्रिकोणस्य पूर्वकोणे ॐ गायत्र्यै नमः ॥ १ ॥ (निर्ऋतिकोणे) ॐ सावित्र्यै नमः ॥ २ ॥ (वायुकोणे) ॐ सरस्वत्यै नमः ॥ २ ॥ (त्रिकोणांतरालेषु) ॐ ब्रह्मणे नमः ॥ १ ॥ ॐ विष्णवे नमः ॥ २ ॥ ॐ रुद्राय नमः ॥ ३ ॥ इति पूज

* अत्रत्यं गायत्रीपूजायन्त्रं पूर्वत्र द्रष्टव्यम्।

येत ॥ ततो मूलेन पुष्पांजलिं गृहीत्वा " अभीष्टसिद्धिं मे देहि शरणागतवत्सले ॥ भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्" इति पुष्पांजलिं दत्त्वा विशेषार्घाद्बिन्दुं निक्षिप्य ' पूजितास्तर्पिताः सन्तु ' इति वदेत् ॥ इति प्रथमावरणम् ॥ १ ॥ ततोऽष्टदले पूर्वादिचतुर्दिक्षु ॐ आदित्याय नमः ॥ १ ॥ ॐ भानवे नमः ॥ २ ॥ ॐ भास्कराय नमः ॥ ३ ॥ ॐ रवये नमः ॥ ४ ॥ ( आग्नेयादिकेसरेषु ) ॐ उषायै नमः ॥ १ ॥ ॐ प्रज्ञायै नमः ॥ २ ॥ ॐ प्रभायै नमः ॥ ३ ॥ ॐ संध्यायै नमः ॥ इति पूजयेत् । ततो मूलमुच्चरन् ' अभीष्टसिद्धिं मे देहि० ' इत्यादिना पुष्पांजलिं दद्यात् ॥ इति द्वितीयावरणम् ॥ २ ॥ ततः षट्कोणे आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च । ॐ ब्रह्मणे हृदयाय नमः ॥ १ ॥ ॐ विष्णवे शिरसे स्वाहा ॥ २ ॥ ॐ रुद्राय शिखायै वषट् ॥ ३ ॥ ॐ ईश्वराय कवचाय हुं ॥ ४ ॥ ॐ सदाशिवाय नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ सर्वात्मने नमः अस्त्राय फट् ॥ ६ ॥ इति षडंगानि पूजयेत् ॥ ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य । ' अभीष्टसिद्धिं मे देहि० ' इति पुष्पांजलिं दत्त्वा ' पूजितास्तर्पिताः संतु' इति वदत् । इति तृतीयावरणम् ॥ ३ ॥ततो वर्तुले प्राचीक्रमेण । ॐप्रह्लादिन्यै नमः॥१॥ ॐ प्रभायै नमः॥ २ ॥ ॐनित्यायै नमः ॥ ३ ॥ ॐ विश्वंभरायै नमः ॥ ४ ॥ ॐ विशालिन्यै नमः ॥ ५ ॥ॐ प्रभावत्यै नमः ॥६॥ ॐ जयायै नमः ॥ ७ ॥ ॐ शांत्यै नमः ॥ ८ ॥ इति पूजयेत् ॥ ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य । ' अभीष्टसिद्धिं मे देहि० ' इति पुष्पांजलिं दत्त्वा ' पूजितास्तर्पिताः संतु ' इति वदेत् । इति चतुर्थावरणम् ॥ ४ ॥ तद्बाह्ये वर्तुले प्राचीक्रमेण । ॐ कांत्यै नमः ॥ १ ॥ ॐ दुर्गायै नमः ॥ २ ॥ ॐ सरस्वत्यै नमः ॥ ३ ॥ ॐ विश्वरूपाय नमः ॥ ४ ॥ ॐ विशालायै नमः ॥ ५ ॥ ॐ ईशायै नमः ॥ ६ ॥ ॐ चापिन्यै नमः ॥ ७ ॥ ॐ विमलायै नमः ॥ ८ ॥ इति पूजयेत् । ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य ' अभीष्टसिद्धिं मे देहि०' इति पुष्पांजलिं दत्त्वा ' पूजितास्तर्पिताः संतु' इति वदेत् । इति पञ्चमावरणम् ॥ ५ ॥ तद्बाह्येऽष्टदलमूले पूर्वादिक्रमेण । ॐ अपहारिण्यै नमः ॥ १ ॥ ॐ सूक्ष्मायै नमः ॥२॥ ॐ विश्वयोन्यै नमः ॥ ३ ॥ ॐ जयावहायै नमः॥४॥ ॐ पद्मालयायै नमः ॥ ५ ॥ ॐ परायै नमः ॥ ६ ॥ ॐ शोभायै नमः ॥ ७ ॥ ॐ पद्मरूपायै नमः ॥ ८ ॥ इति पूजयेत् । पुष्पांजलिं गृहीत्वा मूलमुच्चार्य 'अभीष्टसिद्धिं मे देहि०' इति पुष्पांजलिं दत्त्वा ' पूजितास्तर्पिताः सन्तु' इति षष्ठावरणम् ॥ ६ ॥ ततोऽष्टदलमध्ये पूर्वादिक्रमेण ॐ आं ब्राह्म्यै नमः ॥ १ ॥ ॐ ईं माहेश्वर्यै नमः ॥ २ ॥ ॐ ऊं कौमार्यै नमः ॥ ३ ॥ ॐ ऋं वैष्णव्यै नमः ॥ ४ ॥ ॐ ऌं वाराह्यै नमः ॥ ५ ॥ ॐ ऐं इन्द्राण्यै नमः ॥ ६ ॥ ॐ औं चामुंडायै नमः ॥ ७ ॥ ॐ अः महालक्ष्म्यै नमः ॥ ८ ॥ इति पूजयेत् । ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य ' अभीष्टसिद्धिं मे देहि०' इति पुष्पांजलिं दत्त्वा ' पूजितास्तर्पिताः संतु' इति वदेत् ॥ इति सप्तमावरणम् ॥ ७ ॥ ततो दलाग्रेषु ॐ सों सोमाय नमः ॥ १ ॥ ॐभौं भौमाय नमः ॥ २ ॥ ॐ बुं बुधाय नमः ॥ ३ ॥ ॐ बृं बृहस्पतये नमः ॥ ४ ॥ ॐ शुं शुक्राय नमः ॥ ५ ॥ ॐ शं शनैश्चराय नमः ॥ ६ ॥ ॐ रां राहवे नमः ॥ ७ ॥ ॐ कें केतवे नमः ॥ इति पूजयेत् । ततो पुष्पांजलिं गृहीत्वा मूलमुच्चार्य । ' अभीष्टसि

द्धिं मे देहि॰ ' इति पुष्पांजलिं दत्त्वा ' पूजितास्तर्पिताः संतु ' इति वदेत् ॥ इत्यष्टमावरणम् ॥८॥ ततो भूपुरे पूर्वादिदशदिक्षुॐ लं इन्द्राय नमः ॥ १ ॥ ॐ रं अग्नये नमः ॥ २ ॥ ॐ मं यमाय नमः ॥ ३ ॥ ॐ क्षं निर्ऋतये नमः ॥ ४ ॥ ॐ वंवरुणाय नमः ॥ ५ ॥ ॐ यं वायवे नमः ॥ ६ ॥ ॐ सं सोमाय नमः ॥ ७ ॥ ॐ ईं ईशानाय नमः ॥ ८ ॥ ( ईशानपूर्वयोर्मध्ये ) ॐ आं ब्रह्मणे नमः ॥ ९ ॥ ( निर्ऋतिपश्चिमयोर्मध्ये ) ॐ अं अनंताय नमः ॥ १० ॥ इति पूजयेत् । ततःपुष्पांजलिं गृहीत्वामूलमुच्चार्य ' अभीष्टसिद्धिं मे देहि॰ ' इति पुष्पांजलिं दत्त्वा ' पूजितास्तर्पिताः संतु' इति वदेत् ॥ इति नवमावरणम्॥९॥तद्बहिस्तत्तत्समीपे ॐ वं वज्राय नमः ॥ १ ॥ ॐ शं शक्तये नमः॰ ॥ २ ॥ ॐ दं दंडाय नमः ॥ ३ ॥ ॐ खं खड्गाय नमः ॥४॥ ॐपं पाशायनमः ॥ ५ ॥ ॐ अं अंकुशाय नमः ॥६॥ ॐ गं गदायै नमः ॥७॥ ॐ त्रिं त्रिशूलायनमः॥८॥ ॐ पं पद्मायनमः॥९॥ॐ चंचक्रायनमः ॥ १० ॥ इति पूजयेत् ॥ ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य'अभीष्टसिद्धिं मेदेहि॰'इति पुष्पांजलिं दत्त्वा 'पूजितास्तर्पिताःसंतु' इति वदेत् । इति दशमावरणम्॥१०॥ "इत्थमावरणैर्देवींदशभिः परिपूजयेत् ॥ धर्म्मार्थकाममोक्षाणां भोक्ता स्याद्द्विजसत्तमः॥१॥' इत्यावरणपूजां कृत्वा धूपादिनीराजनांतं संपूज्य स्तवेन स्तुत्वा शापविमोचनं पठित्वा यथाविधि जपं कुर्यात । तत्रमंत्रः।"ॐभूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥" इति वैदिको मंत्रः । सर्वेषां समान एव जपोनतु न्यूनाधिकः॥ ( उत्तमजपो द्विसाहस्रः मध्यमः सार्द्धद्विसाहस्रः अधमस्त्रिसाहस्रो ज्ञेयः अस्य पुरश्चरणं चतुर्विंशतिलक्षजपः ) ततो जपांते पूर्वोक्त ऋष्यादिन्यासं हृदयादिषडंगन्यासं च कृत्वा कवचं पठेयुः । ततो देवीं पुनः पंचोपचारैः संपूज्य नीराजनं कृत्वा पुष्पांजलिं च दत्त्वा देव्या दक्षिणकरे जपसमर्पणं कुर्युः । ततः सर्वे जापकाः भूमौ शयानाः हविष्यान्नमश्नंतो ब्रह्मचर्यास्पृश्यास्पर्शादिनियमांश्च रेयुः प्रत्यहम्'ॐ यज्जाग्रतो' इति शिवसंकल्पं त्रिःपठेयुः ततः पुरश्चरणजपसमाप्तौ होमः । तद्यथा देशकालौ संकीर्त्य अद्य पुरश्च णसांगतासिद्ध्यर्थं होमविधिं करिष्ये । इति संकल्प्य गणपतिपूजनादिनांदीश्राद्धांतं पूर्ववत् कुर्यात् ॥ ततः कुंडे स्थंडिले वा स्वगृ ह्योक्तविधिना पंचभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य ग्रहपीठे सूर्यादिनवग्रहमंडलदेवानावाह्य संपूज्य तदीशान्यां रुद्रकलशं स्थापये त् । ततो मध्यपीठे सर्वतोभद्रमंडले ताम्रकलशोपरि स्वर्णप्रतिमायां भगवंतं सवितारं गायत्रीं च षोडशोपचारैः संपूज्य पूर्वो क्तावरणदेवतापूजां विधाय गीतवादित्रादिभिः सह महानीराजनं कृत्वा सप्त प्रदक्षिणाश्च कृत्वा साष्टांगं प्रणमेत् । ततः कुशकं डिकां संपाद्य आघारावाज्यभागौ हुत्वा 'ॐइदं हवनीयद्रव्यमन्वाधानोक्तदेवताऽभ्योस्तु न मम'इति यजमानो द्रव्यत्यागं कुर्य्यात् । ततः सूर्यादिग्रहेभ्यः अर्कादिसमिच्चर्वाज्यतिलाहुतिभिः प्रत्येकमष्टाविंशतिरष्टौ वा हुत्वा तैरेव द्रव्यैरधिप्रत्यधिदेवताभ्यश्चतुश्चतुः संख्याकाभिः पंचलोकपालदशदिक्पालेभ्यश्च द्विद्विसंख्याकाभिश्च जुहुयात् ॥ ततो बहुजपकर्तृकपक्षे जपदशांशेन पायसादि होमः कार्यः । तथा च-( देवीभागवते ) " जुहुयात्तद्दशांशेन सघृतेन पयोऽन्धसा॥ तिलैः पत्रैःप्रसूनैश्चयवैश्च मधुरान्वितैः॥१॥" एकजपकर्तृकपक्षे तु शतांशहोमः कार्यः । तथा च ( शारदातिलके ) " तत्त्वसंख्यासहस्राणि मन्त्रविज्जुहुयात्तिलैः॥सर्वपापविनि

मुक्तो दीर्घमायुः स विन्दति ॥ १ ॥ " अथ शतांशहोमप्रकारः ॥ प्रधानदेवसवित्रे चतुर्विंशतिसहस्रतिलाहुतिभिस्त्रिसहस्रपायसाहुतिभिस्तावतीभिघृताहुतिभिर्दूर्वाहुतिभिस्तावतीभिः क्षीरद्रुमसमिधाहुतिभिश्च हुत्वा पूर्वोक्तावरणदेवताभ्यश्चर्वादिद्रव्यैरेकैकाहुतीर्दत्वा शेषेण स्विष्टकृद्धोमं च कृत्वा समापयेत् । होमकाले ' इदं सवित्रे न मम ' इति त्यागः ॥( होमे सप्रणवा व्याहृतिरहिता स्वाहांता गायत्री दूवात्रयस्यैकाहुतिः । दूर्वासमिधां दधिमध्वाज्याक्तानां होमः ) ततो होमांते बलिदानम् । यजमानस्याभिषेकश्च कार्य्यः ॥ अभिषेकांते तत्समये एव दक्षिणां दद्यात् ॥ अदाने प्रत्यवायी भवति । क्षणेक्षणे पापभागी भवति । दक्षिणा च प्रतिलक्षं सुवर्णनिष्कत्रय तदर्द्धं वा शक्त्या वा देया । ततो जले सवितारं रक्तचन्दनादिभिः संपूज्य होमदशांशेन मूलमन्त्रान्ते सवितारं तर्पयामि ॥ इत्युक्त्वा दुग्धमिश्रजलेन तर्पणं कार्य्यम् ॥ ततस्तर्पणदशांशेन गायत्र्यंते ' आत्मानमभिषिंचामि न मम' इति यजमानमूर्ध्न्यभिषेकः कार्यः । ततः अभिषेकदशांशसंख्ययाधिकं वा ब्राह्मणभोजनम् । ( होमतर्पणाभिषेकानां मध्ये यदेव न संभवति तत्स्थाने तद्द्विगुणो जपः कार्य्यः । ततो भूयसी दक्षिणा विप्राशीर्वादश्च । ततः कृतांजलिपुटः । ॐ चतुर्विंशतिलक्षात्मकगायत्रीपुरश्चरणं संपूर्णमस्त्विति भवन्तो ब्रुवंत्विति विप्रान् प्रार्थ्य । ते च-ॐ गायत्रीपुरश्चरणं संपूर्णमस्त्विति ब्रूयुः । इति प्रतिवचनानन्तरं कर्म्मपूर्तिकामो विष्णुं स्मरेत् । एवं कृते सर्वपापक्षयो भवति दीर्घायुश्च विन्दति ) ( शारदातिलके ) " व्याहृतित्रसंयुक्तां गायत्रीं दीक्षितो यजेत् ॥ तत्त्वलक्षं विधानेन भिक्षाशी विजितेन्द्रियः ॥ १ ॥ क्षीरौदनतिलान्दूर्वाक्षीरद्रुमसमिद्वरान् ॥ पृथक्सहस्रत्रितयं जुहुयान्मंत्रसिद्धये ॥ २ ॥ तत्त्वसंख्यासहस्राणि मंत्रविज्जुहुयात्तिलैः ॥ सर्वपापविनिर्मुक्तो दीर्घमायुः स विन्दति ॥ ३ ॥ आयुषे साज्यहविषा केवलेनापि सर्पिषा ॥ दूर्वात्रिकैस्तिलैर्मंत्री जुहुयाच्चिसहस्रकम् ॥ ४ ॥ अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयादयुतं ततः ॥ महालक्ष्मीर्भवेत्तस्य षण्मासान्नात्र संशयः ॥ ५ ॥ ब्रह्मश्रिये प्रजुहुयात्प्रसूनैर्बिल्ववृक्षजैः ॥ बहुना किमिहोक्तेन यथावत्साधु साधिता ॥ ६ ॥ द्विजन्मनामियं विद्या सिद्धा कामदुघा मता॥"( गायत्रीपटले ) " आदित्यस्योदये स्नात्वा सहस्रं प्रत्यहं जपेत् ॥ आयुरारोग्यमैश्वर्यं धनं च लभते ध्रुवम् ॥ १ ॥ त्रिरात्रोपोषितः सम्यग्घृतं हुत्वा सहस्रशः ॥ सहस्रं लाभमाप्नोति हुत्वाग्नौ खादिरैंधनम् ॥ २ ॥ पालाशीभिः समिद्भिश्च घृताक्ताभिर्हुताशने ॥ सहस्रं लाभमाप्नोति राहुसूर्यसमागमे ॥ ३ ॥ हुत्वा तु खदिरं वह्नौ घृताक्तं रक्तचन्दनम ॥ हेम्ना सहस्रमाप्नोति राहुचन्द्रसमागमे ॥ ४ ॥ रक्तचन्दनमिश्रं तु सघृतं हव्यवाहने ॥ हुत्वा गोमयमाप्नोति सहस्रं गोमयं द्विजः ॥ ५ ॥ जातीचम्पकराजार्ककुसुमानां सहस्रशः ॥ हुत्वा वस्त्रमवाप्नोति घृताक्तानां हुताशने ॥ ६ ॥ सूर्यमंडलबिंबे च हुत्वा तोयं सहस्रशः ॥ सहस्रं प्राप्नुयाद्धेम रौप्यमिन्दुमये हुते ॥ ७ ॥ अलक्ष्मीपापसंयुक्तं मलव्याधिविनाशने ॥ जाप्यैः सहस्रैर्मुच्येत स्नायाद्यस्तु जलेन वै ॥ ८ ॥ गोघृतेन सहस्रेण लोध्रेण जुहुयाद्यदि ॥ चौराग्निमारुतोत्थान्यभयानि न भवंति वै ॥ ९ ॥ क्षीराहारो जपेल्लक्षमपमृत्युमपोहति ॥ घृताशी प्राप्नुयान्मेधां बहुविज्ञानसंचयाम् ॥ १० ॥ हुत्वा वेतसपत्राणि घृताक्तानि हुताशने ॥ लक्षाधिपस्य पदवीं सार्वभौमत्वमाप्नुयात् ॥ ११ ॥ लक्षेण भस्महोमस्य हुत्वा ह्युत्तिष्ठते जलात् ॥ आ

दित्याभिमुखं स्थित्वा नाभिमात्रजले शुचौ ॥ १२ ॥ गर्भपातादिप्रदराश्चान्ये स्त्रीणां महारुजः ॥ नाशमेष्यंति ते सर्वे मृतवत्सा दिदुःखदाः ॥ १३ ॥ तिलानां लक्षहोमेन घृताक्तानां हुताशने ॥ सर्वकामसमृद्धात्मा परं स्थानमवाप्नुयात् ॥ १४ ॥ यवानां लक्ष होमेन घृताक्तानां हुताशने ॥ सर्वकामसमृद्धात्मा परां सिद्धिमवाप्नुयात् ॥ १५ ॥ घृतस्याहुतिलक्षेण सर्वान्कामानवाप्नुयात् ॥ पञ्चगव्याशनो लक्षं जपेज्जातिस्मृतिर्भवेत् ॥ १६ ॥ तदेव ह्यनले हुत्वा प्राप्नोति बहुशो धनम् ॥ अन्नादिहवनान्नित्यमन्नाद्यं च भवे त्सदा ॥ १७ ॥ जुहुयात्सर्वसाध्यानामाहुत्याऽयुतसंख्यया ॥ रक्तसिद्धार्थकान्हुत्वा सर्वान्साधयते रिपून् ॥ १८ ॥ लवणं मधुसं युक्तं हुत्वा सर्ववशी भवेत् ॥ हुत्वा तु करवीराणि रक्तानि ज्वालयेज्ज्वलम् ॥१९॥ हुत्वा भल्लातकं तैलं देशादेव प्रचालयेत् ॥ हुत्वा तु निम्बपत्राणि विद्वेषशांतये नृणाम् ॥२०॥ रक्तानां तंडुलानां च घृताक्तानां हुताशने॥हुत्वा बलमवाप्नोति शत्रुभिर्न स जीयते ॥२१॥ ब्रह्मचारी जिताहारो यः सहस्रत्रयं जपेत् ॥ संवत्सरेण लभते धनैश्वर्यं न संशयः ॥ २२ ॥ शमीबिल्वपलाशानामर्कस्य तु विशे षतः ॥ पुष्पाणां समिधश्चैव हुत्वा हेम ह्यवाप्नुयात् ॥ २३ ॥ आब्रह्मत्र्यंबकादीनां यस्यायतनमाश्रितः ॥ जपेल्लक्षं निराहारो स तस्य वरदो भवेत् ॥ २४ ॥ बिल्वानां लक्षहोमेन घृताक्तानां हुताशने ॥ परां श्रियमवाप्नोति यदि न भ्रूणहा भवेत् ॥ २५ ॥ पद्मानां लक्षहोमेन घृताक्तानां हुताशने ॥ प्राप्नोति राज्यमखिलं सुसंपन्नमकंटकम् ॥ २६ ॥ पञ्चविंशतिलक्षेण दधि क्षीरं हुताशने॥ स्वदेहे सिद्ध्यते जंतुः कौशिकस्य मतं तथा ॥ २७ ॥ एकाहं पञ्चगव्याशी एकाहं मारुताशनः ॥ एकाहं च द्विजोन्नाशी गाय त्रीजप उच्यते ॥ २८ ॥ महारोगा विनश्यंति लक्षजप्यानुभावतः ॥ स्नात्वा शतेन गायत्र्याः शतमंतर्जले जपेत् ॥ शतेन यस्त्वपः पीत्वा सर्वपापैः प्रमुच्यते ॥ २९ ॥ गोघ्नः पितृघ्नमातृघ्नौ ब्रह्महा गुरुतल्पगः ॥ स्वर्णहारी तैलहारी यस्तु विप्रः सुरां पिबेत् ॥३०॥ चन्दनद्वयसंयुक्तं कर्पूरं तडुलं यवम् ॥ लवंगं सुफलं चाज्यं सिता चाम्रस्य दारुकैः ॥ ३१ ॥ अथ न्यूनविधिः प्रोक्तो गायत्र्याः प्रीतिकारकः ॥ एवं कृते महासौख्यं प्राप्नोति साधको ध्रुवम् ॥ ३२ ॥ अन्नाज्यभोजनं हुत्वा कृत्वा वा कर्म गर्हितम् ॥ न सीदेत्प्र तिगृह्णानो महीमपि ससागराम् ॥ ३३ ॥ ये चास्य उत्थिता लोके ग्रहाः सूर्यादयो भुवि ॥ ते यांति सौम्यतां सर्वे शिवे इति न सशयः ॥ ३४ ॥ इति गायत्रीपुरश्चरण समाप्तम् ॥ अथ गायत्रीकवचप्रारंभः ॥ अस्य श्रीगायत्रीकवचस्य ब्रह्मविष्णुरुद्रा ऋषयः। ऋग्यजुःसामाथर्वाणि च्छंदांसि । परब्रह्मस्वरूपिणी गायत्री देवता । भूः बीजम् । भुवः शक्तिः । स्वः कीलकम् । श्रीगायत्रीप्रीत्यर्थे जपे विनियोगः । वर्णास्त्रां कुंडिकाहस्तां शुद्धनिर्मलज्योतिषीम् ॥ सर्वतत्त्वमयीं वन्दे गायत्रीं वेदमातरम् ॥ १ ॥ अथ ध्यानम् । मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् ॥ गायत्रीं वरदाभयांकुशकशां शूलं कपालं गुणं शंखं चक्रमथारविंदयुगलं हस्तैर्वहन्तीं भजे ॥१॥ ॐ गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे ॥ ब्रह्मविद्या च मे पश्चादुत्तरे मां सरस्वती ॥ १ ॥ पावकीं मे दिशं रक्षेत्पावकोज्ज्वलशालिनी ॥ यातुधानीं दिशं रक्षेद्यातुधानगणार्दिनी ॥ २ ॥ पावमानीं दिशं रक्षेत्पवमानविलासिनी ॥ दिशं रौद्रीमवतु मे रुद्राणी रुद्ररूपिणी ॥ ३ ॥ ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा ॥ एवं

दश दिशो रक्षेत्सर्वतो भुवनेश्वरी ॥४॥ ब्रह्मास्त्रस्मरणादेव वाचां सिद्धिः प्रजायते॥ब्रह्मदण्डश्च मेपातुसर्वशस्त्रास्त्रभक्षकः॥५॥ब्रह्मशीर्षस्तथा पातु शत्रूणां वधकारकः॥ सप्त व्याहृतयः पांतु ससदाबिंदुसंयुताः॥६॥वेदमाता च मां पातु सरहस्या सदैवता ॥ देवीसूक्तं सदा पातु सहस्राक्षरदेवता ॥ ७ ॥ चतुःषष्टिकला विद्या दिव्याद्या पातु देवता ॥ बीजशक्तिश्च मे पातु पातु विक्रमदेवता ॥ ८ ॥ तत्पदं पातु मे पादौ जंघे मे सवितुः पदम् ॥ वरेण्यं कटिदेशं तु नाभिं भर्गस्तथैव च ॥ ९ ॥ देवस्य मे तु हृदयं धीमहीति गलं तथा ॥ धियो मे पातु जिह्वायां यः पदं पातु लोचने ॥ १० ॥ ललाटे नः पदं पातु मूर्द्धानं मे प्रचोदयात् ॥ तद्वर्णः पातु मूर्द्धानं सकारः पातु भालकम् ॥ ११ ॥ चक्षुषी मे विकारस्तु श्रोत्रं रक्षेत्तु कारकः ॥ नासापुटे वकारो मे रेकारस्तु कपोलयोः ॥१२॥ णिकारस्तूर्ध्व ओष्ठे च यकारस्त्वधरोष्ठके ॥ आस्यमध्ये भकारस्तु गौंकारस्तु कपोलयोः ॥ १३ ॥ देकारः कंठदेशे च वकारः स्कंधदेशयोः ॥ स्यकारो दक्षिणं हस्तं धीकारो वामहस्तकम् ॥१४॥मकारो हृदयं रक्षेद्धिकारो जठरं तथा॥धिकारो नाभिदेशं तु योकारस्तु कटिद्वयम् ॥ १५ ॥ गुह्यं रक्षतु योकार ऊरू मे नः पदाक्षरम् ॥ प्रकारो जानुनी रक्षेच्चोकारो जंघदेशयोः ॥ १६ ॥ दकारो गुल्फदेशं तु यात्कारः पादयुग्मकम् ॥ जातवेदेति गायत्री त्र्यंबकेति दशाक्षरा ॥ १७ ॥ सर्वतः सर्वदा पातु आपोज्योतीतिषोडशी ॥ इदं तु कवचं दिव्यं बाधाशतबिनाशनम् ॥१८॥चतुःषष्टिकलाविद्यासकलैश्वर्य्यसिद्धिदम् ॥ जपारंभे च हृदयं जपांते कवचंपठेत्॥१९॥ स्त्रीगोब्राह्मणमित्रादिद्रोहाद्यखिलपातकैः ॥ मुच्यते सर्वपापेभ्यः परं ब्रह्माधिगच्छति॥२०॥पुष्पांजलिं च गायत्र्यामूलेनैव पठेत्सदा ॥ शतसाहस्रवर्षाणां पूजायाः फलमाप्नुयात् ॥ २१ ॥ भूर्जपत्रे लिखित्वैतत्स्वकंठे धारयेद्यदि ॥ शिखायां दक्षिणे बाहौ कंठे वा धारयेद्बुधः ॥२२॥ त्रैलोक्यं क्षोभयेत्सर्वं त्रैलोक्यं दहति क्षणात् ॥ पुत्रवान्धनवाञ्श्रीमान्नानाविद्यानिधिर्भवेत् ॥ २३ ॥ ब्रह्मादीनि च सर्वाणि तदंगस्पर्शनात्ततः ॥ भवंति पुष्पतुल्यानि किमन्यत्कथयामि ते ॥ २४ ॥ अभिमंत्रितगायत्रीकवचं मानसं पठेत् ॥ तज्जलं पिबतो नित्यं पुरश्चर्य्याफलं भवेत् ॥ २ ॥ इति गायत्रीकवचं सम्पूर्णम् ॥ ॥ इति श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनगरनिवासिना श्रीवसिष्ठगोत्रोद्भवपण्डितश्रीरामकृष्णामरचन्द्रपौत्रेण श्रीकस्तूरीचंद्रतनुजन्मना श्रीचतुर्भुजदत्तसूनुना गौडवंशावतंसश्रीमहादेवभक्तशुक्लयजुर्वेदीयमाध्यंदिनवाजसनेयिशाखानुयायिना पण्डितवैद्यश्रीचतुर्थीलालशर्म्मणा विरचिते अनुष्ठानप्रकाशे महानिबंधे पुरश्चरणकाण्डे देवीमंत्रानुष्ठानप्रकरणं तृतीयं समाप्तम् ॥ ॥ अथ विष्णुमंत्रानुष्ठानप्रकरणम् ॥ ४ ॥ उद्यत्कोटिदिवाकराभमनिशं शंखं गदां पंकजं चक्रं बिभ्रतमिंदिरावसुमतीसंशोभि पार्श्वद्वयम् ॥ कोटीरांगदहारकुण्डलधरं पीतांबरं कौस्तुभोद्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ॥ १ ॥ अथ वक्ष्ये महामंत्रान् विष्णोः सर्वार्थसाधकान् ॥ येषां संस्मरणात्सन्तो भवाब्धेः पारमाश्रिताः ॥ २ ॥ तत्र तावद्विष्णोः सर्वमंत्रोपयोगिप्रयोगः ॥ पूर्वदिने प्रायश्चित्तमयुतगात्रीजपं च कृत्वा उपवासादि विधाय प्रारंभदिने उषसि नद्यादौ स्नात्वा प्रातर्नित्याह्निकं समाप्य मंगलस्नानांते धौतशुक्लवाससी परिधाय यथायोग्यालंकृतो द्वादशांगेषु घृतचन्दनकेशरकुंकुमान्यतमतिलकः सपवित्रकुशः

स्वासने प्राङ्मुख उपविश्य । मूलेनाचम्य प्राणानायम्य शांतिपाठं गणपत्यादिदेवतास्मरणं च कुर्य्यात् ततो देशकालौ संकीर्त्य ममात्मनः श्रुतिस्मृतिपुराणोक्तफलावाप्तये इह जन्मनि जन्मान्तरे वा कृतकायिकवाचिकमानसिकसांसर्गिकम हापातकोपपातकादिसमस्तपातकनिवृत्तिद्वारा धर्मार्थकाममोक्षसिद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं श्रीविष्णोरमुकमंत्रपुरश्चरणं स्वयं ब्राह्मणद्वारा वा करिष्ये । तदंगत्वेन श्रीगणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धमाचार्यजापकवरणं च करिष्ये ॥ इति संकल्प्य । पूर्वोक्तपद्धतिकाण्डमार्गेण दिग्रक्षणांतं सर्वं विधाय ॥ 'ॐ भद्रंकर्णेभिः' इत्यादिवेदघोषेण जपस्थानसमीपमागत्य ॥ पूर्ववत् द्वारपूजां कृत्वा प्रविश्य कूर्म्मसंशोधिते स्वासने प्राङ्मुख उदङ्मुखो वा उपविश्य । स्ववामे कर्म्मपात्रं यथाविधि संस्थापयेत् । ततः 'ॐ अपवित्रः०' इत्यादिप्रोक्षणं विधाय । "पृथ्वि त्वया०" इत्यादिना भूमिं प्रार्थ्य । मूलेनाचम्य प्राणानायम्य । देशकालौ स्मृत्वा । मम ( यजमानस्य वा ) सर्वविधपातकनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं श्रीविष्णोरमुकमन्त्रस्य अमुकसंख्यया जपं करिष्ये । तदंगत्वेन भूतशुद्धिं प्राणप्रतिष्ठामन्तर्मातृकाबहिर्मा तृकान्यासं केशवादिकलान्यासं च करिष्ये । इति संकल्प्य । पद्धतिमार्गोक्तविधिना बहिर्न्यासांतं कृत्वा । केशवादिकलामा तृकान्यासं कुर्य्यात् । अथ केशवादिकलान्यासः । ॐ केशवादिमातृकान्यासस्य साध्यनारायण ऋषिः । गायत्री छन्दः । लक्ष्मी नारायणो देवता । हलो बीजानि । स्वराः शक्तयः । विष्णोरमुकमंत्रजपांगत्वेन न्यासे विनियोगः । ॐ साध्यनारायणऋषये नमः शि रसि ॥१॥ गायत्रीछंदसे नमः मुखे ॥ २ ॥ लक्ष्मीनारायणदेवतायै नमः हृदये ॥ ३ ॥ ॐ हल्बीजेभ्यो नमः गुह्ये ॥ ४ ॥ ॐ स्वर शक्तिभ्यो नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ ह्रीं हृदयाय नमः ॥ १ ॥ ॐ श्रीं शिरसे स्वाहा ॥ २ ॥ ॐ क्लीं शिखायै वषट् ॥ ३ ॥ ॐ ह्रीं कवचायहुं ॥ ४ ॥ ॐ श्रीं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ क्लीं अस्त्राय फट् ॥ ६ ॥ इति षडंगन्यासं कृत्वा ध्यायेत् ॥ "शङ्खचक्रगदापद्मकुंभाऽऽदर्शाब्जपुस्तकम् ॥ बिभ्रतं मेघचपलावर्णं लक्ष्मीहरिं भजे ॥१॥ ( अथवा ) विद्यारविंदमुकुरामृत कुम्भपद्मकौमोदकीदरसुदर्शनशोभिहस्तम् ॥ सौदामिनीमकरकांति विभाति लक्ष्मीनारायणात्मकमखण्डितमादिमूर्तिं ॥१॥ इति ध्यात्वा न्यासं कुर्य्यात् । तद्यथा ॐ ह्रींश्रींक्लीं अंक्लींश्रींह्रीं ॐ केशवकीर्तिभ्यां नमः शिरसि ॥ १ ॥ ॐ ह्रींश्रींक्लींआंक्लींश्रींह्रीं ॐ नारायण कांतिभ्यां नमः मुखवृत्ते ॥ २ ॥ ॐ ह्रींश्रींक्लींइंश्रींह्रींक्लीं ॐ माधवतुष्टिभ्यां नमः दक्षनेत्रे ॥ ३ ॥ ॐ ह्रींश्रींक्लींईंक्लींश्रींह्रीं ॐ गोविंदपुष्टिभ्यां नमः वामनेत्रे ॥ ४ ॥ ॐ ह्रींश्रींक्लीं उं क्लींश्रींह्रीं ॐविष्णुधृतिभ्यां नमः दक्षकर्णे ॥ ५ ॥ ॐ ह्रींश्रींक्लीं ऊं क्लींश्रींह्रीं ॐ मधुसूदनशांतिभ्यां नमः वामकर्णे ॥ ६ ॥ ॐ ह्रींश्रींक्लींऋंक्लींश्रींह्रीं ॐ त्रिविक्रमक्रियाभ्यां नमः दक्षनासापुटे ॥ ७ ॥ ॐ ह्रीं श्रींक्लींॠंक्लींश्रींह्रीं ॐ वामनदयाभ्यां नमः वामनासापुटे ॥ ८ ॥ ॐ ह्रींश्रींक्लींलृंक्लींश्रींह्रीं ॐ श्रीधरमेधाभ्यां नमः दक्षगण्डे ॥ ९ ॥ ॐ ह्रींश्रींक्लींलॄंक्लींश्रींह्रीं ॐ हृषीकेशहर्षाभ्यां नमः वामगंडे ॥ १० ॥ ॐ ह्रींश्रींक्लींएंक्लींश्रींह्रीं ॐ पद्मनाभश्रद्धाभ्यां नमः ॥ ऊर्ध्वोष्ठे ॥ ११ ॥ ॐ ह्रींश्रींक्लींऐंक्लींश्रींह्रीं ॐ दामोदरलज्जाभ्यां नमः अधरोष्ठे ॥ १२ ॥ ॐ ह्रींश्रींक्लींओंक्लींश्रींह्रीं ॐ वासुदेव

लक्ष्मीभ्यां नमः ऊर्ध्वदंतपंक्तौ ॥ १३ ॥ ॐ ह्रींश्रींक्लींऔंक्लींश्रींह्रीं ॐ संकर्षणसरस्वतीभ्यां नमः अधोदन्तपंक्तौ ॥ १४ ॥ ॐ ह्रींश्रींक्लींअंक्लींश्रींह्रीं ॐ प्रद्युम्नप्रीतिभ्यां नमः मूर्ध्नि ॥ १५ ॥ ॐ ह्रींश्रींक्लींअःक्लींश्रींह्रीं ॐ अनिरुद्धरतिभ्यां नमः मुखे ॥ १६ ॥ ॐ ह्रींश्रींक्लींकंक्लींश्रींह्रीं ॐ चक्रिजयाभ्यां नमः दक्षबाहुमूले ॥ १७ ॥ ॐ ह्रींश्रींक्लींखंक्लींश्रींह्रीं ॐ गदिदुर्गाभ्यां नमः दक्षकूर्परे ॥ १८ ॥ ॐ ह्रींश्रींक्लींगंक्लींश्रींह्रीं ॐ शार्ङ्गिप्रभाभ्यां नमः दक्षमणिबंधे ॥ १९ ॥ ॐ ह्रींश्रींक्लींघंक्लींश्रींह्रीं ॐ खड्गिसत्याभ्यां नमः दक्षहस्तांगुलिमूले ॥२०॥ ॐ ह्रींश्रींक्लींङंक्लींश्रींह्रीं ॐ शंखचंडाभ्यां नमः दक्षहस्तांगुल्यग्रे ॥२१॥ ॐ ह्रींश्रींक्लींचंक्लींश्रींह्रीं ॐ हलिवाणीभ्यां नमः वामबाहुमूले ॥२२॥ ॐ ह्रींश्रींक्लींछंक्लींश्रींह्रीं ॐ मुसलिविलासिनीभ्यां नमः वामकूर्परे ॥ २३ ॥ ॐ ह्रीं श्रींक्लींजंक्लींश्रींह्रीं ॐ शूलिविजयाभ्यां नमः वाममणिबंधे ॥२४॥ॐह्रींश्रींक्लींझंक्लींश्रींह्रींॐ पाशविरजाभ्यां नमः वामांगुलिमूले ॥२५॥ॐ ह्रींश्रींक्लींञंक्लींश्रींह्रीं ॐ अङ्कुशिविश्वाभ्यां नमः वामांगुल्यग्रे ॥२६॥ ॐ ह्रींश्रींक्लींटंक्लींश्रींह्रीं ॐ मुकुंदविनदाभ्यां नमः दक्षोरुमूले ॥२७॥ ॐ ह्रींश्रींक्लींठंक्लींश्रींह्रीं ॐ नंदजसुनन्दाभ्यां नमः दक्षजानुनि ॥२८॥ॐह्रींश्रींक्लींडंक्लींश्रींह्रीं ॐ नंदिसत्याभ्यां नमः दक्षगुल्फे ॥२९॥ ॐ ह्रींश्रींक्लींढंक्लींश्रींह्रीं ॐ नरऋद्धिभ्यां नमः दक्षपादांगुलिमूले ॥ ३० ॥ ॐ ह्रींश्रींक्लींणंक्लीं श्रींह्रीं ॐ नरकजित्समृद्धिभ्यां नमः दक्षपादाङ्गुल्यग्रे ॥३१॥ ॐ ह्रींश्रींक्लींतंक्लींश्रींह्रीं ॐ हरिशुद्धिभ्यां नमः वामोरुमूले ॥ ३२ ॥ ॐ ह्रींश्रींक्लींथंक्लींश्रींह्रींॐकृष्णबुद्धिभ्यां नमः वामजानुनि ॥३३॥ॐ ह्रींश्रींक्लींदंक्लींश्रींह्रींॐसत्यभुक्तिभ्यां नमः वामगुल्फे ॥३४॥ ॐ ह्रींश्रींक्लींधंक्लींश्रींह्रीं ॐ सात्वतमतिभ्यां नमः वामपादांगुलिमूले ॥ ३५ ॥ ॐ ह्रींश्रींक्लींनंक्लींश्रींह्रीं ॐ सौरिक्षमाभ्यां नमः वामपादांगुल्यग्रे ॥ ३६ ॥ ॐ ह्रींश्रींक्लींपंक्लींश्रीं ॐ शूररमाभ्यां नमः दक्षपार्श्वे ॥३७॥ ॐ ह्रींश्रींक्लींफंक्लींश्रींह्रीं ॐ जनार्दनोमाभ्यां नमः वामपार्श्वे ॥ ३८ ॥ ॐ ह्रींश्रींक्लींबंक्लींह्रीं ॐ भूधरक्लेदिनीभ्यां नमः पृष्ठे ॥ ३९ ॥ ॐ ह्रींश्रींक्लींभंक्लींश्रीं ह्रीं ॐ विश्वमूर्तिक्लिन्नाभ्यां नमः नाभौ ॥ ४० ॥ ॐ ह्रींश्रींक्लींमंक्लींश्रींह्रीं ॐ वैकुंठवसुधाभ्यां नमः जठरे ॥ ४१ ॥ ॐ ह्रींश्रींक्लींयंक्लींश्रींह्रीं ॐ त्वगात्मभ्यां पुरुषोत्तमवसुधाभ्यां नमः हृदये ॥ ४२ ॥ ॐ ह्रींश्रींक्लींरंक्लींश्रींह्रीं ॐअसृगात्मभ्यां बलीपराभ्यां नमः दक्षांसे ॥४३॥ ॐ ह्रींश्रींक्लींलं क्लींश्रींह्रीं ॐ मांसात्मभ्यां बलानुजपरायणाभ्यां नमः ककुदि ॥४४॥ ॐ ह्रींश्रींक्लीं वंक्लींश्रींह्रीं ॐ मेदात्मभ्यां बालसूक्ष्माभ्यां नमः वामांसे ॥ ४५ ॥ ॐ ह्रींश्रींक्लींशंक्लींश्रींह्रीं ॐ अस्थ्यात्मभ्यां वृषघ्नसंध्याभ्यां नमः हृदयादिदक्षकराग्रपर्यंतम् ॥ ४६ ॥ ॐ ह्रींश्रींक्लींषंक्लींश्रींह्रीं ॐ मज्जात्मभ्यां वृषप्रज्ञाभ्यां नमः हृदयादिवामकराग्रपर्यंतम् ॥ ४७ ॥ ॐ ह्रींश्रींक्लींसंक्लींश्रींह्रीं ॐ शुक्रात्मभ्यां हंसप्रभाभ्यां नमः हृदयादिदक्षपादाग्रपर्यंतम् ॥४८॥ ॐ ह्रींश्रींक्लींहंक्लींश्रींह्रीं ॐ प्राणात्मभ्यां वराहनिशाभ्यां नमः हृदयादिवामपादाग्रपर्यंतम् ॥ ४९ ॥ ॐ ह्रींश्रींक्लींळं क्लींश्रींह्रीं ॐ शक्त्यात्मभ्यां विमलमेधाभ्यां नमः हृदादिनाभ्यंतम् ॥ ५० ॥ ॐ ह्रींश्रींक्लीं क्षंक्लींश्रींह्रीं ॐ परमात्मभ्यां नृसिंहविद्युताभ्यां नमः हृदादिमूर्धान्तं च न्यसेत ॥ ५१ ॥ इति केशवादिकलामातृकान्यासः ॥ ( अयं न्यासः विष्णोः सर्वमंत्रेष्वादौ ज्ञेयः ) एवं न्यासं

कृत्वा मूलमंत्रन्यासं कुर्य्यात् ॥ तत्र तावद्विष्णोरष्टाक्षरमन्त्रप्रयोगः । ( शारदातिलके ) ( मूलमन्त्रो यथा ) " ॐ नमो नारायणाय " इति अष्टाक्षरो मंत्रः ॥ अस्य श्रीविष्णोरष्टाक्षरमंत्रस्य साध्यो नारायण ऋषिः । गायत्री छंदः । विष्णुर्देवता धर्मार्थकाममोक्षसिद्ध्यर्थे जपे विनियोगः ॥ ॐ साध्यनारायणऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्रीछंदसे नमः मुखे ॥ २ ॥ विष्णुर्देवतायै नमः हृदि ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ॐ क्रुद्धोल्काय अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐमहोल्काय तर्जनीभ्यां नमः ॥ २ ॥ ॐ वीरोल्काय मध्यमाभ्यां नमः ॥ ३ ॥ ॐ द्युल्काय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ सहस्रोल्काय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ इति करन्यासः ॥ एवं हृदयादिनेत्रहीनपंचाङ्गन्यासं कृत्वा मन्त्राङ्गन्यासं कुर्यात् ॥ तत्र क्रमः ॥ ॐ नमः हृदयाय नमः ॥१॥ ॐ नं नमः शिरसे स्वाहा ॥२॥ ॐ मों नमः शिखायै वषट् ॥ ३ ॥ ॐ नां नमः कवचाय हुं ॥४॥ ॐ रां नमः नेत्राभ्यां वौषट् ॥५॥ ॐ यं नमः अस्त्राय फट् ॥६॥ ॐ णं नमः कुक्षौ ॥ ७ ॥ ॐ यं नमः पृष्ठे ॥ ८ ॥ ॐ नमः सुदर्शनायास्त्रायफडिति मन्त्रेण दिग्बंधं कुर्यात् ॥ इति प्रथमो न्यासः ॥ १ ॥ ॐ नमः मूलाधारे ॥ १ ॥ ॐ नं नमः हृदये ॥२॥ ॐ मों नमः वक्त्रे ॥ ३ ॥ ॐ नां नमः दक्षिणबाहुमूले ॥ ४ ॥ ॐ रां नमः वामबाहुमूले ॥ ५ ॥ ॐ यं नमः दक्षपादमूले ॥ ६ ॥ ॐ णां नमः वामपादमूले ॥७॥ ॐ यं नमः नाभौ ॥ इति द्वितीयो न्यासः ॥ २ ॥ ॐ नमः कंठे ॥ १ । ॐ नं नमः नाभौ ॥ २ ॥ ॐ मों नमः हृदये ॥३॥ ॐ नां नमः दक्षस्तने ॥४॥ ॐ रां नमः वामस्तने ॥ ५ ॥ ॐ यं नमः दक्षपार्श्वे ॥ ६ ॥ ॐ णां नमः वामपार्श्वे ॥ ७ ॥ ॐ यं नमः पृष्ठे ॥ ८ ॥ इति तृतीयो न्यासः ॥ ३ ॥ ॐ नमः मूर्ध्नि ॥ १ ॥ ॐ नं नमः मुखे ॥ २ ॥ ॐ मों नमः दक्षनेत्रे ॥ ३ ॥ ॐ नां नमः वामनेत्रे ॥ ४ ॥ ॐ रां नमः दक्षकर्णे ॥ ५ ॥ ॐ यं नमः वामकर्णे ॥ ६ ॥ ॐ णां नमः दक्षिणनासिकायाम ॥७॥ ॐ यं नमः वामनासिकायाम् ॥ ८ ॥ इति चतुर्थो न्यासः ॥ ४ ॥ ॐ नमः बाहुमूलयोः ॥ १ ॥ ॐ नं नमः कूर्परयोः ॥ २ ॥ ॐ मों नमः मणिबंधयोः ॥ ३ ॥ ॐ नां नमः हस्ताङ्गुलीषु ॥ ४ ॥ ॐ रां नमः पादमूलयोः ॥ ५ ॥ ॐ यं नमः जानुनोः ॥६॥ ॐ णां नमः गुल्फयोः ॥७॥ ॐ यं नमः पादाङ्गुलीषु ॥ ८ ॥ इति पञ्चमो न्यासः ॥ ५ ॥ ॐ नमः त्वचि ॥१॥ ॐ नं नमः रक्ते ॥२॥ ॐ मों नमः मांसे ॥३॥ ॐ नां नमः मेदसि ॥ ४ ॥ ॐ रां नमः अस्थि ॥ ५ ॥ ॐ यं नमः मज्जायाम् ॥ ६ ॥ ॐ णां नमः शुक्रे ॥ ७ ॥ इति सप्तधातून् हृदये न्यस्य ॐ यं नमः प्राणेषु इति गले न्यसेत् ॥ इति षष्ठो न्यासः ॥६॥ ॐ नमः मूर्ध्नि ॥१॥ ॐ न नमः नेत्रयोः ॥ २ ॥ ॐ मों नमः मुखे ॥ ३ ॥ ॐ नां नमः हृदये ॥ ४ ॥ ॐ रां नमः कुक्षिद्वये ॥ ५ ॥ ॐ यं नमः ऊरुद्वये ॥ ६ ॥ ॐ णां नमः जंघाद्वये ॥ ७ ॥ ॐ यं नमः पादद्वये ॥ ८ ॥ इति सप्तमो न्यासः ॥ ७ ॥ ॐ नमः दक्षगंडे ॥ २ ॥ ॐ नं नमः वामगंडे ॥ २ ॥ ॐ मों नमः दक्षांसे ॥३॥ ॐ नां नमः वामांसे ॥ ४ ॥ ॐरां नमः दक्षोरौ ॥ ५ ॥ ॐ यं नमः वामोरौ ॥६॥ ॐ णां नमः दक्षपादे ॥७॥ ॐ यं नमः वामपादे ॥८॥ इत्यष्टमो न्यासः ॥८॥ एवं मूलमंत्रवर्णन्यासं कृत्वा द्वादशमूर्तिपंजरन्यासं कुर्य्यात् ॥ ॐ अँ धातुसहिताय केशवाय नमः ललाटे ॥ १ ॥ ॐ नं आँ अर्यमसहिताय नारायणाय नमः

कुक्षौ ॥ २ ॥ ॐ मों इँ मित्रसहिताय माधवाय नमः हृदये ॥ ३ ॥ ॐ भं ई वरुणसहिताय गोविंदाय नमः कण्ठे ॥ ४ ॥ ॐगं उँ अंशुमत्सहिताय विष्णवे नमः दक्षिणपार्श्वे ॥ ५ ॥ ॐ वं ऊँ भगसहिताय मधुसूदनाय नमः दक्षिणांसे ॥ ६ ॥ ॐ तें एँ विवस्वत्सहिताय त्रिविक्रमाय नमः गले ॥ ७ ॥ ॐवां ऐं मित्रसहिताय वामनाय नमः ॥ ८ ॥ ॐ सुं ओं पूषसहिताय श्रीधराय नमः वामांसे ॥ ९ ॥ ॐ दें आँ पर्जन्यसहिताय हृषीकेशाय नमः गले ॥ १० ॥ ॐ वां अँ त्वष्टसहिताय पद्मनाभाय नमः पृष्ठे ॥ ११ ॥ ॐ यँ अः विष्णुसहिताय दामोदराय नमः ककुदि ॥ १२ ॥ ॐ नमो भगवते वासुदेवाय मूर्ध्नि ॥ १ ॥ ॐ किरीटकेयूरहारमकरकुंडलशंखचक्रगदांभोजहस्ताय पीतांबरधराय श्रीवत्सांकितवक्षस्थलाय श्रीभूमिसहिताय स्वात्मज्योतिर्द्वयदीप्तिकराय सहस्रादित्यतेजसे नमः ॥ १ ॥ इति व्यापकं च विन्यस्य नारायणं ध्यायेत् * ॥ अथ ध्यानम् ॥ उद्यत्कोटिदिवाकराभमनिशं शंखं गदां पंकजं चक्रं बिभ्रतमिंदिरावसुमतीसंशोभि पार्श्वद्वयम् ॥ कोटीरांगदहारकुंडलधरं पीतांबरं कौस्तुभोद्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ॥ इति ध्यात्वा मानसोपचारैः संपूज्य पीठपूजां कुर्यात् ॥ तत्रादौ पूर्ववत् मंडूकादिपरतत्त्वांतपीठदेवताः संपूज्य(पूर्वादिषु केसरेषु) ॐ विमलायै नमः॥१॥ॐउत्कर्षिण्यै नमः॥२॥ॐज्ञानायै नमः ॥३॥ ॐ क्रियायै नमः ॥४॥ ॐ योगायै नमः॥५॥ॐप्रह्व्यै नमः॥६॥ॐसत्यायै नमः॥७॥ ॐ ईशानायै नमः॥८॥(मध्ये) ॐ अनुग्रहाय नमः ॥९॥ इति पीठशक्तीः पूजयेत् । ततः ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगपद्मपीठात्मने नमः । इति पुष्पांजलिनाऽऽसनं दत्त्वा तत्र मूलेन मूर्तिं प्रकल्प्य ॥ ( अथवा स्वर्णादिनिर्मितं यंत्रं प्रतिमां वा संस्थाप्य ) पूर्ववत् पाद्याद्यैः पुष्पांतैरुपचारैः पुरुषसूक्तेन मूलमंत्रेण च सपूज्य आवरणपूजां कुर्यात् ॥ तद्यथा-आग्नेयादिकोणेषु दिक्षु च ॐ क्रुद्धोल्काय हृदयाय नमः ॥ १ ॥ ॐ महोल्काय शिरसे स्वाहा ॥ २ ॥ ॐ वीरोल्काय शिखायै वषट् ॥ ३ ॥ ॐ द्युल्काय कवचाय हुं ॥ ४ ॥ ॐ हस्तोल्काय अस्त्राय फट् ॥५॥ इति प्रथमावरणम् ॥ १ ॥ तद्बाह्ये केसरेषु पूर्वादिक्रमेण ॐ नमः ॥ १ ॥ ॐ नं नमः ॥२॥ ॐ मों नमः ॥ ३ ॥ ॐ नां नमः ॥४॥ ॐ रां नमः ॥ ५ ॥ ॐ यं नमः ॥ ६ ॥ ॐ णां नमः ॥ ७ ॥ ॐ यं नमः ॥ ८ ॥ इति पूजयेत । इति द्वितीयावरणम् ॥ २ ॥ तद्बहिरष्टदलेषु पूर्वादिचतुर्दिक्षु । ॐ वासुदेवाय नमः ॥ १ ॥ॐ संकर्षणाय नमः॥२॥ॐप्रद्युम्नाय नमः॥३॥ॐअनिरुद्धाय नमः॥४॥ ( आग्नेयादिकोणेषु ) ॐ शांत्यै नमः ॥ ५ ॥ ॐ श्रियै नमः ॥ ६ ॥ ॐ सरस्वत्यै नमः ॥ ७ ॥ ॐ रत्यैनमः ॥ ८ ॥ इति तृतीयावरणम् ॥ ३ ॥ ततो दलाग्रेषु ॥ ॐ शंखाय नमः ॥ १ ॥ ॐ चक्राय० ॥ २ ॥ ॐ गदायै० ॥ ३ ॥ ॐ पद्माय० ॥ ४ ॥ ॐ कौस्तुभाय० ॥ ५ ॥ ॐ मुशलाय० ॥ ६ ॥ ॐ खड्गाय० ॥ ७ ॥ ॐ वनमालायै नमः ॥ ८ ॥ इति चतुर्थावरणम् ॥ ४ ॥ तद्बहिरग्रे ॐ गरुडाय नमः ॥ १ ॥ ( दक्षिणे ) ॐ शंखनिधये नमः ॥ २ ॥ ( वामे ) ॐ पद्मनिधये नमः ॥ ३ ॥ ( पश्चिमे ) ॐ ध्वजाय नमः ॥ ४ ॥ ( अग्निकोणे ) ॐ विघ्नाय नमः ॥५॥ ( निर्ऋतिकोणे ) ॐ आर्याय नमः ॥ ६ ॥

* अत्रत्यं श्रीनारायणमंत्रानुष्ठानपूजायन्त्रम् पूर्वत्र द्रष्टव्यम् ।

( वायुकोणे ) ॐ दुर्गायै० ॥ ७ ॥ ( ऐशान्याम् ) ॐ सेनान्यै नमः ॥ ८ ॥ इति पंचमावरणम् ॥ ५ ॥ ततस्तद्बाह्ये भूपुरे पूर्वादि क्रमेण । ॐ इंद्राय नमः ॥ १ ॥ ॐ अग्नये नमः ॥ २ ॥ ॐ यमाय नमः ॥ ३ ॥ ॐ निर्ऋतये नमः ॥ ४ ॥ ॐ वरुणाय नमः ॥ ५ ॥ ॐ वायवे नमः ॥ ६ ॥ कुबेराय नमः ॥ ७ ॥ ॐ ईशानाय नमः ॥ ८ ॥ ( ईशानपूर्वयोर्मध्ये ) ॐ ब्रह्मणे नमः ॥९॥ ( निर्ऋतिपश्चिमयोर्मध्ये ) ॐ अनंताय नमः ॥ १० ॥ इति षष्ठावरणम् ॥ ६ ॥ ( पुनः पूर्वादिक्रमेण ) ॐ वज्राय नमः ॥ १ ॥ ॐ शक्तये नमः ॥ २ ॥ ॐ दंडाय नमः ॥ ३ ॥ ॐ खड्गाय नमः ॥ ४ ॥ ॐ पाशाय नमः ॥ ५ ॥ ॐ अंकुशाय नमः ॥ ६ ॥ ॐ गदायै नमः ॥ ७ ॥ ॐ त्रिशूलाय नमः ॥ ८ ॥ ॐ पद्माय नमः ॥ ९ ॥ ॐ चक्राय नमः ॥ १० ॥ इत्यायुधानि च पूजयेत् । इति सप्तमावरणम् ॥ ७ ॥ इत्यावरणपूजां कृत्वा मूलमंत्रेण पुरुषसूक्तेन च धूपदीपनैवेद्याचमनीयतांबूलदक्षिणानीराजनैर्नारायणं संपूज्य । " ॐ जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन ॥ सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज " इत्यादिमहापुरुषस्तवेन पूर्वोक्तेन स्तुत्वा साष्टांगं प्रणम्य । यथाविधि जपं कुर्य्यात् ॥ अस्य पुरश्चरणं षोडशलक्षात्मकम् ॥ ततो जपांते मधुराप्लुतैः कमलैर्दशांशहोमं कृत्वा तद्दशांशेन तर्पणं तद्दशांशेन मार्जनं तद्दशांशेन ब्राह्मणांश्च भोजयेत् ॥ तथा च ( शारदातिलके ) " विकारलक्षं प्रजपेन्मनुमेनं समाहितः ॥ तद्दशांशं सरसिजैर्जुहुयान्मधुराप्लुतैः ॥ १ ॥ एवं संपूजयेद्विष्णुं प्रोक्तैरावरणैः सह ॥ धर्मार्थकामाँल्लब्ध्वा वै विष्णोः सायुज्यमाप्नुयात् ॥ इति श्रीविष्णोरष्टाक्षरनारायणमंत्रपुरश्चरणप्रयोगः॥

अथ विष्णोर्द्वादशाक्षरमंत्रप्रयोगः ॥ ( मूलमंत्रो यथा ) " ॐ नमो भगवते वासुदेवाय " इति द्वादशाक्षरो मंत्रः ॥ अस्य मंत्रस्य प्रजापतिः ऋषिः । गायत्री छंदः । वासुदेवो देवता । धर्मार्थकाममोक्षार्थे जपे विनियोगः ॥ ॐ प्रजापतिऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्रीछन्दसे नमः मुखे ॥ २ ॥ ॐ वासुदेवदेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ॐ अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ नमो तर्जनीभ्यां नमः ॥ २ ॥ ॐ भगवते मध्यमाभ्यां नमः ॥ ३ ॥ ॐ वासुदेवाय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ नमो भगवते वासुदेवाय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ इति करन्यासः ॥ एवं हृदयादिनेत्रवर्जपंचांगन्यासं कृत्वा मन्त्रन्यासं कुर्यात् ॥ तद्यथा—ॐ नमः मूर्ध्नि ॥ १ ॥ ॐ नं नमः ललाटे ॥ २ ॥ ॐ मों नमः नेत्रयोः ॥ ३ ॥ ॐ भं नमः मुखे ॥ ४ ॥ ॐ गं नमः गले ॥ ५ ॥ ॐ वं नमः बाह्वोः ॥ ६ ॥ ॐ तें नमः हृदये ॥ ७ ॥ ॐ वां नमः कुक्षौ ॥ ८ ॥ ॐ सुं नमः नाभौ ॥ ९ ॥ ॐ दें नमः लिंगे ॥ १० ॥ ॐ वां नमः जानुनोः ॥ ११ ॥ ॐ यं नमः पादयोः ॥ १२ ॥ इति मन्त्रन्यासः ॥ अथ मूर्तिपंजरन्यासः ॥ ॐ अं केशवाय धात्रे नमः ललाटे ॥ १ ॥ ॐ नं आं नारायणाय अर्यम्णे नमः कुक्षौ ॥ २ ॥ ॐ मों इं माधवाय मित्राय नमः हृदि ॥ ३ ॥ ॐ भं ईं गोविंदाय वरुणाय नमः कंठे ॥ ४ ॥ ॐ गं उं विष्णवे अंशवे नमः कंठदक्षपार्श्वे ॥ ५ ॥ॐ यं ऊ मधुसूदनाय भगाय नमो दक्षिणांसे ॥ ६ ॥ ॐ तें एं त्रिविक्रमाय विवस्वते नमः दक्षगले ॥ ७ ॥ ॐ वां ऐं वामनाय मित्राय नमः कंठवामपार्श्वे ॥ ८ ॥ ॐ सुं ओं श्रीधराय पूष्णे नमः वामांसे ॥ ९ ॥ ॐ दें औं हृषीकेशाय

पर्जन्याय नमः वामगले ॥ १० ॥ ॐ वां अं पद्मनाभाय त्वष्ट्रे नमः पृष्ठे ॥ ११ ॥ ॐ यं अः दामोदराय विष्णवे नमः ककुदि ॥ १२ ॥ ॐ नमो भगवते वासुदेवाय नमः शिरसि ॥ १३ ॥ इति पंजरन्यासः । "ॐ किरीटकेयूरहारमकरकुंडलधरशंखचक्रगदांभोजपीतांबरधरश्रीधरश्रीवत्सांकितवक्षःस्थलश्रीभूमिसहितआत्मज्योतिर्द्वयदीप्तकराय सहस्रादित्यतेजसे नमः ।" इति मंत्रेण व्यापकं विन्यस्य ध्यायेत् ॥ अथ ध्यानम् ॥ विष्णुं शारदचंद्रकोटिसदृशं शंखं रथांगं गदामंभोजं दधतं सिताब्जनिलयं कांत्या जगन्मोहनम् ॥ आबद्धांगदहारकुंडलमहामौलिं स्फुरत्कंकणं श्रीवत्सांकमुदारकौस्तुभधरं वंदे मुनींद्रैः स्तुतम् ॥ १ ॥ इति ध्यात्वा पीठपूजां कुर्यात् ॥ तत्रादौ पीठे पूर्वोक्तमंडूकादिपरतत्त्वांतदेवताः संपूज्य । पूर्वादिषु ॐ विमलायै नमः ॥ १ ॥ ॐ उत्कर्षिण्यै० ॥ २ ॥ ॐ ज्ञानायै० ॥ ३ ॥ ॐ क्रियायै० ॥ ४ ॥ ॐ योगायै० ॥ ५ ॥ ॐ प्रह्व्यै० ॥ ६ ॥ ॐ सत्यायै० ॥ ७ ॥ ॐ ईशानायै० ॥ ८ ॥ ( मध्ये ) ॐ अनुग्रहायै नमः ॥ ९ ॥ इति पीठशक्तीः संपूज्य ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सवात्मसंयोगपद्मपीठात्मने नमः इत्यासनं दत्त्वा तत्र मूलेन मूर्तिं प्रकल्प्य ( अथवा स्वर्णादिनिर्मितं यंत्रे प्रतिमां वा संस्थाप्य ) पूर्ववत् पाद्याद्यैः पुष्पांतैरुपचारैः पुरुषसूक्तेन मूलमंत्रेण च संपूज्य आवरणपूजां कुर्यात् ॥ तद्यथा ( आग्नेयादिकोणेषु दिक्षु च ) ॐ हृदयाय नमः ॥ १ ॥ ॐ नमः शिरसे स्वाहा ॥ २ ॥ ॐ भगवते शिखायै वषट् ॥ ३ ॥ ॐ वासुदेवाय कवचाय हुं ॥ ४ ॥ ॐ नमो भगवते वासुदेवाय अस्त्राय फट् ॥ ५ ॥ इति नेत्रवर्जपञ्चाङ्गान्यभ्यर्च्य । ( तद्बहिरष्टदलेषु पूर्वादिक्रमेण ) ॐ वासुदेवाय नमः ॥ १ ॥ ( दक्षिणे ) ॐ संकर्षणाय० ॥ २ ॥ ( पश्चिमे ) प्रद्युम्नाय० ॥ ३ ॥ ( उत्तरे ) ॐ अनिरुद्धाय नमः ॥ ४ ॥ ( अग्निकोणे ) ॐ शान्त्यै नमः ॥ ५ ॥ ( नैर्ऋत्याम् ) ॐ श्रियै नमः ॥६॥ ( वायव्याम् ) ॐ सरस्वत्यै० ॥ ७ ॥ ( ऐशान्याम् ) ॐ रत्यै नमः ॥ ८ ॥ ( ततो दलाग्रेषु ) ॐ शङ्खाय नमः ॥ १ ॥ ॐ चक्राय० ॥ २ ॥ ॐ गदायै० ॥ ३ ॥ ॐ पद्माय० ॥ ४ ॥ ॐ कौस्तुभाय० ॥ ५ ॥ ॐ मुसलाय० ॥ ६ ॥ ॐ खड्गाय० ॥ ७ ॥ ॐ वनमालायै नमः ॥ ८ ॥ इति पूजयेत् ( तद्बहिर्देवाग्रे ) ॐ गरुडाय नमः ॥ १ ॥ ( दक्षिणे ) ॐ शङ्खनिधये नमः ॥ २ ॥ ( वामे ) ॐ पद्मनिधये नमः ॥ ३ ॥ ( पश्चिमे ) ॐ ध्वजाय नमः ॥ ४ ॥ ( अग्निकोणे ) ॐ विघ्नाय नमः ॥ ५ ॥ ( नैर्ऋत्याम् ) ॐ आर्यायै नमः ॥ ६ ॥ ( वायव्याम् ) ॐ दुर्गायै नमः ॥ ७ ॥ ( ऐशान्याम् ) ॐ सेनान्यै नमः ॥ ८ ॥ इति संपूज्य तद्बहिः भूपुरे पूर्वादिषु पूर्ववत् इंद्रादिदशदिक्पालान् पूजयित्वा तद्बाह्ये वज्राद्यायुधानि च पूजयेत् । एवमावरणपूजां कृत्वा वासुदेवं धूपादिनीराजनांतैरुपचारैः संपूज्य स्तवेन स्तुत्वा साष्टांगं प्रणम्य जपं कुर्यात् । अस्य पुरश्चरणं द्वादशलक्षात्मकम् ॥ जपान्ते आज्यप्लुतैस्तिलैः पायसेन क्षीरद्रुमसमिद्भिश्च दशांशेन वा शतांशेन होमः । तद्दशांशेन तर्पणम् ॥ तद्दशांशेन मार्जनम् ॥ तद्दशांशेन यथाशक्ति वा ब्राह्मणान् भोजयेत् । तथा च ( शारदातिलके ) " वर्णलक्षं जपेन्मंत्रं दीक्षितो विजितेन्द्रियः ॥ तत्सहस्रं प्रजुहुयात्तिलै राज्यपरिप्लुतैः ॥ १ ॥ एवं सम्पूजितो विष्णुः प्रदद्यादिष्टमात्मनः ॥ पायसेन घृताक्तेन मंत्रवर्णसहस्रकम् ॥ २ ॥ जुहुयान्मानवः

सिद्धै समिद्भिः क्षीरिभूरुहाम् ॥ तत्संख्यया पयोक्ताभिः सर्वपापविमुक्तये ॥ ३ ॥ इति वासुदेवमंत्रपुरश्चरणम् ॥ अथ लक्ष्मी नारायणमंत्रपुरश्चरणप्रयोगः ( शारदातिलके ) भूतशुद्ध्यादिकेशवादिकलामातृकान्यासांतं पूर्ववत् ॥ मंत्रस्वरूपं यथा-"ॐ ह्रींह्रीं श्रींश्रींलक्ष्मीवासुदेवाय नमः ॥" इति चतुर्दशाक्षरो मन्त्रः ॥ अस्य मन्त्रस्य प्रजापतिः ऋषिः । गायत्री छन्दः । वासुदेवो देवता । धर्मार्थकाममोक्षसिद्ध्यर्थे जपे विनियोगः ॥ ॐ प्रजापतिऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्रीछन्दसे नमः मुखे ॥ २ ॥ ॐ वासुदेवदेवतायै नमः हृदये ॥ ३ ॥ इति न्यस्य ॐ ह्रींह्रींअङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ श्रींश्रींतर्जनीभ्यां नमः ॥ २ ॥ ॐ लक्ष्मीमध्यमाभ्यां नमः ॥ ३ ॥ ॐ वासुदेवाय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ नमः कनिष्ठिकाभ्यां नमः ॥ ५ ॥ इति कर न्यासः ॥ एवमेव नेत्रवर्जहृदयादिपञ्चाङ्गन्यासं कुर्य्यात् ॥ तद्यथा-ॐ ह्रींह्रीं हृदयाय नमः ॥ १ ॥ ॐ श्रीं श्रीं शिरसे स्वाहा ॥ २ ॥ ॐ लक्ष्मीशिखायै वषट् ॥ ३ ॥ ॐ वासुदेवाय कवचाय हुं ॥ ४ ॥ ॐ नमः अस्त्राय फट् ॥ ५ ॥ एवं हृदयादिपञ्चाङ्गन्यासं कृत्वा ध्यायेत् ॥ "विद्युच्चंद्रनिभं वपुः कमलजावैकुण्ठयोरेकतां प्राप्तं स्नेहवशेन रत्नविलसद्भूषाभरालंकृतम् ॥ विद्यापंकज दर्पणान्मणिमयं कुम्भं सरोजं गदां शंखं चक्रममूनि बिभ्रदमितां दिश्याच्छ्रियं वः सदा ॥ १ ॥" इति ध्यानं कृत्वा पूर्वोक्तद्वादशाक्षरमन्त्रवत् पीठपूजामावरणपूजां च कृत्वा जपं कुर्यात् । अस्य पुरश्चरणं चतुर्दशलक्षात्मकम् ( तथा च ) वर्णलक्षं जपेदेनं तत्सहस्रं सरोरुहैः ॥ होमं कुर्याद्विकसितैर्मधुरत्रयसंयुतैः ॥ १ ॥ पूजा स्याद्वैष्णवे पीठे द्वादशाक्षरवर्त्मना ॥ पायसेन कृतो होमो लक्ष्मीवश्य प्रदायकः ॥ २ ॥ मधुराक्तैस्तिलैर्हुत्वा सर्वकार्याणि साधयेत् ॥ इति लक्ष्मीनारायणमंत्रपुरश्चरणम् ॥ अथ दधिवामनाख्यचमत्कारिप्रयोगः ॥ भूतशुद्ध्यादिकेशवादिकलामातृकान्यासांतं पूर्ववत् । मंत्रो यथा-( शारदायाम् ) "ॐ नमो विष्णवे सुरपतये महाबलाय स्वाहा ॥" इत्यष्टादशाक्षरो मंत्रः । अस्य मंत्रस्य इन्दुः ऋषिः । विराट् छन्दः । दधिवामनो देवता । सर्वेष्टसिद्धये जपे विनियोगः ॥ ॐ इन्दुऋषये नमः शिरसि ॥ १ ॥ ॐ विराट्छन्दसे नमः मुखे ॥ २ ॥ ॐ दधिवामनदेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ १ ॥ ॐ अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ नमो तर्जनीभ्यां नमः ॥ २ ॥ ॐ विष्णवे मध्यमाभ्यां नमः ॥ ३ ॥ ॐ सुरपतये अनामिकाभ्यां नमः ॥ ४ ॥ ॐ महाबलाय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ स्वाहा करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥२॥ एवमेव हृदयादिषडंगन्यासं कुर्यात् ॥ ततः ॐ नमः मूर्ध्नि ॥ १ ॥ ॐ नं नमः भाले ॥ २ ॥ ॐ मों नमः नेत्रयोः ॥ ३ ॥ ॐ विं नमः कर्णयोः ॥ ४ ॥ ॐ ष्णं नमः नासिकयोः ॥ ५ ॥ ॐ वें नमः ओष्ठयोः ॥ ६ ॥ ॐ सु नमः तालुके ॥ ७ ॥ ॐ रं नमः कंठे ॥ ८ ॥ ॐ पं नमः बाहुद्वये ॥ ९ ॥ ॐ तं नमः पृष्ठे ॥ १० ॥ ॐ यें नमः हृदये ॥ ११ ॥ ॐ मं नमः उदरे ॥ १२ ॥ ॐ हां नमः नाभौ ॥ १३ ॥ ॐ वं नमः गुह्ये ॥ १४ ॥ ॐ लां नमः ऊरुद्वये ॥ १५ ॥ ॐ यं नमः जानुद्वये ॥ १६ ॥ ॐ स्वां नमः जंघयोः ॥ १७ ॥ ॐ हां नमः पादयोः ॥ १८ ॥ इति मंत्रन्यासः ॥ ४ ॥ इति न्यासं कृत्वा ध्यायेत् ॥ "मुक्तागौरं नवमणिलसद्भूषणं चंद्रसंस्थं भृंगाकारैरलकनिकरैः शोभि वक्त्रारविंदम् ॥ हस्ताब्जाभ्यां कन

कक्कलशं शुद्धतोयैस्सुपूर्णं दध्यान्नाढ्यं कनकचषकं धारयंतं भजामः ॥ १ ॥ इति ध्यात्वा पीठे मंडूकादिचन्द्रमंडलांतपीठदेवताः पूर्ववत् संपूज्य द्वादशाक्षरमंत्रोदितविमलादिनवपीठशक्तीः संपूजयेत् ॥ ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगपदपीठात्मने नमः ॥ इत्यासनं दत्त्वा मूलेन मूर्तिं प्रकल्प्य पुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ तद्यथा अग्न्यादिकोणेषु मध्ये दिक्षु च ॐ हृदयाय नमः ॥ १ ॥ इत्यादि षडंगान्यभ्यर्च्य तद्बहिरष्टदलेषु पूर्वादिक्रमेण पूर्ववत् वासुदेवादीन् शक्तिसहितान् पूजयेत् । ततो दलाग्रेषु ॐ केशवाय नमः ॥ १ ॥ ॐ नारायणाय नमः ॥ २ ॥ ॐ माधवाय नमः ॥ ३ ॥ ॐ गोविंदाय नमः ॥ ४ ॥ ॐ विष्णवे नमः ॥ ५ ॥ ॐ मधुसूदनाय नमः ॥ ६ ॥ ॐ त्रिविक्रमाय नमः ॥ ७ ॥ ॐ वामनाय नमः ॥ ८ ॥ इति पूजयेत् ॥ तद्बाह्ये ध्वजादीन् तद्बहिः भूपुरे पूर्वादिक्रमेण इन्द्रादिदिक्पालान् सायुधांश्च संपूज्य तद्बहिः ॐ ऐरावताय नमः ॥ १ ॥ ॐ पुंडरीकाय नमः ॥ २ ॥ ॐ वामनायः नमः ॥ ३ ॥ ॐ कुमुदाय नमः ॥ ४ ॥ ॐ अंजनाय नमः ॥ ५ ॥ ॐ पुष्पदंताय नमः ॥ ६ ॥ ॐ सार्वभौमाय नमः ॥ ७ ॥ ॐ सुप्रतीकाय नमः ॥८॥ इत्यष्टौ गजान् पूजयेत् ॥ एवं सप्तावरणपूजां कृत्वा धूपदीपादिनीराजनांतैरुपचारैर्देवं संपूज्य जपं कुर्यात् ॥ अस्य पुरश्चरणं लक्षत्रयात्मकम् । तथा च-"गुणलक्षं जपेन्मंत्रं तद्दशांशं घृतप्लुतैः ॥ पायसान्नैः प्रजुहुयाद्गव्यैर्वा यथाविधि ॥ १ ॥ विधानमेतद्देवस्य कीर्तितं सुरपूजितम् ॥ पायसाज्येन जुहुयात्सहस्रं श्रियमाप्नुयात् ॥ २ ॥ धान्यहोमेन धान्याप्तिः शतपुष्पासमुद्भवैः ॥ बीजैः सह ससंख्याकैर्होमो भयविनाशनः ॥ ३ ॥ दध्योदनेन शुद्धेन हुत्वा मुच्येत दुर्गतेः ॥ स्मृत्वा त्रैविक्रमं रूपं जपेन्मन्त्रमनन्यधीः ॥ ४ ॥ मुक्तो बंधाद्भवेत्सद्यो नात्र कार्या विचारणा ॥ पटे संपाद्य देवेशं भित्तौ वा पूजयेत्सुधीः ॥ ५ ॥ सुगंधकुसुमैर्नित्यं महतीं श्रियमश्नुते ॥ इति दधिवामनमंत्रप्रयोगः ॥ ॥ अथ राममंत्रपुरश्चरणप्रयोगः * ॥ मन्त्रो यथा-" ॐ रां रामाय नमः" ( अथ षडक्षरो मंत्रः ) ( तंत्रसारे ) अयं मंत्रः षड्विधः । तथा च-स्वकामशक्तिवाग्लक्ष्मीताराद्यः पंचवर्णकः ॥ षडक्षरः षड्विधः स्याच्चतुर्वर्गफलप्रदः ॥ १ ॥ ब्रह्मासंमोहनः शक्तिर्दक्षिणामूर्तिरव्ययः ॥ अगस्तिः श्रीशिवः प्रोक्तो मुनयोऽत्र क्रमादिमे ॥ २ ॥ अस्य मंत्रस्य ब्रह्मा ऋषिः। गायत्री छंदः । श्रीरामो देवता सर्वेष्टसिद्धये जपे विनियोगः । ॐ ब्रह्मऋषये नमः शिरसि ॥१॥ ॐ गायत्रीछंदसे नमः मुखे ॥ २ ॥ ॐ श्रीरामदेवतायै नमः हृदि ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ॐ ॥ रां अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ रीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ रूं मध्यमाभ्यां नमः ॥ ३ ॥ ॐ रैं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ रौं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ रः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवं हृदयादिन्यासं कुर्यात् ॥ अथ मंत्रन्यासः ॥ ॐ रां नमः ब्रह्मरंध्रे ॥ १ ॥ ॐ रां नमः भ्रुवोर्मध्ये ॥ २ ॥ ॐ मां नमः हृदि ॥ ३ ॥ ॐ यं नमः नाभौ ॥ ४ ॥ ॐ नं नमः लिङ्गे ॥ ५ ॥ ॐ मं नमः पादयोः । इति न्यासं कृत्वा ध्यायेत ॥ " कालांभोधरकांतिकान्तमनिशं वीरासनाध्यासिनं मुद्रां ज्ञानमयीं दधानमपरं हस्ता

* अत्रत्यं श्रीरामयन्त्रं पूर्वत्र द्रष्टव्यम् ।

म्बुजं जानुनि ॥ सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं पश्यन्तीं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥ १ ॥ इति
ध्यात्वा । पूर्वोक्ते द्वादशाक्षरे वैष्णवे पीठे पीठपूजां कृत्वा मूलेन मूर्तिं प्रकल्प्य पुष्पान्तैरुपचारैः संपूज्यावरणपूजां कुर्यात् ॥
तद्यथा ( देवबामपार्श्वे ) श्रीं सीतायै नमः ॥१॥ ( अग्रे ) ॐ शार्ङ्गाय नमः ॥२॥ (दक्षपार्श्वे) ॐ सरेभ्यो नमः ॥३॥(वामपार्श्वे )
ॐ चापाय नमः ॥ ४ ॥ इति पूजयेत् ॥ इति प्रथमावरणम् ॥ १ ॥ तद्बहिः केसरेषु अग्न्यादिक्कोणेषु मध्ये दिक्षु च ॐ रां
हृदयाय नमः ॥ १ ॥ इत्यङ्गानि पूर्ववत्संपूजयेत् ॥ इति द्वितीयावरणम् ॥ २ ॥ ततोऽष्टदलेषु पूर्वादिदिक्षु । ॐ
हनुमते नमः ॥ १ ॥ ॐ सुग्रीवाय नमः ॥ २ ॥ ॐ भरताय नमः ॥ ३ ॥ ॐ विभीषणाय नमः ॥ ४ ॥
ॐ लक्ष्मणाय नमः ॥ ५ ॥ ॐ अंगदाय नमः ॥ ६ ॥ ॐ शत्रुघ्नाय नमः ॥ ७ ॥ ॐ जाम्बवते नमः ॥ ८ ॥ इति
पूजयेत् ॥ इति तृतीयावरणम् ॥ ३ ॥ ततो दलाग्रेषु । ॐ सृष्टये नमः ॥ १ ॥ ॐ जयन्ताय नमः ॥ २ ॥ ॐ विजयाय
नमः ॥ ३ ॥ ॐ सुराष्ट्राय नमः ॥ ४ ॥ ॐ राष्ट्रवर्धनाय नमः ॥ ५ ॥ ॐ अकोपाय नमः ॥ ६ ॥ ॐ धर्म्मपालाय नमः
॥ ७ ॥ ॐ सुमताय नमः ॥ ८ ॥ इति चतुर्थावरणम् ॥ ४ ॥ ततो भूपुरे पूर्वादिदिक्षु इन्द्रादिदशदिक्पालान्सायुधांश्च संपूज्य ।
धूपादिनीराजनान्तैरुपचारैः श्रीरामं समर्च्य स्तवेन स्तुत्वा जपं कुर्य्यात् । अस्य पुरश्चरणं षड्लक्षात्मकम् । तथा च
( शारदायाम् ) " वर्णलक्षं जपेन्मन्त्रं तद्दशांशं सरोरुहैः ॥ जुहुयादर्चिते वह्नौ ब्राह्मणान्भोजयेत्ततः ॥ १ ॥ एवं पूजादि
भिः सिद्धे मनौ कर्म्माणि साधयेत् ॥ जातीप्रसूनैर्जुहुयाच्चंदनाम्भःसमुक्षितैः ॥ २ ॥ राज्यवश्याय कमलैर्धनधान्यादिसं
पदे ॥ नीलोत्पलानां होमेन वशयेदखिलं जगत् ॥ ३ ॥ बिल्वप्रमाणैर्जुहुयादिंदिरावाप्तये नरः ॥ दूर्वाहोमेन दीर्घायुर्भवेन्मन्त्री
निरामयः ॥ ४ ॥ रक्तोत्पलहुतान्मन्त्री धनमाप्नोति वाञ्छितम् ॥ मेधाकामेन होतव्यं पालाशकुसुमैर्नवैः ॥ ५ ॥ तज्जप्तमंभः प्रपिबे
त्कविर्भवति वत्सरात् ॥ तन्मन्त्रितान्नं भुञ्जीत महदारोग्यमाप्नुयात् ॥ ६ ॥ इति षडक्षरश्रीराममन्त्रपुरश्चरणं समाप्तम् ॥ ॥
अथ दशाक्षररामममंत्रप्रयोगः ॥ मंत्रो यथा–" ॐ जानकीवल्लभाय स्वाहा हुं" इति दशाक्षरो मंत्रः ॥ अस्य मंत्रस्य वसिष्ठ ऋषिः ।
विराट्र छंदः । जानकीवल्लभो रामो देवता । रां बीजम् । स्वाहा शक्तिः । सर्वेष्टसिद्धये विनियोगः ॥ ॐ वसिष्ठऋषये नमः शिरसि
॥ १ ॥ ॐ विराट्छंदसे नमः मुखे ॥ २ ॥ ॐ रामदेवतायै नमः हृदि ॥ ३ ॥ ॐ रां बीजाय नमः गुह्ये ॥ ४ ॥ स्वाहाशक्तये
नमः पादयोः॥५॥इति ऋष्यादिन्यासः ॥१॥ ॐ क्लीं अङ्गुष्ठाभ्यां नमः ॥१॥ ॐ क्लीं तर्जनीभ्यांनमः॥२॥ ॐ क्लीं मध्यमाभ्यां नमः
॥३॥ ॐ क्लीं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ क्लीं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ इति करन्यासः ॥ २ ॥ एवं हृदयादिन्यासं
कुर्यात् ॥ ३ ॥ ततः ॐ जां शिरसि ॥ १ ॥ ॐ नं ललाटे ॥ २ ॥ ॐ कीं भ्रुवोः ॥ ३ ॥ ॐ वं ताल्वोः ॥ ४ ॥ ॐ ल्लं कंठे ॥५॥
ॐ भां हृदि ॥ ३ ॥ ॐ यं नाभौ ॥ ७ ॥ ॐ स्वां ऊर्वोः ॥ ८ ॥ ॐ हां जानुनोः ॥ ९ ॥ ॐ हुं पादयोः ॥ १० ॥ इति न्यासं
कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ " अयोध्यानगरे रम्ये रत्नसौन्दर्य्यमंडपे ॥ मंदारपुष्पैराबद्धवितानतोरणांचिते ॥ १ ॥ सिंहासन

समारूढं पुष्पकोपरिराघवम् ॥ रक्षोभिर्हरिभिर्देवैर्दिव्ययानगतैः शुभैः ॥ २ ॥ संस्तूयमानमुनिभिः सर्वतः परिसेवितम् ॥ सीता लंकृतवामांगं लक्ष्मणेनोपशोभितम् ॥३॥ श्यामं प्रसन्नवदनं सर्वाभरणभूषितम् ॥" इति ध्यात्वा पूर्वोक्तमन्त्रवत् पीठपूजादिकं कृत्वा जपं कुर्यात् ॥ तथा च–'ध्यायेदेवं जपेन्मंत्रं वर्णलक्षमनन्यधीः ॥ अन्यत्सर्वं पूर्ववत् ॥' इति दशाक्षररराममंत्रप्रयोगः॥ अथ नरसिंहमंत्रप्रयोगः ॥ (शारदायाम्) मंत्रो यथा -"ॐउग्रं वीरं महाविष्णुं ज्वलंतं सर्वतोमुखम्॥नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥१॥" इति द्वात्रिंशद्वर्णात्मको मंत्रः ॥ अस्य मंत्रस्य ब्रह्मा ऋषिः । अनुष्टुप् छन्दः।श्रीनरसिंहो देवता।हं बीजम्।ई शक्तिः।सर्वेष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐब्रह्मऋषये नमः शिरसि॥१॥ ॐअनुष्टुप्छन्दसे नमः मुखे॥२॥ॐश्रीनृसिंहदेवतायै नमःहृदि॥३॥ॐहं बीजाय नमः गुह्ये ॥४॥ ॐ ई शक्तये नमः पादयोः ॥५॥ इति ऋष्यादिन्यासः॥१॥ॐउग्रं वीरम् अंगुष्ठाभ्यां नमः॥१॥ ॐमहाविष्णुं तर्जनीभ्यां नमः ॥२॥ॐज्वलंतं सर्वतोमुखं मध्यमाभ्यां नमः ॥३॥ॐ नृसिंहं भीषणम् अनामिकाभ्यां नमः ॥४॥ ॐ भद्रं मृत्युमृत्युं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ नमाम्यहं करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवं हृदयादिषडंगन्यासं कुर्य्यात् ॥ २ ॥ ॐ उं नमः शिरसि ॥ १ ॥ ॐ ग्रं नमः ललाटे ॥ २ ॥ ॐ वीं नमः नेत्रयोः ॥ ३ ॥ ॐ रं नमः मुखे ॥ ४ ॥ ॐ मं नमः दक्षिणबाहुमूले ॥ ५ ॥ ॐ हां नमः दक्षकूर्परे ॥ ६ ॥ ॐ विं नमः दक्षिणमणिबंधे ॥ ७ ॥ ॐ ष्णुं नमः दक्षहस्तांगुलिमूले ॥८॥ ॐ ज्वं नमः दक्षहस्तांगुल्यग्रे ॥ ९ ॥ ॐ लं नमः वामबाहुमूले ॥ १० ॥ ॐ तं नमः वामकूर्परे ॥ ११ ॥ ॐ सं नमः वाममणिबंधे ॥१२॥ ॐ वं नमः वामहस्तांगुलिमूले ॥१३॥ ॐ तों नमः वामहस्तांगुल्यग्रे॥१४॥ॐ मुं नमःदक्षपादमूले॥१५॥ ॐ खं नमः दक्षजानुनि ॥ १६ ॥ ॐ नृं नमः दक्षगुल्फे ॥ १७ ॥ ॐ सिं नमः दक्षपादांगुलिमूले ॥ १८ ॥ ॐ हं नमः दक्षपादांगुल्यग्रे ॥ १९ ॥ ॐ भीं नमः वामपादमूले ॥ २० ॥ ॐ षं नमः वामजानुनि ॥ २१ ॐ णं नमः वामगुल्फे ॥ २२ ॥ ॐ भं नमः वामपादांगुलिमूले ॥ २३ ॥ ॐ द्रं नमः वामपादांगुल्यग्रे ॥२४॥ ॐ मृं नमः दक्षिणकुक्षौ ॥ २५ ॥ ॐ त्युं नमः वामकुक्षौ ॥२६॥ ॐ मृं नमः हृदि ॥ २७ ॥ ॐ त्युं नमः गले ॥ २८ ॥ ॐ नं नमः दक्षिणपार्श्वे ॥ २९ ॥ ॐ मां नमः वामपार्श्वे ॥ ३० ॥ ॐ म्यं नमः लिंगे ॥ ३१ ॥ ॐ हं नमः ककुदि ॥ ३२ ॥ इति मंत्रन्यासः ॥ १ ॥ इति न्यासविधिं कृत्वा ध्यायेत् "माणिक्याद्रिसमप्रभं निजरुचा संत्रस्तरक्षोगणं जानुन्यस्तकराम्बुजं त्रिनयनं रत्नोल्लसद्भूषणम् ॥ बाहुभ्यां धृतशङ्खचक्रमनिशं दंष्ट्राग्रवक्त्रोल्लसज्ज्वालाजिह्वमुदग्रकेशनिचयं वन्दे नृसिंहं विभुम् ॥ १ ॥ इति ध्यात्वा पूर्वोक्तविष्णोः पीठपूजादि कृत्वा मूलेन मूर्तिं प्रकल्प्य पुष्पान्तैरुपचारैः नृसिंहं संपूज्य आवरणपूजां कुर्यात् ॥ ( अग्न्यादिकोणकेसरेषु मध्ये दिक्षु च ) ॐ उग्रं वीरं हृदयाय नमः ॥ १ ॥ ॐ महाविष्णुं शिरसे स्वाहा ॥ २ ॥ ॐ ज्वलंतं सर्वतोमुखं शिखायै वषट् ॥ ३ ॥ ॐ नृसिंहं भीषणं कवचाय हुं ॥ ४ ॥ ॐ भद्रं मृत्युमृत्युं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ नमाम्यहम् अस्त्राय फट् ॥ ६ ॥ इत्यंगानि सम्पूजयेत् ॥ ततोऽष्टदलेषु पूर्वादिचतुर्दिक्षु । ॐ । पक्षीन्द्राय नमः ॥ १ ॥ ॐ शङ्कराय नमः ॥ २ ॥ ॐ शेषाय नमः ॥३॥ ॐ ब्रह्मणे नमः ॥४॥

( आग्नेयादिकोणेषु ) ॐ श्रियै नमः ॥५॥ ॐ ह्रियै नमः ॥६॥ ॐ धृत्यै नमः ॥७॥ ॐ पुष्ट्यै नमः ॥८॥ इति पूजयेत् ॥ भूपुरे पूर्वादिक्रमेण इन्द्रादीन् दशदिक्पालान् संपूज्य तदुपरि वज्राद्यस्त्राणि च पूजयेत् ॥ एवमावरणपूजां कृत्वा धूपादिनमस्कारांतपूजां समाप्य जपं कुर्यात् । अस्य पुरश्चरणं द्वात्रिंशल्लक्षात्मकम् । तथा च–" वर्णलक्षं जपेन्मन्त्रं तत्सहस्रं घृतप्लुतैः ॥ पायसान्नैः प्रजुहुयाद्विधिवत्पूजितेऽनले ॥१॥ एवंकृते भवेन्मंत्री सिद्धमन्त्रः प्रतापवान् ॥ श्रीपुष्ट्यै जुहुयान्मंत्री बिल्वकाष्ठैधितेऽनले ॥२॥ सहस्रं श्रियमाप्नोति पत्रैर्वा बिल्वसंभवैः ॥ प्रसूनैर्वा फलैस्तद्वद्दूर्वाहोमादरोगताम् ॥३॥ मंत्रजप्तां वचां श्वेतां भक्षयेत्प्रातरन्वहम् ॥ वाक्सिद्धिं लभते मंत्री वाचस्पतिरिवापरः ॥४॥ सलिले देवमभ्यर्च्य गंधपुष्पादिभिः शुभैः ॥ दूर्वाभिस्तत्र जुहुयान्नित्यमष्टोत्तरं शतम् ॥ ५ ॥ उपसर्गा विनश्यन्ति क्षुद्रभूतज्वरादिभिः ॥ दुःस्वप्ने निशि संजाते स्नात्वा मंत्रमिमं जपेत् ॥६॥ अनिद्रो मंत्रवित्पश्चात्सुस्वप्नस्तस्य जायते ॥ व्याघ्रचौरमृगादिभ्यो महारण्ये भयाकुले ॥७॥ रक्षेन्मनुरयं जप्तो भयेष्वन्येषु मंत्रिणम् ॥ अनेन मंत्रितं भस्म विषग्रहमहाभयान् ॥ ८ ॥ नाशयेदचिरादेवं मन्त्रस्यास्य प्रभावतः ॥ घोराभिचारे सोन्मादे महोत्पाते महाभये ॥ ९ ॥ जपेन्मन्त्रं स्मरन्देवं दुःखान्मुक्तो भवेन्नरः ॥ सिंहरूपं महाभीमं महादंष्ट्रादिभीषणम् ॥१०॥ स्मृत्वात्मानं रिपुं पश्चाद्ध्यायन्मृगशिशुं रिपुम् ॥ गृहीत्वा गलदेशे तं पुनर्दिक्षु क्षिपेद्द्रुतम् ॥११॥ पुत्रमित्रकलत्राद्यैरुच्चाटो जायते रिपोः ॥ पूर्वमृत्युपदे साध्यनाम कृत्वा स्वयं हरिः ॥१२॥ निशितैर्नखदंष्ट्राद्यैः खण्ड्यमानं रिपुं स्मरन् ॥ नित्यमष्टोत्तरशतं जपन्मंत्रमतंद्रितः ॥ १३ ॥ जायते मण्डलादर्वाक् शत्रुर्वैवस्वतप्रियः ॥ *यन्त्रं कुर्वंति विधिवच्छत्रुसेनानिवारणे ॥१४॥ विभीतकाष्ठैर्ज्वलिते पावके रिपुमर्दनम् ॥ विचिंत्य देवं नृहरिं संपूज्य कुसुमादिभिः ॥१५॥ समूलचूलैर्जुहुयाच्छरैर्दशशतं पृथक् ॥ रिपुं खादन्निव जपेत् त्रीन्भिन्नदिवसान् क्षिपेत् ॥१६॥ हुत्वा सप्तदिनं सेनामिष्टां मंत्री महीपतेः ॥ प्रस्थापयेच्छुभे लग्ने पराष्ट्रजयेच्छया ॥१७॥ तस्याः पुरस्तान्नृहरिं निघ्नन्तं रिपुमंडलम् ॥ ध्यात्वा प्रयोगं कुर्वीत यावदायाति सा पुनः ॥१८॥ विजित्य निखिलाञ्छत्रून्सेह वीरश्रिया सुखम् ॥ आगत्य विजयी राजा ग्रामक्षेत्रधनादिभिः ॥१९॥ प्रीणयेन्मंत्रिणं सम्यक् विभवैः प्रीतमानसः ॥ मंत्री यदि न संतुष्येदनर्थः स्यान्महीपतेः ॥ २० ॥ इति नृसिंहस्य द्वात्रिंशद्वर्णमंत्रप्रयोगः ॥ अथ लक्ष्मीनृसिंहप्रयोगः ॥ मूलमंत्रो यथा–" ॐ श्रींह्रीं जयलक्ष्मीप्रियाय नित्यप्रमुदितचेतसे लक्ष्मीश्रितार्धदेहाय श्रींह्रीं नमः" इत्येकत्रिंशद्वर्णो मन्त्रः ॥ अस्य लक्ष्मीनृसिंहमंत्रस्य पद्मभवो ऋषिः । अतिजगती छन्दः । श्रीनरकेसरी देवता । श्रीं बीजम् । ह्रीं शक्तिः । ममाभीष्टसिद्ध्यर्थे जपे विनियोगः । ॐ पद्मभवऋषये नमः शिरसि ॥१॥ ॐ अतिजगतीछंदसे नमः मुखे ॥ २ ॥ श्रीनरकेसरिदेवतायै नमः हृदि ॥ ३ ॥ श्रीं बीजाय नमः गुह्ये ॥ ४ ॥ ह्रींशक्तये नमः पादयोः ॥ इति ऋष्यादिन्यासः ॥१॥ ॐ श्रां अङ्गुष्ठाभ्यां नमः ॥१॥ ॐ श्रीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ श्रूं मध्यमाभ्यां नमः ॥३॥ ॐ श्रैं अनामिकाभ्यां नमः ॥४॥ ॐ श्रौं कनिष्ठिकाभ्यां नमः ॥५॥ ॐ श्रः करतलकरपृष्ठाभ्यां नमः इति करन्यासः ॥२॥ एवं हृदयादिन्यासं कुर्यात् ॥ ३ ॥

---

* अत्रत्यं श्रीनृसिंहयन्त्रं पूर्वत्र द्रष्टव्यम् ।

एवं न्यासविधिं कृत्वा ध्यायेत् ॥ क्षीराब्धौ वसुमुख्यदेवनिकरैरादिसंवेष्टितः शंखं चक्रगदाम्बुजं निजकरैर्बिभ्रत्रिनेत्रः सितः ॥ सर्पाधीशफणातपत्रलसितः पीताम्बरालंकृतो लक्ष्म्याश्लिष्टकलेवरो नरहरिस्त्वान्नीलकंठो मुदे ॥ १ ॥ एवं ध्यात्वा पूर्वोक्ते विष्णोः पीठे मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पान्तैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ ( षट्कोणे ) ॐ श्रां हृदयाय नमः ॥१॥ ॐ श्रीं शिरसे स्वाहा ॥ २ ॥ ॐ श्रूं शिखायै वषट् ॥ ३ ॥ ॐ श्रैं कवचायहुं ॥ ४ ॥ ॐ श्रौं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ श्रः अस्त्राय फट् ॥ ६ ॥ इति प्रथमावरणम् ॥ ततोऽष्टदलेषु पूर्वादिक्रमेण ॐ भास्वत्यै नमः ॥ १ ॥ ॐ भास्कर्यै नमः ॥ २ ॥ ॐ चिन्तायै नमः ॥ ३ ॥ ॐ द्युतये नमः ॥ ४ ॥ ॐ उन्मीलिन्यै नमः ॥ ५ ॥ ॐ रमायै नमः ॥ ६ ॥ ॐ कान्त्यै नमः ॥७॥ ॐ रुचये नमः ॥८॥ इत्यष्टौ शक्तीः पूजयेत् ॥ ततो भूपुरे पूर्वादिषु इन्द्रादिदिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत् ॥ एवमावरणपूजां कृत्वा धूपादिनमस्कारान्तैरुपचारैः संपूज्य जपं कुर्यात् ॥ अस्य पुरश्चरणं षष्टिसहस्राधिकलक्षत्रयम् ॥ तथा च-"एवं ध्यात्वा जपेल्लक्षत्रयं षष्टिसहस्रकम् ॥ मध्वक्तैर्मल्लिकापुष्पैर्जुहुयाज्जातवेदसि ॥ १ ॥ ( षट्शतं त्रिसहस्राणि आहुतीर्दद्यात् ) इत्थं सिद्धे मनौ मन्त्री निग्रहानुग्रहक्षमः ॥ मल्लिकाकुसुमैर्होमादिष्टसिद्धिमवाप्नुयात् ॥ २ ॥ अथ षडक्षरनृसिंहमंत्रप्रयोगः ॥ मन्त्रो यथा-"ॐ आं ह्रीं क्ष्रौं क्रौं हुं फट्" इति षडक्षरो मन्त्रः ॥ अस्य मंत्रस्य ब्रह्मा ऋषिः । पंक्तिश्छंदः । नरसिंहो देवता । सर्वेष्टसिद्धये जपे विनियोगः । ॐ ब्रह्मऋषये नमः शिरसि ॥ १ ॥ ॐ पंक्तिच्छन्दसे नमः मुखे ॥ २ ॥ ॐ नरसिंहदेवतायै नमः हृदि ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ १ ॥ आं अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ह्रीं तर्जनीभ्यां नमः ॥ २ ॥ क्ष्रौं मध्यमाभ्यां नमः ॥ ३ ॥ क्रौं अनामिकाभ्यां नमः ॥ ४ ॥ हुं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ फट् करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवं ॥ हृदयादिषडंगन्यासं कुर्यात् ॥ एवं न्यासविधिं कृत्वा ध्यायेत् ॥ "कोपादालोलजिह्वं विवृतनिजमुखं सोमसूर्याग्निनेत्रं पादादानाभिरक्तप्रभमुपरि सितं भिन्नदैत्येंद्रगात्रम् ॥ शंखं चक्रासिपाशांकुशकुलिशगदादारणान्युद्वहंतं भीमं तीक्ष्णोग्रदंष्ट्रं मणिमयविविधाकल्पमीडे नृसिंहम् ॥ १ ॥ इति ध्यात्वा पूर्वोक्ते पीठे मूलेन मूर्तिं प्रकल्प्य पुष्पान्तैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ षट्कोणे आग्नेयादिकेसरेषु मध्ये दिक्षु च । ॐ आं हृदयाय नमः ॥१॥ ॐ ह्रीं शिरसे स्वाहा ॥२॥ ॐ क्ष्रौं शिखायै वषट् ॥३॥ ॐ क्रौं कवचाय हुं ॥ ४ ॥ ॐ हुं नेत्रत्रयाय वौषट् ॥५॥ ॐ फट् अस्त्रायफट् ॥६॥ इति पूजयेत् । तद्बहिः अष्टदलेषु पूर्वादिक्रमेण । ॐ चक्राय नमः ॥१॥ ॐ शंखाय नमः ॥ २ ॥ ॐ पाशाय नमः ॥ ३ ॥ ॐ अंकुशाय नमः ॥ ४ ॥ ॐ वज्राय नमः ॥ ५ ॥ ॐ कौमोदक्यै नमः ॥ ६ ॥ ॐ खड्गाय नमः ॥ ७ ॥ ॐ खेटाय नमः ॥८॥ इति संपूजयेत् ॥ ततो भूपुरे इन्द्रादीन् दिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत् ॥ इत्यावरणपूजां कृत्वा ॥ धूपादिनमस्कारान्तैरुपचारैरभ्यर्च्य जपं कुर्यात् । तथा च अस्य पुरश्चरणं षट्लक्षम् ॥ "ऋतुलक्षं जपेदेनं घृतेन जुहुयान्नरः ॥ तत्सहस्रं समिद्धेऽग्नौ तोषयेद्द्विजैर्गुरुम् ॥ १ ॥ एवं कृत्वा पुरश्चर्यां मंत्रेणानेन मंत्रवित् ॥ प्रयोगान्कल्पनिर्दिष्टान्कुर्यात्स्वस्य परस्य वा ॥ २ ॥ रक्तोत्पलैस्त्रिमध्वक्तैः सहस्रं जुहुयान्नवैः ॥ नित्यं मासाद्भवे

दिष्टं वत्सराद्धनधान्यवान् ॥ ३ ॥ रक्तैस्त्रिमधुरोपेतैः पद्मैर्भानुसहस्रकम् ॥ जुहुयान्महतीं लक्ष्मीमायुर्वश्यमवाप्नुयात् ॥ ४ ॥ लाजांस्त्रिमधुरोपेतान्प्रातःकालेषु जुह्वतः ॥ कन्यासिद्धिर्भवेत्पक्षात्कन्यायाः सुद्वरो भवेत् ॥ ५ ॥ दूर्वापयोघृताभ्यक्ता अष्टोत्तर शतं सुधीः ॥ अन्वहं जुहुयात्सम्यग्दीर्घमायुरवाप्नुयात् ॥ ६ ॥ तस्य रोगाः प्रणश्यंति कृत्याद्रोहादिभिः सह ॥ ७ ॥ सपंचगव्यं जुहुयादपामार्गस्य मंजरीम् ॥ नित्यं सहस्रमानेन सप्ताहं विजितेंद्रियः ॥ ८ ॥ होमोयं सर्वथा भूतकृत्यारोगान्प्रणाशयेत् ॥ पयो क्षैरमृताखंडैस्त्रिसहस्रं चतुर्दिनम् ॥ ९ ॥ अनेन विहितो होमो भ्रमज्वरविनाशनः ॥ समो नास्ति मनुः कश्चिच्छायानुग्रहसा धनः ॥ १० ॥ इति षडक्षरनृसिंहमंत्रप्रयोगः ॥ ॥ अथ गोपालमंत्रपुरश्चरणप्रयोगः ॥ ( मंत्रमहोदधौ ) भूतशुद्ध्यादिकेशवादि कलामातृकान्यासान्तं पूर्ववत् ॥ मूलमंत्रो यथा–"ॐ गोपीजनवल्लभाय स्वाहा" इति दशाक्षरो मंत्रः ॥ अस्य श्रीगोपालमंत्रस्य नारदः ऋषिः । विराट् छंदः । कृष्णो देवता । क्लीं बीजम् । स्वाहा शक्तिः । ममाभीष्टसिद्ध्यर्थे जपे विनियोगः । ॐ नारदऋषये नमः शिरसि ॥ १ ॥ ॐ विराट्छंदसे नमो मुखे ॥ २ ॥ ॐ कृष्णदेवतायै नमः हृदये ॥ ३ ॥ ॐ क्लीं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ स्वाहाशक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ आचक्राय अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ विचक्राय तर्जनीभ्यां नमः ॥ २ ॥ ॐ सुचक्राय मध्यमाभ्यां नमः ॥ ३ ॥ ॐ त्रैलोक्यरक्षणचक्राय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ असुरांतचक्राय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ इति करन्यासः ॥ ॐ आचक्राय हृदयाय नमः ॥ १ ॥ ॐ विचक्राय शिरसे स्वाहा ॥ २ ॥ ॐ सुचक्राय शिखायै वषट् ॥३॥ ॐ त्रैलोक्यरक्षणचक्राय कवचाय हुम् ॥ ४ ॥ ॐ असुरांतकचक्राय अस्त्राय फट् ॥५॥ इति हृद यादिपंचांगन्यासं कृत्वा । मूलेन व्यापकं न्यस्य वर्णन्यासं कुर्य्यात् ॥ ॐ गों ॐ नमः शिरसि ॥ १ ॥ ॐ पीं ॐ नमः नेत्रयोः ॥ २ ॥ ॐ जं ॐ नमः श्रोत्रयोः ॥३॥ ॐ नं ॐ नमः नासिकयोः ॥४॥ ॐ वं ॐ नमः वक्रे ॥५॥ ॐ लं ॐ नमः हृदये ॥६॥ ॐ भां ॐ नमः जठरे ॥७॥ ॐ यं ॐ नमः लिंगे ॥ ८ ॥ ॐ स्वां ॐ नमः जानुनोः ॥ ९ ॥ ॐ हां ॐ नमः पादयोः ॥ १० ॥ इति वर्णन्यासं कृत्वा ध्यायेत् ॥ * ॥ अथ ध्यानम् ॥ "वृंदारण्यगकल्पपादपतले सद्रत्नपीठेम्बुजे शोणाभे वसुपत्रके स्थितमजं पीतांबरालंकृतम् ॥ जीमूताभमनेकभूषणयुतं गोगोपगोपीवृतं गोविंदं स्मरसुंदरं मुनिथुतं वेणुं रणंतं स्मरेत् ॥ १ ॥ ( तंत्रसारे तु ) फुल्लेंदीवरकान्तिमिंदुवदनं बर्हावतंसप्रियं श्रीवत्सांकमुदारकौस्तुभधरं पीतांबरं सुंदरम् ॥ गोपीनां नयनोत्पलार्चिततनुं गोगोपसं घावृतं गोविंदं कलवेणुवादनपरं दिव्यांगभूषं भजे ॥ १ ॥ " एवं ध्यात्वा मानसोपचारैः संपूज्य पीठपूजां कुर्य्यात् ॥ तद्यथा–पीठे पूर्वोक्तमंडूकादिपरतत्त्वांतदेवताः संपूज्य । तत्र अष्टदलं कृत्वा । तेषु पूर्वादिक्रमेण । ॐ विमलायै नमः ॥ १ ॥ ॐ उत्कर्षिण्यै नमः ॥ २ ॥ ॐ ज्ञानायै० ॥ ३ ॥ ॐ क्रियायै ॥ ४ ॥ ॐ योगायै० ॥ ५ ॥ ॐ प्रह्वयै नमः ॥ ६ ॥ ॐ सत्यायै० ॥ ७ ॥ ॐ ईशानायै० ॥ ८ ॥ ( मध्ये ) ॐ अनुग्रहायै नमः ॥ ९ ॥ इति पीठशक्तीः पूजयेत् । ततो मध्ये ॐ नमो भगवते विष्णवे सर्व

* अत्रत्यं श्रीगोपालयंत्रं पूर्वं द्रष्टव्यम् ।

भूतात्मने वासुदेवाय सर्वात्मसंयोगपद्मपीठात्मने नमः ॥ इति पुष्पांजलिनासनं दत्त्वा। तत्र मूलेन मूर्तिं प्रकल्प्य । आवाहनादिपुष्पांतैरुपचारैः मूलेन संपूज्य आवरणपूजां कुर्यात् । तद्यथा--( षट्कोणे ) आग्नेयादिचतुःकोणेषु दिक्षु च । ॐ आचक्राय हृदयाय नमः ॥ १ ॥ ॐ विचक्राय शिरसे स्वाहा ॥ २ ॥ ॐ सुचक्राय शिखायै वषट् ॥ ३ ॥ ॐ त्रैलोक्यरक्षणचक्राय कवचाय हुम् ॥ ४ ॥ ( दिक्षु ) ॐ असुरांतकचक्राय अस्त्राय फट् ॥ ५ ॥ इति नेत्रवर्जं पंचांगानि संपूजयेत् ॥ इति प्रथमावरणम् ॥ १ ॥ तद्बहिरष्टदलेषु प्राचीक्रमेण ( पूज्यपूजकयोर्मध्ये प्राची ) ॐ रुक्मिण्यै नमः ॥ १ ॥ ॐ सत्यभामायै नमः ॥ २ ॥ ॐ नाग्नजित्यै नमः ॥ ३ ॥ ॐ कालिंद्यै नमः ॥ ४ ॥ ॐ मित्रविंदायै नमः ॥५॥ ॐ लक्ष्मणायै नमः ॥ ६ ॥ ॐ जांबवत्यै नमः ॥ ७ ॥ ॐ सत्यायै नमः ॥ ८ ॥ इति पूजयेत् ॥ इति द्वितीयावरणम् ॥२॥ ततो दलाग्रेषु तेनैव क्रमेण । ॐ वसुदेवाय नमः ॥१॥ ॐ देवक्यै नमः ॥ २ ॥ ॐ नंदाय नमः ॥ ३ ॥ ॐ यशोदायै नमः ॥ ४ ॥ ॐ बलभद्राय नमः ॥ ५ ॥ ॐ सुभद्रायै नमः ॥ ६ ॥ ॐ गोपेभ्यो नमः ॥ ७ ॥ ॐ गोपिकाभ्यो नमः ॥ ८ ॥ इति तृतीयावरणम् ॥ ३ ॥ तद्बाह्ये भूपुरे पूर्वादिषु । ॐ इंद्राय नमः ॥ १ ॥ ॐ अग्नये नमः ॥ २ ॥ ॐ यमाय नमः ॥ ३ ॥ ॐ निर्ऋतये नमः ॥४॥ ॐ वरुणाय नमः ॥५॥ ॐ वायवे नमः ॥६॥ ॐ कुबेराय नमः ॥ ७॥ ॐ ईशानाय नमः ॥ ८ ॥ ( ईशानपूर्वयोर्मध्ये ) ॐ ब्रह्मणे नमः ॥ ९ ॥ ( इति निर्ऋतिपश्चिमयोर्मध्ये ) ॐ अनंताय नमः ॥ १० ॥ इति दश दिक्पालान् पूजयेत् ॥ इति चतुर्थावरणम् ॥ तद्बहिः पूर्वादिषु । ॐ वज्राय नमः ॥ १ ॥ ॐ शक्तये नमः ॥ २ दंडाय० ॥ ३ ॥ ॐ खड्गाय० ॥ ४ ॥ ॐ पाशाय० ॥ ५ ॥ ॐ अंकुशाय० ॥ ६ ॥ ॐ गदायै० ॥ ७ ॥ ॐ त्रिशूलाय० ॥ ८ ॥ ॐ पद्माय० ॥ ९ ॥ ॐ चक्राय नमः ॥ १० ॥ इत्यायुधानि पूजयेत् ॥ इति पंचमावरणम् ॥५॥ एवमावरणपूजां कृत्वा पुष्पांजलिं दत्त्वा धूपदीपनैवेद्यतांबूलदक्षिणानीराजनैः सांगं श्रीकृष्णं संपूज्य स्तुत्वा साष्टांगं प्रणम्य जपं कुर्य्यात् । अस्य पुरश्चरणं लक्षमंत्रात्मकम् ॥ तथा च—एवं ध्यात्वा जपेल्लक्षं दशांशं सरसीरुहैः ॥ जुहुयात्पूजयेत्पीठे वैष्णवे नंदनंदनम् ॥ १ ॥ एवं सिद्धे मनौ मंत्री साधयेत्स्वमनीषितम् ॥ गुडूचीशकलैरग्नौ जुहुयाज्ज्वरशान्तये ॥ २ ॥ कृष्णद्वेषं प्रकुर्वंतं बलदेवस्य रुक्मिणः ॥ द्यूतासक्तस्य संचित्य गोमयोद्भवगोलकान् ॥ ३ ॥ जुहुयाद्द्वेषसिद्ध्यर्थं नरयोः सुहृदोर्मिथः ॥ पिचुमंदफलोत्पन्नतैलाभ्यक्तैः समिद्वरैः ॥ ४ ॥ अक्षतैर्जुहुयाद्रात्रावयुतं शत्रुशांतये ॥ अयुतं प्रजपेन्मंत्रमात्मानं संस्मरन् हरिम् ॥ ५ ॥ मंचस्थस्तगतप्राणाकृष्टकंसं रिपुं सुधीः ॥ शत्रुजन्मर्क्षवृक्षोत्थसमिद्भिरयुतं निशि ॥ ६ ॥ जुहुयादित्थमुग्रोऽपि सपत्नो निधनं व्रजेत् ॥ पलाशकुसुमैर्लक्षं विद्यासिद्ध्यै जुहोतु ना ॥ ७ ॥ तंडुलैः सितपुष्पाद्यैराज्याक्तैः प्रत्यहं नरः ॥ हुत्वा सप्तदिनांतं तद्भस्म भाले च मूर्द्धनि ॥ ८ ॥ धारयन्वशयेत्सद्यो यौवनं तच्च पूरुषान् ॥ पुष्पं वासोंजनं वापि तांबूलमथ चंदनम् ॥ ९ ॥ सहस्रं मनुना जप्तं दद्याद्यस्मै नराय सः ॥ वशयेत्यचिरादेव सपुत्रपशुबांधवः ॥ १० ॥ वृंदावनस्थं गायंतं गोपीभिः संस्मरन्हरिम् ॥ अपामार्गसमिद्भिर्यो जुहुयाद्वशयेज्जगत् ॥ ११ ॥ रासक्रीडागतं कृष्णं ध्यायन्योऽयुतमाजपेत् ॥ षण्मासाद्वांछितां कन्यामुद्वहेद्भक्तितत्परः

॥ १२ ॥ जपेत्सहस्रं ध्यायंती यावदेव स्थितं हरिम् ॥ कन्यकावाञ्छितं नाथं मंडलांतर्लभेत सा ॥ १३ ॥ पत्रैः फलैः समिद्भिर्वा बिल्वोत्थैर्मधुसंयुतैः ॥ कमलैः शर्करायुक्तैर्होमाल्लक्ष्मीपतिर्भवेत् ॥ १४ ॥ बहुना किमिहोक्तेन कृष्णः सर्वार्थदो नृणाम् ॥ इति दशाक्षरो गोपालकृष्णमंत्रपुरश्चरणम् ॥ ॥ अथाष्टादशवर्णात्मकश्रीकृष्णमन्त्रप्रयोगः । मन्त्रो यथा । "क्लीं कृष्णाय गोविंदाय गोपीजनवल्लभाय स्वाहा ॥" इति १८ अष्टादशाक्षरः ॥ तंत्रसारे त्वयं विंशत्यर्णोऽपि लिखितः स च "ह्रीं श्रीं क्लीं कृष्णाय गोविंदाय गोपीजनवल्लभाय स्वाहा" इति २० विंशत्यक्षरः॥अस्य मन्त्रस्य नारद ऋषिः । गायत्री छन्दः । श्रीकृष्णो देवता । क्लीं बीजम् । स्वाहा शक्तिः । सर्वेष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ नारदऋषये नमः शिरसि ॥ १॥ ॐ गायत्रीछन्दसे नमः मुखे ॥२॥ ॐ श्रीकृष्णदेवतायै नमः हृदये ॥ ३ ॥ ॐ क्लीं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ स्वाहाशक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ क्लीं कृष्णाय अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ गोविन्दाय तर्जनीभ्यां नमः ॥ २ ॥ ॐ गोपीजन मध्यमाभ्यां नमः ॥ ३ ॥ ॐ वल्लभाय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ स्वाहा कनिष्ठिकाभ्यां नमः ॥ ५ ॥ इति करन्यासः ॥ एवमेव हृदयादि नेत्रवर्जं पञ्चाङ्गन्यासं कुर्य्यात् । अथ मन्त्रवर्णन्यासः ॥ ॐ नमः शिरसि ॥ १ ॥ ॐ क्लीं नमः ललाटे ॥ २ ॥ ॐ कृं नमः भ्रूमध्ये ॥ ३ ॥ ॐ ष्णां नमः दक्षिणकर्णे ॥ ४ ॥ ॐ यं नमः वामकर्णे ॥ ५ ॥ ॐ गों नमः दक्षनेत्रे ॥ ६ ॥ ॐ विं नमः वामनेत्रे ॥ ७ ॥ ॐ दां नमः दक्षनासिकायाम् ॥ ८ ॥ ॐ यं नमः वामनासिकायाम् ॥ ९ ॐ गों नमः मुखे ॥ १० ॥ ॐ पीं नमः ग्रीवायाम् ॥ ११ ॥ ॐ जं नमः हृदये ॥ १२ ॥ ॐ नं नमः नाभौ ॥ १३ ॥ॐ वं नमः कट्याम् ॥ १४॥ ॐ ल्लं नमः लिंगे ॥ १५ ॥ ॐ भां नमः दक्षिणजानुनि ॥ १६ ॥ ॐ यं नमः वामजानुनि ॥ १७ ॥ ॐ स्वां नमः दक्षपादे ॥ १८ ॥ ॐ हां नमः वामपादे ॥ १९ ॥ इति वर्णन्यासः ॥ अथ पदन्यासः । ॐ क्लीं नमः नेत्रयोः ॥ १ ॥ ॐ कृष्णाय मुखे ॥ २ ॥ ॐ गोविन्दाय हृदये ॥ ३ ॥ ॐ गोपीजनवल्लभाय गुह्ये ॥ ४ ॥ ॐ स्वाहा पादयोः ॥ ५ ॥ एवं न्यासं कृत्वा ध्यायेत ॥ "स्मरेद्वृंदावने रम्ये मोहयन्तमनारतम् ॥ गोविंदं पुण्डरीकाक्षं गोपकन्यासहस्रशः ॥ १ ॥ आत्मनो वदनांभोजप्रेषिताक्षिमधुव्रताः ॥ पीडिताः कामबाणेन चिरमाश्लेषणोत्सुकाः ॥ १ ॥ मुक्ताहारलसत्पीनतुंगस्तनभरानताः ॥ स्रस्तधम्मिल्लवसना मदस्खलितभाषणाः ॥ ३ ॥ दंतपंक्तिप्रभोद्भासिस्पंदमानाधरांचिताः ॥ विलोभयंतीर्विविधैर्विभ्रमैर्भावगर्वितैः ॥ ४ ॥" अथ ध्यानम् । "फुल्लेंदीवरकांतिमिंदुवदनं बर्हावतंसप्रियं श्रीवत्सांकमुदारकौस्तुभधरं पीतांबरं सुंदरम् ॥ गोपीनां नयनोत्पलार्चिततनुं गोगोपसंघावृतं गोविन्दं कलवेणुवादनपरं दिव्यांगभूषं भजे ॥ १ ॥ एवं ध्यात्वा पूर्वोक्ते पीठे मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः श्रीकृष्णं संपूज्य आवरणपूजां कुर्य्यात् । षट्कोणे आग्नेयादिकोणकेसरेषु दिक्षु च । ॐ क्लीं कृष्णाय हृदयाय नमः ॥ १ ॥ ॐ गोविन्दाय शिरसे स्वाहा ॥ २ ॥ ॐ गोपीजनशिखायै वषट् ॥ ३ ॥ ॐ वल्लभाय कवचाय हुं ॥ ४ ॥ ( दिक्षु ) ॐ स्वाहा अस्त्राय फट् ॥ ५ ॥ इति पंचांगानि संपूज्ययेत ॥ इति प्रथमावरणम् ॥ १ ॥ तद्बहिरष्टदलेषु । ॐ कालिन्द्यै नमः ॥१॥ ॐ नाग्नजित्यै० ॥ २ ॥ ॐ मित्रविं

दाय० ॥ ३ ॥ ॐ चारुहासिन्यै० ॥ ४ ॥ ॐ रोहिण्यै० ॥ ५ ॥ ॐ जांबवत्यै० ॥ ६ ॥ ॐ रुक्मिण्यै० ॥ ७ ॥ ॐ सत्यायै नमः ॥ ८ ॥ इत्यष्टौ प्रियाः पूजनीयाः ॥ इति द्वितीयावरणम् ॥ २ ॥ तद्बाह्ये पूर्वादि । ॐ ऐरावताय नमः ॥ १ ॥ ॐ पुंडरीकाय० ॥ २ ॥ ॐ वामनाय० ॥ ३ ॥ ॐ कुमुदाय० ॥ ४ ॥ ॐ अंजनाय० ॥ ५ ॥ ॐ पुष्पदन्ताय० ॥ ६ ॥ ॐ सार्वभौमाय० ॥ ७ ॥ ॐ सुप्रतीकाय नमः ॥ ८ ॥ इत्यष्टौ गजान्पूजयेत् ॥ इति तृतीयावरणम् ॥ ३ ॥ तद्बहिर्भूपुरे पूर्वादिक्रमेण । इंद्रादिदश दिक्पालान्संपूज्य तद्बहिः । वज्राद्यायुधानि च पूजयेत् ॥ इत्यावरणपूजां कृत्वा देवं धूपादिनीराजनांतैरभ्यर्च्य स्तवेन स्तुत्वा जपं कुर्य्यात् । अस्य पुरश्चरणमयुतद्वयम् । तथा चोक्तम्—मंत्रमेन यथान्यायमयुतद्वितयं जपेत् ॥ जुहुयादरुणांभोजैर्दशांशं सुसमाहितः ॥ १ ॥ इति संपूज्य देवेशं गोविन्दं जगतां पतिम् ॥ कुर्वीत कल्पनिर्दिष्टान्प्रयोगान्निजवांछितान् ॥ २ ॥ लक्ष्मीप्रसूनैर्जुहुयाच्छ्रियमिच्छन्ननिंदिताम् ॥ साज्येनान्नेन जुहुयादाज्यान्नस्य समृद्धये ॥ ३ ॥ अरुणैः कुसुमैर्विप्राञ्जातीभिः पृथिवीपतीन् ॥ प्रसूनैरसितैर्वैश्याञ्शूद्रान्नीलोत्पलैर्नवैः ॥ ४ ॥ वशयेल्लवणैः सर्वान्पंकजैर्वनिताजनान् ॥ गोशालासु कृतो होमः पायसेन ससर्पिषा ॥ ५ ॥ गवां शान्तिं करोत्याशु गोविन्दो गोकुलप्रियः ॥ शिशुवेषधरं देवं किंकिणीदामशोभितम् ॥ ६ ॥ स्मृत्वा प्रतर्पयेन्मंत्री दुग्धबुद्ध्या शुभैर्जलैः ॥ धनधान्यांशुकादीनि प्रीतस्तस्मै ददाति सः ॥ ७ ॥ इत्यष्टादशाक्षरकृष्णमंत्रप्रयोगः समाप्तः ॥ अथ अष्टाक्षरत्रैलोक्यमोहनमंत्रप्रयोगः ॥ मन्त्रस्वरूपं यथा—"क्लीं हृषीकेशाय नमः" इत्यष्टाक्षरो मन्त्रः (मन्त्रमहोदधौ) अस्य मन्त्रस्य सम्मोहन नारद ऋषिः । गायत्री छंदः । त्रैलोक्यमोहनो देवता । ममाभीष्टसिद्ध्यर्थे जपे विनियोगः । ॐ संमोहननारदऋषये नमः शिरसि ॥ १ ॐ गायत्रीछन्दसे नमः मुखे ॥ २ ॥ ॐ त्रैलोक्यमोहनदेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ॐ क्लाँ अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ क्लीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ क्लू मध्यमाभ्यां नमः ॥ ३ ॥ ॐ क्लैं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ क्लौं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ क्लः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवं हृदयादिन्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ कल्पानोरुहमूलसंस्थितवयोराजोन्नतांसस्थितं पौषं बाणमथेक्षुचापकमले पाशांकुशे बिभ्रतम् ॥ चक्रं शङ्खगदे करैरुदधिजासंश्लिष्टदेहं हरिं नानाभूषणरक्तलेपकुसुमं पीताम्बरं संस्मरेत ॥ १ ॥ एवं ध्यात्वा पूर्वोक्ते पीठे मूलेन मूर्तिं प्रकल्प्य पुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ तद्यथा—ॐ पक्षिराजाय स्वाहा इति सम्मुखे गरुडं पूजयेत ॥ १ ॥ शिरसि ॐ मुकुटाय नमः ॥ २ ॥ कर्णे ॐ कुण्डलाय नमः ॥ ३ ॥ करे ॐ चक्रायस्त्राय नमः ॥ ४ ॥ हृदये ॐ श्रीवत्साय नमः ॥ ५ ॥ कण्ठे ॐ कौस्तुभाय नमः ॥ ६ ॥ गले ॐ वनमालायै नमः ॥ ७ ॥ नितंबे ॐ पीतांबराय नमः ॥८॥ वामांगे ॐ श्रीलक्ष्म्यै नमः ॥ ९ ॥ इति पूजयेत् ॥ ततः केसरेषु अग्न्यादिकोणे मध्ये दिक्षु च । ॐ क्लां हृदयाय नमः ॥ १ ॥ ॐ क्लीं शिरसे स्वाहा ॥ २ ॥ ॐ क्लूं शिखायै वषट् ॥ ३ ॥ ॐ क्लैं कवचाय हुं ॥ ४ ॥ ॐ क्लौं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ क्लः अस्त्राय फट् ॥ ६ ॥ इति पूजयेत् । ततः पूर्वादिदिक्षु ॐ द्रां नमः । १ ॥ ॐ द्रीं नमः ॥२॥ ॐ द्रूं नमः ॥३॥ ॐ द्रैं नमः ॥ ४ ॥ इति संपूज्य कोणेषु ॐ द्रौं

नमः । इति पंचबाणान् पूजयेत् ॥ तद्बहिरष्टदलेषु पूर्वादिक्रमेण । ॐ लक्ष्म्यै नमः ॥ १ ॥ ॐ सरस्वत्यै नमः ॥ २ ॥ ॐ रत्यै नमः ॥ ३ ॥ ॐ प्रीत्यै नमः ॥ ४ ॥ ॐ कीर्त्यै नमः ॥५॥ ॐ कान्त्यै नमः ॥६॥ ॐ तुष्ट्यै नमः ॥ ७ ॥ ॐ पुष्ट्यै नमः ॥८॥ इत्यष्टौ शक्तीः पूजयेत् । तद्बाह्ये भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत् । इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं द्वादशलक्षजपः तथा च–"एवं ध्यात्वा जपेत्सूर्यलक्षं त्रिमधुरप्लुतैः ॥ पालाशपुष्पैर्जुहुयात्तत्सहस्रं हुताशने ॥ १ ॥ विजयापुष्पसंयुक्तैर्जलैः संतर्पयेच्छतम् ॥ प्रातः प्रत्यहमेतस्य वाञ्छितं मासतो भवेत् ॥ २ ॥ अयुतं तु घृतेनाग्नौ हुत्वा संपातजं घृतम् ॥ तावज्जप्तं प्रियाकांतं भोजयेद्वशमेति सः ॥ ३ ॥ कामबीजेपि विज्ञेया परिचर्योक्तमंत्रवत् ॥ विशेषात्कामिनीवर्गमोहको मनुनायकः ॥ ४ ॥ इति त्रैलोक्यमोहनकृष्णमंत्रपुरश्चरणम् ॥ अथ प्रसंगतः पुत्रप्रदसंतानगोपालमंत्रपुरश्चरणप्रयोगः ॥ तत्र तावत् पूर्वदिने नद्यादौ स्नात्वा । प्रातर्नित्यावश्यकं समाप्य । विदुषामुपदेशानुसारेण पूर्वोक्तपद्धतिकांडरीत्या प्रायश्चित्तं कृत्वा स्वयं ब्राह्मणद्वारा वा अयुतगायत्रीजपं च कृत्वा तद्दिने उपवासं नक्तव्रतं वा संपाद्य रात्रौ दंपती शुद्धासनयोर्भूमावेव स्वपेताम् ॥ ततः आरंभदिने उषसि स्नात्वा नित्यकर्म कृत्वा । मंगलस्नानं विधाय यथायोग्यालंकृतः सपवित्रकरः सपत्नीकः स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य । शांतिपाठं पठित्वा श्रीगणेशादिस्मरणं कुर्य्यात् । ततो देशकालौ संकीर्त्य मम सभार्यस्यैतज्जन्मजन्मांतरार्जिताऽनपत्यत्वादिकारणीभूतबालघातविप्रस्वापहारादिजन्यदुरितसमूलप्रशमनार्थं दीर्घायुष्मद्बहुपुत्रादिसंततिप्राप्त्यर्थं मंत्रसिद्धिपूर्वकश्रीपरमेश्वरप्रीत्यर्थं च संतानगोपाललक्षमंत्रजपात्मकं पुरश्चरणं स्वयं ब्राह्मणद्वारा वाहं करिष्ये । तदंगत्वेन गणपतिपूजनं पुण्याहवाचनं मातृकापूजां नांदीश्राद्धमाचार्यजापकवरणं च करिष्ये । इति च संकल्प्य । गणेशपूजनादिजापकवरणांतं पद्धतिकांडोक्तमार्गेण सर्व्वंकुर्य्यात् । ततः "ॐ भद्रं कर्णेभिः" इति वेदघोषेण जपस्थानसमीपमागत्य द्वारपूजां कृत्वा प्रविश्य कूर्म्मसंशोधिते स्वासने प्राङ्मुख उपविश्य । आचम्य प्राणानायम्य । देशकालौ संकीर्त्य । मम सभार्यस्य ( यजमानस्य ) जन्मांतरार्जिताऽनपत्यत्वादिनिदानभूतबालघातादिजन्यदुरितशमनार्थं दीर्घायुष्मद्बहुपुत्रादिसंततिप्राप्त्यर्थं मंत्रसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं संतानगोपालमंत्रजपं यथासंख्यं करिष्ये तदंगत्वेनादौ भूतशुद्धिं प्राणप्रतिष्ठामंतर्मातृकाबहिर्मातृकान्यासं केशवादिकलामातृकान्यासं च करिष्ये इति प्रत्याहिकं संकल्प्य पूर्ववत् भूतशुद्ध्यादिबहिर्मा*तृकान्यासांतं कृत्वा विष्णोरष्टाक्षरोक्तक्रमेण केशवादिकलामातृकान्यासं च कुर्यात् ॥ अथ मूलमन्त्रन्यासादि ( मंत्रमहोदधौ ) मंत्रो यथा–"ॐ देवकीसुत गोविंद वासुदेव जगत्पते ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥" इति ३२ द्वात्रिंशदक्षरो मंत्रः ॥ अस्य मंत्रस्य नारदऋषिः अनुष्टुप्छंदः । सुतप्रदकृष्णो देवता । मम पुत्रप्राप्त्यर्थे जपे विनियोगः ॥ ॐ नारदऋषये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छंदसे नमः मुखे ॥ २ ॥ ॐ सुतप्रदकृष्णदेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ १ ॥ ॐ देव

* अत्रत्यं सन्तानगोपालमन्त्रपूजायन्त्रं पूर्वत्र द्रष्टव्यम् ।

कीसुत गोविन्द इत्यंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ वासुदेव जगत्पते इति तर्ज्जनीभ्यां नमः ॥ २॥ ॐ देहि मे तनयं कृष्ण इतिमध्य माभ्यां नमः ॥ ३ ॥ ॐ त्वामहं शरणं गतः इत्यनामिकाभ्यां नमः ॥ ४ ॥ ॐ देवकीसुत गोविंद वासुदेव जगत्पते ॥ देहिमे तनयं कृष्ण त्वामहं शरणं गतः इति कनिष्ठिकाभ्यां नमः ॥ इति करन्यासः ॥ ॐ देवकीसुत गोविंद हृदयाय नमः ॥ १॥ॐ वासुदेव जगत्पते शिरसे स्वाहा ॥२॥ ॐ देहि मे तनयं कृष्ण शिखायै वषट् ॥३॥ ॐ त्वामहं शरणं गतः कवचाय हुं ॥४॥ ॐ देवकीसुत गोविंद वासुदेव जगत्पते ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः अस्त्राय फट् ॥५॥ इति नेत्रहीनं पञ्चाङ्गन्यासं कुर्यात्॥ अथ ध्यानम् ॥ " विजयेन युतो रथस्थितः प्रसमानीय समुद्रमध्यतः ॥ प्रददत्तनयान् द्विजन्मने स्मरणीयो वसुदेवनन्दनः ॥ १ ॥ " इति ध्यात्वा पीठपूजां कुर्यात् ॥ तद्यथा—ॐमंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः। इति पीठदेवताः सपूज्य पूर्वादिदिक्षु । ॐ विमलायै नमः ॥ १ ॥ ॐउत्कर्षिण्यै नमः ॥ २ ॥ ॐ ज्ञानायै नमः ॥ ३ ॥ ॐ क्रियायै नमः ॥ ४ ॥ ॐ योगायै नमः ॥ ५ ॥ ॐ प्रह्वयै नमः ॥ ६ ॥ ॐ सत्यायै नमः ॥ ७॥ ॐ ईशानायै नमः ॥ ८ ॥ ( मध्ये ) ॐ अनुग्रहायै नमः ॥ ९ ॥ इति पीठशक्तीः संपूजयेत् ॥ ततः ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगपदपीठात्मने नमः ॥ इत्यासनं दत्त्वा तत्र मूलेन मूर्तिं प्रकल्प्य ( अथवा स्वर्णमूर्तिं यन्त्रं वा संस्थाप्य ) मूलमंत्रेण पुरुषसूक्तेन च पाद्याद्यैः पुष्पान्तैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ तद्यथा—षट्कोणे आग्नेयादिकोणेषु दिक्षु च । ॐ देवकीसुत गोविंद हृदयाय नमः ॥ १ ॥ ॐ वासुदेव जगत्पते शिरसे स्वाहा ॥ २ ॥ ॐ देहि मे तनयं कृष्ण शिखायै वषट् । ३ ॥ ॐ त्वामहं शरणं गतः कवचाय हुं ॥ ४ ॥ ॐ देवकीसुत गोविन्द वासुदेव जगत्पते ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः अस्त्राय फट् ॥ ॥ ५ ॥ इति पूजयेत् ॥ तद्बहिरष्टदलेषु पूर्वादिक्रमेण । ॐ रुक्मिण्यै नमः ॥ १ ॥ ॐ सत्यभामायै नमः ॥ २ ॥ ॐनाग्नजित्यै० ॥३॥ ॐकालिंद्यै नमः ॥ ४ ॥ ॐ मित्रविन्दायै नमः ॥ ५ ॥ ॐ लक्ष्मणायै नमः ॥ ६ ॥ ॐ जाम्बवत्यै नमः ॥ ७ ॥ ॐसत्यायै नमः ॥८॥ इत्यष्टौ महिषीः पूजयेत् ॥ ततो दलाग्रेषु । ॐ वासुदेवाय नमः ॥१॥ ॐ देवक्यै नमः ॥ २ ॥ ॐ नंदगोपाय नमः ॥ ३ ॥ ॐ यशोदायै नमः ॥ ४ ॥ ॐ बलभद्रायै नमः ॥ ५ ॥ ॐ सुभद्रायै नमः ॥ ६ ॥ ॐ गोपेभ्यो नमः ॥ ७ ॥ ॐ गोपिकाभ्यो नमः ॥ ८ ॥ इति संपूजयेत् ॥ तद्बाह्ये भूपुरे पूर्वादिदिक्षु । ॐ इन्द्राय नमः ॥ १ ॥ ॐ अग्नये नमः ॥ २ ॥ ॐयमाय नमः ॥ ३ ॥ ॐनिर्ऋतये नमः ॥ ४ ॥ ॐ वरुणाय नमः ॥ ५ ॥ ॐ वायवे नमः ॥ ६ ॥ ॐ कुबेराय नमः ॥ ७ ॥ ॐ ईशानाय नमः ॥ ८ ॥ ॐ ईशानपूर्वयोर्मध्ये । ॐब्रह्मणे नमः ॥९॥ निर्ऋतिवरुणोर्मध्ये । ॐअनंताय नमः ॥ १० ॥ इति दशदिक्पालान् पूजयेत् ॥ तद्बाह्ये । ओं वज्राय नमः ॥ १ ॥ ओं शक्तये नमः ॥ २ ॥ ओं दंडाय नमः ॥ ३ ॥ ओं खड्गाय नमः ॥४॥ ओं पाशाय नमः ॥ ५ ॥ ओं अंकुशाय नमः ॥ ६ ॥ ओं गदायै नमः ॥ ७ ॥ ओं त्रिशूलाय नमः ॥ ८ ॥ ओं पद्माय नमः ॥ ९ ॥ ओं चक्राय नमः ॥ १० ॥ इति पूजयेत् ॥ इत्यावरणपूजां कृत्वा धूपादिनमस्कारान्तां

यथाविधि पूजां विधाय वक्ष्यमाणसंतानगोपालस्तवेन स्तुत्वा जपं कुर्यात् । अस्य पुरश्चरणं लक्षमंत्रात्मकम् ॥ जपान्ते दशांशेन मधुशर्कराघृतमिश्रितैस्तिलैर्होमं कृत्वा तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि कुर्यात् । एवं कृते सिद्धमंत्रो भवति । ततः प्रयोगान् साधयेत् ॥ तथा च—लक्षं जपोऽयुतं होमस्तिलैर्मधुरसंयुतैः ॥ अर्चा पूर्वोदिता चैवं मंत्रः पुत्रप्रदो नृणाम् ॥ १ ॥ इति मंत्रमहोदधिप्रोक्तसंतानगोपालप्रयोगः समाप्तः ॥ (ग्रंथांतरे सन्तानगोपालमंत्रप्रयोगः)मूलमंत्रो यथा—ॐ क्लींश्रींह्रींजींॐभूर्भुवः स्वः ॐ देवकीसुत गोविंद वासुदेव जगत्पते॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॐ स्वः भुवः भूः ॐ जींह्रींश्रींक्लीं ॐ इति चतुः पञ्चाशद्वर्णात्मको मंत्रः । ॐ अस्य श्रीसंतानगोपालमंत्रस्य नारायणऋषिः । अनुष्टुप् छंदः । श्रीगोपालो देवता । क्लीं बीजम् ।श्रींह्रीं शक्तिः । जीं कीलकम् । संतानगोपालप्रसादसिद्ध्यर्थे जपे विनियोगः ॥ ॐ नारायणऋषये नमः शिरसि ॥ १ ॥ अनुष्टुप्छंदसे नमः मुखे ॥ २ ॥ ॐ श्रीगोपालदेवतायै नमः हृदि ॥ ३ ॥ ॐ क्लीं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ श्रीं ह्रीं शक्तये नमः पादयोः ॥५॥ ॐ जींकीलकाय नमः सर्वाङ्गे ॥६॥ इति ऋष्यादिन्यासः ॥ ॐ देवकीसुत गोविंद अंगुष्ठाभ्यां नमः ॥१॥ॐवासुदेव जगत्पते तर्जनीभ्यां नमः ॥२॥ ॐ देहि मे तनयं कृष्ण मध्यमाभ्यां नमः ॥३॥ ॐ त्वामहं शरणं गतः अनामिकाभ्यां नमः॥४॥ देवकीसुत गोविंद देवदेव जगत्पते कनिष्ठिकाभ्यां नमः॥ ॥ ५ ॥ ॐ देहि मे तनयं कृष्ण त्वामहं शरणं गतः करतलकरपृष्ठाभ्यां नमः॥६॥इति करन्यासः ॥ एवं हृदयादिषडंगन्यासं कृत्वा ध्यायेत् ॥ "ॐ वैकुंठतेजसा दीप्तमर्जुनेन समन्वितम् ॥ समर्पयंतं विप्राय नष्टानानीय बालकान् ॥ १ ॥ " इति ध्यात्वा जपं कुर्यात् ॥ अन्यत्सर्वं पूर्ववत् ॥ इति ग्रंथांतरोक्तं संतानगोपालविधानम् ॥ ॥ अथ संतान गोपालस्तोत्रं प्रारभ्यते ॥ "श्रीशं कमलपत्राक्षं देवकीनंदनं हरिम् ॥ सुतसंप्राप्तये कृष्णं नमामि मधुसूदनम् ॥ १ ॥ नमाम्यहं वासुदेवं सुतसंप्राप्तये हरिम् ॥ यशोदांकगतं बालं गोपालं नंदनंदनम् ॥ २ ॥ अस्माकं पुत्रलाभाय गोविंदं मुनिवंदितम् ॥ नमाम्यहं वासुदेवं देवकीनंदनं सदा ॥ ३ ॥ गोपालं डिंभकं वंदे कमलापतिमच्युतम् ॥ पुत्रसंप्राप्तये कृष्णं नमामि यदुपुंगवम् ॥ ४ ॥ पुत्रकामेष्टिफलदं कञ्जाक्षं कमलापतिम् ॥ देवकीनंदनं वंदे सुतसंप्राप्तये मम ॥ ५ ॥ पद्मापते पद्मनेत्र पद्मनाभ जनार्दन ॥ देहि मे तनयं श्रीश वासुदेव जगत्पते ॥ ६ ॥ यशोदांकगतं बालं गोविंदं मुनिवंदितम् ॥ अस्माकं पुत्रलाभाय नमामि श्रीशमच्युतम् ॥ ७ ॥ श्रीपते देवदेवेश दीनार्तिहरणाच्युत ॥ गोविंद मे सुतं देहि नमामि त्वां जनार्दन ॥ ८ ॥ भक्तकामद गोविंद भक्तरक्ष शुभप्रद ॥ देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो ॥९॥ रुक्मिणीनाथ सर्वेश देहि मे तनयं सदा ॥ भक्तमंदार पद्माक्ष त्वामहं शरणं गतः ॥ १० ॥ देवकीसुत गोविंद देवदेव जगत्पते ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ ११ ॥ वासुदेव जगद्वंद्य श्रीपते पुरुषोत्तम ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ १२ ॥ कंजाक्ष कमलानाथ परकारुणिकोत्तम ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥१३॥लक्ष्मीपते पद्मनाभ मुकुंद मुनिवंदित ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ १४ ॥ कार्यकारणरूपाय वासुदेवाय ते सदा ॥ नमोऽस्तु पुत्रलाभार्थं सुखदाय बुधाय ते ॥ १५ ॥ राजीवनेत्र

श्रीराम रावणारे हरे कवे ॥ तुभ्यं नमोऽस्तु देवेश तनयं देहि मे हरे ॥ १६ ॥ अस्माकं पुत्रलाभाय भजामि त्वां जगत्पते ॥ देहि मे तनयं कृष्ण वासुदेव रमापते ॥ १७ ॥ श्रीमानिनीमानचोर गोपीवस्त्रापहारक ॥ देहि मे तनयं कृष्ण वासुदेव जगत्पते ॥ १८ ॥ अस्माकं पुत्रसंप्राप्तिं कुरुष्व यदुनंदन ॥ रमापते वासुदेव मुकुंद मुनिवंदित ॥१९॥ वासुदेव सुतं देहि तनयं देहि माधव ॥ पुत्रं मे देहि श्रीकृष्ण वत्सं देहि महाप्रभो ॥ २० ॥ डिंभकं देहि श्रीकृष्ण ह्यात्मजं देहि राघव ॥ भक्तमंदार मे देहि तनयं नंदनंदन ॥ २१ ॥ नंदनं देहि मे कृष्ण वासुदेव जगत्पते ॥ कमलानाथ गोविंद मुकुंदमुनिवंदित ॥२२॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥ सुतं देहि श्रियं देहि श्रियं पुत्रं प्रदेहि मे ॥ २३ ॥ यशोदास्तन्यपानज्ञं पिबंतं यदुनंदनम् ॥ वंदेऽहं पुत्रलाभार्थं कपिलाक्षं हरिं सदा ॥ १४ ॥ नंदनंदन देवेश नंदनं देहि मे प्रभो ॥ रमापते वासुदेव श्रियं पुत्रं जगत्पते ॥ २५ ॥ पुत्रं श्रियं श्रियं पुत्रं पुत्रं मे देहि माधव ॥ अस्माकं दीनवाक्यानि ह्यवधारय श्रीपते ॥ २६ ॥ गोपालडिंभ गोविंद वासुदेव रमापते ॥ अस्मभ्यं डिंभकं देहि श्रियं देहि जगत्पते ॥ २७ ॥ मद्वांछितफलं देहिं देवकीनंदनाच्युत ॥ मां च पुत्रार्थिनं धन्यं कुरुष्व यदुनंदन ॥ २८ ॥ याचेऽहं त्वां श्रियं पुत्रं देहि मे पुत्रसंपदम् ॥ भक्तचिंतामणे राम कल्पवृक्ष महाप्रभो ॥ २९ ॥ आत्मजं नंदनं पुत्रं कुमारं डिंभकं सुतम् ॥ अर्भकं तनयं देहि मे सदा रघुनन्दन ॥४०॥ वन्दे सन्तानगोपालमाधवं भक्तकामदम् ॥ अस्माकं पुत्रसंप्राप्त्यै सदा गोविंदमच्युतम् ॥३१॥ अकारयुक्तं गोपालं श्रीयुक्तं यदुनन्दनम् ॥ क्लींयुक्तं देवकीपुत्रं नमामि यदुनायकम् ॥ ३२ ॥ वासुदेव मुकुन्देश गोविंद माधवाच्युत ॥ देहि मे तनयं कृष्ण रमानाथ महाप्रभो ॥३३॥ राजीवनेत्र गोविंद कपिलाक्ष हरे प्रभो ॥ समस्तकाम्यवरद देहि मे तनयं सदा ॥३४॥ अब्जपद्मानभः पद्मावृंदरूप जगत्पते ॥ देहि मे वरसत्पुत्रं रमानायक माधव ॥३५॥ नंदपाल धरापाल गोविंद यदुनंदन ॥ देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो ॥३६॥ दासमंदार गोविंद मुकुंद माधवाच्युत ॥ गोपाल पुंडरीकाक्ष देहि मे तनयं श्रियम् ॥३७॥ यदुनायक पद्मेश नंदगोपवधूसुत ॥ देहि मे तनयं कृष्ण श्रीधर प्राणनायक ॥ ३८ ॥ अस्माकं वांछितं देहि देहि पुत्रं रमापते ॥ भगवन्कृष्ण सर्वेश वासुदेव जगत्पते ॥ ३९ ॥ रमाहृदयसंभार सत्यभामामनःप्रिय ॥ देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो ॥ ४० ॥ चन्द्रसूर्याक्ष गोविंद पुडरीकाक्ष माधव ॥ अस्माकं भाग्यसत्पुत्रं देहि देव जगत्पते ॥ ४१ ॥ कारुण्यरूप पद्माक्ष पद्मनाभ समर्चित ॥ देहि मे तनयं कृष्ण देवकीनन्दनन्दन ॥ ४२ ॥ देवकीसुत श्रीनाथ वासुदेव जगत्पते ॥ समस्तकामफलद देहि मे तनयं सदा ॥ ४३ ॥ भक्तमन्दार गम्भीर शङ्कराच्युत माधव ॥ देहि मे तनयं गोपबाल वत्सक श्रीपते ॥ ४४ ॥ श्रीपते वासुदेवेश देवकीप्रियनन्दन ॥ भक्तमंदार मे देहि तनयं जगतां प्रभो ॥ ४५ ॥ जगन्नाथ रमानाथ भूमिनाथ दयानिधे ॥ वासुदेवेश सर्वेश देहि मे तनयं प्रभो ॥ ४६ ॥ श्रीनाथ कमलपत्राक्ष वासुदेव जगत्पते ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ ४७ ॥ दासमंदार गोविंद भक्तचिन्तामणे प्रभो ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥४८॥ गोविन्द पुंडरीकाक्ष रमानाथ महाप्रभो ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ ४९ ॥ श्रीनाथ कमलपत्राक्ष गोविन्द मधुसूदन ॥ मत्पुत्रफलसिद्ध्यर्थं भजामि त्वां

जनार्दन ॥ ५० ॥ स्तन्यं पिबंतं जननीमुखांबुजं विलोक्य मंदस्मितमुज्ज्वलाङ्गम् ॥ स्पृशंतमन्यस्तनमंगुलीभिर्वंदे यशोदांकगतं मुकुन्दम् ॥ ५१ ॥ याचेऽहं पुत्रसन्तानं भवंतं पद्मलोचन ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ ५२ ॥ अहं तु पुत्रसंपत्तिं चिंतयामि जगत्पते ॥ शीघ्रं मे देहि दातव्यं भवता मुनिवन्दित ॥ ५३ ॥ वासुदेव जगन्नाथ श्रीपते पुरुषोत्तम ॥ कुरु मां दत्तपुत्रं च कृष्ण देवेंद्रपूजित ॥ ५४ ॥ कुरु मां दत्तपुत्रं च यशोदाप्रियनन्दन ॥ मह्यं वै पुत्रसंतानो दातव्यो भवता हरे ॥५५॥ वासुदेव जगन्नाथ गोविंद देवकीसुत ॥ देहि मे तनयं राम कौशल्याप्रियनंदन ॥ ५६ ॥ पद्मापत्राक्ष गोविंद विष्णो वामन माधव ॥ देहि मे तनयं सीताप्राणनायक राघव ॥ ५७ ॥ कंजाक्ष कृष्ण देवेन्द्रमण्डित मुनिवन्दित ॥ लक्ष्मणाग्रज श्रीराम देहि मे तनयं सदा ॥ ५८ ॥ देहि मे तनयं राम दशरथप्रियनन्दन ॥ सीतानायक कंजाक्ष मुचुकुंदवरप्रद ॥ ५९ ॥ विभीषणस्य या लंका भवता दीयते पुरा ॥ अस्माकं तत्प्रकारेण तनयं देहि माधव ॥ ६० ॥ भवदीयपदांभोजे चिन्तयामि निरंतरम् ॥ देहि मे तनयं सीताप्राणवल्लभ राघव ॥ ६१ ॥ राम मत्काम्यवरद पुत्रोत्पत्तिफलप्रद ॥ देहि मे तनयं श्रीश कमलासनवंदित ॥ ६२ ॥ राम राघव सीतेश लक्ष्मणानुज देहि मे ॥ भाग्यमत्पुत्रसंतानं दशरथात्मज श्रीपते ॥ ६३ ॥ देवकीगर्भसंजात यशोदाप्रियनन्दन ॥ देहि मे तनयं राम कृष्ण गोपाल माधव ॥६४॥ कृष्ण माधव गोविन्द वामनाच्युत शंकर ॥ देहि मे तनयं श्रीश गोपबालकनायक ॥ ६५ ॥ गोपबाल महाधन्य गोविन्दाच्युत माधव ॥ देहि मे तनयं कृष्ण वासुदेव जगत्पते ॥ ६६ ॥ दिशतुदिशतु पुत्रं देवकीनन्दनोऽयं दिशतुदिशतु शीघ्रं भाग्यवत्पुत्रलाभम् ॥ दिशतुदिशतु श्रीशो राघवो रामभद्रो दिशतुदिशतु पुत्रं वंशविस्तारहेतोः ॥ ६७ ॥ दीयतां वासुदेवेन तनयो मत्प्रियः सुतः ॥ कुमारोनन्दनो सीतानायकेन सदा मम ॥ ६८ ॥ राम राघव गोविन्द देवकीसुत माधव ॥ देहि मे तनयं श्रीश गोपबालकनायक ॥ ६९ ॥ वंशविस्तारकं पुत्रं देहि मे मधुसूदन ॥ सुतं देहि सुतं देहि त्वामहं शरणं गतः ॥ ७० ॥ ममाभीष्टसुतं देहि कंसारे माधवाच्युत ॥ सुतं देहि सुतं देहि त्वामहं शरणं गतः ॥ ७१ ॥ चन्द्रार्ककल्पपर्यंतं तनयं देहि माधव ॥ सुतं देहि सुतं देहि त्वामहं शरणं गतः ॥ ७२ ॥ विद्यावंतं बुद्धिमन्तं श्रीमन्तं तनयं सदा ॥ देहि मे तनयं कृष्ण देवकीनन्दनः सदा ॥ ७३ ॥ नमामि त्वां पद्मनेत्र सुतलाभाय कामदम् ॥ मुकुन्दं पुंडरीकाक्षं गोविन्दं मधुसूदनम् ॥ ७४ ॥ भगवन्कृष्ण गोविन्द सर्वकामफलप्रद ॥ देहि मे तनयं स्वामिंस्त्वामहं शरणं गतः ॥ ७५ ॥ स्वामिंस्त्वं भगवन्राम कृष्ण माधव कामद ॥ देहि मे तनयं नित्यं त्वामहं शरणं गतः ॥ ७६ ॥ तनयं देहि गोविन्द कञ्जाक्ष कमलापते ॥ सुतं देहि सुतं देहि त्वामहं शरणं गतः ॥ ७७ ॥ पद्मापते पद्मनेत्र प्रद्युम्नजनक माधव ॥ सुतं देहि सुतं देहि त्वामहं शरणं गतः ॥ ७८ ॥ शंखचक्रगदाखड्गशार्ङ्गपाणे रमापते ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ ७९ ॥ नारायण रमानाथ राजीवपत्रलोचन ॥ सुतं मे देहि मे देहि पद्मसद्मानुवंदित ॥८०॥ राम राघव गोविन्द देवकीवरनन्दन ॥ रुक्मिणीनाथ सर्वेश नारदादिसुरार्चित ॥८१॥ देवकीसुत गोविन्द वासुदेव जगत्पते ॥ देहि मे तनयं श्रीश गोपबालकनायक ॥ ८२ ॥ मुनिवंदित गोविन्द रुक्मिणीवल्लभ

प्रभो ॥ देहि मे तनयं० ॥ ८३ ॥ गोपिकार्चित पंकेजमकरंदासक्तमानस ॥ देहि मे त० ॥ ८४ ॥ रामाहृदयपंकेजलोल माधव कामद ॥ ममाभीष्टसुतं देहि त्वामहं शरणं गतः ॥ ८५ ॥ वासुदेव रमानाथ दासानां मंगलप्रद ॥ देहि मे त० ॥ ८६ ॥ कल्याणप्रद गोविन्द मुरारे मुनिवंदित ॥ देहि मे त० ॥ ८७ ॥ पुत्रप्रद मुकुंदेश रुक्मिणीवल्लभ प्रभो ॥ देहि मे त० ॥ ८८ ॥ पुंडरीकाक्ष गोविंद वासुदेव जगत्पते ॥ देहि मे त० ॥ ८९ ॥ दयानिधे वासुदेव मुकुन्द मुनिवंदित देहि मे त० ॥ ९० ॥ पुत्रसंपत्प्रदातारं गोविन्दं देवपूजितम् ॥ वंदामहे सदा कृष्णं पुत्रलाभप्रदायकम् ॥ ९१ ॥ कारुण्यनिधये गोपीवल्लभाय मुरारये ॥ नमोऽस्तु पुत्रलाभार्थं देहि मे तनयं विभो ॥ ९२ ॥ नमस्तस्मै रमेशाय रुक्मिणीवल्लभाय ते ॥ देहि मे तनयं श्रीशगोपबालक नायक ॥ ९३ ॥ नमस्ते वासुदेवाय नित्यश्रीकामुकाय च ॥ पुत्रदाय च शेषेंद्रशायिने रंगशायिने ॥ ९४ ॥ रंगशायिन्रमानाथ मंगलप्रद माधव ॥ देहि मे तनयं श्रीश गोपबालकनायक ॥ ९५ ॥ दासाय मे सुतं देहि दीनमन्दार राघव ॥ सुतं देहि सुतं देहि पुत्रं देहि रमापते ॥ ९६ ॥ नमोऽस्तु ते ममाभीष्टपुत्रदानकृते सदा ॥ देहि मे त० ॥ ९७ ॥ मदिष्टदेव गोविन्द वासुदेव जनार्दन ॥ देहि मे त० ॥ ९८ ॥ नीतिमान्धनवान्पुत्रो विद्यावांश्च सुजायते ॥ भगवंस्त्वत्कृपायाश्च वासुदेवेंद्रपूजित ॥ ९९ ॥ यः पठेत्पुत्रशतकं सोपि सत्पुत्रवान्भवेत् ॥ श्रीवासुदेवकथितं स्तोत्ररत्नं सुखाय च ॥ १०० ॥ जपकाले पठेन्नित्यं पुत्रलाभं धनं श्रियम् ॥ ऐश्वर्यं राजसम्मानं सद्यो याति न संशयः ॥" इति लक्ष्मीकेशवसंवादे संतानगोपालस्तोत्रं सम्पूर्णम् ॥ ॥ अथ विष्णोः प्रसंगादन्यान्यपि संतानोपायविधानानि लिख्यन्ते । ( महार्णवे कौस्तुभे च )—अरुण उवाच ॥ वृथा धनं गृहं वान्यमपुत्रं जन्म निष्फलम् ॥ ममोपरि दयां कृत्वा प्रायश्चित्तं वदस्व मे ॥ १ ॥ श्रीसूर्य उवाच ॥ तीर्थ यात्रा प्रकर्तव्या रेवातापीसमुद्भवा ॥ एकेनापि हि वस्त्रेण दंपतीस्नानमुत्तमम् ॥ २ ॥ श्रवणं हरिवंशस्य ब्राह्मणोद्वाहनं खग ॥ अष्टोत्तरशतान्विप्रान्मिष्टान्नेन तु तर्पयेत् ॥ ३ ॥ ईशान इति मन्त्रेण जपं कुर्य्यात्सहस्रकम् ॥ दशांशहोमसंयुक्तं कुर्याच्च विधिवत्ततः ॥ ४ ॥ पद्मैस्तु लक्षसंख्याकैः शिवं संपूज्य यत्नतः ॥ स्वर्णधेनुः प्रदातव्या सवत्सा सुरभिस्तथा ॥ ५ ॥ घृतकुम्भं वैनतेय ब्राह्मणाय निवेदयेत् ॥ एवं कृतेन वै तस्य ह्यपत्यं जायते कलौ ॥ ६ ॥ ( महार्णवेऽपि ) सुवर्णबालकं कृत्वा दद्याद्दोलास मन्वितम् ॥ अथवा वृषभं दद्याद्विप्रोद्वाहनमेव वा ॥ ७ ॥ महारुद्रजपो वापि लक्षपद्मैः शिवार्चनम् ॥ ( गारुडे ) हरिवंशकथां श्रुत्वा शतचंडीविधानतः ॥ भक्त्या श्रीशिवमाराध्य पुत्रमुत्पादयेत्सुधीः ॥ ८ ॥ शातातपः—विप्ररत्नापहारी च सोऽनपत्यः प्रजायते ॥ तेन कार्यं विशुद्ध्यर्थं महारुद्रजपादिकम् ॥ ९ ॥ ( पद्मपुराणे ) संतानगोपालमन्त्री महारुद्रजपस्तथा ॥ पूजनं पार्थिवस्यैव गणनाथमनुं जपेत् ॥ १० ॥ मृतपुत्रत्वहरोपायमपि ( महार्णवे ) बालघाती च पुरुषो मृतवत्सः प्रजायते ॥ ब्राह्मणोद्वाहनं चैव कर्तव्यं तेन शुद्ध्यति ॥ ११ ॥ श्रवणं हरिवंशस्य कर्तव्यं च यथाविधि ॥ महारुद्रजपं चैव कारयेच्च यथाविधि ॥ १२ ॥ जुहुयाच्च दशांशेन दूर्वामाज्यपरिप्लुताम् ॥ एकादशस्वर्णनिष्कं प्रदातव्याश्च दक्षिणाः ॥ १३ ॥ एकादशशूर्पश्चैव दद्याद्वित्तानुसारतः ॥ अन्येभ्योपि

यथाशक्ति द्विजेभ्यो दक्षिणां दिशेत् ॥ १४ ॥ स्नापयेद्दंपती पश्चान्मंत्रैर्वरुणदैवतैः ॥ आचार्याय प्रदेयानि वस्त्रालङ्करणानि च ॥१५॥ ॥ अथ हरिवंशश्रवणविधानम् ॥ तत्र तावत्पूर्वोक्तपद्धतिकाण्डोक्तप्रायश्चित्तविधिना प्राजापत्यचान्द्रायणादीनि कृत्वा तदशक्तौ तत्प्रतिनिधिरूपधेनुदानादिद्वारा वा प्रायश्चित्तं विधाय सूर्यारुणसंवादमहार्णवादिकर्मविपाकग्रंथोक्तहरिवंशश्रवणादि कर्म्म कुर्य्यात् ॥ तद्यथा-दंपत्योरनुकूले सुदिने प्रातः कृतनित्यक्रियो देवालयादिपुण्यस्थले स्वगृहे वा शुभं मंडपं विधाय गोमयोपलिप्ते देशे पीठे सर्वतोभद्रं विरचय्य सपत्नीकः स्वासने प्राङ्मुख उपविश्य । आचम्य प्राणानायम्य । देशकालौ संकीर्त्य । अमुकगोत्रोऽमुकशर्माहं ममानेकजन्मार्जिताऽनपत्यत्वमृतापत्यत्वादिनिदानभूतबालघातनिक्षेपहरणविप्ररत्नापहरणादिजन्यदुरितसमूलनाशद्वारा दीर्घायुष्मद्बहुपुत्रादिसंततिप्राप्तिकामो हरिवंशश्रवणं करिष्ये । तदंगत्वेन निर्विघ्नतार्थं साङ्गतासिद्ध्यर्थं च गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये ॥ इति च संकल्प्य । गणपतिपूजनादि नान्दीश्राद्धान्तं पूर्ववत् कुर्य्यात् ॥ ततः श्रुताध्ययनसंपन्नं ब्राह्मणमासने उदङ्मुखमुपवेश्य स्वयं प्राङ्मुख उपविश्य । विप्रस्य पादप्रक्षालनं कृत्वा गंधादिभिः संपूजयेत् । ततो विभवानुसारेण वरणद्रव्याणि गृहीत्वा । देशकालौ संकीर्त्य मम दीर्घायुष्मत्पुत्रप्राप्तये अमुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्गंधाक्षतपुष्पतांबूलस्वर्णमुद्रिकाकुंडलकमंडलुवासोभिर्हरिवंशश्रवणार्थं वाचकत्वेन श्रावयितारं त्वामहं वृणे । इति वृत्वा । ॐ वृतोस्मीति प्रतिवचनानन्तरं वस्त्रालङ्कारादिभिः संपूजयेत् ॥ ततः कथाभङ्गनिवृत्तये साङ्गतासिद्ध्ये च विष्णोर्द्वादशाक्षरसंतानगोपालमहारुद्रजपपार्थिवपूजागणेशमंत्रजपकरणार्थं पंच ब्राह्मणान् वृणुयात् ॥ तथा च ( पाद्मे ) वरणं पंचविप्राणां कथाभङ्गनिवृत्तये ॥ कर्तव्यं तैर्हरेर्जाप्यं द्वादशाक्षरविद्यया ॥ १ ॥ संतानगोपालमन्त्रो महारुद्रजपस्तथा ॥ पूजनं पार्थिवस्यैव गणनाथमनुं जपन् ॥ २ ॥ आसूर्योदयमारभ्य सार्धं त्रिप्रहरार्धकम् । वाचनीया कथा सम्यग्धीरकण्ठं सुधीमता ॥३॥ कथाविरामः कर्तव्यो मध्याह्ने घटिकाद्वयम् ॥ नवरात्रं यथाशक्त्या उपोष्य शृणुयात्तदा ॥ ४ ॥ ( द्वादशाक्षरमंत्रादीनि तत्तद्देवानुष्ठानप्रकरणे द्रष्टव्यानि ) ततो वाचयिता प्रतिदिनम् ॐ नारायणाय नमः । ॐ नराय नमः ॥ ॐ नरोत्तमाय नमः ॥ ॥ ॐ देव्यै नमः॥ ॐ सरस्वत्यै नमः ॥ ओं व्यासाय नमः ॥ "ओं नमस्ते भगवन् व्यास सर्वशास्त्रार्थकोविद ॥ ब्रह्मविष्णुमहेशानमूर्ते सत्यवतीसुत ॥ १ ॥" इति नमस्कृत्य स्वगुरून्प्रणम्य स्पष्टपदाक्षरं सार्थकं वाचयेत् ॥ श्रोता प्रतिदिनं शालिग्रामप्रतिमादौ श्रीविष्णुं पुरुषसूक्तेन षोडशोपचारैः संपूज्य वाचकं पुस्तकं च गंधपुष्पादिभिः पूजयेत् ॥ दंपतीप्रतिदिनम् "ओंत्रायंताम्" इत्यादिवैदिकैर्मंत्रैः 'सुरास्त्वाम्' इत्यादिपौराणमंत्रैश्च सुस्नातावलंकृतौ कृतविश्वासौ आस्तिकौ तदेकचित्तौ शृणुयाताम् । तैलतांबूलक्षौरमैथुनखट्वाशयनानि यावत्समाप्ति वर्जयंतौ हविष्यं भुंजीयाताम् । वाचकादीनपि प्रत्यहं पायसादिना भोजयेताम् ॥ग्रंथसमाप्तौ वाचकाय स्वलंकृतां गां पयस्विनीं सवत्सां सोपस्करां सुवर्णाभरणादिदक्षिणां च दत्त्वा गायत्रीमंत्रेण सहस्रं तिलाज्यं हुत्वा न्यूनं संपूर्णतां वाचयित्वा शतं विप्रान् चतुर्विंशतिमिथुनानि च पायसान्नेन भोजयेताम् ॥ इति हरिवंशश्रवणप्रयोगः ॥ अथ हरि

वंशश्रवणमाहात्म्यम् ( पाद्मे ) "बालघाती च पुरुषो मृतवत्सः प्रजायते ॥ श्रवणं हरिवंशस्य कर्तव्यं च यथाविधि ॥ १ ॥ गुरुचंद्राग्निसूर्याणां संमुखे मेहते च यः ॥ बीजमुत्सृज्यते तेन त्यक्तरेता नरो भवेत् ॥ २ ॥ योषित्पुष्पफलानां च बालानां घातिनी तथा ॥ फलानां कर्तनकरी मातापितृवियोगिनी ॥ ३ ॥ स्राविणी परगर्भाणां तत्तत्प्रायोपयोषिणी ॥ ईदृग्विधा भविष्यंति पंचदाषयुताः स्त्रियः ॥ ४ ॥ अपुष्पा मृतवत्सा च काकवंध्या तथैव च ॥ कन्याप्रजात्वं च तथा स्रावयुक्ता स्वपातकैः ॥ ५ ॥ तासां दोषापहरार्थं हरिवंशोऽभिगर्जति ॥ तदीयश्रवणात्सद्यो दोषा नश्यंति सत्वरम् ॥ ६ ॥ नरः सुवर्णं सर्पिश्च पददानैः समन्वितम् ॥ दशावृत्तीः शृणोत्येवं वीजसाफल्यमाप्नुयात् ॥ ७ ॥ दशावृत्तीरपुष्पार्थं मृतवत्सा तु सप्त वै ॥ पंचावृत्तीः स्रवद्गर्भा काकवंध्या त्रयं तथा ॥ ८ ॥ कन्याप्रसूश्चैकावृत्तिं श्रुत्वा पुत्रमवाप्नुयात् ॥ जीविताविधिकं श्राव्यं सर्वदोषोपशांतये ॥ ९ ॥ भविष्यं जन्म संप्राप्य न भवेत्तादृशी पुनः ॥ उत्तमं सार्थपाठं च मध्यमं च निरर्थकम् ॥ १० ॥ विनार्थं शुद्धपाठश्चेदुत्तमेन समं भवेत् ॥ नवाहमुत्तमं प्रोक्तमेकविंशाहं मध्यमम् ॥ ११ ॥ निकृष्टमेकत्रिंशाहं सुखसाध्यं समाचरेत् ॥ बहुभिर्दिवसै राजन्न साध्यानां साधनं कलौ ॥ १२ ॥ तेन पारायणं साध्यं प्रोक्तं नारायणात्मना ॥ नवाहो गर्जंति कलौ चैकविंशाहिकस्तथा ॥ १३ ॥ एकत्रिंशाहिको यज्ञो वंध्यादोषविनाशकः ॥ गोव्रतं तु स्त्रिया कार्यं पारणं पुरुषेण च ॥ १४ ॥ श्रावणारंभणे राजन्यथावत्कथमामि ते ॥ अवसायांतपर्यन्तं कार्यं मासव्रतं शुभम् ॥ १५ ॥ चतुर्थ्यां प्रातरुत्थाय स्त्रिया हृष्टेन चेतसा ॥ गोव्रतं नियतं कार्यं निराहारं निरौदकम् ॥ १६ ॥ सूर्यास्तकालपर्यंतं यावद्गोरागमो भवेत् ॥ आगतां च सवत्सां हि पूजयित्वा यथाविधि ॥ १७ ॥ यवसं पुष्कलं दत्त्वा यवान्नं कुरुते स्वयम् ॥ एवं मासे चतुर्थ्यां सा शुक्लायां व्रतमाचरेत् ॥ १८ ॥ स्त्रीव्रतं कथितं राजन् पुरुषस्य तथैव च ॥ एवं मासव्रतं कृत्वा सुपुत्रं लभते ध्रुवम् ॥ १९ ॥ दरिद्रः क्षयरोगी च निर्भाग्यः पपकर्मवान् ॥ अनपत्यो मोक्षकामः शृणुयात्स कथामिमाम् ॥ २० ॥ अपुष्पा काकवंध्या च वंध्या या च मृतार्भका ॥ स्रवद्गर्भा च या नारी तया श्राव्या प्रयत्नतः ॥ २१ ॥ सुपुत्रं लभते राजन् व्यासस्य वचनं यथा ॥ सर्वान्कामानवाप्नोति कथां श्रुत्वा हरेरिमाम् ॥ २२ ॥ समाप्तौ विधिवद्वस्त्रं क्षौमं दद्याच्च वाचके ॥ हिरण्यमन्यद्द्रव्यं च दक्षिणां तत्र दापयेत् ॥ २३ ॥ हरिवंशं लिखित्वा यो वाचकाय प्रदापयेत ॥ यत्फलं भूमिदानस्य तत्फलं लभते हि सः ॥ २४ ॥ राजसूयेन तेनेष्टमश्वमेधेन वै नृप ॥ दत्तानि सर्वदानानि हरिवंशे श्रुतेऽखिले ॥ २५ ॥ राजसूयाश्वमेधाद्या यज्ञाश्चैव युगेयुगे ॥ श्रवणं हरिवंशस्य कलौ यज्ञफलप्रदम् ॥ २६ ॥ हवनं च तथा राजन्कर्तव्यं कर्मशांतये ॥ प्रतिश्लोकं च जुहुयाद्दशांशेनैव वा पुनः ॥ २७ ॥ पायसं मधुसर्पिश्च तिलान्नादिकसंयुतम् ॥ अथवा हवनं कुर्याद्गायत्र्या सुसमाहितः ॥ २८ ॥ होमाशक्तौ बुधो हेमं दद्यात्तत्फलसिद्धये ॥ नानाच्छिद्रनिरोधार्थं न्यूनताधिकताख्ययोः ॥ २९ ॥ दोषयोः प्रशमार्थं च पठेन्नामसहस्रकम् तेन स्यात्सफलं सर्वं नास्त्यस्मादधिकं यतः ॥ ३० ॥ भोजयेन्मिथुनान्येव चतुर्विंशतिरादरात् ॥ अनेन विधिना राजन् यः पुराणं समा

पयेत् ॥ ३१ ॥ तस्य स्त्री लभते गर्भं मासेकेन च भारत ॥ तत्कृत्वा लभते नारी पुत्रं भास्करतेजसम् ॥ ३२ ॥ तथा वंध्या लभेद्गर्भं व्यासस्य वचनं यथा ॥ इति पद्मपुराणे संतानोत्पादकश्रीहरिवंशश्रवणविधानं समाप्तम् ॥ ॥ अथ पुत्रोत्पादकविधानांतराणि ॥ शिवमंत्रानुष्ठानप्रकरणोक्तां पार्थिवशिवपूजां प्रत्यहं कृत्वा अभिलाषाष्टकजपं संवत्सरं कुर्यात् ॥ तद्यथा-विश्वानर उवाच ॥ एकं ब्रह्मैवाद्वितीयं समस्तं सत्यं सत्यं नेह नानास्ति किंचित् ॥ एको रुद्रो न द्वितीयोऽवतस्थे तस्मादेकं त्वां प्रपद्ये महेशम् ॥ १ ॥ एकः कर्ता त्वं हि विश्वस्य शंभो नानारूपेष्वेकरूपोऽस्य रूपः ॥ यद्वत्तपत्यर्क एकोऽप्यनेकस्तस्मान्नान्यं त्वां दिनेशं प्रपद्ये ॥ २ ॥ रज्जौ सर्पः शुक्तिकायां च रौप्यं नैरे पूरस्तन्मृगाख्ये मरीचौ ॥ यद्वत्तद्वद्विष्वगेष प्रपंचो यस्मिन् ज्ञाते तं प्रपद्ये महेशम् ॥ ३ ॥ तोये शैत्यं दाहकत्वं च वह्नौ तापो भानौ शीतभानौ प्रसादः ॥ पुष्पे गंधो दुग्धमध्ये च सर्पिर्यत्तच्छंभो त्वं ततस्त्वां प्रपद्ये ॥ ४ ॥ शब्दं गृह्णास्यश्रवास्त्वं हि जिघ्रस्यघ्राणस्त्वं व्यंघ्रिरायासि दूरात् ॥ व्यक्षः पश्येस्त्वं रसज्ञोऽप्यजिह्वः कस्त्वां सम्यग्वेत्त्यतस्त्वां प्रपद्ये ॥५॥ नो वेदस्त्वामीश साक्षाद्धि वेद नो वा विष्णुर्नो विधाताखिलस्य ॥ नो योगींद्रा नेंद्रमुख्याश्च देवा भक्तो वेद त्वामतस्त्वां प्रपद्ये ॥ ६ ॥ नो ते गोत्रं नापि जन्मापि नाख्या नो वा रूपं नैव शीलं न देशः ॥ इत्थंभूतोऽपीश्वरस्त्वं त्रिलोक्याः सर्वान्कामान्पूरयेस्तद्भजे त्वाम् ॥७॥ त्वत्तः सर्वं त्वं हि सर्वं स्मरारे त्वं गौरीशस्त्वं च नग्नोऽतिशांतः ॥ त्वं वै वृद्धस्त्वं युवा त्वं च बालस्तत्किं यत्त्वं नास्त्यतस्त्वां नतोऽस्मि ॥८॥ स्तुत्वेति भूमौ निपपात विप्रः स दंडवद्यावदतीव हृष्टः ॥ तावत्स बालोऽखिलवृद्धवृद्धः प्रोवाच भूदेव वरं वृणीहि ॥ ९ ॥ तत उत्थाय हृष्टात्मा मुनिर्विश्वानरः कृती ॥ प्रत्यब्रवीत्किमज्ञातं सर्वज्ञस्य तव प्रभो ॥ १० ॥ सर्वांतरात्मा भगवान् शर्वः सर्वप्रदो भवान् ॥ याच्ञा प्रतिनियुंक्ते मामयशोदैन्यकारिणी ॥ ११ ॥ इति श्रुत्वा वचस्तस्य देवो विश्वानरस्य ह ॥ शुचे शुचिव्रतस्याथ शुचिः स्मित्वाब्रवीच्छिवः ॥ १२ ॥ बाल उवाच ॥ त्वया शुचे शुचिष्मत्यां योऽभिलाषः कृतो हृदि ॥ अचिरेणैव कालेन स भविष्यत्यसंशयः ॥ १३ ॥ तव पुत्रत्वमेष्यामि शुचिष्मत्यां महामते ॥ ख्यातो गृहपतिर्नाम्ना शुचिः सर्वामरप्रियः ॥ १४ ॥ अभिलाषाष्टकं पुण्यं स्तोत्रमेतत्त्वयेरितम् ॥ अब्दं त्रिकालपठनात्कामदं शिवसन्निधौ ॥ १५ ॥ एतत्स्तोत्रस्य पाठं तु पुत्रपौत्रधनप्रदम् ॥ सर्वशांतिकरं वापि सर्वापत्त्यरिनाशनम् ॥ १६ ॥ स्वर्गापवर्गसम्पत्तिकारकं नात्र संशयः ॥ प्रातरुत्थाय सुस्नातो लिंगमभ्यर्च्य शांभवम् ॥ १७ ॥ वर्षं जपन्निदं स्तोत्रमपुत्रः पुत्रवान्भवेत् वैशाखे कार्त्तिके माघे विशेषनियमैर्युतः ॥ १८ ॥ यः पठेत्स्नानसमये लभते सकलं फलम् ॥ कार्तिकस्य तु मासस्य प्रसादादहमव्ययः ॥ १९ ॥ तव पुत्रत्वमेष्यामि यस्त्वन्यस्तत्पठिष्यति ॥ अभिलाषाष्टकमिदं न देयं यस्य कस्य चित ॥ २० ॥ गोपनीयं प्रयत्नेन एवं वंध्याप्रसूतिकृत् ॥ स्त्रिया वा पुरुषेणापि नियमाल्लिंगसन्निधौ ॥ २१ ॥ अब्दं जप्तमिदं स्तोत्रं पुत्रदं नात्र संशयः ॥ इत्युक्त्वांतर्दधे बालः सोपि विप्रो गृहं गतः ॥ २२ ॥ इति स्कन्दपुराणे काशीखण्डे अभिलाषाष्टकाख्यं विश्वेश्वरस्तोत्रं स० ॥ अथवा यथाशक्तिद्रव्येण विप्रस्य विवाहः कार्यस्तेनापि पुत्रो भविता ॥ अथवा रेवातापीयात्रा कर्तव्या तत्र दंपती एकेनैव वस्त्रेण

स्नाताम् ॥ अथवा अष्टोत्तरशतान् विप्रान् पायसान्नादिना भोजयेत् । अथवा–ओं ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ १ ॥ इति मंत्रेण सहस्रमयुतं लक्षं वा जपं कृत्वा तद्दशांशेन तिलपायसान्नै र्होमं कुर्यात् । अथवा–लक्षसंख्याकैः कमलैः शिवपंचाक्षरेण शिवपूजा कार्या । अथवा–दानकल्पोक्तविधिना स्वर्णधेनुः सवत्सा सुरभिर्वा दातव्या । अथवा–घृतपूर्णं ताम्रकलशं दद्यात् । अथवा–सुवर्णमयं बालकं कृत्वा दोलायां संस्थाप्य यथाविधि दानं कार्यम् । अथवा–वृषभदानमेकादशधेनुदानं च कार्यम् । अथवा–रुद्रानुष्ठानप्रकरणोक्तं महारुद्रजपं कुर्यात् । अथवा–देवीमंत्रानुष्ठान प्रकरणोक्तं पूर्ववत् शतचंडीविधानं च कार्यम् । अथवा--गयायात्रा कार्या । अथवा-- सूर्याराधनं कुर्यात् । एषामन्यतमेनापि फलाऽप्रातौ विष्णुयागं कुर्यात् ॥ अथ विष्णुयागः (बृहत्पाराशरे) "अथान्यं संप्रवक्ष्यामि विधिं पावनमुत्तमम् ॥ अस्मत्तातप्रभावोयंरघुपौत्रस्य धीमतः ॥ १ ॥ अनपत्यस्य पुत्रार्थं चक्रे वैभांडकस्तु यम् ॥ सहस्रशीर्षसूक्तस्य विधानं चरुपाककृत् ॥ २ ॥ यैर्यैर्नृपैः कृतः पूर्वमन्यैरपि द्विजोत्तमैः ॥ सिध्यंति सर्वमंत्राणि विधिविद्भिर्द्विजोत्तमैः ॥ ३ ॥ उपासितानि सद्भक्त्या श्रोत्रियैः श्रुतिपारगैः ॥ आत्मविद्भिर्निराहारैर्व्रतिभिर्मंत्रवित्तमैः ॥ ४ ॥ क्रियमाणाः क्रियाः सर्वाः सिध्यंति व्रतचारिभिः ॥ न पाठान्न धनात्स्नानान्नात्मनः प्रतिपादनात् ॥ ५ ॥ प्राक्तनात्कर्मणः पुंसां सर्वाः सिध्यंति सिद्धयः ॥ शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे ॥ ६ ॥ द्वादश्यां पुत्रकाम चरुं कुर्वीत वैष्णवम् ॥ दंपत्योरुपवासः स्यादेकादश्यां सुरालये ॥ ७ ॥ ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥ चरुं पुरुषसूक्तेन श्रपयेत्पुत्रकाम्यया ॥ प्राप्नुयाद्वैष्णवं पुत्रं चिरायुः संततिक्षमम् ॥ ८ ॥ द्वादश्यां द्वादश चरून्विधिवन्निर्वपेद्द्विजः ॥ यः करोति महायागं विष्णुलोकं स गच्छति ॥ ९ ॥ हुत्वाज्यं विधिवत्पूर्वमृग्भिः षोडशभिस्तथा ॥ समिधोऽश्वत्थवृक्षस्य हुत्वाज्यं जुहुयात्पुनः ॥ १० ॥ उपस्थानं ततः कुर्याद्ध्यात्वा तु मधुसूदनम् ॥ हविर्होमं ततः कृत्वा दद्यात्पञ्च घृताहुतीः ॥ ११ ॥ कामप्रदं नमस्कृत्य नारी नारायणं प्रति ॥ संप्राप्य च हविःशेषं वसेच्छयनशनी गृहे ॥ १२ ॥ विधिमेतं ततः कृत्वा कर्त्तव्यं द्विजतर्पणम् ॥ अन्यस्त्रीषु निवर्तेत यावद्गर्भं न विन्दति ॥ १३ ॥ अप्रसूता मृतापत्या या च कन्याप्रसूर्भवेत्॥ क्षिप्रं सा जनयेत्पुत्रं पाराशरवचो यथा ॥१४॥ होमांते दक्षिणां दद्याद्धेम वासस्तिलान्वसु ॥ भूमिं हिरण्यं रत्नानि यथासंभवमेव च ॥१५॥ यः सिद्धमंत्रः सततं द्विजेन्द्रः सम्पूज्य विष्णुं विधिवत्सुतार्थी ॥ इदं विधानं विदधाति सम्यक्स पुत्रमाप्नोति हरिप्रसादात् ॥१६॥ इतिबृहत्पाराशरीये पुत्रार्थं पुरुषसूक्तविधानम् ॥ ॥ अथ विष्णुयागप्रयोगः ॥ विष्णुयागं चिकीर्षुः पूर्वोक्तविधिना चान्द्रायणधेनुदानादिद्वारा प्रायश्चित्तं संपाद्य कृतपापक्षयो मलमासशुक्रास्तादिवर्जिते कार्त्तिकमार्गशिरमाघान्यतमे मासि पूर्वोक्तमंडपादिसंभारान् विधाय शुक्लैकादश्यां प्रातर्नद्यादौ स्नात्वा संध्यादि नित्यकर्म्म कृत्वा चन्द्रताराद्विबलान्विते सुमुहूर्त्ते सपत्नीकः स्वासने प्राङ्मुख उपविश्य । आचम्य प्राणानायम्य । देशकालौ संकीर्त्य । अमुकगोत्रोऽमुकशर्म्मा मम अनपत्यत्वमृतापत्यत्वदोषनिदानदुरितक्षयद्वारा तथा अस्याश्च भार्य्यायाश्चतुर्विधवंध्यात्वनिदानदुरितविनाशार्थं बहुदीर्घायुःसुपुत्रप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमनया भार्य्यया

सह पुरुषसूक्तेन जपपूजाहोमात्मकं स्वयं ब्राह्मणद्वारा वा विष्णुयागं करिष्ये । तदंगत्वेन निर्विघ्नतासिद्धये श्रीगणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च करिष्ये ॥ इति संकल्प्य। गणेशपूजनादि नांदीश्राद्धांतं सर्वं पूर्ववत्कुर्य्यात् । ततः श्रोत्रियं ब्राह्मणमाचार्यत्वेन वृत्वा पुष्पमण्डपे वक्ष्यमाणविधिना न्यासादिपूर्विकां स्तोत्रांतां च यथाविधि विष्णुपूजां कुर्यात् तद्यथा-आत्मनो बहुसद्वृत्तदीर्घायुःपुत्रलब्धये गर्भदोषापहतये विष्णुयागं समारभे ॥१॥ इति पठित्वा व्रतं प्रगृह्य ( तद्दिने सुरालये दंपत्योरुपवासः ) देशकालौ स्मृत्वा मम सभार्य्यस्य जन्मान्तरार्जितपापजन्याऽनपत्यत्वदोषविनाशार्थं सत्पुत्रप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं च पुरुष सूक्तेन विष्ण्वाराधनम् ( होमं ) जपं च करिष्ये । तदंगत्वेन न्यासध्यानादि कर्म्म करिष्ये। इति संकल्पं कुर्यात् । ॐ सहस्रशीर्षेति षोडशर्चस्य पुरुषसूक्तस्य नारायणऋषिः। अनुष्टुप्छंदः । अन्त्यायास्त्रिष्टुप्छंदः । पुरुषो नारायणो देवता । न्यासे पूजायां होमे च विनियोगः । ॐ नारायणऋषये नमः शिरसि । ॐ अनुष्टुप्छंदसे नमो मुखे। ॐ पुरुषपरमात्मदेवतायै नमः हृदये । इति ऋष्यादिन्यासः । ॐ सहस्रशीर्षा० इति वामकरे ॥ १ ॥ ओं पुरुषऽएवेदꣳसर्वमिति दक्षिणकरे ॥ २ ॥ ओं एतावानस्यमहिमेति वामपादे ॥ ३ ॥ ॐ त्रिपादूर्ध्वमिति दक्षिणपादे ॥ ४ ॥ ओं ततोविराडिति वामजानुनि ॥ ५ ॥ ओं तस्माद्यज्ञात्सर्वहुत इति दक्षिणजानुनि ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुतऽऋच इति वामकटौ ॥ ७ ॥ ओं तस्मादश्वा इति दक्षिणकटौ ॥ ८ ॥ ओं तंयज्ञमिति नाभौ ॥ ॥ ९ ॥ ओं यत्पुरुषं व्यदधुरिति हृदये ॥ १० ॥ ओं ब्राह्मणोस्य मुखमिति कंठे ॥११॥ ओं चंद्रमामनस इति वामबाहौ ॥१२॥ओं नाभ्याऽआसीदिति दक्षिणबाहौ ॥ १३ ॥ओं यत्पुरुषेणेति मुखे ॥ १४ ॥ ओं सप्तास्यासन्निति अक्ष्णोः ॥ १५ ॥ ओं यज्ञेनयज्ञमिति मूर्ध्नि ॥ १६ ॥ अथ पंचांगन्यासः ॥ ओं अद्भ्यःसम्भृतमिति हृदये ॥ १ ॥ ओं वेदाहमेतमिति शिरसि ॥ २ ॥ ओं प्रजापतिश्च इति शिखायाम् ॥ ३ ॥ ओं योदेवेभ्यऽआतपतीति कवचायहुं ॥ ४ ॥ ओं रुचं ब्राह्ममिति अस्त्राय फट् ॥ ॥ ५ ॥ अथवा-ओं ब्राह्मणोस्य० हृदयाय नमः ॥ १ ॥ ओं चन्द्रमामनस० शिरसे स्वाहा ॥ २ ॥ ओं नाभ्या आसीत्० शिखायै वषट् ॥ ३ ॥ ओं सप्तास्यासन्० कवचाय हुम् ॥ ४ ॥ ओं यज्ञेन यज्ञ० अस्त्राय फट् इति पंचांगन्यासः ॥ एव न्यासं मूर्तौ स्वात्मनि च कृत्वा ध्यायेत् ॥ " नमस्कृत्य महाविष्णुं संस्मरेत्क्षीरसागरम् ॥ क्षीरसागरमध्यस्थं श्वेतद्वीपं विचिंतयेत् ॥ १ ॥ कोटियोजनविस्तीर्णं भानुकोटिसमप्रभम् ॥ तन्मध्यं तु महादिव्यं प्रासादं रत्ननिर्मितम् ॥ २ ॥ प्रासादमध्ये चन्द्राभं सिंहासनमनुत्तमम् ॥ तस्योपरि महानागं शेषाख्यं मणिमण्डितम् ॥ ॥ ३ ॥ तदासने महाविष्णुं तत्फणाच्छादमस्तकम् ॥ वेदसूक्तैः स्तूयमानं नानारत्नविभूषितम् ॥ ४ ॥ घननीलतनुं देवमप्सरोगणसेवितम् ॥ तृणादिब्रह्मपर्यंतं निश्चगं विश्वसाक्षिणम् ॥ ५ ॥ चराचरगुरुं देव घनश्यामं चतुर्भुजम् ॥ ब्रह्माद्यैरर्चितं विष्वक्

सर्वाभरणभूषितम् ॥ ६ ॥ एवं ध्यायेन्महाविष्णुं गदाब्जासिसुशङ्खकम् ॥ वामभागे स्थितां देवीं नीलकुञ्चितमूर्द्धजाम् ॥ ७ ॥ हेमारविन्दप्रतिमां मौक्तिकाभरणोज्ज्वलाम् ॥ दाडिमं सव्यहस्ते तु दक्षिणालिङ्ग्य संततिम् ॥ ८ ॥ श्रीविष्णवभिमुखां ध्यायेद्भ क्ताभीष्टफलप्रदाम् ॥" इति ध्यानं कृत्वा स्ववामे कलशं पुरतः शंखं घंटां च संपूज्य शालिग्रामप्रतिमादौ देवं ध्यायन् पूज येत् ॥ ॐ सहस्रशीर्षा० इत्यावाहनम् ॥ १ ॥ पुरुषऽएवेदꣳइत्यासनम् ॥ २ ॥ ॐ एतावानस्य०इति पाद्यम् ॥ ३ ॥ ॐ त्रिपा दूर्द्ध०इत्यर्घ्यम् ॥ ४ ॥ ओं ततोविराडजायत० इत्याचमनम्॥५॥ओं तस्माद्यज्ञात्स०इति स्नानम् ॥६॥ ( स्नानांते पुनराचमनम् ) तत्तन्मंत्रैः पंचामृतस्नानं कार्य्यं ततः ( पुरुषसूक्तेनाऽभिषेकः कार्यः ) ओं तस्माद्यज्ञात्सर्व्वहुत० इति वस्त्रम् ॥७॥(वस्त्रांतेआचमनम् ) ओं तस्मादश्वा० इति यज्ञोपवीतम ॥ ८ ॥ ( आचमनम् ) ओं तं यज्ञंबर्हि० इति गंधम् ॥ ९ ॥ ओं यत्पुरुषं० इति पुष्पम् ॥ ॥ १० ॥ ओं ब्राह्मणोस्य० इति धूपम् ॥ ११ ॥ ओं चंद्रमामनसो इति दीपम् ॥ १२ ॥ ओं नाभ्याऽआसीत्० इति नैवेद्यम् ॥ ॥ १३ ॥ ( आचमनम् ) ओं यत्पुरुषेण० इति नमस्कारम् ॥ १४ ॥ ओं सप्तास्या० इतिप्रक्षिणाम् ॥ १५ ॥ ओं यज्ञेन यज्ञमयजन्त० इति पुष्पांजलिम् ॥ १६ ॥ ( दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ॥ अर्चितं तेन वै सर्वं त्रैलोक्यं सचरा चरम् ॥ १ ॥ एवं द्वादशमासेषु शुक्लैकादश्यां तत्तद्विष्णुनाम्ना पूजां कुर्य्यात् ॥ प्रतिमासं विष्णुनामानि (ऋग्विधाने ) केशवं मार्ग शीर्षे तु पौषे नारायणं विदुः ॥ माधवं माघमासे च गोविंदं फाल्गुने तथा ॥१॥ चैत्रे चैव तथा विष्णुं वैशाखे मधुसूदनम् ॥ ज्येष्ठे त्रिविक्रमं विद्यादाषाढे वामनं विदुः ॥२॥ श्रवणे श्रीधरं विद्याद्धृषीकेशं ततः परम् ॥ आश्विने पद्मनाभं तु दामोदरं च कार्तिके॥३॥ द्वादशैतानि नामानि प्रतिमासं तु पूजयेत् । एवं षोडशोपचारपूजां कृत्वा यथाशक्ति पुरुषसूक्तं जपित्वा देवाय निवेद्य तां रात्रिं देवा लये जागरित्वा द्वादश्यां प्रभाते पुरुषसूक्तेन स्नात्वा कृतनित्यक्रियः पूर्वोक्तन्यासादिपूर्वकं विष्णुं संपूज्य देवदक्षिणभागे कुंडे स्थंडिले वा पंचभूसंस्कारपूर्वकं स्वगृह्योक्तविधिना अग्निं स्थापयेत् ॥ तद्यथा-ओं सहस्रशीर्षा ० इति कुंडं कृत्वोपले पनोल्लेखनांतं कर्म कुर्य्यात् । ओं पुरुषऽएवेदꣳ इति प्रोक्षणम् ॥ २ ॥ ओ एतावानस्य० इत्यग्निस्थापनम् ॥ ३ ॥ त्रिपादू र्ध्वम्० इति समित्प्रक्षेपेण समिध्य ॥ स्वगृह्योक्तविधिनाऽग्नौ चरुस्थापनांतं कर्म कृत्वा ॥ ४ ॥ ओं ततो विराडिति मंत्रेणाज्यसं स्कारञ्चरुश्रपणं च कुर्य्यात् ॥ ५ ॥ ओं तस्माद्यज्ञात्सर्वं ० इति वह्नेर्मध्ये पद्मासनकल्पनम् ॥ ६ ॥ ( चिंतयेत्तत्र देवेशं काला नलसमप्रभम् ॥ विवृत्तास्यं वाहशीर्षं रक्तास्यं रक्तलोचनम् ॥१॥) इति ध्यात्वा । ओं तस्माद्यज्ञात्सर्व्वहुतऋच० इति गंधम् ॥ ७ ॥ ओं तस्मादश्वा० इति पुष्पम् ॥ ८ ॥ ओं तयज्ञंबर्हिषि० इति धूपम्० ॥ ९ ॥ ओं यत्पुरुषं० इति दीपम् ॥ १० ॥ ओं ब्राह्मणो

स्य० इति नैवेद्यं च दद्यात् ॥ ११ ॥ एवमग्निं संपूज्य पुरुषसूक्तेन प्रार्थयेत् ॥ अथ पुरुषसूक्तम् ॥ हरिः ॐ सहस्रशीर्षा
पुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिं सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषएवेदं सर्वं यद्भूतं यच्च भाव्यम् ॥
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपाद
स्यामृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ॥ ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥ ४ ॥
ततो विराडजायत विराजो अधिपूरुषः ॥ सजातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥ तस्माद्यज्ञात्सर्व
हुतः सम्भृतं पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे वायव्यानारण्याग्ग्राम्याश्च ये ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि
जज्ञिरे ॥ छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्मादश्वा अजायन्त ये के चोभयादतः ॥ गावो ह जज्ञिरे तस्मात्त
स्माज्जाता अजावयः ॥ ८ ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ॥ तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥ य
त्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ॥ मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते ॥ १० ॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राज
न्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्याँ शूद्रो अजायत ॥ ११ ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ॥ श्रोत्राद्वायु
श्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ॥ पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ
॥ २ ॥ अकल्पयन् ॥ १३ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ॥ वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १४ ॥ सप्ता
स्यासन्परिधयस्त्रिः सप्त समिधः कृताः ॥ देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि
प्रथमान्यासन् ॥ ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥ इति पुरुषसूक्तम् ॥ ॥ ततो घृते
नाघारावाज्यहोमं कृत्वा शुचिः वाग्यतः पूर्ववत् षोडशभिः ऋग्भिः प्रत्यृचं घृताक्ताऽश्वत्थसमिधो हुत्वा तैरेव षोडशभिश्चरुहोमं
च कुर्य्यात् इदं जगद्बीजाय पुरुषाय इति त्यागः ॥ ततः पुनराज्यहोमं कृत्वा मधुसूदनं ध्यात्वा प्रार्थयेत् ॥ " जितं ते पुंड
रीकाक्ष नमस्ते विश्वभावन ॥ नमस्तेस्तु हृषीकेश महापुरुष पूर्वज ॥ १ ॥ नमोहिरण्यगर्भाय प्रधानव्यक्तरूपिणे ॥ ॐ नमो
वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥ २ ॥ देवानां दानवानां च सामान्यमधिदैवतम् ॥ सर्वदा चरणद्वंद्वं व्रजामि शरणं तव ॥ ३ ॥
एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ॥ अध्यक्षश्चानुमंता च गुणमायासमावृतः ॥ ४ ॥ संसारसागरं घोरमनंतं क्लेशभाज
नम् ॥ त्वामेव शरणं प्राप्य निस्तरंति मनीषिणः ॥५॥ न ते रूपं न चाकारो नायुधानि नचास्पदम् ॥ तथापि पुरुषाकारो भक्तानां
त्वं प्रकाशसे ॥ ६ ॥ नैव किंचित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् ॥ नैव किंचिदसाध्यं ते न च साध्योऽसि कस्यचित् ॥७॥

कार्य्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ॥ योगिनां परमां सिद्धिं परमं ते परं विदुः ॥ ८ ॥ अहं भीतोस्मि देवेश संसारेस्मिन्महाभये ॥ त्राहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥ ९ ॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु वाच्युत ॥ शरीरेपि गतौ चापि वर्त्तते मे महद्भयम् ॥ १० ॥ त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि ॥ निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥ ११ ॥ विज्ञानं यदिदं प्राप्य यदिदं स्थानमर्जितम् ॥ जन्मान्तरेऽपि मे देव माभूदस्य परिक्षयः ॥ १२ ॥ दुर्गतावपि जातायां त्वं गतिस्त्वं मतिर्मम ॥ यदि नाथश्च विज्ञेयस्तावतास्यां कृती सदा ॥ १३ ॥ आकामकलुषं चित्तं मम ते पादयोः स्थितम् ॥ कामये वैष्णवत्वं च सर्वजन्मसु केवलम् ॥ १४ ॥ इत्येवमनया स्तुत्या स्तुत्वा देवं दिनेदिने ॥ किंकरोमीति चात्मानं देवायैव निवेदयेत् ॥" इत्युपस्थाय प्रदक्षिणानमस्कारौ कृत्वा । आज्येन पंचवारुणहोमं कृत्वा होमशेषं समाप्य आचार्याय धेनुं भूमिं हिरण्यं च दत्त्वा ब्राह्मणान् भोजयेत् ॥ ततः कामप्रदं नारायण नमस्कृत्य वैष्णवचरुशेषमितराऽऽहारपरिहारपूर्वकं दंपती पवित्रौ भूत्वा भुंजीयाताम् । रात्रौ च पत्नी पतिं नारायणरूपतया मनसा ध्यात्वा तेन सह उपसंगम्य वामपार्श्वशायिनी भवेत् । पतिश्च यावद्गर्भाधानमन्यां स्वस्त्रियं परिहरेत् । एवं मासिमासि शुक्लद्वादश्यां द्वादशमासपर्य्यंतं कृत्वा संवत्सरांते मासांते वा जपदशांशहोमं कुर्य्यात् ॥ एवं कृते निःसंदेहेन पुत्रो भविता । सहस्रसंख्याचरुहोमेन विष्णोः परं पदं प्राप्नुयात् ( तथा च महार्णवे ऋग्विधाने ) "अथाभिधीयते कर्म पुत्रकामस्य वैष्णवम् ॥ शुक्लपक्षे शुभे वारे सुनक्षत्रे सुगोचरे ॥ १ ॥ द्वादश्यां पुत्रकामस्तु चरुं कुर्वीत वैष्णवम् ॥ दंपत्योरुपवासः स्यादेकादश्यां सुरालये ॥ २ ॥ ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥ चरुं पुरुषसूक्तेन श्रपयेत्पुत्रकाम्यया ॥ ३ ॥ प्राप्नुयाद्वैष्णवं पुत्रमचिरात्संततिक्षमम् ॥ द्वादशद्वादशीष्वेवं पयसा निर्वपेच्चरुम् ॥ ४ ॥ यः करोति सहस्रं तु याति विष्णोः परं पदम् ॥ हुत्वाग्निं विधिवत्सम्यगृग्भिः षोडशभिर्बुधः ॥ ५ ॥ कृतांजलिपुटो भूत्वा स्तवं ताभिः प्रयोजयेत् ॥ समिधोश्वत्थवृक्षस्य हुत्वाज्यं जुहुयात्पुनः ॥ ६ ॥ उपस्थानं हुताशस्य ध्यात्वा तु मधुसूदनम् ॥ हविर्होमं ततः कुर्य्यात्प्रत्यृचं वाग्यतः शुचिः ॥ ७ ॥ सूक्तेन जुहुयादाज्यमादावंते च पूर्ववत् ॥ हविःशेषं नमस्कृत्य नारी नारायणं पतिम् ॥ ८ ॥ भक्षयित्वा हविःशेषं लघ्वाशी संविशेत्क्षणम् ॥ ततः कृत्वा त्विदं कर्म्म कर्त्तव्यं द्विजतर्पणम् ॥ ९ ॥ द्वितीयां स्त्रीं निवर्तेत यावद्गर्भं न विंदति ॥ अपुत्रा मृतपुत्रा वा या च कन्या प्रसूयते ॥ १० ॥ क्षिप्रं सा जनयेत्पुत्रमृष्यश्रृंगो यथाब्रवीत् ॥" अथ होमात्मकप्रयोगः ॥ पूर्वोक्तचंद्रतारादिबलान्वितं सुमुहूर्त्ते कृष्णैकादश्यामुपक्रम्य ब्राह्मणद्वारा अयुतपुरुषसूक्तजपं विष्णोः सहस्रनामसहस्रजपं च समाप्य शुक्लैकादश्यां दंपती उपोष्य द्वादश्यां प्रातर्नद्यादौ स्नात्वा कृतनित्यक्रियो मंडपमागत्य देशकालौ संकीर्त्य । ममानपत्यत्वदोषनिवृत्तिद्वारा तथास्या भार्य्यायाश्च चतुर्विधवंध्यत्वनिदानदोषदुरितक्षयद्वारा दीर्घायुष्मत्सत्पुत्रप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं च ब्राह्मणद्वारा कारितजपदशांशसंख्यया पुरुषसूक्तकरणकहोमात्मकं वैष्णवयागं सहस्रमखं विष्णुसहस्रनामशतसंख्यहोमसहितं सनवग्रहमखं करिष्ये । इति संकल्प्य पूर्ववत् गणपतिपूजनादि नांदीश्राद्धांतं कृत्वा आचार्यादिवरणं दिग्रक्षणं च कुर्य्यात् ॥ ततः कुंडे स्थं

डिले वा पुत्रप्रदनामानं वैश्वानरं यथाविधि संस्थाप्य । तदीशान्यां नवग्रहवेद्यां तत्तन्मंत्रैः पूर्वोक्तपद्धतिकांडवद्ग्रहमण्डलदेवताः संपूज्य तदीशान्यां कलशं संस्थापयेत् ॥ ततो मध्यपीठे सर्वतोभद्रमंडले ब्रह्मादिदेवानावाह्य पूजयित्वा । तन्मध्ये ताम्रकलशम् । "ॐ महीद्यौ०" इत्यादि पूर्ववत्पूर्णपात्रनिधानांतं संस्थाप्य। तत्वायामीति वरुणं संपूज्य । 'कलशस्य मुखे' इत्याद्यभिमंत्र्य । 'देव दानव०' इति प्रार्थयेत् । ततः कलशोपरि पट्टवस्त्रं प्रसार्य तत्र विष्णोर्गंधाष्टकेन अष्टदलं विलिख्य तन्मध्ये निष्केण तदर्द्धेन वा सुवर्णेन निर्मितं सगरुडासनं सलक्ष्मीकं विष्णुमभ्युत्तारणपूर्वकं संस्थाप्य तस्य वामभागे सौवर्णं रुद्रं दक्षिणभागे ब्रह्माणं च स्थापयेत् ॥ ततः पूर्वोक्तप्राणप्रतिष्ठां कृत्वा तेषां पुरत ईशानादितंडुलपुञ्जेषु वक्ष्यमाणदेवताः स्थापयेत् ॥ तद्यथा-ॐ ध्रुवाय नमः ॥ १ ॥ ॐ स्कन्दाय नमः ॥ २ ॥ ॐ बलये नमः ॥ ३ ॥ ॐ व्यवसाय नमः ॥ ४ ॥ ॐ स्वयंभुवे नमः ॥ ५ ॥ ॐ औशनसे नमः ॥ ६ ॥ ॐ क्रतवे नमः ॥७॥ ॐ दक्षाय० ॥८॥ ॐप्रजापतये० ॥९॥ॐ भीष्माय०॥१०॥ॐ कपिलाय० ॥११॥ ॐ च्यवनाय नमः ॥ १२ ॥ ॐ अर्जुनाय नमः ॥१३॥ ॐ पुलस्त्याय नमः ॥१४॥ ॐ पुलहाय नमः ॥ १५ ॥ ॐ अगस्त्याय नमः ॥१६॥ ॐ वसिष्ठाय नमः ॥१७॥ ॐ आथर्वणाय० ॥१८॥ ॐ रुक्मांगदाय नमः॥१९॥ ॐ भरताय०॥२०॥ ॐधौम्याय० ॥२१॥ ॐमुचुंदाय नमः ॥ २२ ॥ ॐ नंदवर्द्धनाय नमः ॥ २३ ॥ ॐ प्रह्लादाय नमः ॥ २४ ॥ ॐ नारदाय नमः ॥ २५ ॥ ॐ वैन्याय नमः ॥ २६ ॥ ॐ नंदनाय नमः ॥ २७ ॥ ॐ वायुनंदनाय नमः ॥ २८ ॥ ॐ विष्वक्सेनाय नमः ॥ २९ ॥ ॐ जयाय नमः ॥३०॥ ॐ भद्राय नमः ॥ ३१ ॥ ॐ सुग्रीवाय नमः ॥ ३२ ॥ ॐ हनुमते नमः ॥ ३३ ॥ ॐ विभीषणाय नमः ॥ ३४ ॥ इति स्थापयेत् ॥ ततः पूर्वादिदिक्षु इंद्रादिदशदिक्पालान् ( पुनरुत्तरस्याम ) ॐ दुर्गायै नमः । ॐ क्षेत्रपालाय नमः । ॐ गणपतये नमः ॥ इति संस्थाप्य ॥ विष्णोः पुरतः ॥ ॐ गरुडाय नमः ॥ इति गरुडं स्थापयेत् ॥ ततः पूर्ववत् पुरुषसूक्तन्यासं ध्यानं च कृत्वा पुरुषसूक्तेन षोडशोपचारैः श्रीविष्णुं संपूज्य पायसान्नं निवेद्य । ॐ त्र्यंबकमिति मंत्रेण रुद्रम् ॐ ब्रह्मयज्ञानमिति ब्रह्माणं चावाह्य पूजयेत् ॥ ततः स्कंदादिपरिवारदेवतापूजां कृत्वा प्रार्थयेत्-"कृष्णाय गोकुलेशाय वंशरक्षाकराय च ॥ यशोदानन्दभद्राय नमोऽस्तु गुणसिंधवे ॥ १ ॥ सुतान् देहि सुतान् देहि त्वं पूजाऽक्षयपुण्यतः ॥ वासुदेव जगन्नाथ कृपालो भक्तवत्सल ॥२॥" इति प्रार्थ्य । पुरुषसूक्तेन प्रणमेत् ॥ ततः स्थापितवह्नौ स्वगृह्योक्तविधिना विष्णुमुद्दिश्य पूर्ववत् पृथक् पयसि वैष्णवं चरुं श्रपयित्वा आज्यभागान्ते अर्कादिसमिच्चरुतिलाज्यद्रव्यैर्ग्रहहोमं कृत्वा सर्वतोभद्रमंडलदेवताभ्यश्च हुत्वा प्रधानदेवहोमं कुर्य्यात् ॥ तद्यथा-वैष्णवचरुणाश्वत्थवृक्षसमिद्भिस्तिलाज्येन च पूर्वोक्तपुरुषसूक्तेन सहस्रहोमं कुर्य्यात् होमान्ते । इदं विश्वरूपाय नारायणाय न मम इति त्यागः ( होमस्तु सकलसूक्तेन एकाहुतिरेवं सहस्रहोम इति महार्णवः ) ततः ॐ त्र्यंबकंयजामहे० इति मंत्रेण रुद्राय। ॐ ब्रह्मयज्ञानमिति ब्रह्मणे चाष्टोत्तरशतहोमः कार्य्यः । ततो ध्रुवादीनामपि प्रणवादिस्वाहांतैर्नाममंत्रैः यथाशक्ति होमं कृत्वा विष्णुसहस्रनामभिः शतावृत्त्या पायसं जुहुयात् । ॐ विश्वाय स्वाहा॥ १ ॥इत्यादिनामभिर्होमः । ततः स्विष्टकृदादिहोमांतं समाप्य बलि

दानं कृत्वा पुरुषसूक्तेन एव पूर्णाहुतिं दत्त्वा तेनैव वैश्वानरं प्रार्थ्य शेषं समापयेत् ॥ तत आचार्याय सवत्सां पयस्विनीं गां दत्त्वा कर्मपूर्णतां वाचयित्वा शतब्राह्मणान् चतुर्विंशतिमिथुनानि च पायसान्नेन भोजयेत् । ततो वैष्णवं चरुशेषं दंपती पवित्रौ भूत्वा भुञ्जीयाताम्॥ यः सिद्धमंत्रः सततं द्विजेंद्रः संपूज्य विष्णुं विधिवत्सुतार्थी ॥ इदं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरिप्रसादात् ॥१॥(ऋग्विधाने विशेषः पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम् ॥ आत्मज्ञानमिदं पुण्यं योगज्ञानमिदं परम् ॥ फलाहारो जपेन्नित्यं पश्यत्यात्मानमात्मनि ॥ फलानि भुक्त्वोपवसेन्मासमद्भिश्च वर्तयेत् ॥ अरण्ये निवसेन्नित्यं जपन्निममृषिं सदा ॥ ऋग्भिस्त्रिषवणं काले स्नायादप्सु समाहितः ॥ आदित्यमुपतिष्ठेत सूक्तेनानेन नित्यशः ॥ आज्याहुतिरनेनैव हुत्वैवं चिन्तयेदृषिम् ॥ ऊर्ध्वं मासात्फलाहारस्त्रिभिर्वर्षैर्जपेदिदम् ॥ तद्भक्तस्तन्मना युक्तो दश वर्षाण्यनन्यभाक् ॥ साक्षात्पश्यति तं देवं नारायणमनामयम् ॥ ज्ञानगम्यं परं सूक्ष्मं व्याप्यं सर्वमवस्थितम् ॥ ग्राह्यमत्यंतयत्नेन स्रष्टारं जगतोऽव्ययम् ॥ अनायासाद्यमाप्नोति भक्तं न परिहापयेत् ॥ भक्तानुकम्पी भगवाञ्जायते पुरुषोत्तमः ॥ येनयेन च कामेन जपेत प्रयतः सदा ॥ प्राप्तकामः समृद्धः स्याच्छ्रद्दधानस्य कुर्वतः ॥ होमं वाप्यथवा जाप्यमुपहारमथो चरुम् ॥ कुर्वीत येन कामेन तत्सिद्धिमुपधारयेत ॥ ज्ञातिश्रैष्ठ्यं महद्वित्तं यशो लोके परां गतिम् ॥ पापेन विप्रमोक्षश्च भवेत्सर्वं न संशयः ॥ इति पुरुषसूक्तविधानं समाप्तम् ॥ ॥ अथ गर्भिण्यः गर्भस्रावहरणविधानं ( महार्णवे सूर्यारुणसंवादे च) श्रीअरुण उवाच ॥ स्रवद्गर्भा भवेत्सा तु बालकं हंति या विषैः ॥ प्रायश्चित्तं कथं स्वामिन् सत्यं वद ममाग्रतः॥१॥ श्रीसूर्य उवाच॥ एकवासो विधिं चैव कुर्याच्च विधिवत्ततः ॥ चन्द्रसूर्योपरागे तु स्वर्णधेनुं प्रदापयेत् ॥२॥ ब्राह्मणान्भोजयेत्पश्चात्प्राजापत्यचतुष्टयम् ॥ सारस्वतजपं लक्षं दशांशहोमसंयुतम् ॥ ३ ॥ श्रवणं हरिवंशस्य एकचित्तेन मानद ॥ शतपत्रैः शिवं पूज्य षण्मासाद्रविवासरे ॥४॥ कुंभस्ताम्रमयश्चैव घृतेन परिपूरितः ॥ दातव्यो ब्राह्मणायैव सर्वकार्यार्थसिद्धये ॥५॥ एवं कृते वैनतेय गर्भो निश्चलतां व्रजेत् ॥ इति गर्भस्रावहरणविधानम् ॥ एवं गर्भस्थैर्येऽपि कन्यानामेवोत्पत्तौ पुत्रार्थे पुत्रकामेष्टिं कुर्यात् ॥ तत्प्रयोगस्तु कौस्तुभादौ ज्ञेयः ॥ इति सन्तानोपायविधानानि समाप्तानि ॥ अथ सूर्यारुणसंवादोक्तमेकवस्त्रस्नानम् ॥ अरुण उवाच ॥ यत्त्वया कथितं स्वामिन्नेकवस्त्राभिषेचनम् ॥ दंपत्योरनपत्यादिदौर्भाग्यशमनं परम् ॥ १ ॥ विधिं तस्याखिलं ब्रूहि यथा श्रुतिनिरूपितम् ॥ कीदृग्वस्त्रं कथं धार्यमुभाभ्यामेव तत्पुनः ॥ २ ॥ श्रीसूर्य उवाच ॥ शुभे मासे सिते पक्षे सानुकूले ग्रहे दिने ॥ नदनद्योः समायोगे महानद्योर्द्वयोरपि ॥३॥ प्रत्यूषे सिद्धिमास्थाय शरीरस्य यथाविधि ॥ विधिं विविधमाधाय पत्न्या सह समाहितम् ॥४॥ विधाय श्रद्धया युक्तो मंत्रमेतमुदीरयेत ॥ कर्मसाक्षिन्जगन्नाथ यन्मया पूर्वजन्मना ॥ ५ ॥ पंचधापत्यदुःखाख्यं दौर्भाग्यमतुलं भवेत् ॥ प्राप्तं तस्य विनाशाय विधिं वद ममोत्तमम् ॥६॥ सह पत्न्या दिवानाथ तत्र सिद्धिं प्रयच्छ मे ॥ एवमुच्चार्य तद्वस्त्रमहतं द्विदशात्मकम् ॥७॥ सार्द्धद्वयकरायामं पंचविंशकरोन्मितम् ॥ विततं तंतुभिः श्लक्ष्णैस्तन्मध्ये तद्भृतं वनैः ॥ ८ ॥ शुचा सुवासा मन्त्रेण मंत्रितं देववेदिना ॥ सम्यग्दत्तं तदादाय परिदध्यात्सवस्त्रकम् ॥९॥ दृढनीवीरभिन्नानि देशे त्रिद्विगुणीकृतम् ॥ तच्छेषदक्षि

णांगस्था सपत्नीकं सुपुत्रिका ॥ १० ॥ परिदध्यात्प्रयत्नेन संवृत्तममस्तका ॥ केशान्संमृज्य संगोप्य पतिपृष्ठानुगामिनी ॥ ११ ॥ उपविश्य जलस्थाने तावुभावपि दंपती ॥ प्रक्षाल्य पाणिपादौ च स्वाचांतौ मम सम्मुखौ ॥ १२ ॥ वेदि काँल्लौकिकांश्चापि सावधानौ जितेंद्रियौ ॥ आपस्त्वमसि सर्वेषां देवानामग्रणीः प्रभो ॥ १३ ॥ जीवनं सर्वजंतूनां गर्भं धेहि मम प्रभो ॥ यानि यानीह पापानि अनपत्यकराणिनौ ॥१४॥ हत्वा तान्यखिलानीश गर्भं धेहि मम प्रभो ॥ यदावाभ्यां महत्पापं पुरा जन्मनि दुःखकृत् ॥ १५ ॥ कृतं तन्मे विनिर्धूय गर्भं धेहि मम प्रभो ॥ त्वयैवाधिष्ठिताः सर्वे नदीनदजलाशयाः ॥ १६ ॥ पुनंति पापिनः सर्वान्गर्भं धेहि मम प्रभो ॥ त्वमावाभ्यां प्रयत्नाभ्यां शरणं दुःखशांतये ॥ १७ ॥ प्रार्थितः परमेशान गर्भं धेहि मम प्रभो ॥ आशास्महे महाभाग संततिं लोकपावनीम् ॥ १८ ॥ प्रसन्नाद्भवतः स्वामिन्गर्भं धेहि मम प्रभो ॥ भूतप्रेतपिशाचाद्या ये नौ संततिहारकाः ॥ १९ ॥ पाशेनाहृत्य तान्सर्वान्गर्भं धेहि मम प्रभो ॥ एवं संप्रार्थ्य ता आपो दंपती तौ जलाद्बहिः ॥२०॥ सुनाप्य प्राङ्मुखस्तिष्ठेन्मंत्रं सुश्रावयेदिति ॥ इमांगिरस आदित्येभ्यो द्वयमिमं शुभम् ॥२१॥ श्रावयन् भुवि विन्यस्य पात्रं तत्प्र णमेच्च माम् ॥ ततोऽन्ये वाससी शुभ्रे शुचिनी परिधाय तौ ॥ २२ ॥ उपविश्यासने शुभ्रे पुष्पस्रक्चन्दनान्वितौ ॥ ततः सकनकं सर्पिः स्पृशेत् सुरभीं द्विजान् ॥ २३ ॥ प्रणिपत्य ततः शेषं कर्म सर्वं समापयेत् ॥ आचार्यः स्वविधानेन दैवज्ञेनानुमोदितः ॥ २४ ॥ हस्तमात्रे ततस्तत्र स्थंडिलेष्टांगुलोच्छ्रये ॥ स्थापयेद्विधिवद्वह्निं निजशाखाविधानतः ॥ २५ ॥ पायसं निर्वपेत्तत्र वैधे यविधिवत्ततः ॥ तस्मादीशानभागे तु स्थंडिले कलशं न्यसेत् ॥ २६ ॥ अव्रणं पयसा पूर्णं स्वर्णपुष्पौषधैर्युतम् ॥ पूर्णपात्रं न्यसेत्तत्र पूर्णं पुष्पफलाक्षतैः ॥ २७ ॥ स्वस्वमंत्रैः प्रतिष्ठाप्य महेशमुमया सह ॥ तस्याग्रे प्रजपेयुस्ते ब्राह्मणामंत्रकोविदाः॥ २८ ॥ पंचांगान्विधिवन्मंत्रान् रुद्रसूक्तैश्च याजुषैः ॥ उद्वास्याथ चरून्सम्यगाचार्यः स्वविधानतः ॥२९॥ आघारावाज्यभागौ च हुत्वा वा ह्यविभावसुम् ॥ दिक्पतीन् परितः पूज्य स्वस्वमंत्रैः समाहितः ॥ ३० ॥ प्रजापते तथाग्न्यां गर्भं धेहीति चापराम् ॥ अपां पृष्ठां तथा होता इमंमे सप्तवारुणम् ॥ ३१ ॥ ततः स्विष्टकृतं हुत्वा कर्मशेषं समापयेत् ॥ होमांते शिवमभ्यर्च्य सशिवं विधि पूर्वकम् ॥ ३२ ॥ जपं होमं निवेद्यास्मै विधिद्विजकोविदः ॥ ततो विप्राय विदुषे सुशांताय पयस्विनीम् ॥ ३३ ॥ वस्त्रस्रग्दक्षि णोपेतां सवत्सां धेनुमुत्तमाम् ॥ तथालंकृतसर्वांगं वृषभं शुभलक्षणम् ॥ ३४ ॥ दत्त्वा तौ दंपती पश्चाद्दैवज्ञेनानुमोदितौ ॥ मंत्रमु च्चारयेयातां विधिवद्विहिताईणैः ॥ ३५ ॥ देवदेव जगन्नाथ सर्वपापौघनाशन ॥ कर्मणानेन दानेन तथा गोयुगलस्य तु ॥ ३६ ॥ संतुष्टः सततं भूत्वा संततिं देहि मे प्रभो ॥ ततस्तु वैणवं पात्रं शिवस्याग्रे निवेदयेत् ॥ ३७ ॥ आचार्याय प्रदेयानि दानानि निजशक्तितः ॥ गुरवे वाससी दत्त्वा कर्मशेषं समापयेत् ॥ ३८ ॥ प्रणम्य देवतास्ताश्च विसृज्य च विधानतः ॥ ततः कुम्भाम्भसा विप्रा अभिषिंचेयुरादृताः ॥ ३९ ॥ मंत्रैश्च वारुणैः सौरैः शांतिस्वस्त्ययनादिभिः ॥ पौराणैरागमोक्तैस्तु नानाफलविधायिभिः ॥ ४० ॥ नांदीमुखेन विधिना ततः श्राद्धं समारभेत् ॥ नमो व इति मंत्रेण नमस्कारमुदीरयेत् ॥ ४१ ॥ सप्त ते तांत्रिका मंत्रा

श्छांदसाः पंच वारुणाः ॥ त्वन्नः प्रभृतयो द्वौ च वारुणौ चापरावपि ॥४२॥ एवं तज्जलमामंत्र्य स्तुत्वा मंत्रैः प्रणम्य च ॥ निम ज्योन्मज्य च पुनस्तत्र स्नानं समाचरेत् ॥ ४३ ॥ प्रयोगं विधिवत्कृत्वा पुत्रकामसमृद्धये ॥ स्नास्यामहे स भगवान् प्रचेता नौ प्रसीदतु ॥ ४४ ॥ स्नायीयातां ततः स्नानं द्रव्यैर्मंत्राभिमंत्रितैः ॥ मृत्स्नागोमयगोमूत्रैर्द्रव्यैर्दधिपयोघृतैः॥ ४५ ॥ तिलामलकपिष्टैश्च सर्वौषधिकुशोदकैः ॥ निवृत्त्य विधिवत्स्नानं दंपती तावुभावपि ॥ ४६ ॥ स्नापितेव ततः पत्नी एकैकद्रव्यसंचयैः ॥ औदुंबरं बहुफलं बिभ्रती निजमूर्द्धनि ॥ ४७ ॥ मंत्रपूर्वं स्वपतिना दत्तां शाखां स्रजान्विताम् ॥ सप्तौषधिसुसंपूर्णैः कलशैश्चैव सप्तभिः ॥ ४८ ॥ मंत्रपूतैः स दैवज्ञः स्नापयेत्तां विधानतः ॥ वर्धाकरश्च रास्ना च सहदेवी शतावरी ॥ ४९ ॥ पंचैला लक्ष्मण चेति सप्तौ षध्योऽभिषेचने ॥ या ओषध्यनुवाकेन सप्तौषध्यभिषेचने ॥ ५० ॥ ततस्तु वैणवं पात्रं सप्तधान्योपसंभृतम् ॥ मुद्गतंडुलगोधूमयव शालिसमन्वितैः ॥ ५१ ॥ सकंगुसहमाषैश्च धान्यैरिति च सप्तभिः ॥ फलानि विन्यसेत्तत्र याः फलिनीरिति मंत्रतः ॥ ५२ ॥ नालिकेरं च नारिंगं दाडिमं बीजपूरकम् ॥ उत्तथीमथ पूगं च जंबीरं चात्र सप्तमम् ॥५३॥ वैदिकैर्लौकिकैर्मंत्रैः पूर्वोक्तैरेव सप्तभिः ॥ शिरोमेत्यनुवाकेन स्नानं दौर्भाग्यनाशनम् ॥ ५४ ॥ समाप्य विधिवत्पश्चान्मंत्रमेतमुदीरयेत् ॥ शिशुमृत्युकरं यन्मे दौर्भाग्यं प्रागुपस्थितम् ॥ ५५ ॥ पादांगुष्ठादानखाग्रादाकेशांतं समुत्सृजन् ॥ स्नानेनानेन मे देव तान्सर्वानपसारय ॥ ५६ ॥ इति विज्ञाप्य वरुणं मां च कर्मादिसाक्षिणम् ॥ एकचित्तः स्मरेद्देवमुमया सहितं शिवम् ॥ ५७ ॥ नांदीमुखेन विधिना संतर्प्य पितृदे वताः ॥ विभ्राडित्यनुवाकेन फलपुष्पाक्षतांजलिः ॥ ५८ ॥ उपस्थाय ततः पश्चात्कर्मशेषं समापयेत् ॥ ततस्तद्वैणवं पात्रं शिर स्याधाय योषितः ॥ ५९ ॥ कुशाग्रेण समालभ्य पठेन्मंत्रान्सुशांतिकान् ॥ स्वस्त्ययनाय च तथा शांतये च मुहुर्मुहुः ॥ ६० ॥ मध्यमं पिंडमश्नाति पत्नी दैवज्ञनोदिता ॥ आधत्त पितरो गर्भमिति मंत्रेण मंत्रितम् ॥ ६१ ॥ आचम्य विधिवत्पश्चात्कर्मशेषं समाप येत् ॥ शतं च भोजयेदन्यान् द्विजान्संतोष्य शक्तितः ॥ ६२ ॥ कृतकृत्यौ च तौ स्यातां पुत्रपौत्रसुखान्वितौ ॥ इति सूर्यारुणसंवादोक्त मेकवस्त्रस्नानविधानम् ॥ अथ रुद्रस्नानविधानम् (हेमाद्रौ भविष्योत्तरे)—"युधिष्ठिर उवाच ॥ रुद्रस्नानं विधानेन कथयस्व जनार्दन ॥ सर्वदोषोपशमनं सर्वशान्तिप्रदं नृणाम् ॥ १ ॥ श्रीकृष्ण उवाच ॥ देवसेनापतिं स्कंदं रुद्रपुत्रं षडाननम् ॥ अगस्त्यो मुनिशार्दूलः सुखासीनमुवाच ह ॥ २ ॥ सर्वज्ञोऽसि कुमार त्वं प्रसादाच्छंकरस्य वै ॥ स्नानं रुद्रविधानेन ब्रूहि कस्य कथं भवेत् ॥ ३ ॥ स्कन्द उवाच ॥ मृतवत्सा तु या नारी दुर्भगा ऋतुवर्जिता ॥ या सूते कन्यकां वंध्या स्नानमासां विधीयते ॥ ४ ॥ अष्टम्यां वा चतुर्दश्या मुपवासपरायणा ॥ ऋतौ शुद्धे चतुर्थेऽह्नि प्राप्ते सूर्यदिनेऽथवा ॥ ५ ॥ नद्योस्तु संगमे कुर्यान्महानद्योर्विशेषतः ॥ शिवालये तथा गोष्ठे विविक्ते वा गृहांगणे ॥ ६ ॥ आहिताग्निं द्विजं शांतं धर्मज्ञं सत्यशीलिनम् ॥ स्नानार्थं प्रार्थयेदेनं निपुणं रुद्रकर्मणि ॥ ७ ॥ ततस्तु मंडपं कुर्याच्चतुरस्रमुदक्प्लवम् ॥ बद्धचंदनमाल्यं च गोमयेनानुलेपितम् ॥ ८ ॥ तन्मध्ये श्वेतरजसा संपूर्णं पद्ममालिखेत् ॥ मध्ये तस्य महादेवं स्थापयेत्कर्णिकोपरि ॥ ९ ॥ दद्यादलेषु नंद्यादींश्चतुर्षु विधिपूर्वकम् ॥ इंद्रादिलोकपालांश्च दलेष्वन्येषु विन्य

सेत् ॥ १० ॥ देवीं विनायकं चैव स्थापयेत्तत्र पार्थिव ॥ दत्त्वार्घ्यं गन्धपुष्पं च धूपं दीपं गुडौदनम् ॥ ११ ॥ भक्ष्यान्नानाविधान्दद्यात्फलानि विविधानि च ॥ चतुष्कोणेषु भृंगारमश्वत्थदलभूषितम् ॥ १२ ॥ एकैकं विन्यसेद्ब्रह्मन्सर्वौषधिसमन्वितम् ॥ चतुर्दिक्षु मंडपस्य दद्याद्भूतबलिं ततः ॥ १३ ॥ आग्नेय्यां दिशि कर्त्तव्यं मंडलस्य समीपतः ॥ अग्निकार्यं शुभे कुण्डे पत्रपुष्पैरलंकृते ॥ १४ ॥ लवणं सर्पिषा युक्तं घृतेन मधुना सह ॥ मानस्तोकेन जुहुयात्कृतहोमे नवग्रहे ॥ १५ ॥ द्वितीयस्याग्निकार्यस्य कर्त्ता च ब्राह्मणो भवेत्॥रुद्रजाप्यकृदाचार्यं सितचंदनचर्चितम् ॥ १६ ॥ सितवस्त्रपरीधानं सितमाल्यविभूषितम् ॥ शोभयेत्कंकणैः कंठचैः कर्णवेष्टाङ्गुलीयकैः ॥ १७ ॥ मंडपस्य समीपस्थो जपेद्रुद्रान्विमत्सरः ॥ यावदेकादशगताः पुनरेव जपेच्च तान् ॥ १८ ॥ देवमंडलवत्कार्य्यं द्वितीयं मंडलं शुभम् ॥ तस्य मध्ये तु सा नारी श्वेतपुष्पैरलंकृता ॥ १९ ॥ श्वेतवस्त्रपरीधाना श्वेतगन्धानुलेपना ॥ सुखासनोपविष्टांतामाचार्य्यो रुद्रजापकः ॥ २० ॥ अभिषिञ्चेत्ततश्चैनामर्कपत्रपुटाम्बुना ॥ चतुःषष्टिऋचेनैव रुद्रेणैकादशेन तु ॥ शतानि सप्तवार्णानां चतुर्भिरधिकानि तु ॥२१॥(चतुःषष्टिसंख्यानामेकादशकृत्वः) पवित्रामिन्द्रकीटाजगृहगोदावरीमृदम् ॥ सर्वौषधी रोचनां च नदीतीर्थोदकानि च ॥ २२ ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ राजद्वाराच्च गोष्ठाच्च मृदमानीय संक्षिपेत् ॥२३॥ एतत्प्रक्षिप्य कलशे शिवसंज्ञे सुपूजिते ॥ आपादतलकेशांतं कुक्षिदेशे विशेषतः ॥ २४ ॥ सर्वांगं लेपयेद्भक्त्या सुशीला काचिदंगना ॥ रुद्राभिजप्तेन ततः स्नापयेत्कलशेन ताम् ॥२५॥ तोयपूर्णाष्टकलशैरश्वत्थदलपूरितैः॥ सर्वतो दिक्स्थितैः पश्चात्स्थापयेत्कलशाक्षतैः॥ ॥२६॥ एवं स्नाता स्नापकाय दद्याद्गां कांचनं तथा ॥ होतुरेवात्र निर्दिष्टा दक्षिणा गौः पयस्विनी॥२७॥ ब्राह्मणानामथान्येषां स्वशक्त्या मुनिपुंगव ॥ गोवस्त्रकांचनादीनि दत्त्वा सर्वान्क्षमापयेत् ॥ २८ ॥ कृतेनानेन विप्रेंद्र रुद्रस्नानेन भामिनी॥सुभगा कांतिसंयुक्ता बहुपुत्रा प्रजायते ॥ २९ ॥ सर्वेष्वपि हि मासेषु ब्राह्मणानुमतौ शुभम् ॥ तस्मादवश्यं कर्तव्यं पुत्रार्त्त्री सुखमिच्छती ॥ ३० ॥ या स्नानमाचरति रुद्रमिति प्रसिद्धं श्रद्धान्विता द्विजवरानुमता नतांगी ॥ दोषान्निहत्य सकलांश्च शरीरभाजो भर्तुः प्रिया भवति भारत जीववत्सा ॥ ३१ ॥ इति भविष्योत्तरोक्तं रुद्रस्नानम् ॥ अथ रुद्रस्नानप्रयोगः विधानपारिजाते–यस्यां कस्यांश्चिदष्टम्यां चतुर्दश्यां वा संभारान् संभृत्य चतुर्थेऽह्नि ऋतुस्नातायां सूर्यवारे वा नदीसंगमं गत्वा तदभावे शिवालयादिकमुपेत्य पुण्याहं वाचयित्वा आहिताग्न्यादिगुणविशिष्टं द्विजमाचार्यत्वेन वृत्वा ब्रह्माणं च वृणुयात् । अथाचार्योऽष्टहस्तं चतुरस्रं मंडपं कृत्वा तन्मध्ये श्वेतरजसा अष्टदलपद्ममालिख्य ब्रह्मादीन्मण्डलदेवांस्तत्रावाह्य पूजयित्वा कर्णिकायां रुद्रकलशं मन्त्रवत् स्थापयित्वा दध्यक्षतादिभिः शोभयित्वा तत्र महादेवमावाह्य पूर्वादिचतुर्षु दलेषु नंदिनं भृङ्गरिटिं कालं महाकालं च क्रमेणावाह्य तेष्वेव अष्टदलेषु इन्द्रादीनष्टदिक्पालांश्चावाह्य महादेवस्य वामभागे पार्वतीदक्षिणभागे विनायकं चावाह्य षोडशोपचारैः पूजयित्वा पद्मचतुष्कोणेषु कुंभचतुष्टयं यथाविधि स्थापयित्वा उदकमासिच्य अश्वत्थपल्लवादीनि निक्षिप्य वरुणमावाह्य कलशं प्रार्थ्य ततो मण्डपस्य अष्टदिक्षु कुंभाष्टकं स्थापयित्वा इंद्रादीन् संपूज्य तेभ्यो बलीन् दत्त्वा कुंभान् संस्पृशन्नेकादशावृत्त्या रुद्रान् जपेत् ॥ तस्मिन्काले ब्रह्मा पद्मादाग्नेय्यां दिशि कुण्डे

स्थंडिले वा अग्निमुपसमाधाय दधिमधुघृतोपेतं लवणमाहुतिपरिमितं ॐ मानस्तोके इति मंत्रेण अष्टोत्तरशतवारं नवग्रहहोमपूर्वकं जुहुयात् ॥ तत्र आचार्यो देवमण्डलवत् मण्डलान्तरं कृत्वा तत्र यजमानदंपती श्वेतवस्त्रावृतौ उपवेश्य पूर्वादिकलशोदकेन रुद्राध्यायस्य एकैकमंत्रमुक्त्वा अर्कपत्रपुटगृहीतेनाभिषिंचेत् ॥ चतुःषष्टिमंत्रविभागेन ॥ एवमेकादशावृत्तौ चतुरधिकसप्तशतानि भवंति ॥ अथ रुद्रकलशोदकेन सप्तमृत्तिकासर्वौषधिगोरोचनादियुतेन आपादतलकेशांतं विशेषतः कुक्षिदेशे अभिषिंचेत् ॥ ततो मंडपस्य अष्टदिक्षु स्थापितकलशोदकैरभिषिञ्चेत् ॥ एवं स्नात्वा स्नानवस्त्रं परित्यज्य वस्त्रांतरं परिधाय आचार्याय सुवर्णादि दक्षिणात्वेन दत्त्वा होमकर्त्रे पयस्विनी गौर्देया। अन्येषाञ्च भूयसी दक्षिणा देया ततो यथा शक्ति ब्राह्मणान् भोजयेत् ॥ इति अनुष्ठानप्रकाशे रुद्रस्नानप्रयोगः समाप्तः॥ अथ हरिप्रसंगात्तद्वाहनगरुडमंत्रपुरश्चरणम् ॥ ( मंत्रमहोदधौ ) मन्त्रो यथा–" क्षिपः ॐ स्वाहा " इति पंचाक्षरो मंत्रः ॥ अस्य गरुडमंत्रस्य अनंत ऋषिः । पंक्तिश्छंदः । पक्षींद्रो देवता । ॐ बीजम् ॥ स्वाहा शक्तिः । ममाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ अनंतऋषये नमः शिरसि ॥ १ ॥ ॐ पंक्तिश्छंदसे नमः मुखे ॥ २ ॥ ॐ पक्षींद्रदेवतायै नमः हृदये ॥ ३ ॥ ॐ बीजाय नमः गुह्ये ॥ ४ ॥ ॐ स्वाहाशक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ ज्वलज्वलमहामतिस्वाहा इति हृदयाय नमः ॥ १ ॥ गरुडचूडाननस्वाहा इति शिरसे स्वाहा ॥ २ ॥ गरुडशिखे स्वाहा इति शिखायै वषट् ॥ ३ ॥ गरुडप्रभञ्जनजय जयप्रभेदय २ वित्रासय २ विमर्दय २ स्वाहा इति कवचायहुं ॥ ४ ॥ उग्ररूपधर सर्वविषहर भीषय २ सर्वं दह २ भस्मीकुरु २ स्वाहा इति नेत्रत्रयाय वौषट् ॥ ५ ॥ अप्रतिहतबलाप्रतिहतशासन हुंफट् स्वाहा इत्यस्त्राय फट् ॥ ६ ॥ इति हृदयादिषडंग न्यासः ॥ ॥ अथ वर्णन्यासः ॥ ॐ क्षि नमः पादयोः ॥ १ ॥ ॐ पं नमः कटौ ॥ २ ॥ ॐ नमः हृदये ॥ ३ ॥ ॐ स्वां नमः मुखे ॥ ४ ॥ ॐ हां नमः मूर्ध्नि ॥ ५ ॥ इति वर्णन्यासं कृत्वा ध्यायेत् ॥ " तप्तस्वर्णनिभं फणींद्रनिकरैर्क्लृप्तांगभूषं प्रभुं स्मर्तॄणां शमयंतमुग्रमखिलं नॄणां विषं तत्क्षणात् ॥ चंच्वग्रप्रचलद्भुजंगमभयं पाण्योर्वरं बिभ्रतं पक्षोच्चारितसामगीतममलं श्रीपक्षिराजं भजे ॥ १ ॥ " एवं ध्यात्वा पूर्वोक्ते वैष्णवे पीठे मातृकायंत्रं विलिख्य तन्मध्ये ॐ पक्षिराजाय स्वाहा इति मंत्रेण मूर्तिं प्रकल्प्य मूलेन पाद्यादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्य्यात् ॥ तद्यथा–षट्कोणे आग्नेयादिकोणेषु मध्ये दिक्षु च पूर्वोक्तहृदयादिमंत्रषडंगपूजां कृत्वा तद्बहिरष्टपत्रेषु पूर्वादिक्रमेण । ॐ अनंताय नमः ॥ १ ॥ ॐ वासुकये० ॥ २ ॥ ॐ तक्षकाय० ॥ ३ ॥ ॐ कर्कोटकाय० ॥ ४ ॥ ॐ पद्माय० ॥ ५ ॥ ॐ महापद्माय० ॥ ६ ॥ शंखपालाय० ॥ ७ ॥ ॐ कुलिकाय नमः ॥ ८ ॥ इत्यष्टौ नागान् पूजयेत् । ततो भूपुरे पूर्वादिदिक्षु इंद्रादिदशदिक्पालान् ( तद्बहिः ) वज्राद्यायुधानि च पूजयेत् ॥ इत्यावरणपूजां कृत्वा धूपादिनीराजनांतपूजां कृत्वा जपं कुर्य्यात् । अस्य पुरश्चरणं पंचलक्षात्मकं ततो जपांते दशांशहोमं तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि च कुर्य्यात् । तथा च-पंचलक्षं जपेन्मंत्रान्दशांशं जुहुयात्तिलैः ॥ एवं सिद्धे मनौ मंत्री नाशयेद्गरलद्वयम् ॥ १ ॥ विष्णुभक्तिपरो नित्यं यो भजेत्पक्षिनायकम् ॥ शत्रून्सर्वान्पराभूय सुखी भोगसम

न्वितः ॥ २ ॥ जीवेदनेकवर्षाणि सेवितो धरणीधवैः ॥ कलेवरांते श्रीनाथसायुज्यं लभते तु सः ॥ ३ ॥ इति गरुडमन्त्रपुरश्चरणम् ॥ ॥अथ श्रीहनुमन्मंत्रविधानम् ॥ तत्र तावद्द्वादशाक्षरहनुमन्मंत्रप्रयोगः । ( मंत्रमहोदधौ ) सुमुहूर्त्ते कृतनित्यक्रियः शुचिः स्वासने प्राङ्मुख उपविश्य मूलेनाचम्य प्राणानायम्य देशकालौ संकीर्त्य ममामुककामनासिद्धिद्वारा श्रीहनुमद्देवताप्रीत्यर्थं द्वादशसहस्रमन्त्रजपात्मकं पुरश्चरणं करिष्ये । इति संकल्प्य तदंगतया गणपतिपूजनादिनांदीश्राद्धांतं कृत्वा ( ब्राह्मणद्वारा कारिते ) आचार्यजापकवरणं च कुर्य्यात् । ततो जपस्थाने हनुमत्प्रतिमासंमुखो दर्भासनादौ प्राङ्मुख उदङ्मुखो वा उपविश्य आचम्य प्राणायामं कृत्वा देशकालौ संकीर्त्य अमुककामनासिद्धिपूर्वकश्रीहनुमत्प्रीतये अमुकसंख्यापरिमितहनुमन्मन्त्रजपं करिष्ये इति संकल्प्य भूतशुद्धिं प्राणप्रतिष्ठामंतर्मातृकाबहिर्मातृकान्यासं च पूर्ववत कृत्वा शिवपञ्चाक्षरोदितं श्रीकंठादिकलान्यासं च कुर्य्यात ॥ अथ श्रीहनुमन्मंत्रन्यासादिप्रयोगः ॥ मूलमन्त्रो यथा—"ॐ हौं ह्स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं हनुमते नमः इति द्वादशाक्षरो मन्त्रः ॥ अस्य श्रीहनुमन्मन्त्रस्य श्रीरामचन्द्र ऋषिः । जगती छंदः । हनुमान् देवता । ह्रौं बीजम् । ह्स्फ्रें शक्तिः । हनुमते कीलकम् इष्टसिद्ध्यर्थे जपे विनियोगः । ॐ श्रीरामचन्द्रऋषये नमः शिरसि ॥ १ ॥ ॐ जगतीछन्दसे नमः मुखे ॥ २ ॥ ॐ हनुमद्देवतायै नमः हृदये ॥३॥ ॐ ह्रौं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ ह्स्फ्रें शक्तये नमः पादयोः ॥ ५ ॥ ॐ हनुमते कीलकाय नमः नाभौ ॥६॥ ॐ इष्टार्थे विनियोगाय नमः अञ्जलौ ॥ ७ ॥ इति ऋष्यादिन्यासः । ॐ हौं अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ ह्स्फ्रें तर्जनीभ्यां नमः ॥ २ ॥ ॐ ख्फ्रें मध्यमाभ्यां नमः ॥ ३ ॥ ह्रौं अनामिकाभ्यां नमः ॥ ४ ॥ ह्स्ख्फ्रें कनिष्ठिकाभ्यां नमः ॥५॥ ॐ ह्रौं करतलकरपृष्ठाभ्यां नमः ॥६॥ इति करन्यासः ॥ एवं हृदयादिन्यासं कुर्य्यात ॥ ॐ हौं नमः मूर्ध्नि ॥ १ ॥ ॐ ह्स्फ्रें नमः ललाटे ॥२॥ ॐ ख्फ्रें नमः नेत्रयोः ॥ ३ ॥ ॐ ह्स्रौं नमः मुखे ॥४॥ ॐ ह्स्ख्फ्रें नमः कंठे ॥५॥ ॐ ह्रौं नमः बाह्वोः ॥६॥ ॐ हं नमः हृदि ।७॥ ॐ नुं नमः कुक्षौ ॥ ८ ॥ ॐ मं नमः नाभौ ॥ ९ ॥ ॐ तें नमः लिंगे ॥ १० ॥ ॐ नं नमः जानुनोः ॥ ११ ॥ ॐ मं नमः पादयोः ॥ १२ ॥ इति वर्णन्यासः ॥ ॐ हौं नमः मूर्ध्नि ॥ १ ॥ ॐ ह्स्फ्रें नमः ललाटे ॥ २ ॥ ॐ ख्फ्रें नमः मुखे ॥ ३ ॥ ॐ ह्सौं नमः हृदि ॥ ४ ॥ ॐ ह्स्ख्फ्रें नमः नाभौ ॥ ५ ॥ ह्सौं नमः ऊर्वोः ॥ ६ ॥ ॐ हनुमते नमः जंघयोः ॥ ७ ॥ ॐ नमः नमः पादयोः ॥ ८ ॥ इति पदन्यासः मूलेन व्यापकं कुर्यात ॥ इति न्यासविधिं कृत्वा ध्यायेत ॥ "बालार्कायुततेजसं त्रिभुवनप्रक्षोभकं सुन्दरं सुग्रीवादिसमस्तवानरगणैः संसेव्यपादाम्बुजम् ॥ नादेनैव समस्तराक्षसगणान्संत्रासयंतं प्रभुं श्रीमद्रामपदांबुजस्मृतिरतं ध्यायामि वातात्मजम् ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य पीठपूजां कुर्यात् । तद्यथा—पीठे ॐ मण्डूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति संपूज्य पूर्वादिदिक्षु । ॐ विमलायै नमः ॥ १ ॥ ॐ उत्कर्षिण्यै नमः ॥ २ ॥ ॐ ज्ञानायै नमः ॥ ३ ॥ ॐ क्रियायै नमः ॥ ४ ॥ ॐ योगायै नमः ॥ ५ ॥ ॐ प्रह्व्यै नमः ॥ ६ ॥ ॐ सत्यायै नमः ॥ ७ ॥ ॐ ईशानायै नमः ॥ ८ ॥ ( मध्ये ) ॐ अनुग्रहायै नमः ॥ ९ ॥ इति पीठशक्तीः पूजयेत ॥ ॐ ह्रौं

नमो भगवते सकलगुणात्मशक्तियुक्ताय अनंताय योगपीठात्मने नमः इत्यासनं दत्त्वा मूलेन मूर्तिं प्रकल्प्य पुष्पादि रुपचारैः संपूज्य आवरणपूजां कुर्यात् । तद्यथा-षट्कोणे आग्नेयादिकोणेषु मध्ये दिक्षु च । ॐ ह्रौं हृदयाय नमः ॥ १ ॥ ह्स्फ्रें शिरसे स्वाहा ॥ २ ॥ ख्फ्रें शिखायै वषट् ॥ ३ ॥ ह्स्त्रौं कवचाय हुम् ॥ ४ ॥ ह्स्ख्फ्रें नेत्रत्रयाय वौषट् ॥ ५ ॥ ह्सौं अस्त्राय फट् ॥ ६ ॥ इति षडङ्गानि पूजयेत् ॥ इति प्रथमावरणम् ॥ १ ॥ तद्बहिः पूर्वाद्यष्टदलेषु । ॐ रामभक्ताय नमः ॥ १ ॥ ॐ महातेजसे नमः ॥ २ ॥ ॐ कपिराजाय नमः ॥ ३ ॥ ॐ महाबलाय नमः ॥ ४ ॥ ॐ द्रोणाद्रिहारकाय नमः ॥ ५ ॥ ॐ मेरुपीठकार्चनकारकाय नमः ॥ ६ ॥ ॐ दक्षिणाशाभास्कराय नमः ॥ ७ ॥ ॐ सर्वविघ्ननिवारकाय नमः ॥ ८ ॥ इति द्वितीयावरणम् ॥ २ ॥ ततो दलाग्रेषु ॐ सुग्रीवाय नमः ॥ १ ॥ ॐ अङ्गदाय नमः ॥ २ ॥ ॐ नीलाय नमः ॥ ३ ॥ ॐ जाम्बवते नमः ॥ ४ ॥ ॐ नलाय नमः ॥ ५ ॥ ॐ सुषेणाय नमः ॥ ६ ॥ ॐ द्विविदाय नमः ॥ ७ ॥ ॐ मैन्दाय नमः ॥ ८ ॥ इति तृतीयावरणम् ॥३॥ ( ततो दलसंधिषु ) ॐ रक्षोघ्नाय नमः ॥१॥ ॐ विषघ्नाय० ॥२॥ ॐ रिपुघ्नाय० ॥ ३ ॥ ॐ व्याधिघ्नाय नमः ॥ ४ ॥ ॐ चौरघ्नाय० ॥ ५ ॥ ॐ भूतघ्नाय० ॥ ६ ॥ ॐ परशस्त्रास्त्रमन्त्रघ्नाय० ॥ ७ ॥ ॐ भय घ्नाय नमः ॥ ८ ॥ इति चतुर्थावरणम् ॥ ४ ॥ ततो भूपुरप्रथमरेखायां पूर्वादिक्रमेण । ॐ ऐरावताय नमः ॥ १ ॥ ॐ पुंडरी काय नमः ॥ २ ॥ ॐ वामनाय नमः ॥ ३ ॥ ॐ कुमुदाय नमः ॥ ४ ॥ ॐ अञ्जनाय नमः ॥ ५ ॥ ॐ पुष्पदंताय नमः ॥ ६ ॥ ॐ सार्वभौमाय नमः ॥ ७ ॥ ॐ सुप्रतीकाय नमः ॥ ८ ॥ इति पंचमावरणम् ॥ ५ ॥ ततो भूपुरद्वितीयरेखायाम् । लं इन्द्राय नमः ॥ १ ॥ रं अग्नये नमः ॥ २ ॥ मं यमाय नमः ॥ ३ ॥ क्षं निर्ऋतये नमः ॥ ४ ॥ वं वरुणाय नमः ॥ ५ ॥ यं वायवे नमः ॥ ६ ॥ सं कुबेराय नमः ॥७॥ हं ईशानाय नमः ॥८॥ (ऊर्ध्वम्) ह्रीं ब्रह्मणे नमः ॥ ९ ॥ (अधः) अं अनंताय नमः ॥ १० ॥ इति पूजयेत् ॥ इति षष्ठावरणम् ॥ ६ ॥ ततो भूपुरे तृतीयरेखायाम् । ॐ वज्राय नमः ॥ १ ॥ ॐ शक्तये नमः ॥ २ ॥ दंडाय नमः ॥ ३ ॥ ॐ खड्गाय नमः ॥ ४ ॥ ॐ पाशाय नमः ॥ ५ ॥ ॐ अंकुशाय नमः ॥ ६ ॥ ॐ गदायै नमः ॥ ७ ॥ ॐ त्रिशूलाय नमः ॥ ८ ॥ ॐ पद्माय नमः ॥ ९ ॥ ॐ चक्राय नमः ॥ १० ॥ इति पूजयेत् । इति सप्तमावरणम् ॥ ७ ॥ एवमा वरणपूजां विधाय * । ॐ सांगाय सपरिवाराय श्रीहनुमते नमः । इति धूपदीपनैवेद्यतांबूलदक्षिणानीराजनैः स्तुतिपाठैश्च संपूज्य यथाविधि जपं कुर्य्यात् ॥ अस्य पुरश्चरणं द्वादशसहस्रजपः ॥ तथा च-" एवं ध्यात्वा जपेदर्कसहस्रं जितमानसः ॥ दशांशं जुहुयाद्व्रीहीन्पयोदध्याज्यसंयुतान् ॥ १ ॥ एवं सिद्धे मनौ मंत्री स्वपरेष्टं प्रसाधयेत् ॥ कदलीबीजपूराम्रफलैर्हुत्वा सहस्रकम् ॥ २ ॥ द्वाविंशतिं ब्रह्मचारिविप्रान्संभोजयेदथ ॥ एवं कृते महाभूतविषचौराद्युपद्रवाः ॥ ३ ॥ नश्यन्ति क्षणमात्रेण विद्वेषिग्रहदानवाः ॥ अष्टोत्तरशतैर्वारि मंत्रितं विषनाशनम् ॥ ४ ॥ रात्रौ नवशतं मंत्रं जपेद्दशदिनावधि ॥ यो नरस्तस्य नश्यंति राजशत्रूत्थभीतयः

* श्रीहनुमन्मन्त्रपूजायन्त्रमिदं पूर्वत्र द्रष्टव्यम् ।

॥ ५ ॥ अभिचारोत्थभूतोत्थज्वरे तन्मंत्रितैर्जलैः ॥ भस्मभिः सलिलैर्वाऽपि ताडयेज्ज्वरिणः क्रुधा ॥ ६ ॥ दिनत्रयाज्ज्वरान्मुक्तः स सुखं लभते नरः ॥ तन्मंत्रितौषधं जग्ध्वा नीरोगो जायते ध्रुवम् ॥ ७ ॥ तन्मंत्रितं पयः पीत्वा योद्धुं गच्छेन्मनुं जपन् ॥ तज्ज्ञभस्मलिप्तांगः शस्त्रसंघैर्न बाध्यते ॥ ८ ॥ शस्त्रक्षतं व्रणः शोफो लूता स्फोटोऽपि भस्मना ॥ त्रिमंत्रितेन संस्पृष्टाः शुष्यंत्यचिरतो नृणाम् ॥ ९ ॥ सूर्यास्तमयमारभ्य जपेत्सूर्योदयावधि ॥ कीलकं भस्म चादाय सप्ताहावधिसंयुतः ॥ १० ॥ निखनेद्भस्मकीलौ तौ विद्विषां द्वार्य्यलक्षितः ॥ विद्वेषं मिथ आपन्नाः पलायन्तेऽरयोऽचिरात् ॥११॥ अभिमंत्रितभस्मांबु देहचंदनसंयुतम् ॥ खाद्यादि योजितं यस्मै दीयते स तु दासवत् ॥ १२ ॥ क्रूराश्च जतवोऽनेन भवंति विधिना वशाः ॥ ईशानदिक्स्थले मूलभूतां कुशतरोः शुभाम् ॥ १३ ॥ अङ्गुष्ठमात्रां प्रतिमां प्रविधाय हनूमतः ॥ प्राणसंस्थापनं कृत्वा सिंदूरैः परिपूज्य च ॥ १४ ॥ गृहस्याभिमुखो द्वारे निखनेन्मंत्रमुच्चरन् ॥ भूताभिचारचौराग्निविषरोगनृपोद्भवाः ॥ १५ ॥ संजायंते गृहे तस्मिन्न कदाचिदुपद्रवाः ॥ प्रत्यहं धनपुत्राद्यैरेधते तद्गृहं चिरम् ॥ १६ ॥ वश्यार्थे सर्षपैर्होमो विद्वेषे करवीरजैः ॥ कुसुमैरिध्मकाष्ठैर्वा जीरकैर्मरिचैरपि ॥ १७ ॥ ज्वरे दूर्वागुडूचीभिर्दध्ना क्षीरेण वा घृतैः ॥ शूले होमः कुबेराक्षैरेरंडसमिधा तथा ॥ १८ ॥ तैलाक्ताभिश्च निर्गुंडीसमिद्भिर्वा प्रयततः ॥ सौभाग्यं चंदनैश्चंद्रै रोचनैलालवंगकैः ॥ १९ ॥ सुगंधपुष्पैर्वस्त्राद्यैस्तत्तद्धान्यैस्तदाप्तये ॥ तत्पादरजसा राजीलवणाक्तेन मृत्यवे ॥ २० ॥ किं बहूक्तैर्विषे व्याधौ शांतौ मोहे च मारणे ॥ विवादे स्तंभने द्यूते भूतभीतौ च संकटे ॥ २१ ॥ वश्ये युद्धे नृपद्वारे समरे सौरसंकटे ॥ मंत्रोऽयं साधितो दद्यादिष्टसिद्धिं ध्रुवं नृणाम् ॥ २२ ॥ इति द्वादशाक्षरश्रीहनुमन्मंत्रपुरश्चरणम् ॥ अथाष्टादशाक्षरहनुमन्मंत्रप्रयोगस्तत्रैव । ( भूतशुद्ध्यादि श्रीकंठकलामातृकान्तो न्यासः पूर्ववत् ) मूलमन्त्रो यथा—" ॐ 'नमो भगवते आंजनेयाय महाबलाय स्वाहा" इत्यष्टादशाक्षरो मंत्रः ॥ अस्य मंत्रस्य ईश्वर ऋषिः । अनुष्टुप् छंदः । हनुमान् देवता । हूं बीजम् । स्वाहा शक्तिः । ममाभीष्टसिद्ध्यर्थं जपे विनियोगः ॥ ॐ ईश्वरऋषये नमः शिरसि ॥१॥ ॐ अनुष्टुप्छन्दसे नमः मुखे ॥ ॥ २ ॥ ॐ हनुमद्देवतायै नमः हृदये ॥ ३ ॥ ॐ हूं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ स्वाहाशक्तये नमः पादयोः ॥ ५ ॥ ॐ आंजनेयाय अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ रुद्रमूर्त्तये तर्जनीभ्यां नमः ॥ २ ॥ ॐ वायुपुत्राय मध्यमाभ्यां० ॥ ३ ॥ ॐ अग्निगर्भाय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ रामदूताय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ ब्रह्मास्त्रनिवारणाय करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः । एवमेव हृदयादिषडंगन्यासं च कृत्वा ध्यायेत् ॥ " दहनतप्तसुवर्णसमप्रभं भयहरं हृदये विहितांजलिम् ॥ श्रवणकुंडलशोभिमुखांबुजं नमत वानरराजमिहाद्भुतम् " ॥ १ ॥ इति ध्यात्वा पूर्वोक्ते पीठे । मूलेन मूर्तिं प्रकल्प्य पाद्याद्यैः पुष्पांतैरुपचारैः संपूज्य पूर्ववदावरणपूजान्ते धूपादिनीराजनान्तं संपाद्य । स्तवेन स्तुत्वा जपं कुर्य्यात् । अस्य पुरश्चरणमयुतमंत्राः तथा च—अयुतं प्रजपेन्मन्त्रान्दशांशं जुहुयात्तिलैः ॥ वैष्णवे पूजयेत्पीठे पूर्ववत्कपिनायकम् ॥ १ ॥ जितेंद्रियो नक्तभोजी प्रत्यहं साष्टकं शतम् ॥ जपित्वा क्षुद्ररोगेभ्यो मुच्यते दिवसत्रयात् ॥ २ ॥ भूतप्रेतपिशाचादिनाशायैवं समाचरेत् ॥ महारोगनिवृत्त्यै तु

सहस्रं प्रत्यहं जपेत् ॥ ३ ॥ यत्ताशनोऽयतं नित्यं जपन्ध्यायन्कपीश्वरम् ॥ राक्षसौघं विनिघ्नंतमचिराज्जयति द्विषम् ॥ ४ ॥ सुग्रीवेण समं रामं संदधानं स्मरन्कपिम् ॥ प्रजप्यायुतमेतस्य संधिं कुर्य्याद्द्विरुद्धयोः ॥ ५ ॥ लङ्कां दहन्तं तं ध्यायन्नयुतं प्रजपेन्मनुम् ॥ शत्रूणां प्रदहेद्ग्रामानचिरादेव साधकः ॥ ६ ॥ प्रयाणसमये ध्यायन्हनूमंतं मनुं जपन् ॥ यो याति सोऽचिरात्स्वेष्टं साधयित्वा गृहं व्रजेत् ॥ ७ ॥ यः कपीशं सदा गेहे पूजयेज्जपतत्परः ॥ आयुर्लक्ष्म्यौ प्रवर्द्धेते तस्य नश्यंत्युपद्रवाः ॥ ८ ॥ शार्दूलतस्करादिभ्यो रक्षेन्मनुरयं स्मृतः ॥ प्रस्वापकाले चौरेभ्यो दुष्टस्वप्नादपि ध्रुवम् ॥ ९ ॥ इत्यष्टादशाक्षरहनुमन्मंत्रप्रयोगः ॥ अथ तंत्रपारोक्तद्वादशाक्षरहनुमन्मंत्रविधानम् ॥ " देव्युवाच ॥ शैवानि गाणपत्यानि शाक्तानि वैष्णवानि च ॥ साधनानि च सौराणि चान्यानि यानि कानि च ॥ १ ॥ श्रुतानि देवदेवेश त्वद्वक्त्रान्निःसृतानि च ॥ किंचिदन्यत्तु देवानां साधनं यदि कथ्यताम् ॥ २ ॥ शंकर उवाच ॥ शृणु देवि प्रवक्ष्यामि सावधानावधारय ॥ हनुमत्साधनं पुण्यं महापातकनाशनम् ॥ ३ ॥ एतद्गुह्यतमं लोके शीघ्रसिद्धिकरं परम् ॥ जयो यस्य प्रसादेन जितलोकत्रयो भवेत् ॥ ४ ॥ तत्साधनविधिं वक्ष्ये नृणां सिद्धिकरं द्रुतम् ॥ वियत्सलवकं हनूमते च तदनंतरम् ॥ रुद्रात्मकाय कवचं फडिति द्वादशाक्षरः ॥५॥ एतन्मंत्रं समाख्यातं गोपनीयं प्रयत्नतः ॥ तव स्नेहेन भक्त्या च दासोऽस्मि तव सुन्दरि ॥ ६ ॥ एतन्मंत्रमर्जुनाय पुरा दत्तं तु शौरिणा ॥ जपेन साधनं कृत्वा जितं सर्वं चराचरम् ॥ ७ ॥ नदीकूले विष्णुगेहे निर्जने पर्वते वने ॥ एकाग्रचित्तमाधाय साधयेत्साधनं महत् ॥ ८ ॥ " तत्र प्रयोगः ॥ प्रातः स्नात्वा नदीतीरे वा विष्णुगेहे निर्जने स्थाने कुशासने उपविश्य मूलेन आचम्य प्राणानायम्य स्वकामनया संकल्प्य भूतशुध्यादिश्रीकंठादिकलामातृकान्तन्यासं कृत्वा मूलमंत्रेण षडंगन्यासं कुर्य्यात् । ( मूलमंत्रस्वरूपं यथा ) " हं हनूमते रुद्रात्मकाय हुंफट् " ॥ इति द्वादशवर्णात्मको मंत्रः ॥ ॐ हं हनूमते रुद्रात्मकाय अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ हं हनूमते रुद्रात्मकाय तर्जनीभ्यां नमः ॥ २ ॥ ॐ हं हनूमते रुद्रात्मकाय मध्यमाभ्यां नमः ॥ ३ ॥ ॐ हं हनूमते रुद्रात्मकायअनामिकाभ्यां नमः ॥ ४ ॥ ॐ हं हनूमते रुद्रात्मकाय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ हं हनूमते रुद्रात्मकाय करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः । एवमेव हृदयादिषडंगन्यासं कृत्वा ध्यायेत ॥"महाशैलं समुत्पाटच धावन्तं रावणं प्रति ॥ तिष्ठतिष्ठ रणे दुष्ट घोररावं समुत्सृजन् ॥ १ ॥ लाक्षारक्तारुणं रौद्रं कालांतकयमोपमम् ॥ ज्वलदग्निसमं नेत्रं सूर्यकोटिसमप्रभम् ॥ २ ॥ अंगदाद्यैर्महावीरैर्वेष्टितं रुद्ररूपिणम् " ॥ इति ध्यात्वा मानसोपचारैः संपूज्य पूर्वोक्ते वैष्णवे पीठे यंत्रं विलिखेत् । तद्यथा ताम्रपात्रे ततः पद्ममष्टपत्रं सकेसरम् ॥ रक्तचंदनघृष्टेन लिखेत्ताम्रशलाकया ॥ १ ॥ कर्णिकायां लिखेन्मन्त्रं तत्रावाह्य कपिप्रभुम् ॥ कर्णिकायां हनूमंतं ध्यात्वा पाद्यादिभिस्ततः ॥ २ ॥ (पूजयेदिति शेषः) एवं यंत्रं विलिख्य । तन्मध्ये मूलमंत्रं लिखित्वा तत्र मूलेन श्रीहनुमंतमावाह्य । पाद्यादिपुष्पान्तैरुपचारैः संपूज्य आवरणपूजां कुर्यात् । तद्यथा-षट्कोणे आग्नेयादिकोणेषु मध्ये दिक्षु च मूलेन पूर्ववत् हृदयादिषडंगपूजां कुर्यात । तद्बहिरष्टदलेषु पूर्वादिक्रमेण । ॐ सुग्रीवाय नमः ॥ १ ॥ ॐ लक्ष्मणाय नमः ॥ २ ॥ ॐ अंगदाय

नमः ॥ ३ ॥ ॐ नलाय नमः ॥ ४ ॥ ॐ नीलाय नमः ॥ ५ ॥ ॐ जाम्बवते नमः ॥ ६ ॥ ॐ कुमुदाय नमः ॥ ७ ॥ ॐ केसरिणे नमः ॥ ८ ॥ इति पूजयेत् । ततो देवदक्षिणे । ॐ पवनाय नमः ॥ १ ॥ ( वामभागे ) ॐ अञ्जनायै नमः ॥ २ ॥ इति पूजयेत् ॥ ततो दलाग्रेषु । पूर्वोक्ताष्टकपिभ्यः पुष्पांजल्यष्टकं तत्तन्नाममंत्रेण दत्त्वा तद्बाह्ये भूपुरे पूर्वादिषु । इन्द्रादिदशदिक्पालान्संपूज्य तद्बाह्ये वज्राद्यायुधानि च पूजयेत् । एवमावरणपूजां कृत्वा धूपादिनीराजनान्तैरुपचारैः पूजां कृत्वा रामं ससीतं ध्यात्वा जपं कुर्यात् ॥ अस्य पुरश्चरणं लक्षमन्त्रजपः । जपांते पूर्वोक्तद्रव्यैर्दशांशहोमं कृत्वा तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि च कुर्यात् । तथा च—ध्यात्वा जपेन्मंत्रराजं लक्षं यावत्तु साधकः ॥ लक्षांतदिवसं प्राप्य कुर्याच्च पूजनं महत् ॥ १ ॥ एकाग्रशुद्धमनसा तस्मिन्पवननंदने ॥ दिवा रात्रौ जपं कुर्याद्यावत्संदर्शनं भवेत् ॥ २ ॥ सुदृढं साधकं मत्वा निशीथे पवनात्मजः ॥ सुप्रसन्नस्ततो भूत्वा प्रयाति साधकाग्रतः ॥३॥ यथेप्सितं वरं दत्त्वा साधकाय कपिप्रभुः ॥ वरं लब्ध्वा साधकेन्द्रो विहरेदात्मनः सुखैः ॥४॥ एतद्धि साधनं पुण्यं देवानामपि दुर्लभम् ॥ तव स्नेहात्समाख्यातं भक्तासि मयि पार्वति ॥ ५ ॥ इति गारुडे तन्त्रे द्वादशाक्षरहनुमत्कल्पं समाप्तम् ॥ अथ दशाक्षरमंत्रवीरसाधनप्रयोगः ॥ मन्त्रो यथा—'हं पवननंदनाय स्वाहा' इति दशाक्षरो मन्त्रः । ब्राह्मे मुहूर्ते चोत्थाय कृतनित्यक्रियो द्विजः ॥ गत्वा नदीं ततः स्नात्वा तीर्थमावाह्य चांभसि ॥ १ ॥ मूलमंत्रं ततो जप्त्वा सिञ्चेदादित्यसंख्यया ॥ अथो वासः परिधाय गंगातीरेऽथवा गृहे ॥ २ ॥ तत्र प्रयोगः—कुशासने उपविश्य मूलेनाचम्य प्राणानायम्य । ॐ आं अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ईं तर्जनीभ्यां० ॥ २ ॥ ऊं मध्यमाभ्यां० ॥ ३ ॥ ऐं अनामिकाभ्यां० ॥ ४ ॥ औं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ अः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ एवं हृदयादिन्यासः ॥ ततः अकारादिवर्णाननुच्चरन् वामनासापुटेन वायुं पूरयेत् । ककारादिमकारांतं पंचवर्गेण कुंभयेत् । यकारादिक्षकारांतवर्णैर्वायुं च रेचयेत् । एवं वारत्रयं कृत्वा मन्त्रवर्णैरंगन्यासं कुर्यात् । ॐ हं पवननंदनाय स्वाहा अङ्गुष्ठाभ्यां नमः ॥ १ ॥ हं पवननन्दनाय तर्जनीभ्यां नमः ॥ २ ॥ हं पवननन्दनाय मध्यमाभ्यां नमः ॥ ३ ॥ हं पवननंदनाय अनामिकाभ्यां नमः ॥ ४ ॥ हं पवननंदनाय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ हं पवननंदनाय करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ एवं हृदयादिषडंगन्यासं कुर्यात् । एवं न्यासविधिं कृत्वा ध्यायेत् ॥ "ध्यायेद्रणे हनूमंतं कपिकोटिसमन्वितम् ॥ धावंतं रावणं जेतुं दृष्ट्वा सत्वरमुत्थितम् ॥ १ ॥ लक्ष्मणं च महावीरं पतितं रणभूतले ॥ गुरुं च क्रोधमुत्पाद्य गृहीत्वा गुरुपर्वतम् ॥ २ ॥ हाहाकारैः सदर्पैश्च कंपयंतं जगत्रयम् ॥ आब्रह्मांडं समाव्याप्य कृत्वा भीमं कलेवरम् ॥ ३ ॥" इति ध्यात्वा षट्सहस्रं जपेत् ॥ सप्तमदिवसे दिवा रात्रिं च व्याप्य जपेत् ॥ सप्तम्यां रात्रौ महाभयं दत्त्वा त्रिभागशेषासु निशासु नियतमागच्छति साधको यदि मायां तरति भीतो न भवति तदेप्सितं वरं प्राप्नोति—विद्यां वापि धनं वापि राज्यं वा शत्रुनिग्रहम् ॥ तत्क्षणादेव चाप्नोति सत्यं सत्यं सुनिश्चितम् ॥ इति दशाक्षरमंत्रप्रयोगः ॥ ॥ अथ एकमुखीहनुमत्कवचप्रारंभः ॥ "नारद उवाच ॥ एकदा सुखमासीनं शंकरं लोकशङ्करम् ॥ पप्रच्छ गिरिजा कांतं कर्पूरधवलं शिवम् ॥ १ ॥ श्रीपार्वत्युवाच ॥ भगवन्दे

वदेवेश लोकनाथ जगत्प्रभो ॥ शोकाकुलानां लोकानां केन रक्षा भवेद्ध्रुव ॥ २ ॥ संग्रामे संकटे घोरे भूतप्रेतादिके भये ॥ दुःखदावा
ग्निसन्तप्तचेतसां दुःखभागिनाम् ॥ ३ ॥ ईश्वर उवाच ॥ शृणु देवि प्रवक्ष्यामि लोकानां हितकाम्यया ॥विभीषणाय रामेण कथितं
कवचं पुरा ॥४॥ कवचं कपिनाथस्य वायुपुत्रस्य धीमतः ॥ गुह्यात्गुह्यं प्रवक्ष्यामि विशेषात्तव सुन्दरि ॥ ५ ॥ ॐअस्यश्रीहनुमत्क
वचस्तोत्रमंत्रस्य श्रीरामचन्द्र ऋषिः । श्रीवीरो हनुमान्परमात्मा देवता । अनुष्टुप्छन्दः । मारुतात्मज इति बीजम् । अञ्जनीसू
नुरिति शक्तिः । लक्ष्मणप्राणदाता इति जीवः । श्रीरामभक्तिरिति कवचम् । लंकाप्रदाहक इति कीलकम् । मम सकलकार्यसिद्ध्यर्थं
जपे विनियोगः ॥ ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ॐ ह्रां अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ ह्रीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ ह्रूं
मध्यमाभ्यां नमः ॥ ३ ॥ ॐ ह्रैं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ ह्रौं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ ह्रः करतलकरपृष्ठाभ्यां
नमः ॥ ६ ॥ इति करन्यासः ॥ ॐ अञ्जनीसूनवे नमो हृदयाय नमः ॥ १ ॥ ॐ रुद्रमूर्तये नमः शिरसे स्वाहा ॥ २ ॥ ॐ
वातात्मजाय नमः शिखायै वषट् ॥ ३ ॥ ॐ श्रीरामभक्तिसहिताय नमः कवचाय हुम् ॥ ४ ॥ ॐ वज्रकवचाय नमो नेत्रत्रयाय
वौषट् ॥ ५ ॥ ॐ ब्रह्मास्त्रनिवारणाय नमः अस्त्राय फट् ॥ ६ ॥ इति हृदयादिन्यासः । अथध्यानम् ॥ "ध्यायेद्बालदिवाकरद्युतिनिभं
देवारिदर्पापहं देवेन्द्रप्रमुखं प्रशस्तयशसं देदीप्यमानं रुचा ॥ सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्त्वप्रियं संरक्तारुणलोचनं पवनजं
पीताम्बरालंकृतम् ॥ ६ ॥ उद्यन्मार्तण्डकोटिप्रकटरुचियुतं चारुवीरासनस्थं मौञ्जीयज्ञोपवीताभरणरुचिशिखाशोभितं कुण्डला
ढ्यम् ॥ भक्तानामिष्टदानप्रवणमनुदिनं वेदनादप्रमोदं ध्यायेद्देवं विधेयं प्लवगकुलपतिं गोष्पदीभूतवार्धिम् ॥ ७ ॥ मनोजवं मारुत
तुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ॥ वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥ ८ ॥ वज्राङ्गं पिङ्गकेशाढ्यं
स्वर्णकुण्डलमण्डितम् ॥ उद्यद्दक्षिणदोर्दण्डं हनुमन्तं विचिन्तये ॥ ९ ॥ स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिम् ॥
कुण्डलद्वयसंशोभिमुखाम्भोजं हरिं भजे ॥ १० ॥ उद्यदादित्यसङ्काशमुदारभुजविक्रमम् । कन्दर्पकोटिलावण्यं सर्वविद्या
विशारदम् ॥ ११ ॥ श्रीरामहृदयानन्दं भक्तकल्पमहीरुहम् ॥ अभयं वरदं दोर्भ्यां कलये मारुतात्मजम् ॥१२॥ अपराजित नमस्तेऽ
स्तु नमस्ते रामपूजित ॥ प्रस्थानं च करिष्यामि सिद्धिर्भवतु मे सदा ॥ १३ ॥ यो वारांनिधिमल्पपल्वलमिवोल्लंघ्य प्रतापान्वि
तो वैदेहीघनशोकतापहरणो वैकुण्ठभक्तप्रियः ॥ अक्षाद्यूर्जितराक्षसेश्वरमहादर्पापहारी रणे सोऽयं वानरपुङ्गवोऽवतु सदा चास्मा
न्समीरात्मजः ॥ १४ ॥ वज्राङ्गं पिङ्गनेत्रं कनकमयलसत्कुण्डलाक्रान्तगण्डं सर्वविद्याधिनाथं करतलविधृतं पूर्णकुम्भं दृढं च ॥
भक्ताभीष्टाधिकारं विदधति च सदा सुप्रसन्नं कपीन्द्रं त्रैलोक्यत्राणकारं सकलभुवनगं रामदूतं नमामि ॥ १५ ॥ उद्यल्लांगूलकेशप्र
चलजलधरं भीममूर्तिं कपीन्द्रं वन्दे रामांघ्रिपद्मभ्रमरपरिवृतं सत्त्वसारं प्रसन्नम् ॥ १६ ॥ वामे करे वैरिभयं वहंतं शैलं च धत्ते
निजकंठलग्नम् ॥ उद्यानमुत्थाय सुवर्णवर्णं भजे ज्वलत्कुण्डलरामदूतम् ॥ १७ ॥ पद्मरागमणिकुण्डलत्विषा पाटलीकृतकपोल
मण्डलम् ॥ दिव्यगेहकदलीवनान्तरे भावयामि पवमाननन्दनम् ॥ १८ ॥ ॐ ऐं ह्रीं हनुमते रामदूताय शाकिनीडाकिनीविध्वं

सनाथ किलकिल वामकरेण निषण्णाय हनुमद्देवाय ॐ ह्रींश्रींह्रौंह्रां स्वाहा ॥ अथ मन्त्रः ॥ नमो भगवते हनुमदाख्यरुद्राय सर्वदु ष्टजनमुखस्तंभनं कुरुकुरु ह्रां ह्रीं ह्रूं ठंठंठंहुंफट्स्वाहा । ॐ नमो हनुमते अञ्जनीगर्भसम्भूताय रामलक्ष्मणानन्दकराय कपिसैन्यप्र काशनाय पर्वतोत्पाटनाय सुग्रीवामात्याय रणपरोद्धाटनाय कुमारब्रह्मचारिणे गम्भीरभीमशब्दोदयाय ॐ ह्रां ह्रीं ह्रूं सर्वदुष्टनिवार णाय स्वाहा । ॐ नमो हनुमते सर्वग्रहान् भूतभविष्यद्वर्तमानान् दूरस्थान् समीपस्थान् सर्वकालदुष्टबुद्धीनुच्चाटयोच्चाटय परबलानि क्षोभयक्षोभय मम सर्वकार्याणि साधयसाधय ॐह्रां ह्रीं ह्रूं फट् देहिदेहि स्वाहा शिवं सिद्धिं ह्रूं ह्रीं ह्रां स्वाहाॐनमो हनुमते परकृतयं त्रमन्त्रपराहंकारभूतप्रेतपिशाचपरदृष्टिसर्वविघ्नदुर्जनचेटकविद्यासर्वग्रहभयं निवारय २ वध २ पच २ दल २ विलुलु २ किलु २ सर्वयन्त्राणि कुरुष्व वाचं ॐ फट् स्वाहा । ॐ नमो हनुमते पाहि २ एहि २ सर्वग्रहभूतानां शाकिनीडाकिनीनां विषमदुष्टानां सर्वविषयान् आकर्षय२मर्दय२छेदय २ अपमृत्युं मम उपशोषय २ ज्वल २ प्रज्वल २ भूतमंडलं पिशाचमण्डलं निरासय २भूत ज्वरप्रेतज्वर चतुर्थज्वरविषमज्वरमहेशज्वरं छिन्धि २ भिन्धि २ अक्षिशूलपक्षशूलशिरोभ्यंतरशूलगुल्मशूलपितृशूलब्रह्मराक्षसकुल परबलनागकुलविषनिर्विषफट् ॐ सर्वदुष्टग्रहनिवारणाय स्वाहा । ॐ नमो हनुमते पवनपुत्राय वैश्वानरमुखाय पापदृष्टिघोरदृष्टिहनु मदाज्ञास्फुरेत्स्वाहा ॥ श्रीराम उवाच ॥ हनुमान्पूर्वतः पातु दक्षिणे पवनात्मजः ॥ पातु प्रतीच्यां रक्षोघ्नः पातु सागरपारगः॥१९॥ उदीच्यामूर्द्ध्वगः पातु केसरिप्रियनंदनः ॥ अधस्ताद्विष्णुभक्तस्तु पातु मध्यं च पावनिः ॥ २० ॥ अवान्तरदिशः पातु सीताशोक विनाशनः ॥ लंकाविदाहकः पातु सर्वापद्भ्यो निरन्तरम् ॥ २१ ॥ सुग्रीवसचिवः पातु मस्तकं वायुनंदनः ॥ भालं पातु महावीरो भ्रुवोर्मध्ये निरंतरम् ॥२२॥ नेत्रे छायापहारी च पातु नः प्लवगेश्वरः॥कपोलौ कर्णमूले च पातु श्रीरामकिंकरः ॥२३॥ नासाग्रमञ्जनीसूनुः पातु वक्त्रं हरीश्वरः ॥ वाचं रुद्रप्रियः पातु जिह्वां पिङ्गललोचनः ॥ २४ ॥ पातु दन्तान्फाल्गुनेष्टश्चिबुकं दैत्यपादहा ॥ पातु कण्ठं च दैत्यारिः स्कन्धौ पातु सुरार्चितः ॥ २५ ॥ भुजौ पातु महातेजाः करौ तु चरणायुधः ॥ नखान्नखा युधः पातु कुक्षिं पातु कपीश्वरः ॥२६॥ वक्षो मुद्रापहारी च पातु पार्श्वे भुजायुधः ॥ लङ्काविभञ्जनः पातु पृष्ठदेशे निरन्तरम् ॥२७॥ नाभिं च रामदूतस्तु कटिं पात्वनिलात्मजः ॥ गुह्यं पातु महाप्राज्ञो लिंगं पातु शिवप्रियः ॥ २८ ॥ ऊरू च जानुनी पातु लङ्का प्रासादभञ्जनः ॥ जंघे पातु कपिश्रेष्ठो गुल्फौ पातु महाबलः ॥ २९ ॥ अचलोद्धारकः पातु पादौ भास्करसन्निभः ॥ अङ्गान्य मितसत्त्वाढ्यः पातु पादांगुलीस्तथा ॥ ३० ॥ सर्वाङ्गानि महाशूरः पातु रोमाणि चात्मवान् ॥ हनुमत्कवचं यस्तु पठेद्विद्वान् विचक्षणः ॥ स एव पुरुषश्रेष्ठो भुक्तिं मुक्तिं च विन्दति ॥ ३१ ॥ त्रिकालमेककालं वा पठेन्मासत्रयं सदा ॥ सर्वान् रिपून्क्षणा ज्जित्वा स पुमान् श्रियमाप्नुयात् ॥ ३२ ॥ मध्यरात्रे जले स्थित्वा सप्तवारं पठेद्यदि ॥ क्षयापस्मारकुष्ठादितापज्वरनिवारणम् ॥ ॥ ३३ ॥ अश्वत्थमूलेऽर्कवारे स्थित्वा पठति यः पुमान् ॥ अचलां श्रियमाप्नोति संग्रामे विजयं तथा ॥ ३४ ॥ लिखित्वा पूजये द्यस्तु सर्वत्र विजयी भवेत् ॥ यः करे धारयेन्नित्यं स पुमान्श्रियमाप्नुयात् ॥ ३५ ॥ विवादे द्यूतकाले च द्यूते राजकुले रणे ॥

दशवारं पठेद्रात्रौ मिताहारो जितेन्द्रियः ॥ ३६ ॥ विजयं लभते लोके मानुषेषु नराधिपः ॥ भूतप्रेतमहादुर्गे रणे सागरस
म्प्लवे ॥ ३७॥ सिंहव्याघ्रभये चोग्रे शरशस्त्रास्त्रपातने ॥ शृंखलाबन्धने चैव कारागृहनियंत्रणे ॥ ३८ ॥ कायस्तोभे वह्निचक्रे क्षेत्रे
घोरे सुदारुणे ॥ शोके महारणे चैव ब्रह्मग्रहविनाशनम् ॥ ३९ ॥ सर्वदा तु पठेन्नित्यं जयमाप्नोत्यसंशयम् ॥ भूर्जे वा वसने
रक्ते क्षौमे वा तालपत्रके ॥ ४० ॥ त्रिगन्धेनाथ मस्यैव विलिख्य धारयेन्नरः ॥ पञ्चसप्तत्रिलोहैर्वा गोपितं कवचं शुभम् ॥ ४१ ॥
गले कट्यां बाहुमूले कण्ठे शिरसि धारयेत् ॥ सर्वान्कामानवाप्नोति सत्यं श्रीरामभाषितम् ॥ ४२ ॥ " इति श्रीब्रह्माण्डपुराणे नार
दागस्त्यसंवादे श्रीरामप्रोक्तं हनुमत्कवचं सम्पूर्णम् ॥ अथ हनुमत्स्तोत्रम् ॥ " नमो हनुमते तुभ्यं नमो मारुतसूनवे ॥ नमः श्रीराम
भक्ताय श्यामलांगाय ते नमः ॥ १ ॥ नमो वानरवीराय सुग्रीवसख्यकारिणे ॥ सीताशोकविनाशाय राममुद्राधराय च ॥ २ ॥
रावणान्तकुलच्छेदकारिणे ते नमोनमः ॥ मेघनादमखध्वंसकारिणे ते नमोनमः ॥ ३ ॥ वायुपुत्राय वीराय आकाशोदरगामिने ॥
वनपालशिरश्छेदलङ्काप्रासादभंजिने ॥ ४ ॥ ज्वलत्कनकवर्णाय दीर्घलांगूलधारिणे ॥ सौमित्रिजयदात्रे च रामदूताय ते नमः॥५॥
अक्षयधकर्त्रे च ब्रह्मत्रपाशनिवारणे ॥ लक्ष्मणांघ्रिमहाशक्तिघातक्षतविनाशिने ॥ ६ ॥ रक्षोघ्नाय रिपुघ्नाय भूतघ्नाय च ते नमः ॥
ऋक्षवानरवीरैकप्राणदाय नमोनमः ॥ ७ ॥ परसैन्यबलघ्नाय शस्त्रास्त्रघ्नाय ते नमः ॥ विषघ्नाय द्विषघ्नाय ज्वरघ्नाय च ते नमः ॥
॥ ८ ॥ महाभयरिपुघ्नाय भक्तत्राणैककारिणे ॥ परप्रेरितमंत्राणां यंत्राणां स्तंभकारिणे ॥ ९ ॥ पयःपाषाणतरणकारणाय नमोनमः ॥
बालार्कमंडलत्राणकारिणे भवकारिणे ॥ १० ॥ नखायुधाय भीमाय दन्तायुधधराय च ॥ रिपुमायाविनाशाय रामाज्ञालोकरक्षिणे
॥११॥ प्रतिग्रामस्थितायाथ रक्षोभूतवधार्थिने ॥ करान्तशैलशस्त्राय द्रुमशस्त्राय ते नमः ॥१२॥ बालकब्रह्मचर्य्याय रुद्रमूर्तिधराय च ॥
दक्षिणाशाभास्कराय शतचन्द्रोदयात्मने ॥ १३ ॥ कृतक्षतव्यथाघ्नाय सर्वक्लेशहराय च ॥ स्वाम्याज्ञापार्थसंग्रामसंख्ये सञ्जयका
रिणे ॥ १४ ॥ भक्तानां दिव्यवादेषु संग्रामे जयदायिने ॥ किं कृत्वा बुबुकोच्चारघोरशब्दकराय च ॥ १५ ॥ रावोग्रव्याधिसंस्तं
भकारिणे वनधारिणे ॥ सदावनफलाहारे निरताय विशेषतः ॥ १६ ॥ महार्णवशिलाबंधे सेतुबंधाय तेनमः ॥ वादे विवादे
संग्रामे भये घोरे च संस्तवेत् ॥ १७ ॥ सिंहतस्करव्याघ्रेषु पठंस्तत्र भयं नहि ॥ दिव्यभूतभये व्याघ्रे विषे स्थावरजंगमे ॥ १८॥
राजशस्त्रभये चोग्रे तथा ग्रहभयेषु च ॥ जले सर्पे महावृष्टौ दुर्भिक्षे प्राणसम्प्लवे ॥ १९ ॥ पठन्स्तोत्रं प्रमुच्येत भयेभ्यः सर्वतो
नरः । तस्य क्वापि भयं नास्ति हनुमत्स्तवपाठनात् ॥ २० ॥ सर्वदा वै त्रिकालंच पठनीयस्तवो ह्यसौ ॥ सर्वान्कामानवा
प्नोति नात्र कार्या विचारणा ॥ २१ ॥ विभीषणकृतं स्तोत्रं तार्क्ष्येण समुदीरितम् ॥ ये पठिष्यंति भक्त्या च सिद्धयस्त
त्करे स्थिताः ॥ २२ ॥ " इति श्रीसुदर्शनसंहितोक्तं विभीषणप्रोक्तं श्रीहनुमत्स्तोत्रं सम्पूर्णम् ॥ ॥ अथ विष्णोः प्रसं
गाद्वेदादिपारायणविधानम् ॥ तत्रादौ वेदपारायणे कलशस्थापनप्रकारः ( महार्णवे ) " तीर्थे देवालये गेहे प्रशस्ते सुप
रिष्कृते ॥ कलशं सुदृढं तत्र सुनिर्णिक्तं विभूषितम् ॥ १ ॥ पुष्पपल्लवमालाभिश्चंदनैः कुङ्कुमादिभिः ॥ मृत्तिकायवसंमिश्रा

वेदीमध्ये न्यसेत्ततः ॥ २ ॥ पंचाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखस्थितः ॥ स्नापितः स्थापितः कुंभे चतुर्बाहुश्चतुर्मुखः ॥ ३ ॥ वत्सजान्वाकृतिं देवमुत्तराग्रैः कुशैः कृतम् ॥ ब्रह्मोपधाने दत्त्वा तं ततः स्वस्त्ययनं पठेत् ॥ ४ ॥ प्रतिष्ठां कारये त्पश्चात्पूजाद्रव्यमथोच्यते ॥ यज्ञोपवीतनैवेद्यवस्त्रचंदनकुंकुमैः ॥ ५ ॥ सधूपदीपतांबूलैरक्षतैश्च पितामहम् ॥ ब्रह्मयज्ञानमिति वा गायत्र्या वा प्रपूजयेत् ॥६॥ उपाध्यायं च संपूज्य यथापाठं पठेत्ततः ॥ इति कलशप्रतिष्ठापनम् ॥ अथानश्नत्पारायणविधानम्॥ ( महार्णवे )अथातोऽनश्नत्पारायणविधिं व्याख्यास्यामः । आसमाप्तेर्नाश्नीयाव यथाशक्ति वा पयः फलान्योदनं वा हविष्यमात्रमल्पं भुक्त्वा तदाशेषमधीयीत । ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्याग्निमुपसमाधाय परिस्तीर्यैध्मप्रदायाज्येनैताभ्यो देवताभ्यो जुहोति । अग्नये सोमायेंद्राय । प्रजापतये । बृहस्पतये । विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्यः ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै मेधायै प्रज्ञायै सदसस्पतये अनुमतये ह्रियै सावित्र्यै सवित्रे प्रजापतये कांडऋषये विश्वेभ्यो देवेभ्यः कांडऋषिभ्यः सांहिकीभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकेभ्यो देवताभ्यः उपनिषद्भ्यो वारुणीभ्यो देवताभ्यः उपनिषद्भ्यो हव्यवाहाय विश्वेभ्यो वरुणेभ्यः । अनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिंचति समाप्ते चैताः । यजुषा तर्पयति । एवं ऋग्वेदिनां कांड ऋष्यादिवर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवाय अत्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः पावमानीभ्यः क्षुद्रसूक्तेभ्यो महासूक्तेभ्यो महानाम्नीभ्य इति ॥ ततो वेदादिमारभ्य सततमधीयीत नास्यांतरानध्यायो नास्यांतरा जननमरणे अशुचीन्नान्तरा व्याहरेन्नान्तरा विरमेत् । यावदन्तमधीयीत यद्यन्तरा विरमेत् त्रीन् प्राणायामानायम्य प्रणवं वा प्रणिधाय यावत्कालमधीयीत । ततः सर्वं निशो निशान्तरं संग्रामारण्यसलिलं प्रलोप्य परिदध्यात् । आदावन्ते च ब्राह्मणभोजनं दक्षिणादानं च कुर्यात् । य एतेन विधिना वेदमधीयत सः ततः पूतो वेदो भवति मनःशुद्धिश्च भवति । द्वाभ्यां पारायणाभ्यां ऋग्भिश्चाभोजन इहाधीते अनृतेभ्यः प्रमुच्यते त्रिभिर्बहुभ्यः पतनीयपातकेभ्यः शूद्रायां रेतः सिक्त्वा गङ्गासु मज्जंश्च भवति । चतुर्भ्यः शूद्रान्नभोजनात्तत्सेवनात्तत्स्त्रीसेवनाच्च पञ्चभिरयाज्ययाजनात्पूतो भवति । अग्राह्यग्रहणादग्राह्याग्रहणादभ्या सोपसनाच्च षड्भिर्ब्राह्मणस्य लोहितकरणात् स्त्रीलोहिनकरणात पशुहननात्सुवर्णस्तेयात्पतितसंप्रयोगच्चि सप्तभिः प्राजापत्यानां ही नाचरणात् यज्ञोपवीतवेधनाच्च अष्टभिश्चांद्रायणस्यान्तरानाचरणात् गुरुतल्पगमनाद्रजस्वलागमनाच्च नवभिः सुरापानाच्च दशभिरश्रो त्रिययाजनाव । असोमपानात् अन्यायतश्च एकादशभिर्ब्राह्मणहननाद्गर्भहननाद्वा द्वशभिः पूर्वजन्मेहजन्मकृतैः सर्वैः पापैः प्रमुच्यते स्वर्गं लोकं गच्छति पितॄन् स्वर्गलोकं गमयति । अग्निष्टोमादीन् क्रतून् यजति तैः क्रतुभिरिष्टं भवति।वेदाध्यायी सदैव स्याद्यथा वै सत्यवाक्शुचिः।यंयं कामयते कामं तंतं वेदेन साधयेत्।असाध्यं नास्ति यत्किंचिद्ब्रह्मणो हि फलं महत् ब्रह्मणो हि फलं महदिति समाप्तौ यजुषा तर्पयतीति ॥ समस्तवेदपारायणे समाप्ते एता देवताः पूर्वोक्ता अग्निसोमाद्यायजुषा तर्पयति यजुर्वेदेन सह तर्पयति इति।न यजुर्वेदपारायणे तस्य वेदस्य प्राधान्यमुच्यते । अथवा भूरादिव्याहृतिचतुष्टयात्मकं यजुःशब्देन गृह्यते । तेनैव तदुक्तं भवति । भूर्दे

वांस्तर्पयामीत्यनेन प्रकारेण तर्पयित्वा अग्निसोमादींस्तर्पयेदिति॥नास्यांतरा जननमरणे अशुची॥इत्यनश्नत्पारायणविधानं समाप्तम्॥
॥ अथ पुराणादिपारायणविधानम् पाद्मे ॥ (पातालखंडे) "शुक्लपक्षे दिने शुद्धे वारनक्षत्रयोगतः ॥ करणे चापि लग्ने च ग्रहताराबलान्विते ॥ १ ॥ अमूढे न ग्रहे बाले न च वृद्धौ गुरौ स्थिते । न कृष्णपक्षे ग्रहणे न च नास्तिकसन्निधौ ॥ २ ॥ शुद्धगेहेऽथ वा शुद्धवेदिकायां मठेऽथ वा ॥ नदीतीरे देवगेहे सभामंडप एव च ॥ ३ ॥ रथ्यामठेऽथवा रम्ये पुण्यशालासु राघव ॥ पूर्वोक्तलक्षणोपेतं पुराणं शृणुयादिति ॥ ४ ॥ स्वयं नमस्य विप्रेंद्रान्पुराणज्ञं विशेषतः ॥ आसनं कल्पितं कुर्यादूर्ध्वं सर्वविशेषितम् ॥ ५ ॥ एहि धर्म्मासनमिति वक्तव्यं स्यादनिष्ठुरम् ॥ पुराणप्रक्रमदिने यत्कार्यं तदुदीरयेत् ॥ ६ ॥ व्याख्यातारं पुराणस्य वस्त्राद्यैः परिपूजयेत् ॥ शुभानि दत्वा वस्त्राणि सूक्ष्माणि च नवानि च ॥ ७ ॥ करकंठविभूषादि पात्रमासनमेव च ॥ गन्धपुष्पाक्षतैः पूज्य तांबूलं विनिवेद्य च ॥८॥ शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥ ९ ॥ सभासदश्च सम्पूज्य गणेशं पूजयेत्ततः ॥ ॐ नमेत्यादिमन्त्रेण पूजनं भारतीनुतिः ॥ १० ॥ प्रातःकाले पुराणस्य प्रक्रमं प्रारभेदिति ॥ उपक्रमदिने राम त्रिपंच दश वा पुनः ॥ ११ ॥ श्लोका द्वितीये दिवसे ततो द्विगुणिताः शुभाः ॥ तृतीये दिवसे राम ततश्चाधिकमिष्यते ॥ १२ ॥ दिनानामव्यवच्छेदाद्व्याख्यानं श्रवणं तथा ॥ व्यवस्थितिर्यदा जाता तदा पौराणिकं गुरुम् ॥ १३ ॥ तांबूलादि प्रदायाथ परेद्युः शृणुयादपि ॥ पुराणमेवं श्रोतव्यं दैनंदिनमिति श्रुतिः ॥ १४ ॥ व्रतरूपेण यः कश्चित्पुराणं शृणुयान्नरः ॥ यदैवं तत्पुराणं तु तत्र याति न संशयः ॥ १५ ॥ पुराणं श्रोतुकामेन श्लोकश्चैकोऽपि चेच्छ्रुतः ॥ तद्दिने तु कृतं पापं नाशयेत्तु न संशयः ॥ १६ ॥ एवं पुराणं शृणुयाच्च यस्तु स ब्रह्महत्याकृतपापबंधनात् ॥ सुरापीतिः स्वर्णहरश्च राम गुर्वंगनागश्च विमुक्तिमेति ॥१७॥ भारतश्रवणे चापि नियमा ये मयेरिताः ॥ आदिपर्वसमाप्तौ च सूक्ष्मवस्त्रत्रयं ददेत् ॥ १८ ॥ सुवर्णं च यथाशक्ति सभापर्वणि वाससी ॥ अनुशासनिकारण्यस्वर्गारोहेषु पर्वसु ॥ १९ ॥ आदिपर्वणि पूजा या सा पूजा नृपपुङ्गव ॥ कर्णाश्वमेधवैराटशल्यद्रोणेषु पर्वसु ॥ २० ॥ सूक्ष्मवस्त्रत्रयं शुद्धं निष्कद्वयमथापि वा ॥ क्षुद्रपर्वस्वथान्येषु निष्कावथ समानयेत् ॥ २१ ॥ हरिवंशे सनिष्कं तु वस्त्रत्रितयमेव च ॥ भारतस्याखिलस्यैव समाप्तौ क्षेत्रदो भवेत् ॥ २२ ॥ रामायणस्य श्रवणे कांडेकांडे प्रपूजयेत् ॥ क्षेत्रं पर्याप्तमथवा सुवर्णमपि दापयेत् ॥ २३ ॥ अन्यान्यपि पुराणानि मुनिप्रोक्तानि तान्यपि ॥ श्रोतॄणां पापनाशाय वक्तुश्चापि विशेषतः ॥ २४ ॥ यश्च सर्वपुराणानि षट्त्रिंशत्तु प्रकीर्तयेत् ॥ शृणोति वा न तस्यास्ति चित्तच्छेदः कदाचन ॥ २५ ॥ इति सामान्यतः सर्वपुराणेतिहासानां श्रवणविधानम् ॥ अथ श्रीमद्भागवतपारायणविधानम् (पाद्मे) " श्रीपार्वत्युवाच ॥ स्कंधैर्द्वादशभिः प्रोक्तं श्रीमद्भागवतं प्रभो ॥ शुकस्तच्छ्रावयामास महाराजं परीक्षितम् ॥ १ ॥ सप्ताहेनेति भगवञ्छ्रूयते तत्रतत्र ह ॥ तस्यानुक्रममिच्छामि श्रोतुं तत्फलमेव च ॥ २ ॥ सदाशिव उवाच ॥ साधु पृष्टं महाभागे लोके यत्प्रचरिष्यति ॥ पारायणमिति ख्यातं सद्यो मुक्तिप्रदं नृणाम् ॥ ३ ॥ शुकस्योक्तिक्रमेणैव पठेद्भागवतं तु यः ॥ श्रावयेच्छृणुयाद्वापि तस्यानंतं फलं भवेत् ॥ ४ ॥ कृतनित्यक्रियः प्रातः

कुशहस्तः कृतासनः ॥ देवद्विजगुरून्नत्वा ध्यात्वा विष्णुं सनातनम् ॥ ५ ॥ द्वैपायनं नमस्कृत्य शुकदेवं च भक्तितः ॥ हिरण्याक्ष वधं यावत्प्रथमेऽहनि कीर्त्तयेत् ॥ ६ ॥ चरितं भरतस्यापि द्वितीयेऽथ तृतीयके ॥ मथनं चामृतस्यापि यत्र कूर्मः स्वयं हरिः ॥ ७ ॥ चतुर्थदिवसे चैव दशमे हरिजन्म च ॥ पञ्चमे तु पठेद्विद्वान् रुक्मिण्या हरणावधि ॥८॥ षष्ठे चोद्धवसंवादं सप्तमे तु समापयेत् ॥ अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन ॥ ९ ॥ कृते विरामे मध्ये तु अध्यायादिं पठेत्पुनः ॥ पठेदर्थं बुध्यमानः श्रावयेद्वैष्णवोत्तमे ॥ १० ॥ श्रोता तु प्राङ्मुखो भूत्वा शृणुयाद्भक्तितत्परः ॥ अध्याये स्वर्णमाषैकं तथा दद्याच्च दक्षिणाम् ॥ ११॥ समाप्तौ च ततो धेनुं स्वर्णशृङ्गीं निवेदयेत् ॥ कुर्य्याच्च वैष्णवं होमं सात्वतान्भोजयेत्ततः ॥ १२ ॥ एवं यः कुरुते देवि पाठं भागवतस्य तु ॥ श्रवणं श्रावणं वापि इष्टां गतिमवाप्नुयात् ॥ १३ ॥ एतत्पारायणं नाम सर्व्वकामफलप्रदम् ॥ पाठकालेचत्रिदशा मुनयश्च तपोवनाः ॥ १४ ॥ पार्श्वदाश्च तथा विष्णोः सान्निध्यं तत्र कुर्व्वते ॥ एतत्ते कथितं देवि पारायणविधानकम् ॥ १५ ॥ विष्णुप्रीतिकरं पुण्यं किं भूयः श्रोतुमिच्छसि ॥ इति श्रीमद्भागवतपारायणविधानम् ॥ अथ श्रीमद्भागवतसप्ताहविधानं सप्रयोगं ( पाद्मे उत्तरखंडे ) "अथ ते संप्रवक्ष्यामः सप्ताहश्रवणे विधिम् ॥ येन भागवतं सिद्ध्येत्पुंसां कृष्णार्पितात्मनाम् ॥ १ ॥ दैवज्ञं शास्त्रकुशलं समाहूय धनांशुकैः ॥ समभ्यर्च्य मुहूर्त्तं तु प्राक्पृच्छेद्भक्तिमान्नरः ॥ २ ॥ स वदेद्यं मुहूर्त्तं तु तत्रारंभः प्रशस्यते ॥ नभोनभस्येषोर्जाश्च सहःशुचिसमन्विताः ॥ ३ ॥ मासाः श्रेष्ठाः कथारंभे पूर्णा चापि तिथिः शुभा ॥ भौमार्किवर्जिता वारा भानि ध्रुवमृदूनि च ॥ ४ ॥ शुभे योगे शुभे लग्ने प्रारंभः शस्यते सदा ॥ तीर्थे वापि वने वापि ग्रामे वापि गृहेऽपि वा ॥ ५ ॥ संशोधितायां भूम्यां तु मंडपं परिकल्पयेत् ॥ कदलीस्तंभसंयुक्तं चतुर्दिक्षु ध्वजान्वितम् ॥ ६ ॥ उच्चमासनमप्युक्तं वक्तुस्तस्याग्रतो मुने ॥ अपार्श्वद्वयमुक्तानि श्रोतॄणामासनानि च ॥ ७ ॥ उदङ्मुखो भवेद्वक्ता श्रोता वै प्राङ्मुखस्तदा ॥ प्राङ्मुखो वा भवेद्वक्ता श्रोता चोदङ्मुखस्तदा ॥ ८ ॥ वेदशास्त्रार्थतत्त्वज्ञो वैष्णवो ब्राह्मणोत्तमः ॥ दृष्टांतकुशलो धीरो वक्ता कार्योऽतिनिस्पृहः ॥ ९ ॥ कथाविघ्नविघातार्थं गणेशं प्राक्प्रपूजयेत् ॥ ततो दुर्गां हरं विष्णुं ब्रह्माणं भास्करं द्विजान् ॥ १० ॥ संपूज्य विधिवद्भक्त्या तर्पयेद्देवताः पितॄन् ॥ मुख्यः श्रोता ततः पश्चात्पूजयेत्पुस्तके हरिम् ॥ ११ ॥ ततः प्रदक्षिणीकृत्य द्रव्यवस्त्रफलानि च ॥ धृत्वांजलौ पुस्तकस्थं हरिं संप्रार्थयेन्मुने ॥ १२ ॥" ॥ अथ प्रयोगः ॥ पूर्वदिने चांद्रायणधेनुदानादिद्वारा पूर्ववत्प्रायश्चित्तं संपाद्य प्रारंभदिने प्रातर्नित्यकर्म कृत्वा । चंद्रताराादिबलान्विते पूर्वोक्ते सुमुहूर्ते गोमयादिना संशोधिते कथास्थाने स्वासने प्राङ्मुख उपविश्य । पूर्वोक्तलक्षणयुक्तं पंडितं च शुद्धासने उदङ्मुखमुपवेश्य । आचम्य प्राणानायम्य । शांतिपाठे पठिते देशकालौ संकीर्त्य । मम इह जन्मनि जन्मांतरे वा कृतसमस्तपापक्षयपूर्वकधर्मार्थकाममोक्षसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ब्राह्मणद्वारा श्रीमद्भागवतसप्ताहयज्ञं करिष्ये ॥ तदंगत्वेन निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च करिष्ये । इति संकल्प्य गणपतिपूजनादिनांदीश्राद्धांतं पूर्वोक्तपद्धतिकांडवत्सर्वं संपादयेत् । ततो वरण

द्रव्याणि गृहीत्वा । देशकालौ संकीर्त्य । मम सर्वविधपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं जन्मजन्मांतरे श्रीभगवद्भक्तिप्राप्त्यर्थं च श्रीमद्भागवतसप्ताहकथाश्रवणार्थममुकगोत्रममुकवेदशाखाध्यायिनं ब्राह्मणं श्रावयितारमेभिर्द्रव्यैस्त्वामहं वृणे । ॐ वृतोस्मीति प्रतिवचनानतरं वस्त्रालंकारैः संपूज्य प्रार्थयेत् ॥ शुकरूप द्विजश्रेष्ठ सर्वशास्त्रविशारद ॥ श्रीभागवतव्याख्यानादज्ञानं मे विनाशय ॥ १ ॥ इति संप्रार्थ्य वक्तारं वरयेत्पंच वाडवान् ॥ द्वादशाक्षरमन्त्रस्य जपार्थं मुनिसत्तम ॥ २ ॥ ततो देशकालौ संकीर्त्य मम सर्वविधपातकनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं करिष्यमाणश्रीमद्भागवतसप्ताहयज्ञकर्मणः साङ्गतासिद्धये अमुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्द्रव्यैर्विष्णोर्द्वादशाक्षरमंत्रजपकरणार्थं त्वामहं वृणे । इति वृत्वा वरणद्रव्यैः संपूज्य प्रार्थयेत ॥ एवमेव गायत्रीजपार्थं विष्णुसहस्रनामजपार्थं च वृणुयात् ॥ ततः सर्वतोभद्रमंडले विष्णुप्रतिमां संस्थाप्य पुरुषसूक्तेन द्वादशाक्षरमंत्रेण वा षोडशोपचारैः संपूज्य प्रदक्षिणाचतुष्टयं कृत्वा साष्टांगं प्रणम्य प्रार्थयेत् । संसारसागरे मग्नं दीनं मां करुणानिधे ॥ कर्म्मग्राहगृहीताङ्गं मामुद्धर भवार्णवात् ॥ ततः श्रीमद्भागवतपूजां षोडशोपचारैः कृत्वा वस्त्राभरणपुष्पमालाफलनैवेद्यादि निवेद्य । प्रदक्षिणां कृत्वा प्रार्थयेत् । श्रीमद्भागवताख्यस्त्वं प्रत्यक्षः कृष्ण एव हि ॥ स्वीकृतोऽसि मया नाथ मुक्त्यर्थं भवसागरे ॥ १ ॥ मनोरथो मदीयोऽयं सफलः सर्वथा त्वया ॥ निर्विघ्नेनैव कर्त्तव्यो दासोऽहं तव केशव ॥२॥ एवं दीनं वचः प्रोक्त्वा वक्तारं चापि पूजयेत् ॥ संपूज्य वस्त्रभूषाभिः पूजान्ते तं च संस्तवेत् ॥ ३ ॥ ब्राह्मणान्वैष्णवांश्चान्यांस्तथा कीर्त्तनकारिणः ॥ नत्वा संपूज्य दत्त्वार्घ्यं स्वयमासनमाविशेत् ॥४॥ लोकचिंताधनागारपुत्रचिंताच्युतश्च यः ॥ कथाचिंताशुद्धमतिः स लभेत्फलमुत्तमम् ॥ ५ ॥ आसूर्योदयमारभ्य सार्द्धं त्रिप्रहरांतकम् ॥ वाचनीया कथा सम्यग्धीरकंठं सुधीमता ॥ ६ ॥ कथाविरामः कर्त्तव्यो मध्याह्ने घटिकाद्वयम् ॥ कथावसाने कर्त्तव्यं कीर्त्तनं केशवस्य च ॥ ७ ॥ उपवासः प्रकर्त्तव्यः श्रोतृभिस्तत्फलेप्सुभिः ॥ तदशक्तौ हविष्यान्नं सकृत्स्वल्पं समाहरेत् ॥ ८ ॥ जलेनापि फलेनापि दुग्धेन च घृतेन वा ॥ केवलेनैव कर्त्तव्यं निर्विघ्नं धारणं तनोः ॥ ९ ॥ ब्रह्मचर्यमधःसुप्तिः पत्रावल्यां च भोजनम् ॥ कथासमाप्तौ भुक्तिं च कुर्य्यान्नित्यं कथाव्रती ॥ १० ॥ कामं क्रोधं मदं लोभं दंभं मात्सर्यमेव च ॥ मोहं द्वेषं तथा हिंसांनिंदां चापि विवर्जयेत् ॥ ११ ॥ सत्यं शौचं दयां मौनमार्जवं विनयं तथा ॥ मनःप्रसन्नतां चापि बुधः कुर्यात्कथाव्रती ॥ १२ ॥ श्रीकामस्तनयार्थी च जयकामश्च मोक्षधीः ॥ शृणुयाद्वै भागवतं निष्कामः श्रीहरिं लभेत् ॥ १३ ॥ दरिद्रश्च क्षयी रोगी निर्भाग्यः पापकर्म्मवान् ॥ अनपत्यो मोक्षकामः शृणुयात्स कथामिमाम् ॥ १४ ॥ अपुष्पा काकवंध्या च वंध्या या च मृतार्भका ॥ स्रवद्गर्भा च या नारी तया श्राव्या प्रयत्नतः ॥ १५ ॥ सप्तमे दिवसे कुर्यात्लंघनं तत्समाप्तिके ॥ वक्तुश्च पूजा कर्त्तव्या गोभूस्वर्णांबरादिभिः ॥ १६ ॥ प्रसादं तुलसीं मालां श्रोतृभ्यः प्रतिपादयेत् ॥ उत्सवश्च तथा कार्यो गीतवाद्यविशारदैः ॥ १७ ॥ जयशब्दो नमःशब्दः शंखशब्दश्च गीयताम् ॥ विप्रेभ्यो याचकेभ्यश्च वित्तमन्नं प्रदीयताम् ॥१८॥ विरक्तश्चेद्भवेच्छ्रोता गीता वाच्या परेऽहनि ॥ गृहस्थश्चेत्तदा होमः कर्त्तव्यः कर्म्मशांतये ॥ १९ ॥ प्रतिश्लोकं च जुहुयाद्विधिना दशमस्य च ॥ पायसं मधुसर्पिश्च तिल

॥ २१ ॥
तंडुलकान् यवान् ॥ २० ॥ शर्करां च प्रियालं च द्राक्षां बादामखर्जुरी ॥ अंभोजानि च कर्पूरं चंदनागुरुणी पुरम् ॥ २१ ॥
लवंगं बिल्वपत्राणि सहस्रं च पृथक् हुनेत् ॥ अथ वा हवनं कुर्याद्गायत्र्या सुसमाहितः ॥ २२ ॥ तन्मयत्वात्पुराणस्य परमस्यास्य
तत्त्वतः ॥ होमाशक्तौ बुधो हौम्यं दद्यात्तत्फलसिद्धये ॥ २३ ॥ नानाछिद्रनिरोधार्थं न्यूनताधिक्यताख्ययोः ॥ दोषयोः प्रशमार्थं
तु पठेन्नामसहस्रकम् ॥ २४ ॥ द्वादशाष्टादशा वापि श्रद्धया ह्यधिकांस्तथा ॥ पायसेनाशयेद्विप्रान् स्वर्णं धेनुश्च दक्षिणा ॥ २५ ॥
शक्तौ पलत्रयमितं स्वर्णसिंहं विधाय च ॥ तत्रास्य पुस्तकं स्थाप्य लिखितं ललिताक्षरम् ॥ २६ ॥ संपूज्यावाहनाद्यैस्तदुपचारैः
सदक्षिणम् ॥ वस्त्रभूषणगंधाद्यैः पूजिताय यतात्मने ॥ २७ ॥ आचार्य्याय सुधीर्दत्त्वा मुक्तः स्याद्भवबन्धनैः ॥ एवं कृते विधाने च
सर्व्वपापनिवारणे ॥ २८ ॥ फलदं स्यात्पुराणं तु श्रीमद्भागवतं शुभम् ॥ धर्म्मार्थकाममोक्षाणां साधनं नात्र संशयः ॥ २९ ॥
इति ते कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि ॥ श्रीमद्भागवतेनैव भुक्तिर्मुक्तिः प्रकाशिता ॥३०॥ इति पाद्मे उत्तरखण्डे श्रीमद्भागवत
पारायणसप्ताहविधानं सप्रयोगं समाप्तम् ॥ ॥ अथ महाभारतश्रवणविधानम् ॥ ( महाभारते ) " अतः परं प्रवक्ष्यामि
यानि देयानि भारते ॥ वाच्यमाने तु विप्रेभ्यो राजन्पर्वणिपर्वणि॥१॥ स्वस्ति वाच्य द्विजानादौ ततः कार्ये प्रवर्तिते ॥ समाप्ते पर्वणि
ततः स्वशक्त्या पूजयेद्द्विजान् ॥ २ ॥ आदौ तु वाचकं चैव वस्त्रगंधसमन्वितम् ॥ विधिवद्भोजयेद्राजन्मधुपायसमुत्तमम् ॥ ३ ॥
ततो मूलफलप्रायं पायसं मधुसर्पिषा । आस्तिकं भोजयेद्राजन्दद्याच्चैव गुडौदनम् ॥ ४ ॥ अपूपैश्चैव पूपैश्च मोदकैश्च समन्वि
तम् ॥ सभापर्वणि राजेंद्र हविष्यं भोजयेद्द्विजान् ॥ ५ ॥ आरण्यके मूलफलैस्तर्पयेत्तु द्विजोत्तमान् ॥ अरणीपर्व चासाद्य जल
कुंभान्प्रदापयेत् ॥ ६ ॥ तर्पणानि च मुख्यानि वन्यमूलफलानि च ॥ सर्वकामगुणोपेतं विप्रेभ्योऽन्नं प्रदापयेत् ॥ ७ ॥
विराट्पर्वणि तथा वासांसि विविधानि च ॥ उद्योगे भरतश्रेष्ठ सर्वकामगुणान्वितम् ॥८॥ भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलंकृ
तान् ॥ भीष्मपर्वणि राजेंद्र दत्त्वा यानमनुत्तमम् ॥ ९ ॥ ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ॥ द्रोणपर्वणि विप्रेभ्यो भोजनं पर
मार्चितम् ॥ १० ॥ शराश्च देया राजेन्द्र चापान्यसिवरास्तथा ॥ कर्णपर्वण्यपि तथा भोजनं सर्वकामिकम् ॥ ११ ॥ विप्रेभ्यः संस्कृतं
सम्यग्दद्यात्संयतमानसः ॥ शल्यपर्वणि राजेंद्र मोदकैः सगुडौदनैः ॥ १२ ॥ अपूपैस्तर्पणैश्चैव सर्वमन्नं प्रदापयेत् ॥ गदापर्वण्यपि
तथा मुद्गमिश्रं प्रदापयेत् ॥ १३ ॥ स्त्रीपर्वणि तथा रत्नैस्तर्पयेत्तु द्विजोत्तमान् ॥ घृतौदनं पुरस्ताच्च ऐषीके दापयेत्पुनः ॥ १४ ॥
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ॥ शांतिपर्वणि च तथा हविष्यं भोजयेद्द्विजान् ॥ १५ ॥ आश्वमेधिकमासाद्य भोजनं सर्व
कामिकम् ॥ तथाश्रमनिवासे तु हविष्यं भोजयेद्द्विजान् ॥ १६ ॥ मौसले सार्वगुणितं गंधमाल्यानुलेपनम् ॥ महाप्रस्थानिके तद्व
त्सर्वकामगुणान्वितम् ॥ १७ ॥ स्वर्गपर्वण्यपि तथा हविष्यं भोजयेद्द्विजान् ॥ हरिवंशसमाप्तौ तु सहस्रं भोजयेद्द्विजान् ॥ १८ ॥ गामे
कां निष्कसंयुक्तां ब्राह्मणाय निवेदयेत् ॥ तदर्धेनापि दातव्या दरिद्रेणापि पार्थिव ॥१९॥ प्रतिपर्वसमाप्तौ तु पुस्तकं वै विचक्षणः ॥
सुवर्णेन च संयुक्तं वाचकाय निवेदयेत् ॥२०॥ हरिवंशे पर्वणि च पायसं तत्र भोजयेत् ॥ पारणे पारणे राजन्यथावद्भरतर्षभ ॥२१॥

समाप्य सर्वाः प्रयतः संहिताः शास्त्रकोविदः ॥ शुभे देशे निवेश्याथ क्षौमवस्त्राभिसंवृताः ॥ २२ ॥ अर्चयेत यथान्यायं गंधमाल्यैः पृथक्पृथक् ॥ हिरण्यं च सुवर्णं च दक्षिणामथ दापयेत् ॥ २३ ॥ सर्वथा तोषयेद्भक्त्या वाचकं गुरुमात्मनः ॥ वाचके परितुष्टे तु शुभा प्रीतिरनुत्तमा ॥ २४ ॥ ब्राह्मणेषु तु तुष्टेषु प्रसन्नाः सर्वदेवताः ॥ अष्टादशपुराणानां श्रवणाद्यत्फलं भवेत् ॥ २५ ॥ तत्फलं समवाप्नोति वैष्णवो नात्र संशयः ॥ स्त्रियश्च पुरुषाश्चैव वैष्णवं पदमाप्नुयुः ॥ २६ ॥ स्त्रिभिश्च पुत्रकामाभिः श्रोतव्यं वैष्णवं यशः॥ दक्षिणा चात्र देया वै निष्कपंचसुवर्णकम् ॥ २७ ॥ वाचकाय यथाशक्त्या यथोक्तं फलमिच्छता ॥ स्वर्णशृंगीं च कपिलां सवत्सां वस्त्रसंवृताम् ॥२८॥ वाचकाय च दद्याद्धि आत्मनः श्रेय इच्छता ॥ अलंकारं प्रदद्याच्च पाण्योर्वै भरतर्षभ ॥२९॥ कर्णस्याभरणं दद्याद्धनं चैव विशेषतः ॥ भूमिदानं समादद्याद्वाचकाय नराधिप ॥ ३० ॥ शृणोति श्रावयेद्वापि सततं चैव यो नरः ॥ सर्वपापविनिर्मुक्तो वैष्णवं पदमाप्नुयात् ॥ ३१ ॥ पितॄनुद्धरते सर्वानेकादशसमुद्भवान् ॥ आत्मानं ससुतं चैव स्त्रियं च भरतर्षभ ॥ ३२ ॥ दशांशश्चैव होमोऽपि कर्तव्योत्र नराधिप ॥ इदं मया तवाग्रे च प्रोक्तं सर्वं नरर्षभ ॥३३॥" इति महाभारतश्रवणविधानं समाप्तम्॥

अथ श्रीवाल्मीकिमुनिकृतस्यादिकाव्यस्य श्रीमद्रामायणाख्यस्य नवाहपाठविधानम् ॥ ( रामसेवाग्रंथे । ) माघकार्तिकवैशाखे चैत्रे वान्यतमेपि च ॥ यथावकाशः श्रद्धा च तथैव शृणुयान्नरः ॥ १ ॥ ( श्रीरामायणमाहात्म्येपि ) चैत्रे माघे कार्तिके च सिते पक्षे च वाचयेत् ॥ नवाहे सुमहापुण्यं श्रोतव्यं च प्रयत्नतः ॥ २ ॥ पंचम्या दिनमारभ्य रामायणकथामृतम् ॥ नवाहश्रवणेनैव सर्वपापैः प्रमुच्यते ॥ ३ ॥ ( रामसेवायाम् ) तिथिः सैव महापुण्या स कालः सर्वपुण्यदः ॥ यस्मिन्रामायणकथाश्रवणे जायते मतिः ॥ ४ ॥ पुण्यक्षेत्रे पुण्यतीर्थे तुलसीविष्णुसन्निधौ ॥ स्वगृहे वा पठेद्यस्तु स देवैः परिपूज्यते ॥ ५ ॥ पूर्वोत्तरमुखो वक्ता श्रोतारस्तत्पुरःस्थिताः ॥ एकाग्रतरचित्तेन पठेद्वा शृणुयान्नरः ॥ ६ ॥ व्यासासनं समास्तीर्य तदग्रे पुस्तकासनम् ॥ वितानपल्लवोपेतं कदलीस्तंभमण्डितम् ॥ ७ ॥ श्रोतॄणामासनं स्थाप्यं विशालं तत्पुरः पुनः ॥ श्रोतृभिश्च तथा वक्तुर्व्यासादग्रंथस्य चोच्चता ॥ ८ ॥ पुराणं पूजयेन्नित्यं नित्यं व्यासस्य पूजनम् ॥ मध्याह्ने घटिकायुग्मं विश्रामं कारयेत्तथा ॥ ९ ॥ कथान्ते भगवन्नामस्मरणं संप्रकीर्तितम् ॥ समाप्तौ वस्त्रभूषाद्यैर्द्रव्यैर्व्यासस्य तोषणम् ॥ १० ॥ अथ नवदिनपर्यंतं कथाविश्रामस्थलकथनम् ॥ प्रथमे तु अयोध्यायाः षट्सर्गांते शुभा स्थितिः ॥ तस्यैवाऽशीतिसर्गान्ते द्वितीये दिवसे स्थितिः ॥ १ ॥ तथा विंशतिसर्गान्ते चारण्यस्य तृतीयके ॥ दिने चतुर्थे षट्चत्वारिंशत्सर्गे कथास्थितिः ॥ २ ॥ किष्किंधाख्यस्य कांडस्य पाठविद्भिरुदाहृता ॥ सुसप्तचत्वारिंशत्के सर्गान्ते सुंदरे स्थितिः ॥ ३ ॥ पंचमे दिवसे कुर्यादथ षष्ठे तथोच्यते ॥ युद्धकाण्डस्य पंचाशत्सर्गान्ते विमला स्थितिः ॥ ४ ॥ एकोनशतसंख्याके सर्गान्ते सप्तमे दिने ॥ युद्धस्यैव तु काण्डस्य विश्रामः संप्रकीर्तितः ॥ ५ ॥ तथा चोत्तरकाण्डस्य षट्त्रिंशत्सर्गपूरणे ॥ अष्टमे दिवसे कृत्वा स्थितिश्च नवमे दिने ॥ ६ ॥ शेषं समाप्य युद्धस्य चान्त्यं सर्गं पुनः पठेत् ॥ रामराज्यकथा यस्मिन्सर्ववांछितदायिनी ॥ ७ ॥ एवं पाठक्रमः पूर्वैराचार्यैश्च विनिर्मितः ॥ यः करोति नरश्रेष्ठः शृणुयाद्वा समा

हितः ॥ ८ ॥ धर्मार्थकाममोक्षाणां फलं त्वविकलं लभेत् ॥ कथान्ते मंडपं कृत्वा सर्वतोभद्रसंयुतम् ॥ ९ ॥ सस्थंडिलं सकुंडं वा पताकाकदलीयुतम् ॥ पूजयेद्गणराजं च ब्राह्मणैः स्वस्ति वाचयेत् ॥ १० ॥ मातृकापूजनं नान्दीश्राद्धं भूसुरवर्णनम् ॥ मंडले सर्वतोभद्रे हैमं रामं प्रपूजयेत् ॥ ११ ॥ जानकीसहितं वस्त्रभूषास्रक्चन्दनादिभिः ॥ पार्श्वे भरतशत्रुघ्नौ हनुमन्तं पुरः स्थितम् ॥ १२ ॥ पृष्ठे विभीषणं भक्तं सुग्रीवं तु समर्चयेत् ॥ लक्ष्मणं पादपीठस्य सन्निधौ विधिनार्चयेत् ॥ १३ ॥ चतुःशतोत्तरं चैव द्विसहस्रं तिलैस्तदा ॥ हवनं मंत्रतः कुर्याद्द्वादशाक्षरविद्यया ॥ १४ ॥ अष्टाक्षरेण वा रामषडक्षरत आचरेत् ॥ तर्पणं तद्दशांशेन मार्ज्जनं तद्दशांशतः ॥ १५ ॥ ब्राह्मणान्वैष्णवांश्चैव सदन्नेन तु भोजयेत् ॥ एकपारायणस्यैषा संख्या होमे प्रकीर्तिता ॥ १६ ॥ पाठवृद्ध्या तु होमस्य संख्यावृद्धिः प्रजायते ॥ गोप्रदानादिकं सर्वं दानं शक्त्या प्रदापयेत् ॥ १७ ॥ व्यासाय पुस्तकं दद्याद्धेमसिंहासने स्थितम् ॥ सांगतासिद्धये तस्य स्वर्णमुद्रां समर्पयेत् ॥ १८ ॥ भूयसीं दक्षिणां दत्त्वा दीनानाथान् समर्चयेत् ॥ एवं कृते मनुष्याणां दुर्लभोऽपि मनोरथः ॥ १९ ॥ श्रीरामस्य प्रसादेन सुलभः स्यान्न संशयः ॥ प्रतिमां कलशोपेतां मंडलेन समन्विताम् ॥ २० ॥ विसर्जयित्वाऽऽचार्याय दद्यात्कर्म्मांगसिद्धये ॥ कृतकृत्यं भावयित्वा चात्मानं तु हरिं स्मरेत् ॥ २१ ॥ इति श्रीवाल्मीकिरामायणनवाहपारायणविधानम् ॥ अथ वाल्मीकिरामायणपुस्तकदानविधानम् ॥ " तत्रादौ पञ्चोपचारैः पुस्तकपूजनम् ॥ ॐ सदा श्रवणमात्रेण पापिनां सद्गतिप्रदे ॥ शुभे रामकथे तुभ्यं गन्धमद्य समर्प्पये ॥ इति गन्धम् ॥ बालादिसप्तकाण्डेन सर्वलोकसुखप्रद ॥ रामायण महोदार पुष्पं तेऽद्य समर्प्पये ॥ २ ॥ इति पुष्पाणि । पुष्पमालां च ॥ यस्यैकश्लोकपाठस्य फलं सर्वफलाधिकम् ॥ तस्मै रामायणायाद्य दशांगं धूपमर्प्पये ॥ ३ ॥ इति धूपम् ॥ यस्य लोके प्रणेतारो वाल्मीक्यादिमहर्षयः ॥ तस्मै रामचरित्राय घृतदीपं समर्प्पये ॥ ४ ॥ इति दीपम् ॥ श्रूयते ब्रह्मणो लोके शतकोटिप्रविस्तरम् ॥ रूपं रामायणस्यास्य तस्मै नैवेद्यमर्प्पये ॥ ५ ॥ इति नैवेद्यम् ॥ एवं पञ्चोपचारपूजां कर्पूरेण नीराजनं च कृत्वा प्रदक्षिणाचतुष्टयं पुष्पांजलिं च दत्त्वा साष्टांगं प्रणम्य प्रार्थनां कुर्यात् ॥ वाल्मीकिगिरिसंभूता रामसागरगामिनी ॥ पुनाति भुवनं पुण्या रामायणमहानदी ॥ १ ॥ श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम् ॥ कांडग्राहमहामीनं वंदे रामायणार्णवम् ॥ २ ॥ अस्मिन्कलिमलाकीर्णे काले सर्वशुभप्रदम् ॥ मनुजानां गतिर्नास्ति श्रीमद्रामकथां विना ॥ ३ ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ॥ शृण्वन्रामकथानादं को न याति परां गतिम् ॥ ४ ॥ इति संप्रार्थ्य देवब्राह्मणं सम्पूज्य । पुस्तकस्य संकल्पं कृत्वा ब्राह्मणाय दद्यात् । ततो दानप्रतिष्ठासिद्धये सुवर्णदक्षिणां दत्त्वा प्रणिपत्य विसर्जयेत् ॥ " इति पुस्तकदानम् ॥ ॥ अथ वाल्मीकिरामायणन्यासादिविधानम् ॥ पुत्रकामो बालकांडं पठेत् ॥ १ लक्ष्मीकामोऽयोध्याकांडम् ॥ २ ॥ नष्टराज्यप्राप्तिकामः किष्किन्धाकांडम् ॥ ३ ॥ सर्वकामः सुन्दरकाण्डम् ॥ ४ ॥ शत्रुनाशकामः सर्वकामश्च लंकाकाण्डं च पठेत् । तत्र प्रयोगः ॥ ॐ अस्य श्रीवाल्मीकिरामायणमहामंत्रस्य वाल्मीकिभगवान् ऋषिः ॥ प्रायेण अनुष्टुप् छंदः । श्रीरामः परमात्मा देवता । अभयं सर्व

भूतेभ्य इति बीजम् । अङ्गुल्यग्रेण तान् हन्यामिति शक्तिः ॥ एतदस्त्रबलं दिव्यमिति कीलकम् । भगवान्नारायणो देव इतितत्त्वम् । धर्मात्मा सत्यसंधश्चेत्यस्त्रं पाठे विनियोगः । ॐ श्रीं रां आपदामपहर्तारमित्यंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ ह्रीं रीं दातारं तर्जनीभ्यां नमः ॥ २ ॥ ॐ रों रूं सर्वसंपदामिति मध्यमाभ्यां नमः ॥ ३ ॥ ॐ श्रीं रैं लोकाभिराममित्यनामिकाभ्यां नमः ॥ ४ ॥ ॐ श्रीं रौं श्रीराममिति कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ रौं रः भूयोभूयो नमाम्यहमिति करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेव हृदयादि पंचांगन्यासं कृत्वा । ॐ अहं सखा ते काकुत्स्थ इत्यस्त्राय फट् ॥ ६ ॥ इति षडंगं कृत्वा । ॐ ब्रह्मा स्वयंभूर्भगवानिति दिग्बंधं कुर्य्यात् । अथ ध्यानम् ॥ "वामे भूमिसुता पुरस्तु हनुमान्पश्चात्सुमित्रासुतः शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च॥सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥१॥ इति ध्यात्वा मानसोपचारैः संपूज्य पठेत् ॥ ॐ आपदामपहर्तारं दातारं सर्वसंपदाम् ॥ लोकाभिरामंश्रीरामं भूयोभूयोनमाम्यहम् ॥ १ ॥ इति मंत्रेण सम्पुटितरामायणपाठात्सकलकार्य्यसिद्धिः ॥ अथ बालकांडस्य ऋषिन्यासादिप्रयोगः । ॐ अस्य श्रीबालकांडमहामंत्रस्य भगवान् ऋष्यशृंगऋषिः । अनुष्टुप्छंदः दाशरथिः परमात्मा देवता । रां बीजम् ॥ नमः शक्तिः । रामायेतिकीलकम् । श्रीरामप्रीत्यर्थे बालकांडे जपे विनियोगः ॥ ॐ ऋष्यशृंगऋषये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छंदसे नमः मुखे ॥ २ ॥ ॐ दाशरथिपरमात्मदेवतायै नमः हृदये ॥ ३ ॥ ॐ रां बीजाय नमः गुह्ये ॥ ४ ॥ ॐ नमः शक्तये नमः पादयोः ॥ ५ ॥ ॐ रामाय कीलकाय नमः सर्वांगे ॥ ६ ॥ इति ऋष्यादिन्यासः ॥ ॐ सुप्रसन्नाय अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ शांतमनसे तर्जनीभ्यां नमः ॥ २ ॥ ॐ सत्यसंधाय मध्यमाभ्यां नमः ॥ ३ ॥ ॐ जितेंद्रियाय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ धर्म्मिष्ठाय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ राजदाशरथये जयिने करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेवहृदयादिषडंगन्यासंकृत्वा ध्यायेत् ॥ ध्यानम् ॥ श्रीराममाश्रितजनामरभूरुहेशमानंदशुद्धमखिलामरवंदितांघ्रिम् ॥ सीतांगनासुमिलितं सततं सुमित्रापुत्रान्वितं धृतधनुः शरमादिदेवम्॥१॥इति ध्यात्वा मानसोपचारैः संपूज्य पुत्रकामनया । 'ॐ रां रामाय नमः' इति मंत्रेण संपुटितं बालकांडं पठेत् ॥ ॐ सुप्रसन्नः शांतमनाः सत्यसंधो जितेंद्रियः॥ धर्मज्ञो नयसारज्ञो राजा दाशरथिर्जयी॥१॥ इति मंत्रेण वा संपुटितं दद्यात्। हनुमत्पूजापूर्वकं पारायणं कृत्वा कांडांते पूर्वोक्तन्यासं कुर्य्यात् ॥ इति बालकांडपारायणम् ॥ ॐ अस्यश्रीअयोध्याकांडमहामंत्रस्य भगवान् वसिष्ठ ऋषिः । अनुष्टुप् छंदः । भरतो दाशरथिपरमात्मा देवता । भं बीजम् । नमः शक्तिः । भरतायेति कीलकम् । मम भरतप्रसादसिद्ध्यर्थे अयोध्याकांडजपे विनियोगः । ॐ वसिष्ठऋषये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छंदसे नमः मुखे ॥ २ ॥ ॐ दाशरथिभरतपरमात्मदेवतायै नमः हृदये ॥ ३ ॥ ॐ भंबीजाय नमः गुह्ये ॥४॥ ॐ नमः शक्तये नमः पादयोः ॥५॥ ॐ भरताय कीलकाय नमः सर्वाङ्गे ॥ ६ ॥ इति ऋष्यादिन्यासः ॥ ॐ भरताय नमस्तस्मै अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ रसज्ञाय तर्जनीभ्यां नमः ॥ २ ॥ ॐ महात्मने मध्यमाभ्यां नमः ॥ ३ ॥ ॐ तापसाय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ अति

शांताय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ शत्रुघ्नसहिताय करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः। एवमेव हृदया दिषडंगन्यासं कृत्वा ध्यायेत् ॥ ध्यानम् ॥ श्रीरामपादद्वयपादुकांतस्संसक्तचित्तं कमलायताक्षम् ॥ श्यामं प्रसन्नवदनं कमलावदाभं शत्रुघ्नयुक्तमनिशं भरतं नमामि ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य। ॐ भं भरताय नमः ॥ भरताय नमस्तस्मै सार ज्ञाय महात्मने ॥ तापसायातिशांताय शत्रुघ्नसहिताय च ॥ १ ॥ इति मंत्रेण संपुटितमयोध्याकांडं लक्ष्मीकामनया पठेत ॥ तत उत्तरन्यासं पूर्ववत्कृत्वा पारायणं समापयेत । इत्ययोध्याकांडपारायणम् ॥ २ ॥ ॐ अस्य श्रीकिष्किंधाकांडमहामन्त्रस्य भगवान् ऋषिः। अनुष्टुप् छन्दः। सुग्रीवो देवता। सुं बीजम्। नमः शक्तिः। सुग्रीवेति कीलकम्। मम सुग्रीवप्रसादसिद्ध्यर्थे किष्किंधाकांडपारायणे जपे विनियोगः ॥ ॐ भगवदृषये नमः शिरसि ॥ ॐ अनुष्टुप्छन्दसे नमः मुखे ॥ २ ॥ ॐ सुग्री वदेवतायै नमः हृदये ॥ ३ ॥ ॐ सुं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ नमः शक्तये नमः पादयोः ॥ ५ ॥ ॐ सुग्रीवेति कीलकाय नमः सर्वांगे ॥ ६ ॥ इति ऋष्यादिन्यासः। ॐ सुग्रीवाय अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ सूर्यतनयाय तर्जनीभ्यां नमः ॥ २ ॥ ॐ सर्ववानरपुंगवाय मध्यमाभ्यां नमः ॥ ३ ॥ ॐ बलवते अनामिकाभ्यां नमः ॥ ४ ॥ ॐ राघवसखायकनिष्ठिकाभ्यां नमः ॥ ५ ॥ वशी रायं प्रयच्छतु इति करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः। एवमेव हृदयादिषडंगन्यासं कृत्वा ध्यायेत् ( ध्यानम् ) सुग्रीवमर्कतनयं कपिवर्यवंद्यमारोपिताच्युतपदांबुजमादरेण ॥ पाणिप्रहारकुशलं बलपौरुषाढ्यमाशास्पदांतनि पुणं हृदि भावयामि ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य। ॐ सुं सुग्रीवाय नमः ॥ सुग्रीवः सूर्यतनयः सर्ववानरपुंगवः ॥ बलवान्राघवसखा वशी रायं प्रयच्छतु ॥ १ ॥ इति मंत्रेण संपुटितं पठेत। नष्टराज्यप्राप्तिः अन्यत्सर्वं पूर्ववत्। इति किष्किंधा कांडपारायणम् ॥ अस्य श्रीआरण्यकांडमहामन्त्रस्य भगवान् ऋषिः। अनुष्टुप् छंदः । श्रीरामो दाशरथिः परमात्मा महेंद्रो देवता। ईं बीजम्। नमः शक्तिः। इन्द्रायेति कीलकम्। इन्द्रप्रसादसिद्ध्यर्थे आरण्यकांडपारायणे जपे विनियोगः ॥ ॐ भगवानृ षये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छन्दसे नमः मुखे ॥ २ ॥ ॐ श्रीरामपरमात्मामहेंद्रदेवतायै नमः हृदये ॥ ३ ॥ ॐ ईं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ नमः शक्तये नमः पादयोः ॥ ५ ॥ ॐ इन्द्राय कीलकाय नमः सर्वांगे ॥ ६ ॥ इति ऋष्यादि न्यासः ॥ ॐ सहस्रनयनाय अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ देवाय तर्जनीभ्यां नमः ॥ २ ॥ ॐ सर्वदेवनमस्कृताय मध्यमाभ्यां नमः ॥ ३ ॥ ॐ दिव्यवज्रायुधाय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ महेंद्राय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ शचीपतये करतल करपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः। एवमेव हृदयादिषडंगन्यासं कृत्वा ध्यायेत्। ( ध्यानम् ) शचीपतिं सर्वसुरेशवंद्यं सर्वा र्तिहर्तारमचिंत्यशक्तिम् ॥ श्रीरामसेवानिरतं महांतं वंदे महेंद्रं धृतवज्रमीड्यम् ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य। ॐ लं इन्द्राय नमः ॥ १ ॥ सहस्रनयनं देवं सर्वदेवनमस्कृतम् ॥ दिव्यवज्रधरं देवं महेंद्रं च शचीपतिम् ॥ १ ॥ इति मन्त्रेण संपुटितं पठेत्। अन्यत्पूर्ववदित्यारण्यकांडपारायणम् ॥ अस्य श्रीसुन्दरकांडमहामन्त्रस्य भगवान् हनुमान् ऋषिः अनुष्टुप् छन्दः । जग

न्माता सीता देवता। श्रीं बीजम्। स्वाहा शक्तिः। सीतायै कीलकं सीताप्रसादसिद्ध्यर्थे सुन्दरकाण्डपारायणे जपे विनियोगः। ॐ भगवद्धनुमद्ऋषये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छन्दसे नमः मुखे ॥ २ ॥ ॐ जगन्माता सीतादेवतायै नमः हृदये ॥३॥ ॐ श्रींबीजाय नमः गुह्ये ॥ ४ ॥ ॐ स्वाहाशक्तये नमः पादयोः ॥ ५ ॥ ॐ सीतायै कीलकाय नमः सर्वांगे ॥ ६ ॥ इति ऋष्यादिन्यासः ॥ ॐ सीतायै अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ विदेहराजसुतायै तर्जनीभ्यां नमः ॥ २ ॥ ॐ रामसुंदर्यै मध्यमाभ्यां नमः ॥ ३ ॥ ॐ हनुमता समाश्रितायै अनामिकाभ्यां नमः ॥ ४ ॥ ॐ भूमिसुतायै कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ शरणं भजे करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेव हृदयादिषडंगन्यासं कृत्वा ध्यायेत् ॥ ध्यानम् ॥ सीतामुदारचरितां विधिसांबविष्णुवंद्यां त्रिलोकजननीं शतकल्पवल्लीम् ॥ हैमैरनेकमणिरञ्जितकोटिभागैर्भूषाचयैरनुदिनं सहितां नमामि ॥ १ ॥" इति ध्यात्वा मानसोपचारैः संपूज्य। 'ॐ श्रींसीतायै नमः ॥ १ ॥' इति मंत्रेण संपुटितं पठेत्। सर्वकार्य्यसिद्धिः। अन्यत्पूर्ववत्। इति सुंदरकांडपारायणम् ॥ ५ ॥ अस्य श्रीयुद्धकांडमहामंत्रस्य विभीषण ऋषिः। अनुष्टुप् छंदः। विधाता देवता। वं बीजम्। नमः शक्तिः। विधातेति कीलकम्। श्रीधातृप्रसादसिद्ध्यर्थे युद्धकांडपारायणे जपे विनियोगः। ॐ विभीषणऋषये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छंदसे नमः मुखे ॥ २ ॥ ॐ विधातृदेवतायै नमः हृदये ॥ ३ ॥ ॐ वं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ नमः शक्तये नमः पादयोः ॥ ५ ॥ ॐ विधातेति कीलकाय नमः सर्वांगे ॥ ६ ॥ इति ऋष्यादिन्यासः। ॐ विधात्रे अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ महादेवाय तर्जनीभ्यां नमः ॥ २ ॥ ॐ भक्तानामभयप्रदाय मध्यमाभ्यां नमः ॥ ३ ॥ ॐ सर्वदेवप्रीतिकराय अनामिकाभ्यां नमः ॥ ४ ॥ ॐ भगवत्प्रियाय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ ईश्वराय करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेव हृदयादिषडंगन्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ "देवं विधातारमनंतवीर्यं भक्ताभयं श्रीपरमादिदेवम् ॥ सर्वामरप्रीतिकरं प्रशांतं वंदे सदा भूतपतिं सुभर्तुम् ॥ १ ॥" इति ध्यात्वा मानसोपचारैः सपूज्य। ॐ वं विधात्रे नमः ॥ १ ॥ विधातारं महादेवं भक्तानामभयप्रदम् ॥ सर्वदेवप्रीतिकरं भगवत्प्रियमीश्वरम् ॥ १ ॥ इति मंत्रेण संपुटितं पठेत् ॥ (शत्रोः पराभवो विजयश्च) अन्यत्सर्वं पूर्ववत् ॥ इति युद्धकाण्डपारायणम् ॥ ६ ॥ उत्तरकांडस्यापि ऋष्यादिन्यासं षडंगन्यासं चैतदेव ज्ञातव्यम् ॥ अथ पारायणदिनसंख्या। पुनर्वसुनक्षत्रादारभ्य आर्द्रापर्यंतं सप्तकाण्डपाठः। इत्येकः पक्षः ॥ १ ॥ प्रतिपदमारभ्य नवरात्रं पठेत्। इति द्वितीयः ॥ २ ॥ चत्वारिंशद्दिनैः पाठः। इति तृतीयः ॥ ३ ॥ यथारुचि कार्यः ॥ सुंदरकांडे एकोत्तरावृत्त्या पाठः कर्तव्यः। यथा प्रथमदिने एकः द्वितीये द्वौ तृतीये त्रय इत्यादि एकादशदिनपर्यंतम् ॥ द्वादशदिने अवशिष्टं सर्गद्वयं पठित्वा पुनः प्रथमसर्गः पठनीयः। एवं त्रिरावृत्त्या सकलकार्यसिद्धिः। श्रीहनुमत्प्रतिमासमीपे सुंदरकांडपाठाच्छीघ्रकार्यसिद्धिः। पाठश्च तन्मनसैव कार्यः। इति श्रीवाल्मीकिरामायणपारायणविधानम् ॥ ॥ अथ अध्यात्मरामायणपाठविधानम् ॥ ॐ अस्य श्रीमदध्यात्मरामायणे अमुककांडमहामालामंत्रस्य श्रीभगवान् सदाशिव ऋषिः।

अनुष्टुप् छंदः । श्रीरामः परमात्मा देवता । ॐ नमो नारायणायेति बीजम् ॥ दाशरथिरिति शक्तिः । रावणघ्न इति कीलकम् । मम अमुककामनासिद्ध्यर्थममुकमंत्रस्य संपुटीकरणसहितामुककाण्डपाठं करिष्ये इति संकल्प्य पारायणादौ पूर्वोक्तभूतशुद्धिमातृका न्यासादि कर्म कुर्यात् । ॐ श्रीभगवत्सदाशिवऋषये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छंदसे नमः मुखे ॥ २ ॥ ॐ श्रीरामपरमात्मदेवतायै नमः हृदये ॥ ३ ॥ ॐ नमो नारायणायेति बीजाय नमः गुह्ये ॥ ४ ॥ ॐ दाशरथिशक्तये नमः पादयोः ॥ ५ ॥ ॐ रावणघ्नकीलकाय नमः सर्वाङ्गे ॥ ६ ॥ मम चतुर्विधपुरुषार्थसिद्ध्यर्थे जपे विनियोगः ॥ अथ षडंगन्यासः ॥ ॐ रां अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ रीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ रूं मध्यमाभ्यां नमः ॥ ३ ॥ ॐ रैं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ रौं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ रः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः । एवमेव हृदयादिषडंगन्यासं कृत्वा ॐ रांरींरूंरैंरौंरः इति मंत्रेण दिग्बंधं कुर्यात् ॥ अथ ध्यानम् ।"नीलेंदीवरतुल्यश्यामवदनं पीतांबरालंकृतं मुद्रां ज्ञानमयीं दधानमपरां विद्युन्निभां राघवम् ॥ पश्यंतीं मुकुटांगदादिविविधैः कल्पोज्ज्वलांगं भजे श्रीमद्दाशरथिं नमामि सुतरामब्धौ प्लुवं दुस्तरे ॥ १ ॥" इति ध्यात्वा मानसोपचारैः संपूज्य यथाकामनया मंत्रसंपुटितपाठं कुर्यात् । एतन्न्यासादिककर्म्म प्रतिकांडं कार्यम् । ( संपुटीकरण मंत्राः ) ॐ श्रीरामचंद्राय स्वाहा ॥ १ ॥ ॐ क्लींनमः श्रीरघुनाथाय ॥ २ ॥ ॐ जयजय रावणांतकाय ॥ ३ ॥ ॐ नमः सीतापतये नमः ॥ ४ ॥ ॐ लक्ष्मणाग्रजाय नमः ॥ ५ ॥ ॐ भरतशत्रुघ्नसेवितचरणाय नमः ॥ ६ ॥ ॐ रां रामाय नमः ॥ ७ ॥ एषामन्यतमेन संपुटीकृत्य पाठं कुर्यात्सर्वकार्यसिद्धिः ॥ इत्यध्यात्मरामायणपारायणविधानम् ॥

॥ अथ वेदव्यासमंत्रानुष्ठानप्रयोगः ॥ ( मंत्रमहोदधौ ) मंत्रो यथा--व्यां वेदव्यासाय नमः ॥ ८ ॥ इत्यष्टाक्षरो मंत्रः ॥ अस्य वेदव्यासमंत्रस्य ब्रह्मा ऋषिः । अनुष्टुप् छंदः ॥ सत्यवतीसुतवेदव्यासो देवता । व्यां बीजम् । नमः शक्तिः । ममाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ ब्रह्मऋषये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छंदसे नमः मुखे ॥ २ ॥ ॐ सत्यवतीसुतवेदव्यासदेवतायै नमः मुखे ॥ ३ ॥ ॐ व्यां बीजाय नमः ॥ गुह्ये ॥ ४ ॥ ॐ नमः शक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ अथ षडङ्गन्यासः ॥ ॐ व्यां हृदयाय नमः ॥ १ ॥ ॐ व्यीं शिरसे स्वाहा ॥ २ ॥ ॐ व्यूं शिखायै वषट् ॥ ३ ॥ ॐ व्यैं कवचाय हुम् ॥ ४ ॥ ॐ व्यौं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ व्यः अस्त्राय फट् ॥ ६ ॥ इत्यंगन्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ "व्याख्यामुद्रिकया लसत्करतलं सद्योगपीठस्थितं वामे जानुतले दधानमपरं हस्ते सुविद्यानिधिम् ॥ विप्रव्रातवृतं प्रसन्नमनसं पाथोरुहाङ्गद्युतिं पाराशर्य्यमतीव पुण्यचरितं व्यासं स्मरेत्सिद्धये ॥ १ ॥ " इति ध्यात्वा मानसोपचारैः संपूज्य । पूर्वोक्ते धर्मादियुक्ते पीठे आवाहनादिपुष्पांतैरुपचारैर्मूलेन वेदव्यासं संपूज्य आवरणपूजनं कुर्यात् । तद्यथा-षट्कोणे आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च । पूर्वोक्तानि हृदयादिषडंगानि संपूज्य तद्बहिरष्टदलेषु प्राचीक्रमेण । ॐ पैलाय नमः ॥ १ ॥ ॐ वैशंपायनाय नमः ॥ २ ॥ ॐ जैमिनये नमः ॥ ३ ॥ ॐ सुमंतवे नमः ॥ ४ ॥ ( दिग्दलेषु ॐ शुकाय नमः ॥ ५ ॥ ॐ रोमहर्षणाय नमः ॥ ६ ॥ ॐ उग्रश्रवसे नमः ॥ ७ ॥ ॐ

अन्येभ्यो मुनिभ्यो नमः ॥ ८ ॥ इति पूजयेत् । ततो बाह्ये चतुरस्रे भूपुरे पूर्वादिदशदिक्षुइन्द्रादिदशदिक्पालान्तद्वहिर्वज्राद्यायुधानि च पूजयेत् ॥ ततो धूपादिनमस्कारान्तपूजां समाप्य जपं कुर्यात् । अस्य पुरश्चरणमष्टसहस्रजपः । जपान्ते दशांशेन पायस होमः । तद्दशांशेन तर्पणं तद्दश शेन मार्जनं तद्दशांशतो ब्राह्मणभोजनं च कुर्यात् ॥ तथा च-जपेदष्टसहस्राणि पायसैर्होम माचरेत् । एवं सिद्धमनुर्मंत्री कवित्वं शोभनाः प्रजाः ॥ १ ॥ व्याख्यानशक्तिं कीर्तिं च लभते सम्पदां चयम् ॥ मृत्युञ्जयेन पुटितं यो व्यासस्य मनुं जपेत् ॥ २ ॥ सर्वोपद्रवसंत्यक्तो लभते वांछितं फलम् ॥ ( मृत्युञ्जयसंपुटितो मन्त्रः-ॐ जूं सः व्यां वेदव्यासाय नमः सः जूं ॐ ) मृत्युञ्जयस्य मन्त्रोऽयं त्रिवर्णो मृत्युनाशनः ॥ ३ ॥ जप्तोयं केवलो नृणामिष्टसिद्धिं प्रयच्छति ॥ किंपुनस्तेन पुटितो वेदव्यासमनूत्तमः ॥ ४ ॥ इति वेदव्यासमंत्रपुरश्चरणं समाप्तम् ॥ अथ नारायणाथर्वशीर्षम् ॥ अथ पुरुषोहवैनारायणोऽकामयतप्रजाः सृजेयेति । नारायणात्प्राणो जायते मनः सर्वेन्द्रियाणि च । खंवायुर्ज्योतिरापः पृथिवीविश्वस्यधारिणी । नारायणाद्ब्रह्माजायते । नारायणाद्विष्णुर्जायते । नारायणाद्रुद्रोजायते । नारायणादिंद्रोजायते । नारायणात्प्रजापतिःप्रजायते । नारायणाद्द्वादशादित्यारुद्रावसवः सर्वाणिच्छंदांसि नारायणादेवाः समुत्पद्यन्ते । नारायणात्प्रवर्तन्ते-नारायणेप्रलीयन्ते । अथादित्योनारायणः । ब्रह्मानारायणः । शिवश्चनारायणः । शक्रश्चनारायणः । कालश्चनारायणः । दिशश्चनारायणः । ऊर्ध्वंचनारायणः अधश्चनारायणः । अन्तर्बहिश्चनारायणः । नारायणएवेद ठं० सर्वंयद्भूतंयच्चभाव्यम् । निष्कलोनिरञ्जनोनिर्विकल्पोनिराख्यातः शुद्धो देवएकोनारायणोनद्वितीयोऽस्तिकश्चित् । यएवंवेद । सविष्णुरेवभवतिसविष्णुरेवभवति । ॐ इत्यग्रे व्याहरेत् । नम इति पश्चात् । नारायणायेति पंचाक्षराणि । एतद्वैनारायणस्याष्टाक्षरंपदम् । योहवैनारायणस्याष्टाक्षरंपदमध्येति । अनुपब्रवः सर्वमायुरेति । विन्दते प्रजांरायस्पोषं गोपत्यंततोऽमृतत्वमश्नुते । ततोऽमृतत्वमश्नुतइति । प्रत्यगानन्दब्रह्मपुरुषं प्रणवस्वरूपम् ॥ अकार उकारोमकारइति तानेकधासंयोज्यतदेवतदोमिति । यमुक्त्वामुच्यतेयोगीजन्मसंसारबंधनात् ॥ ॐ नमोनारायणायेतिमंत्रोपासकः वैकुंठभुवनंगच्छति । तदिदंपरमपुंडरीकंविज्ञानघनं तस्मात्तडिदाभमात्रम् । ब्रह्मण्योदेवकीपुत्रोब्रह्मण्योमधुसूदनः । सर्वभूतस्थमेकंवैनारायणम् । कारणरूपंपरब्रह्मकम् । एतदथर्वशीर्षंयोऽधीते । सायमधीयानोदिवसकृतंपापंनाशयति । प्रातरधीयानोरात्रिकृतंपापंनाशयति । सायंप्रातः प्रयुञ्जानोअपापोभवति । मध्यंदिनमादित्याभिमुखोऽधीयानः सद्यः पंचमहापातकोपपातकेभ्यो मुच्यते । सर्ववेदपारायणपुण्यंलभते श्रीनारायणसायुज्यमाप्नोति । यएवंवेद । इत्युपनिषत् । इति नारायणाथर्वशीर्षम् ॥ इति श्रीबीकानेरराज्यान्तर्गत श्रीरत्नगढनगरनिवासिना श्रीवसिष्ठगोत्रोद्भवश्रीरामकृष्णपौत्रेण श्रीकस्तूरिचंद्रसूनुना गौडवंशावतंसश्रीमहादेवभक्तमाध्यंदिनवाजसनेयिना वैद्यपंडितश्रीचतुर्थीलालशर्मणा विरचिते अनुष्ठानप्रकाशे महानिबंधे पुरश्चरणकाण्डे विष्णुमंत्रानुष्ठानप्रकरणं समाप्तम्॥४॥ अथ सूर्य्यादिमंत्रानुष्ठानप्रकरणम् ॥ हेमांभोजप्रवालप्रतिमनिजरुचिं चारुखट्वांगपद्मौ चक्रं शक्तिं सपाशं सृणिमतिरुचिरामक्षमालां कपालम् ॥ हस्तांभोजैर्दधानं त्रिनयनविलसद्वेदवक्त्राभिरामं मार्तंडं वल्लभाढ्यं मणिमयमुकुटं हारयुक्तं भजामि ॥ १ ॥

तत्र तावत्सर्वरोगदारिद्र्यनाशकाऽष्टाक्षरसूर्य्यमंत्रपुरश्चरणप्रयोगः ॥ सुमुहूर्ते प्रातर्नित्यावश्यकं समाप्य । जपस्थानमागत्य कूर्म्म संशोधिते स्वासने प्राङ्मुख उपविश्य । । मूलेनाचम्य प्राणानायम्य देशकालौ संकीर्त्य । मम सर्वरोगदारिद्र्यादिविनाशनार्थमायु रारोग्यसुखश्रीसंपत्तिप्राप्त्यर्थं श्रीभगवत्सवितृसूर्य्यनारायणप्रीत्यर्थमष्टलक्षसंख्यात्मकमष्टाक्षरसूर्य्यमन्त्रजपपुरश्चरणं करिष्ये तदंगत्वेन भूतशुद्धिमंतर्मातृका बहिर्मातृकान्यासं केशवादिकलामातृकान्यासं च करिष्ये । इति संकल्प्य । पूर्वोक्तपद्धतिकाण्डा नुसारेण भूतशुद्धिमंतर्मातृकाबहिर्मातृकान्यासं च कृत्वा विष्णोरष्टाक्षरमंत्रोक्तं केशवादिकलामातृकान्यासं कुर्यात् ॥ अथ मूल मन्त्रप्रयोगः-मूलमन्त्रो यथा ॥ " ॐ घृणिः सूर्यआदित्यः " इत्यष्टाक्षरो मन्त्रः । अस्य मंत्रस्य देवभाग ऋषिः । गायत्री छन्दः। आदित्यो देवता ममाभीष्टसाधने विनियोगः । ॐ देवभागऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्रीछन्दसे नमः मुखे ॥ २ ॥ ॐ आदित्यदेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ॐ सत्यायतेजोज्वालामणे हुं फट् स्वाहा । अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ ब्रह्मणे तेजोज्वालामणे हुं फट् स्वाहा । तर्जनीभ्यां नमः ॥ २ ॥ ॐ विष्णवे तेजोज्वालामणे हुं फट् स्वाहा । मध्यमाभ्यां नमः ॥ ३ ॥ ॐ रुद्राय तेजोज्वालामणे हुं फट् स्वाहा । अनामिकाभ्यां नमः ॥ ४ ॥ ॐ अग्नये तेजोज्वालामणे हुं फट् स्वाहा । कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ सर्वायतेजोज्वालामणे हुं फट् स्वाहा । करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेव हृदयादिषडंगन्यासं कुर्य्यात् ॥ ॐ ओं आदित्याय नमो मूर्ध्नि ॥१॥ ॐ एँ रवये नमो मुखे ॥ २ ॥ ॐ भानवे नमो हृदये ॥ ३ ॥ ॐ ईं भास्कराय नमो लिंगे ॥ ४ ॥ ॐ अँ सूर्याय नमः पादयोः ॥ ५ ॥ इति पञ्चमूर्तिन्यासः ॥ अथ मंत्रवर्णन्यासः ॥ ॐ नमो मूर्ध्नि ॥ १ ॥ ॐ घृं नमो मुखे ॥ २ ॥ ॐ णिं नमः कंठे ॥ ३ ॥ ॐ सूं नमः हृदये ॥ ४ ॥ ॐ यं नमः कुक्षौ ॥ ५ ॥ ॐ आं नमः नाभौ ॥ ६ ॥ ॐ दिं नमः लिंगे ॥ ७ ॥ ॐ त्यं नमः पादयोः ॥ ८ ॥ एवं न्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ "रक्ताब्जयुग्माभयदानहस्तं केयूरहारांगदकुंडलाढ्यम् ॥ माणिक्यमौलिं दिननाथमीडे बंधूककां तिं विलसत्त्रिनेत्रम् ॥ १ ॥" इतिं ध्यात्वा मानसोपचारैः संपूज्य पीठपूजादि कुर्य्यात् ॥ तद्यथा-पूर्वादिदिक्षु मध्ये च । ॐ प्रभूताय नमः ॥ १ ॥ ॐ विमलाय नमः ॥ २ ॥ ॐ साराय नमः ॥ ३ ॥ ॐ समाराध्याय नमः ॥ ४ ॥ मध्ये ॐ परम सुखाय नमः ॥ ५ ॥ इति पूजयेत् ॥ तद्बहिः । ॐ अं अनंताय नमः ॥ १ ॥ ॐ पृं पृथिव्यै नमः ॥ २ ॥ ॐ अं अमृतसागराय नमः ॥ ३ ॥ ॐ रं रत्नद्वीपाय नमः ॥ ४ ॥ ॐ हें हेमगिरये नमः ॥ ५ ॥ ॐ नं नदनोद्यानाय नमः ॥ ६ ॥ ॐ कं कल्पवृक्षेभ्यो नमः ॥७॥ ॐ मं मणिभूषितभूतलाय नमः ॥८॥ इत्यष्टौ संपूज्य । ॐ सं सोममंडलाय नमः ॥ १ ॥ ॐ वं वह्निमण्डलाय नमः ॥ ॥२॥ ॐ सं सूर्यमण्डलाय नमः ॥ ३ ॥ इति पीठदेवताः संपूज्य पीठशक्तीः पूर्वादिक्रमेण पूजयेत् ॥ ॐ रॉं दीप्तायै नमः ॥ १ ॥ ॐ रीं सूक्ष्मायै नमः ॥ २ ॥ ॐ रूं जयायै नमः ॥ ३ ॥ ॐ रें भद्रायै नमः ॥ ४ ॥ ॐ रैं विभूत्यै नमः ॥५॥ ॐ रों विमलायै नमः ॥ ६ ॥ ॐ रौं अमोघायै नमः ॥७॥ ॐ रं विद्युतायै नमः ॥ ८ ॥ ( मध्ये ) ॐ रः सर्वतो मुख्यै नमः ।.९॥ इति पीठशक्तीः

संपूज्य । ॐ ब्रह्मविष्णुशिवात्मकाय सौराय योगपीठात्मने नमः ॥ इति पुष्पांजलिनाऽऽसनं दद्यात् । तत्र ॐ खंखषोल्काय नमः इति मनसा मूर्तिं प्रकल्प्य ( अथवा ) ताम्रकलशोपरि सुवर्णमयीं सूर्य्यप्रतिमां संस्थाप्य प्राणप्रतिष्ठां कृत्वा तस्यां सर्वलोकसाक्षिणं सूर्य्यमावाह्य पाद्यादिपुष्पान्तैरुपचारैर्यथाविधि संपूज्य आवरणपूजां कुर्य्यात् ॥ तद्यथा–षट्कोणे आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च । ॐ सत्याय तेजोज्वालामणे हुं फट् स्वाहा हृदयाय नमः ॥१॥ ॐ ब्रह्मणे तेजोज्वालामणे हुं फट् स्वाहा शिरसे स्वाहा ॥२॥ ॐ विष्णवे तेजोज्वालामणे हुं फट् स्वाहा शिखायै वषट् ॥ ३ ॥ ॐ रुद्राय तेजोज्वालामणे हुं फट् स्वाहा कवचाय हुम् ॥ ४ ॥ ॐ अग्नये तेजोज्वालामणे हुं फट् स्वाहा नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ सर्वाय तेजोज्वालामणे हुं फट् स्वाहा इत्यस्त्राय फट् ॥६॥ इति षडंगानि पूजयेत् ॥ तद्बहिरष्टदलेषु पूर्वदले ॐ आदित्याय नमः ॥१॥ ( दक्षिणदले ) ॐ रवये नमः ॥२॥ ( पश्चिमदले ) ॐ भानवे नमः ॥३॥ ( उत्तरदले ) ॐ भास्कराय नमः ॥४॥ इति संपूज्य । आग्नेयादिकोणदलेषु । ॐ उं उषायै नमः ॥१॥ ॐ प्रं प्रज्ञायै नमः ॥ २ ॥ ॐ प्रं प्रभायै नमः ॥ ३ ॥ ॐ सं संध्यायै नमः ॥ ४ ॥ इति शक्तीः पूजयेत् ॥ ततो दलाग्रेषु पूर्वादिक्रमेण । ॐ ब्रां ब्राह्म्यै नमः ॥ १ ॥ ॐ मां माहेश्वर्य्यै नमः ॥ २ ॥ ॐ कौं कौमार्य्यै नमः ॥ ३ ॥ ॐ वैं वैष्णव्यै नमः ॥४॥ ॐ वां वाराह्यै नमः ॥ ५ ॥ ॐ ईं इन्द्राण्यै नमः ॥६॥ ॐ चां चामुंडायै नमः ॥७॥ ॐ मं महालक्ष्म्यै नमः ॥८॥ इति मातृः पूजयेत् ॥ ततो देव * पुरतः ॐ अरुणाय नमः इत्यरुणं पूजयेत् ॥१॥ तद्बाह्ये पूर्वादिषु । ॐ सों सोमाय नमः ॥ १ ॥ ॐ बुं बुधाय नमः ॥ २ ॥ ॐ गुं गुरवे नमः ॥ ३ ॥ ॐ शुं शुक्राय नमः ॥ ४ ॥ इति दिक्षु । ततः कोणेषु । ॐ अं अंगारकाय नमः ॥५॥ ॐ शं शनैश्चराय नमः ॥ ६ ॥ ॐ रां राहवे नमः ॥७॥ ॐ कें केतवे नमः ॥ ८ ॥ इति ग्रहान्पूजयेत् ॥ ततो भूपुरे पूर्वादिदिक्षु । ॐ इन्द्राय नमः ॥ १ ॥ ॐ अग्नये नमः ॥ २ ॥ ॐ यमाय नमः ॥ ३ ॥ ॐ निर्ऋतये नमः ॥ ४ ॥ ॐ वरुणाय नमः ॥ ५ ॥ ॐ वायवे नमः ॥ ६ ॥ ॐ कुबेराय नमः ॥ ७ ॥ ॐ ईशानाय नमः ॥ ८ ॥ ( ऊर्ध्वम् ) ॐ ब्रह्मणे नमः ॥ ९ ॥ ( अधः ) ॐ अनंताय नमः ॥ १० ॥ इति दश दिक्पालान् पूजयेत् ॥ ( तद्बहिः ) ॐ वज्राय नमः ॥ १ ॥ ॐ शक्तये नमः ॥ २ ॥ दंडाय नमः ॥३॥ ॐ खड्गाय नमः ॥ ४ ॥ ॐ पाशाय नमः ॥ ५ ॥ ॐ अंकुशाय नमः ॥ ६ ॥ ॐ गदायै नमः ॥७॥ ॐ त्रिशूलाय नमः ॥ ८ ॥ ॐ पद्माय नमः ॥ ९ ॥ ॐ चक्राय नमः ॥ १० ॥ इत्यायुधानि पूजयेत् ॥ एवमावरणपूजां कृत्वा धूपदीपनैवेद्यतांबूलदक्षिणा नीराजनादिभिः सूर्य्यं संपूज्य स्तोत्रैः स्तुत्वा यथाविधि चित्तैकाग्रतया जपं कुर्यात् । ( प्रत्यहं वक्ष्यमाणविधिना पूजांते अर्घ्यं दद्यात ) अस्य पुरश्चरणमष्टलक्षमंत्रः ॥ जपान्ते अष्टसहस्रसंख्याकहोमः । तद्दशांशेन तर्पणम् ॥ तद्दशांशेन मार्जनम् ॥ तद्दशांशेन ब्राह्मणभोजनं च ज्ञेयम् ॥ तथा च ( शारदातिलके ) वसुलक्षं जपेन्मंत्रं समिद्भिः क्षीरशाखिनाम् ॥ तत्सहस्रं प्रजुहुयात्क्षीराक्ताभिर्जितेंद्रियः ॥ १ ॥ एवं संपूज्य विधिवद्भास्करं भक्तवत्सलम् ॥ दद्यादर्घ्यं प्रतिदिनं वारे वा तस्य चोदिते ॥२॥ प्रभाते

* श्रीसूर्ययन्त्रमिदं पूर्वत्र द्रष्टव्यम् ।

मंडलं कृत्वा पूर्ववत्पीठमर्चयेत् ॥ पात्रं ताम्रमयं प्रस्थतोयग्राहि मनोहरम् ॥ ३ ॥ विधाय तत्र मनुना पूरयेत्तच्छुभोदकैः ॥ कुंकुमं रोचनं राजीरक्तचन्दनवैणवान् ॥ ४ ॥ करवीरजपालाशीकुशश्यामाकतंडुलान् ॥ निक्षिपेत्सलिले तस्मिन्नैक्यं संकल्प्य भानुना ॥ ५ ॥ सांगमभ्यर्चयेत्तस्मिन्भास्करं प्रोक्तलक्षणम् ॥ गंधपुष्पादिनैवेद्यैर्यथाविधि विधानवित् ॥ ६ ॥ तद्विधाय जपेन्मंत्रं सम्यगष्टोत्तरं शतम् ॥ पुनः संपूज्य गंधाद्यैर्जानुभ्यामवनीं गतः ॥ ७ ॥ आमस्तकं तदुद्धृत्य व्योम्नि सावरणे रवौ ॥ दृष्टिं विधाय स्वैक्येन मूलमंत्रं धिया जपन् ॥ ८ ॥ मूलमंत्रः-"ॐ ह्रींघृणिः सूर्यआदित्यः श्रीं" इति । दद्यादर्घ्यं दिनेशाय प्रसन्नेनांतरात्मना ॥ कृत्वा पुष्पाञ्जलिं भूयो जपेदष्टोत्तरं शतम् ॥ ९ ॥ यावदर्घामृतं भानुः समादत्ते निजैः करैः ॥ तेन तृप्तो दिनमणिर्दद्यात्तस्मै मनोरथान् ॥ १० ॥ अर्घ्यदानमिदं पुण्यं पुंसामारोग्यवर्द्धनम् ॥ धनधान्यपशुक्षेत्रपुत्रमित्रकलत्रदम् ॥ ११ ॥ तेजोवीर्ययशःकांतिविद्याविभवभाग्यदम् ॥ इत्यष्टाक्षरसूर्यमंत्रविधानं सार्घ्यं समाप्तम् ॥ ॥ अथ त्र्यक्षरसूर्यमंत्रविधानम् ॥ मंत्रो यथा-"ह्राँह्रींसः" इति त्र्यक्षरमंत्रः । अस्य श्रीसूर्यमंत्रस्य अज ऋषिः । गायत्री छंदः । सूर्यो देवता । ह्रां बीजम् । ह्रीं शक्तिः । सः कीलकम् । सर्वेष्टसिद्धये जपे विनियोगः ॥ ॐ अजऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्रीछन्दसे नमः मुखे ॥ २ ॥ ॐ सूर्यदेवतायै नमः हृदि ॥ ३ ॥ ॐ ह्राँ बीजाय नमः गुह्ये ॥ ४ ॥ ॐ ह्रींशक्तये नमः पादयोः ॥५॥ ॐ सः कीलकाय नमः सर्वाङ्गे । इति ऋष्यादिन्यासः ॥ ॐ ह्राँ नमः आधारादिपदाग्रान्तं विन्यसेत् ॥ १ ॥ ॐ ह्रीं नमः कंठाद्याधारांतं विन्यसेत ॥ ॐ सः नमः मूर्द्धादिकंठपर्यंतं विन्यसेत् ॥ अथांगन्यासः ॥ ॐ आं ह्रीं अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ ईं ह्रीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ ऊँ ह्रीं मध्यमाभ्यां नमः ॥ ३ ॥ ॐ ऐं ह्रीं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ औं ह्रीं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ अः ह्रीं करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवं हृदयादिषडंगन्यासं कुर्य्यात् ॥ एवं न्यासविधिं कृत्वा ध्यायेत् ॥ "रक्तांबुजासनमशेषगुणैकसिंधुं भानुं समस्तजगतामधिपं भजामि ॥ पद्मद्वयाभयवरान्दधतं कराब्जैर्माणिक्यमौलिमरुणांगरुचिं त्रिनेत्रम् ॥ १ ॥ एवं ध्यात्वा पूर्वोक्ते पीठे पाद्यादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ तद्यथा-षट्कोणे आग्नेयादिकोणेषु मध्ये दिक्षु च ॐ आं ह्रीं हृदयाय नमः ॥ १ ॥ ॐ ईं ह्रीं शिरसे स्वाहा ॥२॥ ॐ ऊं ह्रीं शिखायै वषट् ॥ ३ ॥ ॐ ऐं ह्रीं कवचाय हुम् ॥ ४ ॥ ॐ औं ह्रीं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ अः ह्रीं अस्त्राय फट् । इति षडंगानि पूजयेत् ॥ १ ॥ ततो द्वितीयावरणे अष्टदले चन्द्राद्यष्टग्रहान् संपूजयेत् ॥ २ ॥ तृतीयावरणे भूपुरे पूर्वादिक्रमेण इन्द्रादीन्दशदिक्पालान् । तद्बाह्ये वज्राद्यायुधानि च संपूजयेत् । इत्यावरणपूजां कृत्वा धूपादिनीराजनांतैरुपचारैः संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं द्वादशलक्षजपः । तथा च- " भानुलक्षं जपेन्मंत्रमन्नाज्येन दशांशतः ॥ तिलैर्वा मधुरासिक्तैर्जुहुयाद्विजितेंद्रियः ॥ १ ॥ सोऽपि रत्नं धनं धान्यं पुत्रपौत्रान्यशः पशून् ॥ वस्त्राणि भूषणादीनि दद्यात्तस्मै न संशयः ॥ २ ॥ इति संपूज्य निर्माल्यं तेजश्चंडाय दीयताम् अर्घ्यं प्रागीरितं दद्याद्दानवे संयतेन्द्रियः ॥ ३ ॥ " इति त्र्यक्षरीसूर्यमंत्रप्रयोगः ॥ अथ चन्द्रमंत्रप्रयोगः ( शारदायाम् ) मंत्रो यथा ॥ स्वौं

सोमाय नमः ॥ ( मतांतरे सौं सोमाय नमः ) इति षडक्षरो मंत्रः । अस्य सोममंत्रस्य भृगुर्ऋषिः । पंक्तिश्छन्दः । सोमो देवता । स्वौं बीजम् । नमः शक्तिः । मम सर्वेष्टसिद्धये जपे विनियोगः । ॐ भृगुऋषये नमः शिरसि ॥ १ ॥ ॐ पंक्तिच्छन्दसे नमः मुखे ॥ २ ॥ ॐ सोमदेवतायै नमो हृदि ॥ ३ ॥ ॐ स्वौं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ नमः शक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ सां अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ सीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ सूं मध्यमाभ्यां नमः ॥ ३ ॐ सैं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ सौं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ सः करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ एवं हृदयादिन्यासं कृत्वा ध्यायेत् ॥ " कर्पूरस्फटिकावदातमनिशं पूर्णेन्दुबिंबाननं मुक्तादामविभूषितेन वपुषा निर्मूलयंतं तमः ॥ हस्ताभ्यां कुमुदं वरं च दधतं नीलालकोद्भासितं स्वीयांकस्थमृगोदिताश्रयगुणं सोमं सुधाब्धिं भजे ॥ " इति ध्यात्वा पीठे मंडूकादिसोमांतपीठदेवताः संपूज्य ततः पीठमध्ये सौं सोमाय नमः । इति मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् । षट्कोणे केसरेषु पूज्यपूजकयोर्मध्ये दिक्षु च । ॐ सां हृदयाय नमः ॥ १ ॥ ॐसीं शिरसे स्वाहा ॥ २ ॥ ॐ सूं शिखायै वषट् ॥ ३ ॥ ॐ सैं कवचाय हुम् ॥ ४ ॥ सौं नेत्रत्रयाय वौषट् ॥ ॥ ५ ॥ ॐसः अस्त्राय फट् ॥ ६ ॥ इति षडंगानि पूजयेत् ॥ ततोऽष्टदले पूर्वादिक्रमेण । ॐ रोहिण्यै नमः ॥ १ ॥ ॐ कृत्तिकायै नमः ॥ २ ॥ ॐ रेवत्यै नमः ॥ ३ ॥ ॐ भरण्यै नमः ॥ ४ ॥ ॐ रात्र्यै नमः ॥ ५ ॥ ॐ आर्द्रायै नमः ॥ ६ ॥ ॐ ज्योत्स्नायै नमः॥७॥ ॐ कलायै नमः॥८॥ इति पूजयेत् ॥ ततोऽष्टदलाग्रेषु पूर्वादिक्रमेण ॐ आं आदित्याय नमः॥१॥ॐ मं मङ्गलायै नमः॥२॥ ॐ बुं बुधाय नमः ॥ ३ ॥ ॐ शं शनैश्चराय नमः॥४॥ ॐ बृं बृहस्पतये नमः ॥ ५ ॥ ॐ रां राहवे नमः ॥ ६ ॥ ॐ शुं शुक्राय नमः ॥ ७ ॥ ॐ कें केतवे नमः ॥ ८ ॥ इति पूजयेत् । ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत् । इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं षट्लक्षजपः ॥ तथा च- रसलक्षं जपेन्मंत्रं साधको विजितेंद्रियः ॥ तत्सहस्रं प्रजुहुयात्पायसेन ससर्पिषा ॥ १ ॥ एवं सिद्धमनुर्मंत्री संपदां वसतिर्भवेत् ॥ हृत्पुंडरीकमध्यस्थं ताराहारविभूषणम् ॥ २ ॥ तारापतिं स्मरन्मंत्री त्रिसहस्रं मनुं जपेत् ॥ राज्यैश्वर्यं दरिद्रोपि प्राप्नुयाद्वत्सरांतरे॥ ॥ ३ ॥ पूर्वोक्तसंख्यं प्रजपेच्छशिनं मूर्ध्नि चिंतयेत् ॥ रोगापमृत्युदुःखानि जित्वा वर्षशतं वसेत् ॥ ४ ॥ ब्रह्मचर्यरतः शुद्धश्चतुर्लक्षमिदं जपन् ॥ निधानं भूगतं सद्यः प्राप्नुयाद्यत्नवर्जितम् ॥ ५ ॥ जितेन्द्रियो जपेन्मंत्रं पूर्णमास्यां विशेषतः ॥ भवेत्सौभाग्यनिलयः संपदामपरो निधिः ॥ ६ ॥ घोराञ्ज्वराञ्शिरोरोगानभिचारानुपद्रवान् ॥ विद्विषामपि संघातं नाशयेन्मनुनामुना ॥ ७ ॥ पौर्णमास्यां निराहारो दद्यादर्घं विधूदये ॥ प्राक्प्रत्यगायतं कुर्याद्भूतले मंडलत्रयम् ॥ ८ ॥ निषण्णः पश्चिमे मंत्री मंडले विहितासने ॥ मध्यस्थे स्थापयेत्पश्चात्पूजाद्रव्याण्यशेषतः ॥ ९ ॥ अन्यस्मिन्मंडले सोममर्चयित्वांबुजान्विते ॥ राजतं चषकं भद्रं स्थापयेत्पुरतः सुधीः ॥ १० ॥ गोदुग्धेन समापूर्य्य स्पृष्ट्वा तं प्रजपेन्मनुम् ॥ अष्टोत्तरशतं पश्चाद्विद्यामंत्रेण देशिकः ॥ ११ ॥ दद्यादर्घ्यं शशां

श्रियम
काय सर्वकामार्थसिद्धये ॥ अनेन विधिना कुर्वन्प्रतिमासमतंद्रितः ॥ १२ ॥ षण्मासाभ्यंतरे सिद्धिं साधकेन्द्रः समश्नुते ॥ श्रियम
काय सर्वकामार्थसिद्धये ॥ अनेन विधिना कुर्वन्प्रतिमासमतंद्रितः ॥ १२ ॥ षण्मासाभ्यंतरे सिद्धिं साधकेन्द्रः समश्नुते ॥ बहुना किमिहोक्तेन सर्वं दद्यात्रि
त्यूर्जितान्पुत्रान्सौभाग्यमतुलं यशः ॥ १३ ॥ कन्यामिष्टामवाप्नोति कन्यापि वरमीप्सितम् ॥ बहुना किमिहोक्तेन सर्वं दद्यात्रि
शापतिः ॥ १४ ॥ विद्ये विद्यामालिनि स्याच्चंद्रिण्यंते ततो भवेत ॥ पुनश्चन्द्रमुखि स्वाहा विद्यामंत्र उदाहृतः ॥ १५ ॥ " विद्ये
विद्यामालिनि चंद्रिणि चंद्रमुखि स्वाहा" इति विद्यामंत्रः ॥ इति सोममंत्रप्रयोगः समाप्तः ॥ ॥ अथ तंत्रोक्तमंगलमंत्रप्रयोगः ॥ मंत्र
महोदधौ ) मंत्रो यथा–"ॐ हाँहँसः खंखः " ॥ इति षडक्षरो मंत्रः ॥ अस्य मंगलमंत्रस्य विरूपा ऋषिः । गायत्री छंदः । मंगलो
देवता । सर्वेष्टसिद्ध्यर्थं जपे विनियोगः । ॐ विरूपाऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्रीछंदसे नमो मुखे ॥ २ ॥ ॐ मंगल
देवतायै नमो हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ ॐ अंगुष्ठकाभ्यां नमः ॥ १ ॥ ॐ हां तर्जनीभ्यां नमः ॥ २ ॥ ॐ हं मध्यमा
भ्यां नमः ॥ ३ ॥ ॐ सः अनामिकाभ्यां नमः ॥ ४ ॥ ॐ खं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ खः करतलकरपृष्ठाभ्यां नमः
॥ ६ ॥ इति करन्यासः ॥ एवमेव हृदयादिषडंगन्यासं कृत्वा ध्यायेत् ॥ ध्यानम् । "जपाभं शिवस्वेदजं हस्तपद्मैर्गदाशूल
शक्तीर्वरं धारयंतम् ॥ अवंतीसमुत्थं सुमेषासनस्थं धरानंदनं रक्तवस्त्रं समीडे ॥ १ ॥ " इति ध्यात्वा पूर्वोक्ते शिवपीठे मूलेन मूर्तिं
प्रकल्प्य । अथवा त्रिकोणं ताम्रयन्त्रं प्रतिमां वा संस्थाप्य प्राणप्रतिष्ठां कृत्वा । आवाहनादिपाद्यांतैरुपचारैर्भौमं संपूज्य । आवरण
पूजां कुर्य्यात ॥ षट्कोणे आग्नेयादिकोणेषु मध्ये दिक्षु च । ॐ हृदयाय नमः ॥ १ ॥ ॐ हां शिरसे स्वाहा ॥ २ ॥ ॐ हं शिखायै
वषट् ॥ ३ ॥ ॐः सः कवचाय हुम् ॥ ४ ॥ ॐ खं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ खः अस्त्राय फट् ॥ ६ ॥ इत्यंगानि पूजयेत् ॥
तद्बाह्ये त्रिकोणे एकविंशतिकोष्ठेषु । ॐ मंगलाय नमः ॥ १ ॥ ॐ भूमिपुत्राय नमः ॥ २ ॥ ॐ ऋणहर्त्रे नमः ॥ ३ ॥ ॐ धन
प्रदाय नमः ॥ ४ ॥ ॐ स्थिरासनाय नमः ॥ ५ ॥ ॐ महाकायाय नमः ॥ ६ ॥ ॐ सर्वकामावरोधकाय नमः ॥ ७ ॥ ॐ लोहि
ताय नमः ॥ ८ ॥ ॐ लोहिताक्षाय नमः ॥ ९ ॥ ॐ सामगानां कृपाकराय नमः ॥ १० ॥ ॐ धरात्मजाय नमः ॥ ११ ॥
ॐ कुजाय नमः ॥ १२ ॥ ॐ भौमाय नमः ॥ १३ ॥ ॐ भूमिदाय नमः ॥ १४ ॥ ॐ भूमिनंदनाय नमः ॥ १५ ॥ ॐ अंगार
काय नमः ॥ १६ ॥ ॐ यमाय नमः ॥ १७ ॥ ॐ सर्वरोगापहारकाय नमः ॥ १८ ॥ ॐ वृष्टिकर्त्रे नमः ॥ १९ ॥ ॐ वृष्टिहर्त्रे
नमः ॥ २० ॥ ॐ सर्वकामफलप्रदाय नमः ॥ २१ ॥ इत्येकविंशतिभौमान्संपूजयेत् ॥ तद्बाह्ये चतुरस्रे भूपुरे पूर्वादिषु । ॐ इं
इन्द्राय नमः ॥ १ ॥ अं अग्नये नमः ॥ २ ॥ यं यमाय नमः ॥ ३ ॥ निं निर्ऋतये नमः ॥ ४ ॥ वं वरुणाय नमः ॥ ५ ॥ वां
वायवे नमः ॥ ६ ॥ कुं कुबेराय नमः ॥ ७ ॥ ईं ईशानाय नमः ॥ ८ ॥ ( ऊर्ध्वं ) ब्रं ब्रह्मणे नमः ॥ ९ ॥ ( अधः ) अं अनंताय
नमः ॥ १० ॥ इति दिक्पालान् पूजयेत ॥ तद्बहिः । ॐ वज्राय नमः ॥ १ ॥ शक्तये नमः ॥ २ ॥ दंडाय नमः ॥
॥ ३ ॥ खड्गाय नमः ॥ ४ ॥ पाशाय नमः ॥ ५ ॥ अंकुशाय नमः ॥ ६ ॥ गदायै नमः ॥ ७ ॥ त्रिशूलाय
नमः ॥ ८ ॥ पद्माय नमः ॥ ९ ॥ चक्राय नमः ॥ १० ॥ इत्यायुधानि पूजयेत ॥ इत्थमावरणपूजां कृत्वा ।

धूपदीपनैवेद्यतांबूलदक्षिणानीराजनैः संपूज्य । वक्ष्यमाणविधिना अर्घ्यं दत्त्वा साष्टांगं प्रणम्य यथाविधि जपेत् । अस्य पुरश्चरणं षट्लक्षजपः ॥ अन्यत्सर्वं पूर्ववत् । तथा च-रसलक्षं जपो होमः समिद्भिः खदिरस्य च ॥ इत्थं जपादिभिः सिद्धं स्वेष्टसिद्धौ प्रयोजयेत् ॥ १ ॥ इति षट्वर्णात्मकभौममंत्रविधानम् ॥ अथ धनपुत्रादिप्रदमंगलव्रतविधानम् ॥ ( स्कांदे मन्त्रमहोदधौ च ) मार्गशीर्षे वैशाखे वा शुक्लपक्षे चंद्रतारादिबलान्विते भौमवासरे व्रतं प्रगृह्य वक्ष्यमाणविधिना संवत्सरपर्यंतं कार्य्यम् ॥ तद्यथा ॥ मङ्गलवारे अरुणोदयवेलायामुत्थाय शौचविधिं विधाय । अपामार्गकाष्ठेन मौनपूर्वकं दंतधावनं कृत्वा नद्यादौ यथाविधि स्नात्वा सन्ध्यादिनित्यक्रियां समाप्य शवालये गृहे वा रक्तवाससी परिधाय रक्तगोमयलिप्तमंडले स्वासने प्राङ्मुख उदङ्मुखो वा उपविश्य । दक्षिणपार्श्वे रक्तचन्दनपुष्पादीनि संपाद्य सपवित्रकरः आचम्य प्राणानायम्य । देशकालौ संकीर्त्य मम जन्मराशेः सकाशान्नामराशेः सकाशाज्जन्मलग्नाद्वर्षलग्नाद्गोचराद्वा चतुर्थाष्टमद्वादशाद्यनिष्टस्थानस्थितभौमसूचितसूचयिष्यमाणसर्वानिष्ट फलनिवृत्तिद्वारा तृतीयैकादशस्थानस्थितवदुत्तमफलप्राप्त्यर्थमायुरारोग्यसुखपुत्रधनप्राप्त्यर्थं श्रीभौमदेवताप्रीत्यर्थं भौमव्रतं करिष्ये । तदंगत्वेन न्यासध्यानपूजार्घ्यदानादि च करिष्ये । इति संकल्प्य ( प्रारंभदिने गणपतिपूजनं पुण्याहवाचनं च कुर्यात् ) ततः । अथ देवेश ते भक्त्या करिष्ये व्रतमुत्तमम् ॥ ऋणव्याधिविनाशाय धनसंतानहेतवे ॥ १ ॥ इति प्रार्थ्य कर्ता स्वदेहे न्यासान्कुर्य्यात् ॥ ॐ मङ्गलाय नमः अंध्र्योः ॥ १ ॥ ॐ भूमिपुत्राय नमः जानुनोः ॥ २ ॥ ॐ ऋणहर्त्रे नमः ऊर्वोः ॥ ३ ॥ ॐ धनप्रदाय नमः कट्योः ॥ ४ ॥ ॐ स्थिरासनाय नमः गुह्ये ॥ ५ ॥ ॐ महाकालाय नमः उरसि ॥ ६ ॥ ॐ सर्वकर्मावरोधकाय नमः वामबाहौ ॥ ७ ॥ ॐ लोहिताय नमः दक्षिणबाहौ ॥ ८ ॥ ॐ लोहिताक्षाय नमः गले ॥ ९ ॥ ॐ सामगानां कृपाकराय नमः मुखे ॥ १० ॥ ॐ धरात्मजाय नमः नासिकायाम् ॥ ११ ॥ ॐ कुजाय नमः अक्ष्णोः ॥ १२ ॥ ॐ भौमाय नमः ललाटे ॥ १३ ॥ ॐ भूतिदाय नमः भ्रुवोर्मध्ये ॥ १४ ॥ ॐभूमिनंदनाय नमः शिरसि ॥ १५ ॥ ॐ अङ्गारकाय नमः शिखायाम् ॥ १६ ॥ ॐ यमाय नमः सर्वांगे ॥ १७ ॥ ॐ सर्वरोगापहारकाय नमः बाहुद्वये ॥ १८ ॥ ॐ वृष्टिकर्त्रे नमः मूर्द्धादिपादपर्यंतम् ॥ १९ ॥ ॐ वृष्टिहर्त्रे नमः चरणादिमस्तकांतम् ॥ २० ॥ ॐ सर्वकामफलप्रदाय नमः दिक्षु ॥ २१ ॥ ॐ आराय नमः नाभौ ॥ १ ॥ ॐ वक्राय नमः वक्षसि ॥ २ ॥ ॐ भूमिजाय नमः मूर्ध्नि ॥ ३ ॥ एवं न्यासं कृत्वा ध्यायेत् ॥ 'रक्तमाल्यांबरधरः शक्तिशूलगदाधरः ॥ चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥ १ ॥' एवं ध्यात्वा अर्घ्यं संस्थाप्य पूजां कुर्यात् । तद्यथा-त्रिकोणे स्थंडिले यथाविधि ताम्रकलशं संस्थाप्य तत्र एकविंशतिकोष्ठाढ्यं त्रिकोणं ताम्रयंत्रमथवा रक्तचंदननिर्मितां शूलशक्तिगदाधरां मेषमारूढां भौमप्रतिमां संस्थाप्य पूर्ववत्प्राणप्रतिष्ठां कृत्वा आवाहनं कुर्यात् ॥ ॐ एह्येहि भगवन्ब्रह्मन्नंगारक महाप्रभो ॥ त्वयि सर्वं समायातं त्रैलोक्यं सचराचरम् ॥ १ भौममावाहयिष्यामि तेजोमूर्तिं दुरासदम् ॥ रुद्ररूपमनिर्देश्यं वक्रं च रुधिरप्रियम् ॥२॥ ॐ अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याअयं अपाᳬरेताᳬसिजिन्वति ॥ १ ॥ ॐ अंगारकाय विद्महे शक्ति

हस्ताय धीमहि तन्नो भौमः प्रचोदयात् ॥ १॥ इति भौममावाह्य पाद्यादिरक्तपुष्पान्तैरुपचारैः संपूज्य आवरणपूजां कुर्यात् । षट्कोणे आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च । ॐ ह्राँ हृदयाय नमः ॥१॥ ॐ ह्रीं शिरसे स्वाहा ॥२॥ ॐ ह्रूं शिखायै वषट् ॥ ३ ॥ ॐ ह्रं ह्रंह्रं कवचाय हुम् ॥४॥ ॐ हंसः नेत्रत्रयाय वौषट् ॥५॥ ॐ खंखः अस्त्राय फट् । इति पूजयेत् । ततः एकविंशतिकोष्ठेषु । ॐ मंगलाय नमः पादौ पूजयामि० ॥ १ ॥ ॐ भूमिपुत्राय नमः जानुनी पूजयामि ॥ २ ॥ ॐ ऋणहर्त्रे नमः ऊरू पू० ॥ ३ ॥ ॐ धनप्रदाय नमः कटीं पू० ॥४॥ ॐ स्थिरासनाय नमः गुह्यं पू० ॥ ५॥ ॐ महाकायाय नमः उरः पूजयामि ॥ ६ ॥ ॐ सर्वकर्मावरोधकाय नमः वामबाहु पू० ॥७॥ ॐ लोहिताय नमः दक्षिणबाहुं पू०॥८॥ॐ लोहिताक्षाय नमः कंठं पू०॥९॥ॐ सामगानां कृपाकराय नमः मुखं पू० ॥१०॥ ॐ धरात्मजाय नमः नासिकां पूजयामि ॥११॥ ॐ कुजाय नमः नेत्रद्वयं पू० ॥१२॥ ॐ भौमाय नमः ललाटं पू० ॥१३॥ ॐ भूतिदाय नमः भ्रुवोर्मध्यं पू० ॥१४॥ ॐ भूमिनंदनाय नमः मस्तकं पू० ॥१५॥ ॐ अंगारकाय नमः शिखां पूज ❋ यामि ॥१६॥ ॐ यमाय नमः सर्वांगं पू० ॥१७॥ ॐ सर्वरोगापहारकाय नमः बाहुद्वयं पू० ॥१८॥ ॐ वृष्टिकर्त्रे नमः मूर्धादिपादपर्यंतं पूज०॥१९॥ ॐ वृष्टयपहर्त्रे नमः चरणादिमस्तकपर्यंतं पू० ॥२०॥ ॐ सर्वकामफलप्रदाय नमः दिशः पूजयामि ॥ इति पूजयेत् ॥२१॥ ततः तद्बाह्यत्रिकोणेषु । ॐ वक्राय नमः ॥१॥ ॐ आराय नमः ॥२॥ ॐ भूमिजाय नमः ॥३॥ इति पूजयेत् । तद्बहिरष्टदले पूर्वादिक्रमेण । ॐ ब्राह्म्यै नमः ॥ १ ॥ ॐ माहेश्वर्यै नमः ॥ २ ॥ ॐ कौमार्यै नमः ॥ ३ ॥ ॐ वैष्णव्यै नमः ॥४॥ ॐ वाराह्यै नमः ॥ ५ ॥ ॐ इन्द्राण्यै नमः ॥ ६ ॥ ॐ चामुंडायै नमः ॥ ७ ॥ ॐ महालक्ष्म्यै नमः ॥ ८ ॥ इति मातृकाः पूजयामि इति पूजयेत् । तद्बाह्ये भूपुरे पूर्वादिक्रमेण । ॐ इन्द्राय नमः ॥१॥ ॐ अग्नये नमः ॥ २ ॥ ॐ यमाय नमः ॥ ३ ॥ ॐ निर्ऋतये नमः ॥ ४ ॥ ॐ वरुणाय नमः ॥ ५ ॥ ॐ वायवे नमः ॥ ६ ॥ ॐ कुबेराय नमः ॥ ७ ॥ ॐ ईशानाय नमः ॥ ८ ॥ ईशानपूर्वयोर्मध्ये । ॐ ब्रह्मणे नमः ॥ ९ ॥ निर्ऋतिपश्चिमयोर्मध्ये ॐ अनंताय नमः ॥ १० ॥ इति दशदिक्पालान्पूजयेत् । तद्बाह्ये ॐ वज्राय नमः ॥ १ ॥ ॐ शक्तये नमः ॥ २ ॥ ॐ दंडाय नमः ॥ ३ ॥ ॐ खड्गाय नमः ॥ ४ ॥ ॐ पाशाय नमः ॥ ५ ॥ ॐ अंकुशाय नमः ॥६॥ ॐ गदायै नमः ॥ ७ ॥ ॐ त्रिशूलाय नमः ॥८॥ ॐ पद्माय नमः ॥ ९ ॥ ॐ चक्राय नमः ॥ १० ॥ इत्यस्त्राणि पूजयेत् ॥ एवमावरणपूजां कृत्वा धूपदीपगोधूमान्ननैवेद्यतांबूलदक्षिणानीराजनादिभिः संपूज्यार्घ्यं दद्यात् । तद्यथा– जलपूर्णे ताम्रपात्रे रक्तगन्धरक्तपुष्पाक्षतफलानि निःक्षिप्य जानुभ्यामवनीं गत्वा । " ॐ भूमिपुत्र महातेजः स्वेदोद्भव पिनाकिनः ॥ श्रेयोर्थी त्वां प्रपन्नोऽहं गृहाणार्घ्यं नमोऽस्तु ते ॥१॥ प्रसीद देव देवेश विघ्नहारिन्धरात्मज ॥ गृहाणार्घ्यं मया दत्तं मम शांतिप्रदो भव ॥ २ ॥ रक्तप्रवालसंकाश जपाकुसुमसन्निभ ॥ महीसुत महाबाहो गृहाणार्घ्यं नमोऽस्तु ते ॥३॥ इत्यर्घ्यं दत्त्वा पूर्वोक्तैर्नामभिः प्रणम्य एकविंशतिप्रदक्षिणाः कृत्वा साष्टाङ्गं प्रणमेत् ॥ ततः खदिरांगारकेन स्वपुरतः ऋणरेखात्रयं समं कृत्वा वामपादेन प्रमा

❋ मङ्गलयन्त्रमिदं पूर्वत्र द्रष्टव्यम् ।

जयेत । तत्र मंत्रौ-दुःखदौर्भाग्यनाशाय पुत्रसंतानहेतवे ॥ कृतरेखात्रयं वामपादेनैतत्प्रमार्ज्म्यहम् ॥ १ ॥ ऋणदुःखविनाशाय मनोऽभीष्टार्थसिद्धये ॥ मार्जयाम्यसिता रेखास्तिस्रो जन्मत्रयोद्भवाः ॥ २ ॥ ततः पुष्पांजलिं गृहीत्वा प्रार्थनां कुर्यात् ॥ धरणीगर्भसंभूतं विद्युत्तेजःसमप्रभम् ॥ कुमारं शक्तिहस्तं च मंगलं प्रणमाम्यहम् ॥ १ ॥ ऋणहर्त्रे नमस्तुभ्यं दुःखदारिद्र्यनाशिने ॥ नमामि द्योतमानाय सर्वकल्याणकारिणे ॥ २ ॥ देवदानवगंधर्वयक्षराक्षसपन्नगाः ॥ सुखं यांति यतस्तस्मै नमो धरणिसूनवे ॥ ३ ॥ यो वक्रगतिमापन्नो नृणां विघ्नं प्रयच्छति ॥ पूजितः सुखसौभाग्यं तस्मै क्ष्मासूनवे नमः ॥ ४ ॥ प्रसादं कुरु मे नाथ मंगलप्रद मंगल ॥ मेषवाहन रुद्रात्मन्पुत्रान्देहि धनं यशः ॥ ५ ॥ अङ्गारक महाभाग भगवन्भक्तवत्सल ॥ त्वां नमामि ममाशेषमृणमाशु विमोचय ॥ ६ ॥ ऋणरोगादिदारिद्र्यं ये चान्ये चापमृत्यवः ॥ भयक्लेशमनस्तापा नश्यंतु मम सर्वदा ॥ ७ ॥ अतिवक्र दुराराध्य भोगमुक्तजितात्मनः ॥ तुष्टो ददासि साम्राज्यं रुष्टो हरसि तत्क्षणात् ॥ ८ ॥ विरंचिशक्रविष्णूनां मनुष्याणां तु का कथा ॥ तेन त्वं सर्वसत्त्वेन ग्रहराजो महाबलः ॥ ९ ॥ पुत्रान्देहि धनं देहि त्वामस्मि शरणं गतः ॥ ऋणदारिद्र्यदुःखेन शत्रूणां च भयात्ततः ॥ १० ॥ इति प्रार्थ्य पुष्पांजलिं दद्यात् । ततः ब्राह्मणान्संपूज्य गुरवे दक्षिणां दत्त्वा पूजायां निवेदितान्नेन एकभक्तव्रतं कुर्यात् ॥ एवं प्रतिभौमदिनं संवत्सरावधि कृत्वा समाप्ते व्रते सर्वतोभद्रमण्डलमध्ये यथाविधि ताम्रकलशं संस्थाप्य तत्र वरुणमावाह्य संपूज्य तदुपरि स्वर्णमयीं भौमप्रतिमां संस्थाप्य प्राणप्रतिष्ठां कृत्वा षोडशोपचारैः संपूजयेत् ॥ ततः ईशान्यां त्रिकोणे स्थंडिले अग्निं प्रतिष्ठाप्य कुशकंडिकां कृत्वा आघारावाज्यहोमं विधाय "ॐ अग्निर्मूर्धा०" इति मन्त्रेण भौमगायत्र्या वा अष्टोत्तरशतं तिलहोमं कृत्वा पूर्णपात्रदानांतं होमशेषं समाप्य दिक्पालेभ्यो माषभक्तबलिं दत्त्वा कलशोदकेन सपत्नीकं यजमानं पूर्वोक्तमंगलनामभिः वेदमन्त्रैश्च अभिषिच्य यजमानः स्वर्णमूर्त्यादिकमाचार्याय दत्त्वा पंचाशद्ब्राह्मणान् गोधूमान्नेन भोजयेत् ॥ एवमेव स्त्रीधनपुत्रसौभाग्यकामनया कुर्यात । तथा च-"एवं व्रतपरा नारी प्राप्नुयात्सुभगा सुतान् ॥ धनाय्यै ऋणनाशाय व्रतं कुर्यात्पुमानपि ॥ २ ॥ अग्निर्मूर्धेत्यपि मंत्रं वैदिकं ब्राह्मणो जपेत् ॥ तथांगारकगायत्रीं सर्वाभीष्टप्रसिद्धये ॥ ३ ॥ इति मंगलविधानं समाप्तम् ॥

॥ अथ तंत्रोक्तबृहस्पतिमंत्रपुरश्चरणम् ( मंत्रमहोदधौ । ) मंत्रो यथा-"बृं बृहस्पतये नमः" इत्यष्टाक्षरो मंत्रः ॥ अस्य बृहस्पतिमंत्रस्य ब्रह्मा ऋषिः । अनुष्टुप् छंदः । बृहस्पतिर्देवता । बृं बीजम् । नमः शक्तिः । सर्वेष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ ब्रह्मऋषये नमः शिरसि ॥ १ ॥ ॐ अनुष्टुप्छंदसे नमः मुखे ॥ २ ॥ ॐ बृहस्पतिदेवतायै नमः हृदये ॥ ३ ॥ ॐ बृं बीजाय नमः गुह्ये ॥ ४ ॥ ॐ नमः शक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ ब्रां अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ ब्रीं तर्जनीभ्यां नमः ॥ २ ॥ ॐ ब्रूं मध्यमाभ्यां नमः ॥ ३ ॥ ॐ ब्रैं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ ब्रौं कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ब्रः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवं हृदयादिन्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ "रत्नाढ्यापदवस्त्रराशिममलं दक्षात्किरंतं करादासीनं विपणौ करं निदधतं रत्नादिराशौ परम् ॥ पीतालेपनपुष्पवस्त्रमखिलालंकारसंभूषितं विद्यासागरपारगं सुरगुरुं

वंदे सुवर्णप्रभम् ॥ १ ॥ इति ध्यात्वा । पीठे ॐ धर्माय नमः ॥ १ ॥ ॐ ज्ञानाय नमः ॥ २ ॥ ॐ वैराग्याय नमः ॥ ३ ॥ ॐ ऐश्वर्याय नमः ॥ ४ ॥ ॐ अधर्माय नमः ॥ ५ ॥ ॐ अज्ञानाय नमः ॥ ६ ॥ ॐ अवैराग्याय नमः ॥ ७ ॥ ॐ अनैश्वर्य्याय नमः ॥ ८ ॥ इति पीठदेवताः संपूजयेत् ( अत्र पीठशक्त्यभावः ) ततो मूले मूर्तिं प्रकल्प्य ( अथवा कलशोपरि सुवर्णमयीं प्रतिमां संस्थाप्य ) आवाहनादिपीतगन्धपुष्पांतैरुपचारैः संपूज्य आवरणार्चनं कुर्यात् ॥ तद्यथा-षट्कोणे आग्नेयादिकोणेषु मध्ये दिक्षु च । ॐ ब्रां हृदयाय नमः ॥ १ ॥ ॐ ब्रीं शिरसे स्वाहा ॥ २ ॥ ॐ ब्रूं शिखायै वषट् ॥ ३ ॥ ॐ ब्रैं कवचाय हुं ॥ ४ ॥ ॐ ब्रौं नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ ब्रः अस्त्राय फट् ॥ ६ ॥ इति षडंगपूजनम् ॥ तद्बहिर्भूपुरे पूर्वादिदिक्षु इन्द्रादिदश दिक्पालान् । तद्बाह्ये वज्राद्यायुधानि च संपूज्य । धूपादिनीराजनांतपूजां कृत्वा साष्टांगं प्रणम्य जपं कुर्य्यात् ॥ अस्य पुरश्चरणमशीतिसहस्रजपः । तथा च-जपित्वाशीतिसाहस्रं हुत्वान्नेन घृतेन वा ॥ सिद्धे मनौ प्रकुर्वीत प्रयोगानिष्टसिद्धये ॥ १ ॥ हरिद्राकुसुमैर्हुत्वा घृताक्तैर्दिवसत्रयम् ॥ स विंशतिशतं मंत्री वांसासि लभते मणीन् ॥ २ ॥ शत्रुरोगादिपीडासु स्वजने कलहोद्भवे ॥ जुहुयात्पिप्पलोत्थाभिः समिद्भिस्तन्निवृत्तये ॥ ३ ॥ इति बृहस्पतिमंत्रविधानम् ॥ अथ तंत्रोक्तशुक्रमंत्रविधानम् । तत्रैव मंत्रो यथा-"ॐ वस्त्रं मे देहि शुक्राय स्वाहा" इत्येकादशार्णो मंत्रः ॥ १ ॥ अस्य मंत्रस्य ब्रह्मा ऋषिः ॥ विराट् छन्दः । शुक्रो देवता । ॐ बीजम् । स्वाहा शक्तिः ॥ सर्वेष्टसिद्ध्यर्थे जपे विनियोगः । ॐ ब्रह्मऋषये नमः शिरसि ॥ १ ॥ ॐ विराट्छन्दसे नमः मुखे ॥ २ ॥ ॐ शुक्रदेवतायै नमः हृदये ॥ ३ ॥ ॐ बीजाय नमः गुह्ये ॥ ४ ॥ ॐ स्वाहा शक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ अंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ वस्त्रं तर्जनीभ्यां नमः ॥ २ ॥ ॐ मे मध्यमाभ्यां नमः ॥ ३ ॥ ॐ देहि अनामिकाभ्यां नमः ॥ ४ ॥ ॐ शुक्राय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ स्वाहा करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः । एवं हृदयादिन्यासं कृत्वा ध्यायेत् ॥ "श्वेतांभोजनिषण्णमापणतटे श्वेतांबरालेपनं नित्यं भक्तजनाय संप्रददतं वासोमणीन्हाटकम् ॥ वामेनैव करेण दक्षिणकरे व्याख्यानमुद्रांकितं शुक्रं दैत्यवरार्चितं स्मितमुखं वंदे सिताङ्गप्रभम् ॥ १ ॥" इति ध्यात्वा पूर्वोक्त धर्मादियुते पीठे श्वेतगंधाक्षतपुष्पांतैरुपचारैः शुक्रं संपूज्य । षट्कोणे कोणकेसरेषु । मध्ये दिक्षु च । ॐ हृदयाय नमः ॥ १ ॥ ॐ वस्त्रं शिरसे स्वाहा ॥ २ ॥ ॐ मे शिखायै वषट् ॥ ३ ॥ ॐ देहि कवचाय हुं ॥ ४ ॥ ॐ शुक्राय नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ स्वाहा अस्त्राय फट् ॥ ६ ॥ इत्यंगानि संपूज्य ततो बाह्ये भूपुरे पूर्वादिषु इन्द्रादिदिक्पालान् तद्बहिर्वज्राद्यायुधानि च पूजयेत् ॥ ततो धूपादिनीराजनांतपूजां कृत्वा जपं कुर्यात् ॥ अस्य पुरश्चरणमयुतजपः ॥ तथा-अयुतं प्रजपेन्मन्त्रं दशांशं जुहुयाद्घृतैः ॥ सुगंधैः श्वेतकुसुमैर्जुहुयाच्छुक्रवासरे ॥ ॥ १ ॥ एकविंशतिवारं यो लभते सोऽशुकं मणीन् । इति शुक्रमंत्रविधानं समाप्तम् ॥ ॥ अथ वेदोक्तसूर्यादिनवग्रहमंत्रप्रयोगः ॥ आचम्य । प्राणानायम्य । ( संकल्पः ) देशकालौ संकीर्त्य । श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम ( यजमानस्य वा ) जन्मराशेः

सकाशान्नामराशेः सकाशाद्वा जन्मलग्नाद्वर्षलग्नाद्वा चतुर्थाष्टमद्वादशाद्यनिष्टस्थानस्थिताशुभग्रहपरिहारद्वारा तृतीयैकादशस्थान स्थितवदुत्तमफलप्राप्त्यर्थमायुरारोग्यप्राप्त्यर्थं च अमुकग्रहस्य अमुकसंख्यया जपं करिष्ये इति संकल्प्य । न्यासं कुर्यात् । तत्रादौ सूर्यमन्त्रन्यासादिप्रयोगः । आकृष्णेनेत्यस्य हिरण्यस्तूप ऋषिः ॥ अनुष्टुप्छंदः । सविता देवता । रजसेति बीजम् । वर्त्तमान इति शक्तिः । सूर्यप्रीतये जपे विनियोगः ॥ ॐ हिरण्यस्तूपऋषये नमः शिरसि ॥ १ ॥ ॐ त्रिष्टुप्छन्दसे नमः मुखे ॥ २ ॥ ॐ सवितृदेवतायै नमः हृदये ॥ ३ ॥ ॐ रजसा बीजाय नमः गुह्ये ॥ ४ ॥ ॐ वर्त्तमानशक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः । ॐ आकृष्णेनेत्यंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ रजसेति तर्ज्जनीभ्यां नमः ॥ २ ॥ ॐ वर्तमान इति मध्यमाभ्यां नमः ॥३॥ निवेशयन्नमृतम्मर्त्यं चेत्यनामिकाभ्यां नमः ॥ ४ ॥ ॐ हिरण्ययेन सविता रथेनेति कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ आदेवो भुवनानि पश्यन्निति करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ ॐ आकृष्णेनेति हृदयाय नमः ॥ १ ॥ ॐ रजसेति शिरसे स्वाहा ॥ २ ॥ ॐ वर्तमान इति शिखायै वषट् ॥ ३ ॥ ॐ निवेशयन्नमृतम्मर्त्यं चेति कवचाय हुं ॥ ४ ॥ ॐ हिरण्ययेन सविता रथेनेति नेत्रत्रयाय वौषट् ॥५॥ ॐ आदेवो याति भुवनानि पश्यन्नित्यस्त्राय फट् ॥६॥ इति हृदयादिन्यासः ॥ ॐ आकृष्णेनेति शिरसि ॥ १ ॥ ॐ रजसेति ललाटे ॥ २ ॥ ॐ वर्तमान इति मुखे ॥३॥ ॐनिवेशयन्निति हृदये॥४॥ॐअमृतं चेति नाभौ ॥५॥ ॐ मर्त्यं चेति कट्याम् ॥ ६ ॥ ॐ हिरण्ययेनेत्यूर्वोः ॥ ७ ॥ ॐ सवितेति जान्वोः ॥ ८ ॥ ॐ रथेनेति जंघयोः ॥९॥ ॐआदेवो याति गुल्फयोः ॥ १० ॥ ॐ भुवनानीति पादयोः ॥ ११ ॥ ॐ पश्यन्निति सर्वाङ्गेषु न्यसेत् ॥१२॥ इति मन्त्रन्यासः ॥ एवं न्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥"ॐ पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरंगवाहः ॥ दिवाकरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः ॥ १ ॥" एवं ध्यात्वा मानसोपचारैः संपूज्य जपं कुर्यात् । तत्र मंत्रः—ॐ आकृष्णेनरजसाव्वर्त्तमानोनिवेशयन्नमृतम्मर्त्यंञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥१॥ इति सूर्यमन्त्रः ॥ अस्य जपसंख्या सप्त सहस्राणि ७००० । जपान्ते अर्कसमित्तिलपायसघृतैर्दशांशहोमः ॥ तद्दशांशेन तर्पणं तद्दशांशेन मार्ज्जनं तद्दशांशेन ब्राह्मणभोजनं च कार्यम् । अन्यत्सर्वं पूर्ववत् । अथ सूर्यदानद्रव्याणि । माणिक्यगोधूमसवत्सधेनुः कौसुंभवासो गुडहेमताम्रम् ॥ आरक्तकं चन्दनमंबुजं च वदंति दानं रविनंदनाय ॥ १ ॥ इति सूर्यमन्त्रपुरश्चरणम् ॥ १ ॥ ॥ अथ चन्द्रमन्त्रप्रयोगः ॥ ॐ इमं देवा इति मन्त्रस्य गौतम ऋषिः । द्विपदाविराट् छन्दः । सोमो देवता । असपत्नमिति बीजम् । सोमप्रीत्यर्थं जपे विनियोगः ॥ ॐ गौतमऋषये नमः शिरसि ॥ १ ॥ ॐ द्विपदाविराट्छन्दसे नमः मुखे ॥ २ ॥ ॐ सोमदेवतायै नमः हृदि ॥ ३ ॥ ॐ असपत्नबीजाय नमः गुह्ये ॥ ४ ॥ ॐ सोमप्रीत्यर्थं जपे विनियोगाय नमः सर्वांगे ॥ इति ऋष्यादिन्यासः ॥५॥ ॐ इमं देवाऽअसपत्नᳬंसुवध्वमित्यङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ महतेक्षत्रायेति तर्जनीभ्यां नमः ॥ २ ॥ ॐ महतेज्ज्यैष्ठ्यायेति मध्यमाभ्यां नमः ॥ ३ ॥

ॐ महते जानंराज्यायेन्द्रियायेत्यनामिकाभ्यां नमः ॥ ४ ॥ ॐ इममुमुष्यंपुत्रममुष्यै इति कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ पुत्रमस्यै व्विशऽएषवोऽमीराजासोमोऽस्माकं ब्राह्मणाना ᳪ राजेति करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ ॐ इमन्देवाऽअसपत्नᳪ सुवध्वमिति हृदयाय नमः ॥ १ ॥ ॐ महतेक्षत्रायेति शिरसे स्वाहा ॥ २ ॥ ॐ महतेज्ज्यैष्ठ्यायेति शिखायै वषट् ॥ ३ ॥ ॐ महते जानंराज्यायेंद्रस्येंद्रियायेति कवचायहुम् ॥ ४ ॥ ॐ इममुमुष्यंपुत्रममुष्यै इति नेत्रत्रयाय वौषट् ॥५॥ ॐ पुत्रमस्यै व्विशऽएषवोऽमीराजासोमोऽस्माकं ब्राह्मणानाᳪ राजा इत्यस्त्राय फट् ॥ ६ ॥ इति हृदयादिन्यासः ॥ ॐ इमं देवा इति शिरसि ॥१॥ ॐ असपत्नमिति ललाटे ॥२॥ ॐ सुवध्वमिति नासिकायाम् ॥३॥ ॐ महतेक्षत्रायेति मुखे ॥४॥ ॐ महतेज्ज्यैष्ठ्यायेति कंठे ॥५॥ ॐ महते जानंराज्यायेंद्रस्येंद्रियायेति हृदये ॥६॥ इममुमुष्येतिनाभौ ॥७॥ ॐ पुत्रममुष्यै इति कट्याम्॥ ॥८॥ ॐ पुत्रमस्यै इति जंघयोः ॥९॥ ॐ विशऽएषवोऽमीराजासोमोऽस्माकंब्राह्मणानाᳪ राजेति पादयोः ॥१०॥ एवं न्यासविधिं कृत्वा ध्यायेत् ॥ "ॐ श्वेतांबरः श्वेतविभूषणश्च श्वेतद्युतिर्दंडकरो द्विबाहुः।चन्द्रोऽमृतात्मा वरदः किरीटी मयि प्रसादं विदधातु देवः ११॥ इति ध्यात्वा मानसोपचारैः संपूज्य जपं कुर्यात् । तत्र मंत्रः । " ॐ इमंदेवाऽअसपत्नᳪ सुवध्वम्महतेक्षत्राय महतेज्यैष्ठ्यायमहते जानंराज्यायेंद्रस्येंद्रियायइममुमुष्यं पुत्रममुष्यै पुत्रमस्यैव्विशऽएषवोऽमीराजासोमोऽस्माक ब्राह्मणानाᳪ राजा " १ ॥ अस्य जपसंख्या एकादशसहस्राणि ११००० जपांते पलाशसमित्तिलपायसघृतैर्दशांशहोमः ॥ अन्यत्सर्वं पूर्ववत् । अथ दानद्रव्याणि । सद्वंशपात्र स्थिततण्डुलांश्च कर्पूरमुक्ताफलशुभ्रवस्त्रम् ॥ युगोपयुक्तं वृषभं च रौप्यं चन्द्राय दद्याद्घृतपूर्णकुंभम् ॥१॥ इति चंद्रमंत्रप्रयोगः ॥२॥ अथ भौममंत्रप्रयोगः । ॐ अग्निर्मूर्द्धेति मंत्रस्य विरूपाक्ष ऋषिः।गायत्री छंदः । भौमो देवता । ककुद्बीजम् । भौमप्रीतये जपे विनियोगः ॥ ॐ विरूपाक्षऋषये नमः शिरसि ॥१॥ गायत्रीछंदसे नमः मुखे ॥ २ ॥ ॐ भौमदेवतायै नमः हृदि ॥ ३ ॥ ॐ ककुद्बीजाय नमः गुह्ये ॥ ४ ॥ ॐ भौमप्रीतये जपे विनियोगाय नमः सर्वांगे ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ अग्निर्मूर्द्धेत्यंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ दिवः ककुदिति तर्जनीभ्यां नमः ॥ २ ॥ पतिः पृथिव्याऽअयमिति मध्यमाभ्यां नमः ॥ ३ ॥ ॐ अपामित्यनामिकाभ्यां नमः ॥ ४ ॥ ॐ रेताᳪ सीति कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ जिन्वतीति । करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ ॐ अग्निर्मूर्द्धेति हृदयाय नमः ॥ १ ॥ ॐ दिवः ककुदिति शिरसे स्वाहा ॥ २ ॥ ॐ पतिः पृथिव्याऽअयमिति शिखायै वषट् ॥३॥ ॐ अपां कवचाय हुं ॥४॥ ॐ रेताᳪ सीति नेत्रत्रयाय वौषट् ॥५॥ ॐ जिन्वतीत्यस्त्राय फट् ॥६॥ इति हृदयादिन्यासः ॥ ॐ अग्निरिति शिरसि ॥१॥ ॐ मूर्धा ललाटे ॥२॥ ॐ दिवो मुखे ॥ ३ ॥ ॐ ककुदितिहृदये ॥ ४ ॥ ॐ पतिर्नाभौ ॥ ५ ॥ पृथिव्याः कट्याम् ॥ ६ ॥ ॐ अयमूर्वोः ॥ ७ ॥ ॐ अपां जानुनोः ॥ ८ ॥ ॐ रेताᳪ सि गुल्फयोः ॥ ९ ॥ ॐ जि

न्वति पादयोः ॥ १० ॥ इति न्यासविधिं कृत्वा ध्यायेत् ॥ "ॐ रक्ताम्बरो रक्तवपुः किरीटी चतुर्भुजो मेषगतो गदाभृत् ॥ धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशांतः ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य जपं कुर्यात् ॥ तत्र मंत्रः । ॐअग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपाᳬरेताᳬसिजिन्वति ॥इति मंत्रः॥ भौमे दशसहस्राणीति जपसंख्या १०००० । जपांते खदिरसमित्तिलपायसघृतैर्दशांशहोमः ॥ अन्यत्सर्वं पूर्ववत् ॥ अथ दानद्रव्याणि ॥ प्रवालगोधूममसूरिकाश्च वृषोरुणाश्चापि गुडः सुवर्णम् ॥ आरक्तवस्त्रं करवीरपुष्पं ताम्रं च भौमाय वदंति दानम् ॥ १ ॥ इति भौममंत्रप्रयोगः ॥ ॥ अथ बुधमंत्रप्रयोगः ॥ ॐ उद्बुध्यस्वेति मंत्रस्य परमेष्ठी ऋषिः । बृहतीछंदः । बुधो देवता । त्वमिष्टापूर्तेसमिति बीजम् । बुधप्रीतये जपे विनियोगः॥ ॐ परमेष्ठीऋषये नमः शिरसि ॥१॥ ॐ बृहतीछंदसे नमः मुखे ॥ २ ॥ ॐ बुधदेवतायै नमः हृदये ॥३॥ ॐ त्वमिष्टापूर्तेसमिति बीजाय नमः गुह्ये ॥४॥ ॐ बुधप्रीतये जपे विनियोगाय नमः सर्वाङ्गे ॥५॥ इति ऋष्यादिन्यासः ॥ ॐउद्बुध्यस्वाग्नेप्रतिजागृहि अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ त्वमिष्टापूर्तेसं तर्जनीभ्यां नमः ॥ २ ॥ ॐ सृजेथामयंच मध्यमाभ्यां नमः ॥ ३ ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन् अनामिकाभ्यां नमः ॥ ४ ॥ ॐ विश्वेदेवा कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ यजमानश्चसीदत करतलकरपृष्ठाभ्यां नमः ॥६॥ इति करन्यासः ॥ ॐ उद्बुध्यस्वाग्नेप्रतिजागृहि हृदयाय नमः ॥१॥ॐ त्वमिष्टापूर्तेसं शिरसे स्वाहा ॥ २ ॥ ॐ सृजेथामयं च शिखायै वषट् ॥ ३ ॥ ॐ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्कवचाय हुं ॥४॥ ॐ विश्वेदेवा नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ यजमानश्चसीदत अस्त्राय फट् ॥६॥ इति हृदयादिन्यासः ॥ ॐ उद्बुध्यस्व शिरसि ॥१॥ ॐ अग्नेप्रति ललाटे ॥ २ ॥ ॐ जागृहित्वं मुखे ॥३॥ ॐ इष्टापूर्ते सं हृदये ॥४॥ ॐ सृजेथामयं च नाभौ ॥५॥ ॐ अस्मिन्त्सधस्थे कट्याम् ॥६॥ ॐअध्युत्तरस्मिन्नूर्वोः ॥७॥ ॐविश्वदेवा जानुनोः ॥ ८ ॥ ॐ यजमानश्च पादयोः ॥ ९ ॥ ॐ सीदत सर्वांगे ॥ १० ॥ इति न्यासविधिं कृत्वा ध्यायेत् ॥ " पीतांबरः पीतवपुः किरीटी चतुर्भुजो दंडधरश्च हारी ॥ चर्मासिधृक् सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधश्च ॥१॥ " इति ध्यात्वा मानसोपचारैः संपूज्य जपं कुर्यात् ॥ तत्र मंत्रः-ॐ उद्बुध्यस्वाग्नेप्रति जागृहित्वमिष्टापूर्तेसᳬसृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ १ ॥ इति मन्त्रः ( बुधे चाष्टसहस्रकमिति जपसंख्या ८००० ) जपान्ते अपामार्गसमित्तिलपायसघृतैर्दशांशहोमः । अन्यत्सर्वं पूर्ववत् । अथ दानद्रव्याणि । चैलं च नीलं कलधौतकांस्यं मुद्गाज्यगारुत्मकसर्वपुष्पम् ॥ दासी च दन्तो द्विरदस्य नूनं वदंति दानं विधुनंदनाय ॥ ॥ इति बुधमंत्रप्रयोगः ॥ ४ ॥ ॥

॥ अथ बृहस्पतिमन्त्रप्रयोगः ॥ ॐ बृहस्पते इति मन्त्रस्य गृत्समद ऋषिः । त्रिष्टुप् छन्दः । बृहस्पतिर्देवता ॥ बृहस्पतिप्रीत्यर्थे जपे विनियोगः ॥ ॐ गृत्समदऋषये नमः शिरसि ॥ १ ॥ ॐ त्रिष्टुप्छन्दसे नमः मुखे ॥ २ ॥ ॐ बृहस्पतिदेवतायै नमः हृदये ॥ ॥ ३ ॥ इति ऋष्यादिन्यासः । ॐ बृहस्पतेऽअति यदर्य्यो इत्यंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ अर्हाद्द्युमदिति तर्जनीभ्यां नमः ॥ २ ॥ ॐ विभाति क्रतुमदिति मध्यमाभ्यां नमः ॥ ३ ॥ ॐ जनेषु अनामिकाभ्यां नमः ॥ ४ ॥ ॐ यदीदयच्छवसऋतप्र

जाततदस्मासु कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ द्रविणंधेहिचित्रमिति करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः । ॐ बृहस्पतेऽअतियदर्य्यो हृदयाय नमः ॥ १ ॥ ॐ अर्हाद्युमदिति शिरसे स्वाहा ॥ २ ॥ ॐविभाति क्रतुमदिति शिखायै वषट् ॥ ३ ॥ ॐ जनेषु कवचाय हुं ॥ ४ ॥ ॐ यद्दीदयच्छवसऽऋतप्प्रजाततदस्मासु नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ द्रविणंधेहिचित्रमित्य स्त्राय फट् ॥ ६ ॥ इति हृदयादिन्यासः ॥ ॐ बृहस्पते इति शिरसि ॥ १ ॥ ॐ अतियदर्यो ललाटे ॥२॥ ॐ अर्हाद्युमन्मुखे ॥ ३ ॥ ॐ विभाति क्रतुमज्जनेषु नाभौ ॥ ४ ॥ ॐ यद्दीदयत्कव्याम् ॥ ५ ॥ ॐ शवसऽऋतप्रजा ऊर्वोः ॥ ६ ॥ ॐ ततदस्मासुद्र विणं जानुनोः ॥ ७ ॥ ॐ धेहि चित्रं पादयोः ॥ ८ ॥ इति मंत्रन्यासः ॥ एवं न्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ "पीताम्बरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः प्रशान्तः ॥ दधाति दंडं च कमण्डलुं च तथाक्षसूत्रं वरदोऽस्तु मह्यम् " ॥१॥इति ध्यात्वा मानसोपचारैः संपूज्य जपं कुर्यात् ॥ ॐ बृहस्पतेऽअतिश्दर्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवस ऽऋतप्प्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ ५ ॥ इति बृहस्पतिमन्त्रः ॥ " एकोनविंशतिर्जीवे सहस्राणि १९००० विदुर्बुधाः " इति जपसंख्या । जपांते अश्वत्थसमित्तिलपायसघृतैर्दशांशहोमः । अन्यत्सर्वं पूर्ववत् ॥ अथ दानद्रव्याणि । शर्करा च रजनी तुरंगमः पीतधान्यमपि पीतमंबरम् ॥ पुष्पराजलवणे च कांचनं प्रीतये सुरगुरोः प्रदीयताम् ॥ १ ॥ इति गुरुम त्रजपप्रयोगः ॥ ५ ॥ अथ शुक्रमंत्रजपप्रयोगः । ॐ अन्नात्परिस्रुत इति मन्त्रस्य पराशर ऋषिः । शक्वरी छन्दः । शुक्रो देवता । रसं ब्रह्मणा इति बीजम् । शुक्रप्रीत्यर्थे जपे विनियोगः ॥ ॐ पराशरऋषये नमः शिरसि ॥ १ ॥ ॐ शक्वरीछन्दसे नमः मुखे ॥ २ ॥ ॐ शुक्रदेवतायै नमः हृदये ॥ ३ ॥ ॐ रसंब्रह्मणा इति बीजाय नमः गुह्ये ॥ ४ ॥ इति ऋष्यादि न्यासः । ॐ अन्नात्परिस्रुत इत्यङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ रसंब्रह्मणा व्यपिबत् इति तर्जनीभ्यां नमः ॥ २ ॥ ॐ क्षत्रंपय इति मध्यमाभ्यां नमः ॥ ३ ॥ ॐ सोमं प्रजापतिरित्यनामिकाभ्यां नमः ॥ ४ ॥ ॐ ऋतेनसत्यमिंद्रियंव्विपानर्ठंशुक्रमंधसः कनिष्ठि काभ्यां नमः ॥ ५ ॥ ॐ इंद्रस्येंद्रियमिदंपयोमृतंमधु इति करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ ॐ अन्नात्परिस्रुतो हृदयाय नमः ॥ १ ॥ ॐ रसंब्रह्मणाव्यपिबत शिरसे स्वाहा ॥ २ ॥ ॐ क्षत्रंपयः शिखायै वषट् ॥ ३ ॥ ॐ सोमंप्रजापतिरिति कवचाय हुं ॥ ४ ॥ ॐ ऋतेनसत्यमिंद्रियंव्विपानर्ठंशुक्रमंधसो नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ इन्द्रस्येंद्रियमिदंपयोमृतम्मधु इत्यस्त्राय फट् ॥ ६ ॥ इति हृदयादिन्यासः ॥ ॐ अन्नात्परिस्रुत इति शिरसि ॥ १ ॥ ॐ रसंब्रह्मणा ललाटे ॥ २ ॥ ॐ व्यपिबत्क्षत्रं मुखे ॥ ३ ॥ ॐ पयः सोमं हृदये ॥ ४ ॥ ॐ प्रजापतिर्नाभौ ॥ ५ ॥ ॐ ऋतेनसत्यं कट्याम् ॥ ६ ॥ ॐ इंद्रियंविपानम् गुदे ॥ ७ ॥ ॐ शुक्रं वृषणयोः ॥ ८ ॥ ॐ अन्धस ऊर्वोः ॥ ९ ॥ ॐ इन्द्रस्येंद्रियमिदंपयो जानुनोः ॥ १० ॥ ॐ अमृतं पादयोः ॥ ११ ॥ ॐ मधु सर्वशरीरे च ॥ १२ ॥ न्यसेत् ॥ इति मन्त्रन्यासः । एवं न्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ "श्वेतांबरः

श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुः प्रशांतः॥ तथाक्षसूत्रं च कमंडलुं च दण्डं च बिभ्रद्वरदोऽस्तु मह्यम् ॥ १ ॥" इति ध्यात्वा मानसोपचारैः संपूज्य जपं कुर्य्यात् ॥ तत्र मंत्रः—ॐ अन्नात्परिस्रुतोरसं ब्रह्मणाव्यपिबत् क्षत्रम्पयः सोमम्प्रजापतिः ॥ ऋतेनसत्यमिंद्रियंविपानंठशुक्रमन्धसऽइंद्रस्येंद्रियमिदम्पयोमृतम्मधु ॥ १ ॥ शुक्रे एकादशैव तु इति जपसंख्या ११००० ॥ अथ दानद्रव्याणि । चित्रांबरं शुभ्रतुरङ्गमश्च धेनुश्च वज्रं रजतं सुवर्णम् ॥ सुतंडुलानुत्तमगंधयुक्तान् वदंति दानं भृगुनन्दनाय ॥ ६ ॥ इति शुक्रमन्त्रजपप्रयोगः ॥ अथ शनैश्चरमन्त्रजपप्रयोगः । ॐ शन्नोदेवीरिति मंत्रस्य दध्यङ्ङाथर्वण ऋषिः । गायत्री छन्दः । शनिर्देवता । आपो बीजम् । वर्तमान इति शक्तिः । शनैश्चरप्रीत्यर्थे जपे विनियोगः ॥ ॐ दध्यङ्ङाथर्वणऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्रीछंदसे नमः मुखे ॥ २ ॥ ॐ शनैश्चरदेवतायै नमः हृदये ॥ ३ ॥ ॐ आपोबीजाय नमः गुह्ये ॥ ४ ॥ ॐ वर्त्तमानशक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः । ॐ शन्नोदेवीरित्यङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ अभिष्टये तर्जनीभ्यां नमः ॥ २ ॥ ॐ आपोभवंतु मध्यमाभ्यां नमः ॥ ३ ॥ ॐ पीतये अनामिकाभ्यां नमः ॥४॥ ॐ शंय्योरिति कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ अभिस्रवंतुनः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ ॐ शन्नोदेवीरिति हृदयाय नमः ॥ १ ॥ ॐ अभिष्टये शिरसे स्वाहा ॥ २ ॥ ॐ आपो भवंतु शिखायै वषट् ॥ ३ ॥ ॐ पीतये कवचाय हुं ॥४॥ ॐ शंय्योरिति नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ अभिस्रवंतुनः अस्त्राय फट् ॥ ६ ॥ इति हृदयादिन्यासः । ॐ शन्न इति शिरसि ॥१॥ ॐ देवीरिति ललाटे ॥ २ ॥ ॐ अभिष्टये मुखे ॥ ३ ॥ ॐ आपो हृदये ॥ ४ ॥ ॐ भवन्तु नाभौ ॥ ५ ॥ ॐ पीतये कट्याम् ॥ ॥ ६ ॥ शंय्योरूर्वोः ॥ ७ ॥ ओं अभिस्रवन्तु जानुनोः ॥ ८ ओं नः पादयोः ॥ ९ ॥ इति मन्त्रन्यासः ॥ एवं न्यासं कृत्वा ध्यायेत् । अथ ध्यानम् ॥ "नीलद्युतिः शूलधरः किरीटी गजस्थितस्त्रासकरो धनुष्मान् ॥ चतुर्भुजः सूर्यसुतः प्रशांतः सदास्तु मह्यं वरदो महात्मा ॥ १० ॥ इति ध्यात्वा मानसोपचारैः संपूज्य जपं कुर्य्यात् । तत्र मंत्रः—ओं शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शंय्योरभिस्रवन्तुनः ॥ १ ॥ " त्रयोविंशतिर्मन्दे चेति जपसंख्या २३००० ॥ जपांते शमीसमित्तिलपायसघृतैर्दशांशहोमः । अन्यत्सर्वं पूर्ववत् । अथ दानद्रव्याणि । माषांश्च तैलं विमलेन्द्रनीलं तिलाः कुलित्था महिषी च लोहम् ॥ कृष्णा च धेनुः प्रवदन्ति नूनं दुष्टाय दानं रविनंदनाय ॥ १ ॥ इति शनैश्चरमंत्रप्रयोगः ॥ ७ ॥ ॥ अथ राहुमन्त्रप्रयोगः ॥ ओं कयान इति मन्त्रस्य वामदेव ऋषिः । गायत्रीछन्दः । राहुर्देवता । कयान इति बीजम् । शचिरिति शक्तिः । राहुप्रीत्यर्थे जपे विनियोगः ॥ ओं वामदेवऋषये नमः शिरसि ॥ १ ॥ ओं गायत्रीछन्दसे नमः मुखे ॥ २ ॥ ओं राहुदेवतायै नमः हृदये ॥ ३ ॥ ओं कयान इति बीजाय नमः गुह्ये ॥ ४ ॥ ओं शचिरिति शक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः । ओं कयान इत्यङ्गुष्ठाभ्यां नमः ॥ १ ॥ ओं चित्र इति तर्जनीभ्यां नमः ॥ २ ॥ ओं आभुव इति मध्यमाभ्यां नमः ॥ ३ ॥

ॐ अपेशसे इति बीजाय नमः गुह्ये ॥ ४ ॥ मर्य्याशक्तये नमः पादयोः ॥ ५ ॥ इति ऋष्यादिन्यासः ॥ ॐ केतुंकृण्वन्
इत्यङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ केतवे इति तर्जनीभ्यां नमः ॥ २ ॥ ॐ पेशोमर्य्या इति मध्यमाभ्यां नमः ॥ ३ ॥ ॐ अपे
शसे अनामिकाभ्यां नमः ॥ ४ ॥ ॐ समुषद्भिः कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ अजायथाः करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥
इति करन्यासः ॥ ॐ केतुंकृण्वन्निति हृदयाय नमः ॥ १ ॥ ॐ अकेनवे शिरसे स्वाहा ॥ २ ॥ ॐ पेशोमर्य्या शिखायै वषट् ॥
॥३॥ ॐ अपेशसे कवचाय हुं ॥४॥ ॐ समुषद्भिर्नेत्रत्रयाय वौषट् ॥५॥ ॐ अजायथा इत्यस्त्राय फट् ॥६॥ इति हृदयादिन्यासः॥
ॐ केतुं शिरसि । १ ॥ ॐ कृण्वन् ललाटे ॥ २ ॥ ॐ अकेतवे मुखे ॥ ३ ॥ ॐ पेशो हृदये ॥ ४ ॥ ॐ मर्य्या नाभौ ॥
॥ ५ ॥ ॐ अपेशसे कट्याम् ॥ ६ ॥ ॐ समूर्वोः ॥ ७ ॥ ॐ उषद्भिर्जानुनोः ॥ ८ ॥ ॐ अजायथाः पादयोः ॥ ९ ॥ इति
मंत्रन्यासः । एवं न्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ " धूम्रो द्विबाहुर्वरदो गदाभृद्गृध्रासनस्थो विकृताननश्च ॥ किरीटकेयूर
विभूषितांबरः मदास्तु मे केतुगणः प्रशांतः ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य जपं कुर्यात् । तत्र मन्त्रः ॥ ॐ केतुं
कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥ १ ॥ केतोः सप्त सहस्राणि ७००० जपसंख्या प्रकीर्तिता ॥ ततो जपान्ते
कुशसमित्तिलपायसघृतैर्दशांशहोमः॥अन्यत्सर्वं पूर्ववत्॥अथ दानद्रव्याणि ॥ वैडूर्यरत्नं सतिलं च तैलं सुकंबलं चापि मदो मृगस्य॥
ॐ दूतीसदावृध इत्यनामिकाभ्यां नमः ॥ ४ ॥ ॐ सखाकया इति कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ शचिष्ठयावृता इति
करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ ॐ कयान इति हृदयाय नमः ॥ १ ॥ ॐ चित्र इति शिरसे स्वाहा ॥ २ ॥
ॐ आभुव इति शिखायै वषट् ॥ ३ ॥ ॐ दूतीसदावृध इति कवचाय हुं ॥ ४ ॥ ॐ सखाकया इति नेत्रत्रयाय वौषट् ॥ ५ ॥
ॐ शचिष्ठयावृता इत्यस्त्राय फट् ॥ ६ ॥ ॐ कया शिरसि ॥ १ ॥ ॐ न इति ललाटे ॥२॥ॐ चित्र मुखे ॥ ३ ॥ ॐ आभुव
दूती नाभौ ॥ ४ ॥ ॐ सदावृधः कट्याम् ॥ ५ ॥ ॐ सखा ऊर्वोः ॥ ६ ॥ कया जानुनोः ॥ ७ ॐ शचिष्ठया गुल्फयोः
॥ ८ ॥ ॐ वृता पादयोः ॥ ९ ॥ इति मन्त्रन्यासः । एवं न्यासं कृत्वा । ध्यायेत् । अथ ध्यानम् । नीलांबरो नीलवपुः किरीटी
करालवक्त्रः करवलशूली ॥ चतुर्भुजश्चर्मधरश्च राहुः सिंहासनस्थो वरदोस्तु मह्यम् ॥ १ ॥ इति ध्यात्वा मानसोपचारैः संपूज्य
जपं कुर्य्यात ॥ राहुमंत्रः ॐ कया नश्चित्रऽआभुवदूतीसदावृधः सखा कयाशचिष्ठयावृता ॥ ८ ॥ राहोरष्टादशैव तु १८००० इति
दूर्वासमित्तिलपायसघृतैर्दशांशहोमः ॥ अन्यत्सर्वं पूर्ववत् ॥ अथ दानद्रव्याणि ॥ गोमेदरत्नं च तुरंगमश्च सुनीलचैलामलकंबलं
च ॥ तिलाश्च तैलं खलु लोहमिश्रं स्वर्भानवे दानमिदं वदंति ॥ १ ॥ इति राहुमन्त्रजपप्रयोगः ॥ ८ ॥ ॥ अथ केतुमंत्रजप
विधानम् ॥ केतुं कृण्वन्निति मंत्रस्य मधुऋषिः ॥ गायत्री छंदः । केतुर्देवता । अपेशसे इति बीजम् । मर्य्या शक्तिः । केतुप्रीत्यर्थं
जपे विनियोगः ॥ ॐ मधु ऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्री छन्दसे नमः मुखे ॥ २ ॥ ॐ केतुदेवतायै नमः हृदये ॥ ३ ॥

शस्त्रं च केतोः परितोषहेतोश्छागस्य दानं कथितं मुनीन्द्रैः ॥ १ ॥ इति केतुमंत्रजपविधानं समाप्तम् ॥ अथ सूर्यस्तोत्र प्रारंभः ॥ सुमंतुरुवाच ॥ अस्तावीच्च ततः सांबः कृशो धमनिसंततः ॥ राजन्नामसहस्रेण सहस्रांशुं दिवाकरम् ॥ १ ॥ खिद्यमान ततो दृष्ट्वा सूर्यः कृष्णात्मजं तदा ॥ स्वप्नेऽस्य दर्शनं दृष्ट्वा पुनर्वचनमब्रवीत ॥ २ ॥ श्रीसूर्य उवाच ॥ सांबसांब महाबाहो शृणु जांब वतीसुत ॥ अलं नामसहस्रेण पठ चेमं शुभं स्तवम् ॥ ३ ॥ यानि गुह्यानि नामानि पवित्राणि शुभानि च ॥ तानि ते कीर्तयिष्यामि प्रयत्नादवधारय ॥ ४ ॥ वैकर्तनो विवस्वांश्च मार्तंडो भास्करो रविः ॥ लोकप्रकाशः श्रीमाँल्लो कचक्षुर्ग्रहेश्वरः ॥ ५ ॥ लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा ॥ तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥ ॥ ६ ॥ गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः ॥ एकविंशतिरित्येष स्तव इष्टस्सदा मम ॥ ७ ॥ शरीरारोग्यद श्चैव धनवृद्धियशस्करः ॥ स्तवराज इति ख्यातस्त्रिषु लोकेषु विश्रुतः ॥ ८ ॥ य एतेन महाबाहो द्वे संध्येऽस्तमनोदये ॥ स्तौति मां प्रणतो भूत्वा सर्वपापैः प्रमुच्यते॥९॥मानसं वाचिकं वापि कायिकं यच्च दुष्कृतम् ॥ एकजाप्येन तत्सर्वं प्रणश्यति ममाग्रतः ॥१०॥ एष जप्यश्च होमश्च संध्योपासनमेव च ॥ बलिमंत्रोऽर्घमंत्रोथ धूपमंत्रस्तथैव च ॥ ११ ॥ अन्नप्रदाने स्नाने च प्रणिपाते प्रदक्षिणे ॥ पूजितोऽय महामंत्रः सर्वपापहरः शुभः ॥ १२ ॥ एवमुक्त्वा स भगवान्भास्करो जगतांपतिः ॥ आमंत्र्य कृष्णतनयं तत्रैवांतरधी यत ॥ १३ ॥ सांबोपि स्तवराजेन स्तुत्वा सप्ताश्ववाहनम् ॥ प्रीतात्मा नीरुजः श्रीमांस्तस्माद्रोगाद्विमुक्तवान् ॥ १४ ॥ इति भविष्योत्तरपुराणे सूर्यस्तवराजः समाप्तः ॥ ॥ अथ आदित्यहृदयस्तोत्रप्रारंभः ॥ " ततो युद्धपरिश्रांतं समरे चिंतयास्थितम् ॥ रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १ ॥ दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ॥ उपगम्याब्रवीद्राममगस्त्यो भगवांस्त दा ॥ २ ॥ रामराम महाबाहो शृणु गुह्यं सनातनम् ॥ येन सर्वानरीन्वत्स समरे विजयिष्यते ॥३॥ आदित्यहृदयं पुण्यं सर्वशत्रुवि नाशनम् ॥ जयावहं जपं नित्यमक्षयं परमं शिवम् ॥ ४ ॥ सर्वमंगलमांगल्यं सर्वपापप्रणाशनम् ॥ चिंताशोकप्रशमनमायुर्वर्धन मुत्तमम् ॥ ५ ॥ रश्मिमन्तं समुद्यंतं देवासुरनमस्कृतम् ॥ पूजयस्व विवस्वंतं भास्करं भुवनेश्वरम् ॥ ६ ॥ सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ॥ एष देवासुरगणाँल्लोकान्पाति गभस्तिभिः ॥ ७ ॥ एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः ॥ महेंद्रो धनदः कालो यमः सोमो ह्यपांपतिः ॥ ८ ॥ पितरो वसवः साध्या अश्विनौ मरुतो मनुः ॥ वायुर्वह्निः प्रजाः प्राण ऋतुकर्ता प्रभाकरः ॥ ९ ॥ आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ॥ सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः ॥ १० ॥ हरिदश्व सहस्रार्चिः सप्तसप्तिर्मरीचिमान् ॥ तिमिरोन्मथनः शम्भुस्त्वष्टा मार्तण्डकोंशुमान् ॥ ११ ॥ हिरण्यगर्भः शिशिरस्तपनोहस्करो रविः ॥ अग्निगर्भोदितेः पुत्रः शङ्खः शिशिरनाशनः ॥ १२ ॥ व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः ॥ घनवृष्टिरपांमित्रो विंध्यवी थी प्लवङ्गमः ॥ १३ ॥ आतपी मंडली मृत्युः पिंगलः सर्वतापनः ॥ कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥ १४ ॥ नक्षत्रग्रहतारा णामधिपो विश्वभावनः ॥ तेजसामपि तेजस्वी द्वादशात्मन्नमोस्तु ते ॥ १५ ॥ नमः पूर्वाय गिरये पश्चिमायाद्रये नमः ॥ ज्योतिर्गणा

नां पतये दिनाधिपतये नमः ॥ १६ ॥ जयाय जयभद्राय हर्य्यश्वाय नमोनमः ॥ नमोनमः सहस्रांशो आदित्याय नमोनमः ॥
॥ १७ ॥ नम उग्राय वीराय सारंगाय नमोनमः ॥ नमः पद्मप्रबोधाय प्रचण्डाय नमोस्तु ते ॥ १८ ॥ ब्रह्मेशानाच्युतेशाय सूरा
यादित्यवर्चसे ॥ भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९ ॥ तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने ॥ कृतघ्नघ्नाय देवाय
ज्योतिषां पतये नमः ॥२०॥ तप्तचामीकराभाय हरये विश्वकर्मणे ॥ नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे ॥२१॥ नाशयत्येष वै
भूतं तमेव सृजति प्रभुः ॥ पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥२२॥ एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ॥ एष चैवाग्निहोत्रं
च फलं चैवाग्निहोत्रिणाम् ॥ २३ ॥ देवाश्च क्रतवश्चैव क्रतूनां फलमेव च ॥ यानि कृत्यानि लोकेषु सर्वेषु परमप्रभुः ॥ २४ ॥
एनमापत्सु कृच्छ्रेषु कांतारेषु भयेषु च ॥ कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव ॥२५॥ पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ॥
एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यति ॥ २६ ॥ अस्मिन्क्षणे महाबाहो रावणं त्वं जहिष्यसि ॥ एवमुक्त्वा ततोऽगस्त्यो जगाम
स यथागतम् ॥ २७ ॥ एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ॥ धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८ ॥ आदित्यं
प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवान् ॥ त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९ ॥ रावणं प्रेक्ष्य हृष्टात्मा जयार्थं समुपा
गतम् ॥ सर्वयत्नेन महता वृतस्तस्य वधेऽभवत् ॥३०॥ अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः ॥ निशिचरप
तिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥ ३१ ॥ " इति वाल्मीकीयरामायणे आदित्यहृदयस्तोत्रं संपूर्णम् ॥ अथ सूर्या
थर्वशीर्षमुपनिषत् ॥ अथ सूर्याथर्वाङ्गिरसं व्याख्यास्यामः ॥ ब्रह्मा ऋषिः । आदित्यो देवता । गायत्री छन्दः । हंसाद्यश्विनारा
यणयुक्तं बीजम् । हृल्लेखा शक्तिः । द्विपदादिसर्गसंयुक्तं कीलकम् । धर्मार्थकाममोक्षेषु जपे विनियोगः ॥ षट्स्वरारूढबी
जेन षडंगं रक्ताम्बुजसंस्थं सप्ताश्वरथिनं हिरण्यवर्णं चतुर्भुजं पद्मद्वयाभयवरदहस्तं कालचक्रप्रणेतारं च श्रीसूर्यनारायणं यऽएवं
वेद स वै ब्राह्मणः ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं तत्सवितु० परोरजसेसावदोम् ॐ आपो
ज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् । सूर्यआत्माजगतस्तस्थुषश्च । सूर्याद्वैखल्विमानि भूतानि जायन्ते । सूर्याद्यज्ञाः पर्जन्योऽ
न्नमात्मा । नमस्तेआदित्याय त्वमेवकेवलं कर्त्तासि । त्वमेवप्रत्यक्षं विष्णुरसि । त्वमेवप्रत्यक्षं ब्रह्मासि । त्वमेवप्रत्यक्षंरुद्रोऽसि । त्वमे
व प्रत्यक्षमृगसि । त्वमेवप्रत्यक्षं यजुरसि । त्वमेवप्रत्यक्षंसामासि । त्वमेवप्रत्यक्षमथर्वासि । त्वमेवसर्वं छन्दोऽसि । आदित्याद्वायुर्जा
यते आदित्याद्भूमिर्जायते । आदित्यादापोजायते । आदित्याज्ज्योतिर्जायते । आदित्याद्व्योम दिशो जायंते । आदित्याद्देवा जा
यंते । आदित्याद्वेदा जायंते । आदित्योवाऽएषएतन्मंडलंतपति । असावादित्यो ब्रह्म । आदित्योऽन्तःकरणमनोबुद्धिचित्ता
हंकाराः । आदित्यो वै व्यानसमानोदानापानप्राणाः । आदित्यो वै श्रोत्रत्वक्चक्षुरसनानासाः । आदित्यो वै वाक्पाणिपादोपस्थ
पायूनि । आदित्यो वै शब्दस्पर्शरूपरसगंधाः । आदित्यो वै वचनादानगमनानन्दविसर्गाः । आनन्दमयो ज्ञानमयो विज्ञानमय
आदित्यः । नमो मित्राय भानवे मृत्योर्मा पाहि भ्राजिष्णवे विश्वहेतवे नमः । सूर्यो नो दिवस्पातु वातोअंतरिक्षात् । अग्निः

पार्थिवेभ्यः सूर्याद्वै भूतानि सूर्येण पालितानि तु । सूर्ये लयं प्राप्नुवंति यः सूर्यः सोहमेव च । चक्षुर्नो देवः सविता । चक्षुर्न उत पर्वतः । चक्षुर्धाता दधातु नः । आदित्यायविद्महे सहस्रकरायधीमहि । तन्नः सूर्यः प्रचोदयात् । सवितापश्चात्तात् । सवितापुरस्तात् । सवितोत्तरात्तात् सविताधरात्तात् । सवितानः सुवतुसर्वतातिम् । सवितानोरासतां दीर्घमायुः ओमित्येकाक्षरं ब्रह्म घृणिरिति द्वेअक्षरे सूर्य इत्यक्षरद्वयम् । आदित्य इति । त्रीण्यक्षराणि एतद्वैसूर्यस्याष्टाक्षरमनुम् " ओं घृणिः सूर्यआदित्य " इति मंत्रः । यः सदाहरहर्जपति । सोऽब्रह्मण्यो ब्राह्मणो भवति । सूर्याभिमुखं जप्त्वा महाव्याधिभयात्प्रमुच्यते । अलक्ष्मीर्नश्यति अभक्ष्यभक्षणात्पूतो भवति । अपेयपानात्पूतोभवति । अगम्यागमनात्पूतोभवति । व्रात्यसंभाषणात्पूतो भवति । मध्याह्ने सूर्याभिमुखःपठेत् सद्यः पंचमहापापात्प्रमुच्यते । सैषासावित्रीविद्या न कस्यचित्प्रशंसेत् । एतन्महाभागः प्रातः पठति स भाग्यवान् जायते । पशून्विंदति वेदार्थं लभते । त्रिकाल जप्त्वा क्रतुशतफलं प्राप्नोति । हस्तादित्ये जपति स महामृत्युं तरति । यएवंवेद । इत्युपनिषत्॥इति सूर्याथर्वशीर्षम् ॥ इति श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिना वसिष्ठगोत्रोद्भवश्रीराकृष्णपौत्रेण श्रीकस्तूरीचंद्रसूनुना गौडवंशावतंसश्रीमहादेवभक्तमाध्यंदिनवाजसनेयिना वैद्यपंडितश्रीचतुर्थीलालशर्म्मणा विरचिते " अनुष्ठानप्रकाशे " महानिबंधे पुरश्चरणकाण्डे सूर्यादिग्रहमंत्रानुष्ठानप्रकरणं समाप्तम् ॥ ९ ॥ ॥ ॥ ॥ ॥

अथ सूर्यप्रसंगात्सर्वरोगोपशमननिधानप्रकरणं लिख्यते ॥ तत्र तावत्सामान्यतः सर्वरोगप्रशमनम् (महार्णवे) " रोगाः कर्मोद्भवाः केचित्केचिद्दोषसमुद्भवाः ॥ कर्मदोषोद्भवाः केचिदेवं रोगास्त्रिधा स्मृताः ॥ १ ॥ ये रोगा नैव शाम्यंति कृते ह्यौषधकर्मणि ॥ धर्मैर्णवोपशाम्यंति ते रोगाः कर्मजाः स्मृताः ॥ २ ॥ प्रायश्चित्तेपि विहिते न शाम्यन्ति विनौषधम् ॥ ये दृष्टहेतुसंभूतास्ते रोगा दोषजाः स्मृताः ॥ ३ ॥ येषां सर्वात्मना हानिर्भवेत्पुण्यैर्न केवलैः ॥ न केवलौषधैर्वापि रोगास्ते कर्मदोषजाः ॥ ४ ॥ पूर्वजन्मकृतं पापं नरकस्य परिक्षये ॥ बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः ॥ ५ ॥ पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते ॥ तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥ ६ ॥ रोगहेतौ स्थिते पापे व्याधिः शाम्यति नौषधैः ॥ असाध्यस्यापि रोगस्य प्रायश्चितं समाचरेत् ॥ ७ ॥ सर्वरोगविनाशाय जपः कार्यो विशेषतः ॥ मृत्युंजयस्य रुद्रस्य होमं कुर्याद्दशांशतः ॥ ८ ॥ आगमोक्तविधानेन रोगनाशो भवेद्ध्रुवम् ॥ सर्वरोगोपशांत्यर्थमभिषेकं समाचरेत् ॥ ९ ॥ सहस्रकलशैः स्नानं विष्णोर्वा शंकरस्य च ॥ देवमभ्यर्च्य विप्रेभ्यो दद्यान्मिष्टान्नभोजनम् ॥ १० ॥ तेभ्यश्च दक्षिणां दत्त्वा रोगेभ्यो मुच्यते ध्रुवम् ॥ कार्यः षडंगरुद्रस्य जपो वा रोगशांतये ॥ ११ ॥ महारुद्रविधानेनासाध्यो रोगोऽपि शाम्यति ॥ अपामार्जनसंज्ञेन मालामंत्रेण मार्जयेत् ॥ १२ ॥ मार्जनाद्रोगिणः सर्वे रोगा नश्यंत्यसंशयम् ॥ अच्युतानंतगोविंदेत्येवं नामत्रयं हरेः ॥ १३ ॥ सर्वरोगोपशांत्यर्थं सततं व्याधिमान् जपेत् ॥ सर्वेषु ज्ञातरोगेषु प्रदद्यात्सततं नरः ॥ १४ ॥ पानीयं पायसं मुद्राः शर्करां घृतसंयुताम् ॥ प्रतिकूलग्रहाणां च जपं

होमं च पूजनम् ॥ १५ ॥ तत्तद्दोषविनाशार्थं दानं कुर्य्याद्यथोदितम् ॥ प्रतिरोगं च यद्दानं जपहोमादि कीर्तितम् ॥ १६ ॥ प्रायश्चित्तं तु तत्कृत्वा चिकित्सामारभेत्ततः ॥ प्रदद्यात्सर्वरोगघ्नं छायापात्रं विधानतः ॥ १७ ॥ ( छायापात्रविधानम् ) चतुःषष्टिपलैः कांस्यभाजने निर्मिते शुभे ॥ घृतेनापूरिते तत्र स्वर्णं निष्कं विनिक्षिपेत् ॥ १८ ॥ तत्राज्ये स्वतनोश्छाया आपादतलमस्तकम् ॥ दृष्ट्वा रोगी ततो दद्याद्भाजनं तद्द्विजन्मने ॥ १९ ॥ पूजिताय विधानेन ततो दद्याच्च दक्षिणाम् ॥ पक्षोऽयमुत्तमः प्रोक्तः कांस्यपात्रसुवर्णयोः ॥ २० ॥ दद्याद्वित्तानुसारेण पात्रं स्वर्णं च बुद्धिमान् ॥ दानमंत्रः—आयुर्बलं यशो वर्च्च आज्यं स्वर्णं तथाऽमृतम् ॥ आधारं तेजसा यस्मादतः शांतिं प्रयच्छ मे ॥ २१ ॥ मंत्रेणानेन विप्राय सर्वरोगोपशांतये ॥ पात्रं सुवर्णसहितं दद्यात्संकल्पपूर्वकम् ॥ २२ ॥ "व्याधिप्रतिरूपदानविधानम्" दद्यात्सर्वामयव्याधिप्रतिरूपं निवृत्तये ॥ सुवर्णेन सरत्नेन रौप्येणापि स्वशक्तितः ॥ २३ ॥ निर्मितं च शतैकेन निष्काणां वा तदर्द्धतः ॥ त्रिंशता वा यथाशक्ति दद्यादुक्तविधानतः ॥ २४ ॥ तंडुलैः पूरिते व्याधिप्रतिरूपं सुभाजने ॥ निधायावेष्ट्य वस्त्रेण समलंकृत्य भूषणैः ॥ २५ ॥ समभ्यर्च्चयाथ विप्राय पूजिताय निवेदयेत् ॥ पठन्मन्त्रमिमं व्याधिप्रतिरूपमथोत्सृजेत् ॥ २६ ॥ ये मां रोगाः प्रबाधन्ते देहस्थाः सततं मम ॥ गृह्णीष्व प्रतिरूपेण तान्रोगान्द्विजसत्तम ॥ २७ ॥ बाढमित्येव तद्रूपं गृह्णीयाद्ब्राह्मणस्तदा ॥ ततो रोगप्रदातासौ दीर्घमायुः प्रपद्यते ॥ २८ ॥ तण्डुलानां तु यत्पात्रं मुख्यं तत्कांस्यसम्भवम् ॥ दत्त्वा दानं तु तत्काले द्विजास्यं नावलोकयेत् ॥ २९ ॥" इति व्याधिप्रतिरूपदानम् ॥ प्रायेण सूर्यः सर्वेषां रोगाणामधिदैवतम् ॥ आरोग्यं भास्करादिच्छेदिति प्रख्या श्रुतिः स्मृतिः ॥ इति सामान्यतः सर्वरोगशमनविधानम्॥ अथ ज्वरशमनविधानम् ( महार्णवे गार्ग्यः ) "ये पुनः क्रूरकर्माणः पापाः पिशुनचेतसः । ते भवेयुः सदा शीतज्वरवंतश्च तत्पराः॥ शान्तयेऽयुतसंख्याकं कुर्य्यात्तु प्रयतो जपम् । जातवेदसमन्त्रेण ब्राह्मणान्भोजयेत्ततः ॥ सुरामांसोपहाराद्यैर्बलिः सर्वत्र शस्यते । सहस्रकलशस्नानं शतभोजनमेव च ॥ " ( माहेश्वरतन्त्रेऽपि ) " उष्णज्वरे महेशस्य प्रकुर्यादभिषेचनम् । शीतज्वरे तथा कुर्यादभिषेकं हरेर्बुधः ॥" ( कर्मविपाकसंग्रहेऽपि ) " माङ्गल्येषु च कार्येषु सततं कोपवान्नरः ॥ उष्णज्वराभिभूतः स्यात्तत्पापस्यापनुत्तये ॥ सहस्रकलशस्नानं रुद्रेणेशस्य कारयेत् । ब्राह्मणान्भोजयेच्छक्त्या जपेद्वै जातवेदसम् ॥ " ( महार्णवे शातातपः ) देवस्वग्रहणाच्चैव जायते विविधज्वरः । ज्वरो महाज्वर श्चैव रौद्रो वैष्णव एव च ॥ ज्वरे रुद्रजपं कुर्य्यान्महारुद्रं महाज्वरे । महारुद्रं जपेद्रौद्रे वैष्णवे तद्द्वयं जपेत् ॥ " इति ॥ रुद्रातिरुद्रमहारुद्राणि शिवानुष्ठानप्रकरणे दर्शितानि । ( अथ जातवेदसमंत्रानुष्ठानप्रयोगः ) पूर्वदिने पूर्वोक्तप्रायश्चित्तं कृत्वा प्रारंभदिने प्रातर्नित्यावश्यकं समाप्य सुमुहूर्त्ते शिवालयादिपवित्रस्थले स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य । देशकालौ संकीर्त्य । अमुकगोत्रोऽमुकशर्माहं मम ( यजमानस्य वा ) उत्पन्नज्वरस्य अमुकव्याधेर्वा जीवच्छरीराऽविरोधेन समूलनाशार्थं सद्य आरोग्यार्थं जातवेदस इति मंत्रस्यामुकसंख्यया जपं करिष्ये। इति संकल्प्य भूतशुद्धिं प्राणप्रतिष्ठामन्तर्मातृकाबहिर्मातृकान्यासं च कृत्वा मूलमंत्रन्यासादिकर्म्म कुर्य्यात्। मूलमंत्रो

यथा-" ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुं दुरितात्यग्निः ॥ " इति चतुश्चत्वारिंशद्वर्णात्मको मंत्रः । ॐ जातवेदसः इति मंत्रस्य मारीचः काश्यप ऋषिः । त्रिष्टुप्छन्दः । जातवेदोग्निर्दुर्गादेवता । रोगशमने विनियोगः । ॐ मारीचकाश्यपऋषये नमः शिरसि । ॐ त्रिष्टुप्छन्दसे नमः मुखे । ॐ जातवेदोग्निदुर्गादेवताभ्यां नमः हृदये । इति ऋष्यादिन्यासः । ॐ जातवेदसेसुनवाम् इत्यंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ सोममरातीयतो इति तर्जनीभ्यां नमः ॥ २ ॥ ॐ निदहाति वेदः इति मध्यमाभ्यां नमः ॥३॥ ॐ सनः पर्षदति अनामिकाभ्यां नमः ॥४॥ ॐ दुर्गाणिविश्वानावेव इति कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ सिंधुं दुरितात्यग्निरिति करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेव हृदयादिषडंगन्यासं कुर्य्यात् ॥ अथ मन्त्रवर्णन्यासः ॥ ॐ नमः दक्षिणपादांगुष्ठे ॥ १ ॥ ॐ जां नमः वामपादांगुष्ठे ॥ २ ॥ ॐ तं नमः दक्षगुल्फे ॥ ३ ॥ ॐ वें नमः वामगुल्फे ॥ ४ ॥ ॐ दं नमः दक्षिणजंघायाम् ॥ ५ ॥ ॐ सें नमः वामजंघायाम् ॥ ६ ॥ ॐ सुं नमः दक्षिणजानुनि ॥७॥ ॐ नं नमः वामजानुनि ॥ ८ ॥ ॐ वां नमः दक्षिणोरौ ॥ ९ ॥ ॐ मं नमः वामोरौ ॥ १० ॥ ॐ सों नमः दक्षकट्याम् ॥ ११ ॥ ॐ मं नमः वामकट्याम् ॥ १२ ॥ ॐ मं नमः लिङ्गे ॥ १३ ॥ ॐ रां नमः नाभौ ॥ १४ ॥ ॐ तीं नमः हृदये ॥ १५ ॥ ॐ यं नमः दक्षस्तने ॥ १६ ॥ ॐ तों नमः वामस्तने ॥ १७ ॥ ॐ निं नमः दक्षपार्श्वे ॥ १८ ॥ ॐ द नमः वामपार्श्वे ॥ १९ ॥ ॐ हां नमः पृष्ठे ॥ २० ॥ ओं तिं नमः दक्षस्कन्धे ॥ २१ ॥ ओं वें नमः वामस्कन्धे ॥ २२ ॥ ॐ दं नमः दक्षिणबाहुमूले ॥ २३ ॥ ॐ सं नमः दक्षबाहुमूलकूर्परयोर्मध्ये ॥ २४ ॥ ॐ नं नमः दक्षकूर्परे ॥ २५ ॥ ॐ पं नमः कूर्परमणिबन्धयोर्मध्ये ॥ २६ ॥ ॐ सं नमः दक्षमणिबन्धे ॥ २७ ॥ ॐ दं नमः अंगुष्ठमूलप्रदेशे ॥ २८ ॥ ॐ तिं नमः वामबाहुमूले ॥ २९ ॥ ॐ दुं नमः वामबाहुमूलकूर्परयोर्मध्ये ॥ ३० ॥ ॐ र्गा नमः वामकूर्परे ॥ ३१ ॥ ॐ णिं नमः वामकूर्परमणिबन्धयोर्मध्ये ॥ ३२ ॥ ॐ विं नमः वाममणिबन्धे ॥ ३३ ॥ ॐ श्वां नमः अंगुष्ठमूलप्रदेशे ॥ ३४ ॥ ॐ नां नमः मुखे ॥ ३५ ॥ ॐ वें नमः दक्षनासायाम् ॥ ३६ ॥ ॐ वं नमः वामनासायाम् ॥ ३७ ॥ ॐ सिं नमः दक्षिणनेत्रे ॥ ॥ ३८ ॥ ॐ धुं नमः वामनेत्रे ॥ ३९ ॥ ॐ दुं नमः दक्षिणकर्णे ॥ ४० ॥ ॐ रिं नमः वामकर्णे ॥ ४१ ॥ ॐ तां नमः ललाटे ॥ ४२ ॥ ॐ त्यं नमः ललाटोपरिभागे ॥ ४३ ॥ ॐ ग्निं नमः मूर्ध्नि ॥ ४४ ॥ इति वर्णन्यासः ॥ अथ पदन्यासः ॥ ॐ जातवेदसे नमः शिखायाम् ॥ १ ॥ ॐ सुनवाम नमः ललाटे ॥ २ ॥ ॐ सोमं नमो नेत्रयोः ॥ ३ ॥ ॐ अरातीयतः नमः कर्णयोः ॥ ४ ॥ ॐ निदहाति नमः ओष्ठयोः ॥ ५ ॥ ॐ वेदः नमः जिह्वायाम् ॥ ६ ॥ ॐ सनः नमः कण्ठे ॥ ७ ॥ ॐ पर्षत् नमः बाह्वोः ॥ ८ ॥ ॐ अति नमः हृदये ॥ ९ ॥ दुर्गाणि नमः कुक्षौ ॥ १० ॥ ॐ विश्वा नमः कटौ ॥ ११ ॥ ॐ नावेव नमः गुह्ये ॥ १२ ॥ सिंधुं नमः ऊर्वोः ॥ १३ ॥ ॐ दुरिता नमः जानुनोः ॥ १४ ॥ ॐ अति नमः जंघयोः ॥ १५ ॥ ॐ अग्नि नमः पादयोः ॥ १६ ॥ एवं न्यासं कृत्वा ध्यायेत् । "विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां कन्याभिः करवालखेटवि

लसद्धस्ताभिरासेविताम् ॥ हस्तैश्चक्रगदासिखेटविशिखांश्चापांकुशं तर्जनीं बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरेत् ॥ १ ॥" एवं ध्यात्वा मानसोपचारैः संपूज्य पीठपूजां कुर्यात् ॥ तद्यथा-( मंडले सर्वतोभद्रे षट्कोणांकितकर्णिके विधिना वक्ष्यमाणेन पीठं देव्याः प्रपूजयेत् )मंडूकादिपरतत्वांतपीठदेवताः पूर्ववत्संपूज्य । प्राचीक्रमेण । ॐ जयायै नमः॥१॥ॐ विजयायै नमः॥२॥ ॐ भद्रायै नमः ॥ ३ ॥ ॐ भद्रकाल्यै नमः ॥ ४ ॥ ॐ सुमुख्यै नमः ॥ ५ ॥ ॐ दुर्मुख्यै नमः ॥ ६ ॥ ॐ ॐ व्याघ्रमुख्यै नमः ॥ ७ ॥ ॐ सिंहमुख्यै नमः ॥ ८ ॥ मध्ये । ॐ दुर्गायै नमः ॥ ९ ॥ इति नवपीठशक्तीः पूजयेत् ॥ ततः 'ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हुं फट् नमः' इति मन्त्रेणासनं दत्त्वा तत्र मूलेन मूर्तिं प्रकल्प्य तस्यां देवतामावाह्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् । तद्यथा-षट्कोणे आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च पूर्वोक्तहृदयादिषडंगानि पूजयेत् ॥ तद्बाह्येष्टदले प्राचीक्रमेण । ॐ जातवेदसे नमः ॥ १ ॥ ॐ सप्तजिह्वाय नमः ॥ २ ॥ ॐ हव्यवाहनाय नमः ॥ ३ ॥ ॐ अश्वोदरजाय नमः ॥ ४ ॥ ॐ वैश्वानराय नमः ॥ ५ ॥ ॐ कौमारतेजसे नमः ॥ ६ ॥ ॐ विश्वमुखाय नमः ॥ ७ ॥ ॐ देवमुखायः नमः ॥८॥ इति पूजयेत् ॥ ततः पूर्वादिचतुर्दिक्षु ॥ ॐ पृथिव्यै नमः ॥ १ ॥ ॐ अद्भ्यो नमः ॥ २ ॥ ॐ वायवे नमः ॥ ३ ॥ ॐ आकाशाय नमः ॥ ४ ॥ इति संपूज्य कोणदलाग्रेषु । ॐ निवृत्त्यै नमः ॥ ५ ॥ ॐ प्रतिष्ठायै नमः ॥ ६ ॥ ॐ शांत्यै नमः॥७॥ ॐ शान्त्यतितायै नमः ॥ इति पूजयेत् ॥ ततः पूर्वादिचतुर्दिक्षु प्रदक्षिणक्रमेण एकादशैकादशशक्तयः पूज्यास्तद्यथा-पूर्वे । ॐ जाग्रतायै नमः ॥ १ ॥ ॐ तपन्यै नमः ॥ २ ॥ ॐ वेदगर्भायै नमः ॥ ३ ॥ ॐ दहनरूपिण्यै नमः ॥ ४ ॥ ॐ सेन्दुखण्डायै नमः ॥ ५ ॥ ॐ अशुभहंत्र्यै नमः ॥ ६ ॥ ॐ नभश्चारिण्यै नमः ॥ ७ ॥ ॐ वागीश्वर्यै नमः ॥ ८ ॥ ॐ मदवहायै नमः ॥ ९ ॥ ॐ सोमरूपायै नमः ॥ १० ॥ ॐ मनोजवायै नमः ॥११॥ इति पूजयेत् । ततो दक्षिणे । ॐ मरुद्वेगायै नमः ॥१॥ ॐ रात्रिसंज्ञायै नमः ॥ २ ॥ ॐ तीव्रकोपायै नमः ॥ ३ ॥ ॐ यशोवत्यै नमः ॥ ४ ॥ ॐ तोयात्मिकायै नमः ॥ ५ ॥ ॐ नित्यायै नमः ॥ ६ ॥ ॐ दयावत्यै नमः ॥ ७ ॥ ॐ हारिण्यै नमः ॥ ८ ॥ ॐ तिरस्क्रियायै नमः ॥ ९ ॥ ॐ वेदमात्रे नमः ॥ १० ॥ ॐ तत्परायै नमः ॥ ११ ॥ इति पूजयेत् ॥ पश्चिमे । ॐ मदनप्रियायै नमः ॥ १ ॥ ॐ समाराध्यै नमः ॥ २ ॥ ॐ नंदिन्यै नमः ॥ ३ ॥ ॐ रिपुमर्दिन्यै नमः ॥ ४ ॥ ॐ षष्ठ्यै नमः ॥ ५ ॥ ॐ दंडिन्यै नमः ॥ ६ ॥ ॐ तिग्मायै नमः ॥ ७ ॥ ॐ दुर्गायै नमः ॥ ८॥ ॐ गायत्र्यै नमः ॥ ९ ॥ ॐ निरवद्यायै नमः ॥ १० ॥ ॐ विशालाक्ष्यै नमः ॥ ११ ॥ इति पूजयेत् । उत्तरे । ॐ श्वासोद्वाहायै नमः ॥ १ ॥ ॐ वनादिन्यै नमः ॥ २ ॥ ॐ वेदनायै नमः ॥ ३ ॥ ॐ वह्निगर्भायै नमः ॥ ४ ॥ ॐ सिंहवाहायै नमः ॥ ५ ॥ ॐ धुर्यायै नमः ॥ ६ ॥ ॐ दुर्विषहायै नमः ॥ ७ ॥ ॐ गिरंसायै नमः ॥ ८ ॥ ॐ तापहारिण्यै नमः ॥ ९ ॥ ॐ त्यक्तदोषायै नमः ॥ १० ॥ ॐ निस्सपत्नायै नमः ॥ इति पूजयेत् ॥ ततो भूपुरे पूर्वादिक्रमेण इन्द्रादीन् दशदिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत् । एवमावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य यथाविधि जपं कुर्यात् । अस्य पुरश्चरणं चतुश्चत्वारिंशत्सह

स्र ४४००० जपः । तथा च-( शारदायाम् ) मंत्रवर्णसहस्राणि जपेन्मन्त्रं विशालधीः॥तदंते तिलसिद्धार्थचित्रमूलैः समिद्वरैः॥१॥
क्षीरद्रुमाणामाज्येन हविषान्नैर्घृतान्वितैः ॥ चतुश्चत्वारिंशदाढ्यं चतुःशतसमन्वितम् ॥ २ ॥ चतुःसहस्रं जुहुयादर्चिते हव्यवाहने ॥
इत्थं जपादिभिः सिद्धे मंत्रेऽस्मिन्साधकोत्तमः ॥ ३ ॥ इति शारदातिलकोक्तं जातवेदोमंत्रपुरश्चरणं समाप्तम् ॥ शुभम् ॥ ॥
अथ ज्वरशमनमंत्रविधानम् ॥ मंत्रो यथा"त्रिपाद्भस्मप्रहरणस्त्रिशिराश्च त्रिलोचनः॥ स मे प्रीतः सुखं दद्यात्सर्वामयपतिर्ज्वरः ॥१॥
अस्य श्रीज्वरमन्त्रस्य कालाग्निरुद्र ऋषिः । महादेवो देवता । अनुष्टुप् छंदः । सकलज्वरशान्त्यर्थे जपे विनियोगः ॥
ततः पूर्वोक्तऋष्यादिन्यासं ध्यानं च कृत्वा यथाविधि अयुतं सहस्रं वा जपेत् । जपान्ते होमतर्पणादि कुर्यात् । अथवा ज्वर
गायत्रीं जपेत् । तद्यथा-"ॐ भस्मायुधाय विद्महे ऐं क्रीं एकदंष्ट्राय धीमहि । तन्नो ज्वरः प्रचोदयात" इति ज्वरगायत्री ॥
अथ ज्वरहरणाऽपामार्जनस्तोत्रम् ॥ " महादेव उवाच । अथातः संप्रवक्ष्यामि अपामार्जनमुत्तमम् ॥ पुलस्त्येन यथोक्तं तु दाल
भ्याय महात्मने ॥ १ ॥ सर्वेषां रोगदोषाणां नाशनं मङ्गलप्रदम् ॥ तत्तेहं तु प्रवक्ष्यामि शृणु त्वं नगनंदिनि ॥ २ ॥ श्रीदालभ्य
उवाच ॥ भगवन्प्राणिनः सर्वे विषरोगाद्युपद्रवैः ॥ दुष्टग्रहाभिभूताश्च सर्वकाले ह्युपद्रुताः ॥ ३ ॥ अभिचारिककृत्याद्या बहुरोगाश्च
दारुणाः ॥ न भवंति मुनिश्रेष्ठ तन्मे त्वं वक्तुमर्हसि ॥ ४ ॥ पुलस्त्य उवाच व्रतोपवासनियमैर्विष्णुर्वै तोषितस्तु यैः ॥ ते
नरा नैव रोगार्ता जायन्ते मुनिसत्तम ॥ ५ ॥ यैर्न कृतं व्रतं पुण्यं न दानं न तपस्तदा ॥ न तीर्थं देवपूजा च नान्नं दत्तं तु
भूरिशः ॥ ६ ॥ ते वै लोकास्तदा ज्ञेया रोगदोषैः प्रपीडिताः ॥ आरोग्यं परमामृद्धिं मनसा यद्यदिच्छति ॥ ७ ॥ तत्तदाप्नोत्य
संदिग्धं विष्णोः सेवी विशेषतः ॥ नाधिं प्राप्नोति न व्याधिं न विषग्रहबन्धनम् ॥ ८ ॥ कृत्यास्पर्शभयं नापि तोषिते मधुसूदने ॥
समस्तदोषनाशश्च सर्वदा च शुभा ग्रहाः ॥ ९ ॥ देवानामप्यधृष्योऽसौ तोषिते च जनार्दने ॥ यः सर्वेषु च भूतेषु यथात्मनि तथा
परे ॥ १० ॥ उपवासादिना तेन तोषितो मधुसूदनः ॥ तोषिते तत्र जायन्ते नराः पूर्णमनोरथाः ॥ ११ ॥ अरोगाः सुखिनो भोग
भोक्तारो मुनिसत्तम ॥ तेषां च शत्रवो नैव न च रोगाभिचारिकम् ॥ १२ ॥ ग्रहरोगादिकं चैव पापकार्यं न जायते ॥ अव्याहता
नि कृष्णस्य चक्रादीन्यायुधानि वै ॥ १३ ॥ रक्षंति सकलापद्भ्यो येन विष्णुरुपासितः ॥ श्रीदालभ्य उवाच ॥ अनाराधितगोवि
न्दा ये नरा दुःखभागिनः ॥ तेषां दुखाभिभूतानां यत्कर्तव्यं दयालुभिः ॥ १४ ॥ पश्यद्भिः सर्वभूतस्थं वासुदेवं सनातनम् ॥
समदृष्टिभिरप्यत्र तन्मे ब्रूहि विशेषतः ॥ १५ ॥ श्रीपुलस्त्य उवाच ॥ तद्वक्ष्यामि मुनिश्रेष्ठ समाहितमनाः शृणु ॥ रोगदोषाशुभ
हरं विज्वरादिविनाशनम् ॥ १६ ॥ शिखायां श्रीधरं न्यस्य शिखाधः श्रीकरं तथा ॥ हृषीकेशं तु केशेषु मूर्ध्नि नारायणं परम् ॥
॥ १७ ॥ ऊर्ध्वश्रोत्रे न्यसेद्विष्णुं ललाटे जलशायिनम् ॥ विष्णुं वै भ्रूयुगे न्यस्य भ्रूमध्ये हरिमेव च ॥ १८ ॥ नरसिंहं नासिकाग्रे
कर्णयोरर्णवेशयम् ॥ चक्षुषोः पुण्डरीकाक्षं तदधो भूधरं न्यसेत् ॥ १९ ॥ कपोलयोः कल्किनाथं वामनं कर्णमूलयोः ॥
शङ्खिनं शंखयोर्न्यस्य गोविंदं वदने तथा ॥ २० ॥ मुकुन्दं दन्तपंक्तौ तु जिह्वायां वाक्पतिं तथा ॥ रामं हनौ तु विन्यस्य कंठे

वैकुण्ठमेव च ॥ २१ ॥ बलघ्नं बाहुमूलाधश्चांसयोः कंसघातिनम् ॥ अजं भुजद्वये न्यस्य शार्ङ्गपाणिं करद्वये ॥ २२ ॥ संकर्षणं
कराङ्गुष्ठे गोपमंगुलिपंक्तिषु ॥ वक्षस्यधोक्षजं न्यस्य श्रीवत्सं तस्य मध्यतः ॥ २३ ॥ स्तनयोस्त्वनिरुद्धं च दामोदरमथोदरे ॥
पद्मनाभं तथा नाभौ नाभ्यधश्चापि केशवम् ॥ २४ ॥ मेढ्रे धराधरं देवं गुदे चैव गदाग्रजम् ॥ पीताम्बरधरं कट्या
मूरुयुग्मे मधोर्द्विषम् ॥ २५ ॥ मुरद्विषं पिण्डिकयोर्जानुयुग्मे जनार्दनम् ॥ फणीशं गुल्फयोर्न्यस्य पादयोश्च त्रिविक्रमम्
॥ २६ ॥ पादांगुष्ठे श्रीपतिं च पादाधो धरणीधरम् ॥ रोमकूपेषु सर्वेषु विष्वक्सेनं न्यसेद्बुधः ॥ २७ ॥ मत्स्यं मांसे तु
विन्यस्य कूर्मं मेदसि विन्यसेत् ॥ वाराहं तु वसामध्ये सर्वास्थिषु तथाच्युतम् ॥ २८ ॥ द्विजप्रियं तु मज्जायां शुक्रे श्वेतपतिं
तथा ॥ सर्वांगे यज्ञपुरुषं परमात्मानमात्मनि ॥ २९ ॥ एवं न्यासविधिं कृत्वा साक्षान्नारायणो भवेत् ॥ यावन्न व्याहरेत्किंचित्तावत्
द्विष्णुमयः स्थितः ॥ ३० ॥ गृहीत्वा तु समूलाग्रान्कुशाञ्शुद्धान्समाहितः ॥ मार्जयेत्सर्वगात्राणि कुशाग्रैरिह शांतिकृत् ॥ ३१ ॥
विष्णुभक्तो विशेषेण रोगग्रहविषार्दिते ॥ विषार्तानां रोगिणां च कुर्याच्छांतिमिमां शुभाम् ॥ ३२ ॥ जायते तेन भो विप्र सर्वं
रोगप्रणाशनम् ॥ नमः श्रीपरमार्थाय पुरुषाय महात्मने ॥ ३३ ॥ अरूपबहुरूपाय व्यापिने परमात्मने ॥ वाराहं नारसिंहं
च वामनं च सुखप्रदम् ॥ ३४ ॥ ध्यात्वा कृत्वा नमो विष्णोर्नामान्यंगेषु विन्यसेत् ॥ निष्कल्मषाय शुद्धाय व्याधिपापहराय वै
॥ ३५ ॥ गोविंदपद्मनाभाय वासुदेवाय भूभृते ॥ नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ३६ ॥ त्रिविक्रमाय रामाय वैकुं
ठाय नराय च ॥ श्रीवाराहनृसिंहाय वामनाय महात्मने॥३७॥हयग्रीवाय शुभ्राय हृषीकेश हराशुभम्॥परोपतापमहितं प्रयुक्तं चाभि
चारिकम् ॥ ३८ ॥ गरस्पर्शमहारोगप्रयोगं जरया जर ॥ नमोस्तु वासुदेवाय नमः कृष्णाय खड्गिने ॥ ३९ ॥ नमः पुष्करनेत्राय
केशवायादिचक्रिणे ॥ नमः किंजल्कवर्णाभ्यपीतनिर्मलवाससे ॥ ४० ॥ महादेववपुष्कंधधृतचक्राय चक्रिणे ॥ दंष्ट्रोद्धृतक्षितितल
त्रिमूर्तिपतये नमः ॥ ४१ ॥ महायज्ञवराहाय श्रीवल्लभ नमोस्तु ते ॥ तप्तहाटककेशांतज्वलत्पावकलोचन ॥ ४२ ॥ वज्राधिक
नखस्पर्शदिव्यसिंह नमोस्तु ते ॥ कश्यपायातिह्रस्वाय ऋग्यजुःसामलक्षण ॥ ४३ ॥ तुभ्यं वामनरूपाय क्रमते गां नमोनमः ॥
वाराहाशेषदुःखानि सर्वपापफलानि च ॥४४॥ मर्दमर्द महादंष्ट्र मर्दमर्द च तत्फलम् ॥ नृसिंह कुलिशस्पर्शदंतप्रांतनखोज्ज्वल ॥४५॥
भंजभंज निनादेन दुःखान्यस्यार्त्तिनाशन ॥ ऋग्यजुःसामभिर्वाग्भिः कामरूपधराद्रिधृक् ॥ ४६ ॥ प्रशमं सर्वदुखानि नय त्वस्य
जनार्दन ॥ ऐकाहिकं द्व्याहिकं च तथा त्रिदिवसज्वरम् ॥ ४७ ॥ चातुर्थिकं तथात्युग्रं तथा वै सततज्वरम् ॥ दोषोत्थं सन्निपातोत्थ
तथैवागंतुकज्वरम् ॥ ४८ ॥ शमं नयतु गोविंदो भित्त्वा छित्त्वास्य वेदनाम् ॥ नेत्रदुःखं शिरोदुःखं दुःखं तूदरसंभवम् ॥ ४९ ॥
अनुच्छ्वासं महाश्वासं परितापं सवेपथुम् ॥ गुदघ्राणांघ्रिरोगांश्च कुष्ठरोगं तथा क्षयम् ॥ ५० ॥ कामलादींस्तथा रोगान्प्रमेहादींश्च
दारुणान् ॥ ये वातप्रभवा रोगा लूताविस्फोटकादयः ॥ ५१ ॥ ते सर्वे विलयं यांतु वासुदेवापमार्जिताः ॥ विलयं यांति ते सर्वे
विष्णोरुच्चारणेन वा ॥ ५२ ॥ क्षयं गच्छंतु चाशेषास्ते चक्राभिहता हरेः ॥ अच्युतानंतगोविंदनामोच्चारणभेषजात् ॥ ५३ ॥

नश्यति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ स्थावरं जंगमं यच्च कृत्रिमं चापि यद्विषम् ॥ ५४ ॥ दंतोद्भवं नखोद्भूतमाकाशप्र भवं च यत् । भूतादिप्रभवं यच्च विषमत्यंतदुःसहम् ॥ ५५ ॥ शमं नयतु तत्सर्वं कीर्तितोस्य जनार्दनः ॥ ग्रहान्प्रेतग्रहांश्चैव तथान्याञ्छाकिनीग्रहान् ॥ ५६ ॥ मुखमंडलिकान् क्रूरान् रेवतीं वृद्धिरेवतीम् ॥ वृद्धिकाख्यान्ग्रहांश्चोग्रांस्तथा मातृग्रहानपि ॥ ॥ ५७ ॥ बालस्य विष्णोश्चरितं हंतु बालग्रहानपि ॥ वृद्धानां ये ग्रहा केचिद्बालानां चापि ये ग्रहाः ॥ ५८ ॥ नृसिंहदर्शनादेव नश्यंते तत्क्षणादपि ॥ दंष्ट्राकरालवदनो नृसिंहो दैत्यभीषणः ॥ ५९ ॥ तं दृष्ट्वा ते ग्रहाः सर्वे दूरं यांति विशेषतः ॥ श्रीनृसिंह म हासिंह ज्वालामालोज्ज्वलानन ॥ ६० ॥ ग्रहानशेषान्सर्वेश नुद स्वास्थ्यविलोचन ॥ ये रोगा ये महोत्पाता ये द्विषो ये महा ग्रहाः ॥ ६१ ॥ यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः ॥ शस्त्रक्षतेषु ये रोगा ज्वालगर्दभिकादयः ॥ ६२ ॥ विस्फोटकादयो ये च ग्रहा गात्रेषु संस्थिताः ॥ त्रैलोक्यरक्षाकर्त्तस्त्वं दुष्टदानववारण ॥ ६३ ॥ सुदर्शनमहातेजश्छिधि छिंधि महाज्वरम् ॥ छिंधि वातं च लूतां च छिंधि घोरं महाविषम् ॥ ६४ ॥ उद्दंडामरशूलं च विषज्वालासगर्दभम् ॥ ॐ ह्रांह्रांहूंहूं प्रधारेण कुठारेण हन द्विषः॥ ॥ ६५ ॥ ॐ नमो भगवते सुदर्शनाय दुःखदारणविग्रह ॥ यानि चान्यानि दुष्टानि प्राणिपीडाकराणि वै ॥६६॥ तानि सर्वाणि सर्वा त्मा परमात्मा जनार्दनः ॥ किंचिद्रूपं समास्थाय वासुदेव नमोस्तु ते ॥ ६७ ॥ क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालाविभीषणम्॥सर्वदुष्टो पशमनं कुरु देववराच्युत ॥ ६८ ॥ सुदर्शन महाचक्र गोविंदस्य वरायुध ॥ तीक्ष्णधार महावेग सूर्यकोटिसमद्युते ॥ ६९ सुदर्शन महाज्वाल छिंधि छिंधि महारव ॥ सर्वदुःखानि रक्षांसि पापानि च विभीषण ॥ ७० ॥ दुरितं हन चारोग्यं कुरु त्वं भो सुदर्शन । प्राच्यां चैव प्रतीच्यां च दक्षिणोत्तरतस्तथा ॥ ७१ ॥ रक्षां करोतु विश्वात्मा नरसिंहः स्वगर्जितैः ॥ भूम्यंतरिक्षे च तथा पृष्ठतः पार्श्वतोग्रतः ॥ रक्षां करोतु भगवान् बहुरूपी जनार्दनः ॥ ७२ ॥ यथा विष्णुमयं सर्वं सदेवासुरमानुषम् ॥ तेन सत्येन सकलं दुःखमस्य प्रणश्यतु ॥ ७३ ॥ यथा योगेश्वरो विष्णुः सर्ववेदेषु गीयते ॥ तेन सत्येन सकलं दुःखमस्य प्रणश्यतु ॥ ॥ ७४ ॥ परमात्मा यथा विष्णुर्वेदांगेषु च गीयते ॥ तेन सत्येन विश्वात्मा सुखदोऽस्त्वस्य केशवः ॥ ७५ ॥ शांतिरस्तु शिवं चास्तु प्रणाशं यातु चासुखम् ॥ वासुदेवशरीरोत्थैः कुशैः संमार्जितं मया ॥ ७६ ॥ अपामार्जित गोविंद नमो नारायणस्तथा ॥ तथापि सर्वदुःखानां प्रशमो वचनाद्धरेः ॥ ७७ ॥ शांताः समस्तदोषास्ते ग्रहाः सर्वे विषाणि च ॥ भूतानि च प्रशाम्यंति संस्मृते मधुसूदने ॥ ७८ ॥ एते कुशा विष्णुशरीरसंभवा जनार्दनोऽहं स्वयमेव चाग्रतः ॥ हतं मया दुःखमशेष मस्य वै स्वस्थो भवत्वेष वचो यथा हरेः ॥ ७९ ॥ शांतिरस्तु शिवं चास्तु दुःखं च यत् प्रणश्यतु ॥ यदस्य दुरितं किंचित्क्षिप्तं तल्लवणांभसि ॥ ८० ॥ स्वास्थ्यमस्य सदैवास्तु हृषीकेशस्य कीर्त्तनात् ॥ यद्योतोत्रागतं पापं तत्तु तत्र प्रगच्छतु ॥ ८१ ॥ एतद्रोगेषु पीडासु जंतूनां हितमिच्छुभिः ॥ विष्णुभक्तैश्च कर्तव्यमपामार्जनकं परम् ॥८२॥ अनेक सर्वदुःखानि विलयं यांत्यशेषतः॥ सर्वपापविशुद्ध्यर्थं विष्णोश्चैवापमार्जनम् ॥ ८३ ॥ आर्द्रंशुष्कं लघु स्थूलं ब्रह्महत्यादिकं तु यत ॥ तत्सर्वं नश्यते तूर्णं तमोवद्र

विदर्शनात् ॥८४॥ नश्यंति रोगदोषाश्च सिंहात्क्षुद्रमृगा यथा ॥ ग्रहभूतपिशाचादिः श्रवणादेव नश्यतु ॥ ८५ ॥ द्रव्यार्थं लोभपरमै
र्न कर्तव्यं कदाचन ॥ कृतेऽपामार्जने किंचिन्न ग्राह्यं हितकाम्यया ॥ ८६ ॥ निरपेक्षैः प्रकर्तव्यमादिमध्यांतबोधकैः ॥ विष्णुभक्तैः
सदाशांतैरन्यथा सिद्धिदं भवेत् ॥ ८७ ॥ अतुलेयं नृणां सिद्धिरियं रक्षा परा नृणाम् ॥ भेषजं परमं ह्येतद्विष्णोर्यदपमार्जनम् ॥
॥ ८८ ॥ उक्तं हि ब्रह्मणा पूर्वं पुलस्त्याय सुताय वै ॥ एतत्पुलस्त्यो हि मुनिर्दाल्भ्यायोक्तवान्स्वयम् ॥ ८९ ॥ सर्वभूतहितार्थाय
दाल्भ्येन प्रकाशितम् ॥ त्रैलोक्ये तदिदं विष्णोः समाप्तं चापमार्जनम् ॥ ९० ॥ तवाग्रे कथितं देवि यतो भक्तासि मे सदा ॥
श्रुत्वा तु सर्वं भक्त्या च रोगान्दोषान्व्यपोहति ॥ ९१ ॥ महादेव उवाच ॥ अपामार्जनकं दिव्यं परमाद्भुतमेव च ॥ पठितव्यं वि
शेषेण पुत्रकामार्थसिद्धये ॥ ९२ ॥ एतत्स्तोत्रं पठेत्प्राज्ञः सर्वकामार्थसिद्धये ॥ एककालं द्विकालं वा ये पठंति द्विजातयः ॥
॥ ९३ ॥ आयुश्च श्रीर्बलं तस्य वर्द्धयंति दिने दिने ॥ ब्राह्मणो लभते विद्यां क्षत्रियो राज्यमेव वा ॥ ९४ ॥ वैश्यो धनसमृद्धिं
च शूद्रो भक्तिं च विन्दति ॥ अन्यैश्च लभ्यते भक्तिः पठनाच्छ्रवणाज्जपात् ॥९५॥ सामवेदफलं तस्य जायते नगनन्दिनि ॥ अखि
लं पापसंघातं तत्क्षणादेव नश्यति ॥ ९६ ॥ इति ज्ञात्वा तु भो देवि पठितव्यं समाहितैः ॥ पुत्राश्चैव तथा लक्ष्मीः संपूर्णा भवति
ध्रुवम् ॥ ९७ ॥ लिखित्वा भूर्जपत्रे तु यो धारयति वैष्णवः ॥ इहलोके सुखं भुक्त्वा याति विष्णोः परं पदम् ॥ ९८ ॥ पठित्वा
श्लोकमेकं तु तुलसीं यः समर्पयेत् ॥ सर्वं तीर्थं कृतं तेन तुलस्या पूजने कृते ॥ ९९ ॥ एतत्स्तोत्रं तु परमं वैष्णवं मुक्तिदायकम् ।
पृथ्वीदानसमं पाठाद्विष्णुलोकं तु गच्छति ॥ १०० ॥ जपेत्स्तोत्रं विशेषेण विष्णुलोकस्य वांछया ॥ बालानां जीवनार्थाय पठित
व्यं समाहितैः ॥१०१॥ रोगग्रहाभिभूतानां बालानां शांतिकारकम् ॥ भूतग्रहविषं चैव पठनादेव नश्यति ॥ १०२ ॥ कंठे तुलसिजां
मालां धृत्वा विप्रो हि यः पठेत् ॥ स च वै वैष्णवो ज्ञेयो विष्णुलोकं स गच्छति॥१०३॥ कंठे माला धृता येन शंखचक्रादिचिह्नितः॥
वैष्णवः प्रोच्यते विप्रः स्तोत्रं चैतत्पठन्सदा ॥ १०४ ॥ इमं लोकं परित्यज्य विष्णुलोकं स गच्छति ॥ मोहमायापरित्यक्तो दम्भ
तृष्णाविवर्जितः ॥ १०५ ॥ एतत्स्तोत्रं पठेद्दिव्यं परं निर्वाणमाप्नुयात् ॥ ते धन्याः संति भूर्लोके ये विप्रा वैष्णवाः स्मृताः ॥
॥१०६॥ स्वात्मा वै तारितस्तैस्तु सकुलो नात्र संशयः ॥ ते वै धन्यतमा लोके नारायणपरायणाः ॥ तैर्भक्तिश्च सदा कार्या ते वै भा
गवता नराः ॥ १०७ ॥" इति श्रीपाद्मे महापुराणे उत्तरखण्डे शिवपार्वतीसंवादे अपामार्जनस्तोत्रं सम्पूर्णम् ॥ ॥ ॥ ॥
अथ सर्वरोगहरं श्रीमाहेश्वरकवचम् ॥ "राजोवाच" ॥ अङ्गन्यासो यदुक्तो भो महेशाक्षरसंयुतः ॥ विधानं कीदृशं तस्य कर्तव्यः
केन हेतुना ॥ १ ॥ तद्वदस्व महाभाग विस्तरेण ममाग्रतः ॥ भृगुरुवाच ॥ कवचं माहेश्वरं राजन्देवैरपि सुदुर्लभम् ॥ यः करोति
स्वगात्रेषु पूतात्मा स भवेन्नरः ॥२॥ कृत्वा न्यासमिमं यस्तु संग्रामं प्रविशेन्नरः ॥ न शरास्तोमरास्तस्य खड्गशक्तिपरश्वधाः ॥ ३ ॥
प्रभवंति रिपोः क्वापि भवेच्छिन्नपराक्रमः ॥ व्याधिग्रस्तस्तु यः कश्चित्कारयेच्चैव मार्जनम् ॥ ४ ॥ एकादशकुशैः सार्धैर्युक्तो भवति
नान्यथा ॥ न भूता न पिशाचाश्च कूष्माण्डा न विनायकाः ॥ ५ ॥ शिवस्मरणमात्रेण न विशन्ति कलेवरम् ॥ ॐ नमः पञ्चव

त्राय शशिसोमार्कनेत्राय भयार्तानामभयाय मम सर्वगात्ररक्षार्थे विनियोगः ॥ ॐ ह्रौं ह्रां ह्रं मन्त्रेणानेन वृषगोमयभस्मनाम् ॥ आमंत्र्य ललाटे तिलकमादाय पठेत् ॥ त्राहि मां देव दुष्प्रेक्ष शत्रूणां भयवर्द्धन॥ (ॐ( स्वच्छंदभैरवः प्राच्यामाग्नेय्यां शिखिलोचनः ॥ १ ॥ भूतेशो दक्षिणे भागे नैर्ऋत्यां भीमदर्शनः ॥ वारुण्यां वृषकेतुश्च वायौ रक्षतु शङ्करः ॥ २ ॥ दिग्वासाः सौम्यतो नित्यमै शान्यां मदनान्तकः ॥ वामदेवोर्ध्वतो रक्षेदधो रक्षेत्त्रिलोचनः ॥ ३ ॥ पुरारिः पुरतः पातु कपर्दी पातु पृष्ठतः ॥ विश्वेशो दक्षिणे भागे वामे कालीपतिः सदा ॥ ४ ॥ महेश्वरः शिरोभागे भवो भाले सदैव तु ॥ भ्रुवोर्मध्ये महातेजास्त्रिनेत्रो नेत्रयोर्द्वयोः ॥ ॥ ५ ॥ पिनाकी नासिकादेशे कर्णयोर्गिरिजापतिः ॥ उग्रः कपोलयो रक्षेन्मुखदेशे महाभुजः ॥ ६ ॥ जिह्वायामन्धकध्वंसी दंता त्रक्षतु मृत्युजित् ॥ नीलकंठः सदा कंठे पृष्ठे कामाङ्गनाशनः ॥ ७ ॥ त्रिपुरारिः स्कंधदेशे बाह्वोश्च चन्द्रशेखरः ॥ हस्तिचर्मधरो हस्ते नखाङ्गुलिषु शूलभृत् ॥ ८ ॥ भवानीशः पातु हृदि पातूदरकटी मृडः ॥ गुदे लिङ्गे च मेढ्रे च नाभौ च प्रमथाधिपः ॥९॥ जंघोरुचरणे भीमः सर्वांगे केशवप्रियः ॥ रोमकूपे विरूपाक्षः शब्दस्पर्शे च योगवित् ॥ १० ॥ रक्तमज्जावसामांसशुक्रे वसुगणा र्चितः ॥ प्राणापानसमानेषूदानव्यानेषु धूर्ज्जटिः ॥ ११ ॥ रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन यत् ॥ तत्सर्वं रक्ष मे देव व्याधि दुर्गज्वरादितः ॥ १२ ॥ कार्य्यं कर्म्म त्विदं प्राज्ञैर्दीपं प्रज्वाल्य सर्पिषा ॥ निवेद्य शिखिनेत्राय वारयेत्तु ह्युदङ्मुखम् ॥ १३ ॥ ज्वरदाहपरिक्रांतं तथान्यव्याधिसंयुतम् ॥ कुशैः संमार्ज्यसंमार्ज्य क्षिपेद्दीपशिखां ज्वरम् ॥ १४ ॥ ऐकाहिकं द्व्याहिकं वा तृतीय कचतुर्थकम् ॥ वातपित्तकफोद्भूतं सन्निपातोग्रतेजसम् ॥ १५ ॥ अन्यं दुःसहदुराधर्षकर्म्मजं चाभिचारिकम् ॥ धातुस्थं कफस्थं मिश्रं विषमं कामसम्भवम् ॥ १६ ॥ भूताभिषङ्गसंसर्गं भूतचेष्टादिसंस्थितम् ॥ शिवाज्ञां घोरमन्त्रेण पूर्ववृत्तं स्वयं स्मर ॥ १७ ॥ त्यज देहं मनुष्यस्य दीपं गच्छ महाज्वर ॥ कृतं तु कवचं दिव्यं सर्वव्याधिभयार्दनम् ॥ १८ ॥ न बाधंते व्याधयस्तं बालग्रहभया नि च । लूताविस्फोटकं घोरं शिरोर्तिच्छर्दिविग्रहम् ॥ १९ ॥ कामलां क्षयकासं च गुल्माश्मरीभगंदराः ॥ शूलोन्मादं च हृद्र गयकृती पाण्डुविद्रधिम् ॥ २० ॥ अतिसारादिरोगांश्च डाकिनीपीडकग्रहान् ॥ पामाविचर्चिकादद्रुकुष्ठव्याधिविवार्दनम् ॥ २१ ॥ स्मरणान्नाशयत्याशु कवचं शूलपाणिनः ॥ यस्तु स्मरति नित्यं वै यस्तु धारयते नरः ॥ २२ ॥ स मुक्तः सर्व पापेभ्यो वसेच्छिवपुरे चिरम् ॥ संख्या व्रतस्य दानस्य यज्ञस्यास्तीह शास्त्रतः ॥ २३ ॥ न संख्या विद्यते शम्भोः कवचस्मरणाद्यतः ॥ तस्मात्सम्यगिदं सर्वैः सर्वकामफलप्रदम् ॥ २४ ॥ श्रोतव्यं सततं भक्त्या कवचं सर्वकामिकम् ॥ लिखितं तिष्ठते यस्य गृहे सम्यगनुत्तमम् ॥ २५ ॥ न तत्र कलहोद्वेगो नाकालमरणं भवेत् ॥ नाल्पप्रजाः स्त्रियस्तत्र न दौर्भाग्यं समाश्रिताः ॥ ॥ २६ ॥ तस्मान्माहेश्वरं नाम कवचं देवगणार्चितम् ॥ श्रोतव्यं पठितव्यं च मंतव्यं भावुकप्रदम् ॥ २७ ॥ श्रीमाहेश्वर कवचं सर्वव्याधिनिषूदनम् ॥ यः पठेत्तु नरो नित्यं स व्रजेच्छाङ्करं पुरम् ॥ २८ ॥ इति सर्वव्याधिहरं श्रीमाहेश्वरकवचं सम्पूर्णम् ॥ अथ सद्यआरोग्यकरं सूर्य्यार्घ्यदानविधानम् ॥ सुदिने कृतनित्यक्रियः आचम्य प्राणानायम्य । देशकालौ संकीर्त्य मम अशु

श्रीसूर्य्या
कस्य वा अमुकज्वरादिव्याधिसमूलनिरासद्वारा सद्यआरोग्यार्थं श्रीसवितृसूर्यनारायणप्रीत्यर्थं हंसादिसप्ततिनामभिः श्रीसूर्य्या
य सप्तत्यर्घ्यदानमहं करिष्ये। इति संकल्प्य। भूतशुद्ध्यादि कृत्वा सम्मान्यार्घ्यं कल्पयेत् ।"विगृह्य पाणियुग्मेन ताम्रपात्रं सुनिर्म्मलम् ॥ जानुभ्यामवनीं गत्वा परिपूर्य्य जलेन च ॥ १ ॥ करवीरादिकुसुमैः रक्तचंदनमिश्रितैः ॥ दूर्वाङ्कुरैरक्षतैश्च निक्षिप्तैः पात्रमध्यतः ॥ २ ॥ दद्यादर्घ्यमनर्घाय सवित्रे ध्यानपूर्वकम् ॥ उपमौलिसमानीय तत्पात्रं नान्यदिङ्मनाः ॥ ३ ॥ प्रतिमन्त्रं नमस्कुर्य्यादुदयास्तमिते रवौ ॥ अनया नामसप्तत्या महामंत्ररहस्यया ॥ ४ ॥" एवमर्घ्यं प्रकल्प्य पाद्यादिभिः संपूज्य प्रणम्य यथोक्तविधिना प्रत्येकनाम्ना बृहत्पात्रे घटे जले वा अर्घ्यं दद्यात् । तद्यथा--ॐ हंसाय नमः ॥ १ ॥ ॐ भानवे नमः ॥ २ ॥ ॐ सहस्रांशवे नमः ॥ ३ ॥ ॐ तपनाय नमः ॥ ४ ॥ ॐ तापनाय नमः ॥ ५ ॥ ॐ रवये नमः ॥ ६ ॥ ॐ विकर्त्तनाय नमः ॥ ७ ॥ ॐ विवस्वते नमः ॥ ८ ॥ ॐ विश्वकर्म्मणे नमः ॥ ९ ॥ ॐ विभावसवे नमः ॥ १० ॥ ॐ विश्वरूपाय नमः ॥ ११ ॥ ॐ विश्वकर्त्रे नमः ॥ १२ ॥ ॐ मार्तण्डाय नमः ॥ १३ ॥ ॐ मिहिराय नमः ॥ १४ ॥ ॐ अंशुमते नमः १५ ॥ ॐ आदित्याय नमः ॥ १६ ॥ ॐ उष्णगवे नमः ॥ १७ ॥ ॐ सूर्य्याय नमः ॥ १८ ॥ ॐ अर्य्यम्णे नमः ॥ १९ ॥ ॐ ब्रध्नाय नमः ॥ २० ॥ ॐ दिवाकराय नमः ॥ २१ ॥ ॐ द्वादशात्मने नमः ॥ २२ ॥ सप्तहयाय नमः ॥ २३ ॥ ॐ भास्कराय नमः ॥ २४ ॐ अहस्कराय नमः ॥ २५ ॥ ॐ खगाय नमः ॥ २६ ॥ ॐ सुराय नमः ॥ २७ ॥ ॐ प्रभाकराय नमः ॥ २८ ॥ ॐ श्रीमते नमः ॥ २९ ॥ ॐ लोकचक्षुषे नमः ॥ ३० ॥ ॐ ग्रहेश्वराय नमः ॥ ३१ ॥ ॐ लोकेशाय नमः ॥ ३२ ॥ ॐ लोकसाक्षिणे नमः ॥ ३३ ॥ ॐ तमोऽरये नमः ॥ ३४ ॥ ॐ शाश्वताय नमः ॥ ३५ ॥ ॐ शुचये नमः ॥ ३६ ॥ ॐ गभस्तिहस्ताय नमः ॥ ३७ ॥ ॐ तीव्रांशवे नमः ॥ ३८ ॥ ॐ तरणये नमः ॥ ३९ ॥ ॐ सुमहोरुणये नमः ॥ ४० ॥ ॐ द्युमणये नमः ॥४१॥ ॐ हरिदश्वाय नमः ॥४२॥ ॐ अर्काय नमः ॥४३॥ ॐ भानुमते नमः ॥४४॥ ॐ भयनाशनाय नमः ॥ ४५ ॥ ॐ छन्दोश्वाय नमः ॥ ४६ ॥ ॐ वेदवेद्याय नमः ॥ ४७ ॥ ॐ भास्वते नमः ॥ ४८ ॥ ॐ पूष्णे नमः ॥ ४९ ॥ ॐ वृषाकपये नमः ॥ ५० ॥ ॐ एकचक्ररथाय नमः ॥ ५१ ॥ ॐ मित्राय नमः ॥ ५२ ॥ ॐ मन्देहारये नमः ॥ ५३ ॥ ओं तमिस्रहंत्रे नमः ॥ ५४ ॐ दैत्यहंत्रे नमः ॥ ५५ ॥ ॐ पापहर्त्रे नमः ॥ ५६ ॥ ॐ धर्म्माय नमः ॥ ५७ ॥ ॐ अधर्म्माय नमः ॥ ५८ ॥ ॐ प्रकाशकाय नमः ॥ ५९ ॥ ॐ हेलिकाय नमः ॥ ६० ॥ ॐ चित्रभानवे नमः ॥ ६१ ॥ ॐ कलिघ्नाय नमः ॥ ६२ ॥ ॐ तार्क्ष्यवाहनाय नमः ॥ ६३ ॐ दिक्पतये नमः ॥ ६४ ॥ ॐ पद्मिनीनाथाय नमः ॥ ६५ ॥ ॐ कुशेशयकराय नमः ॥ ६६ ॥ ॐ हरये नमः ॥ ६७ ॥ ॐ घर्मरश्मये नमः ॥ ६८ ॥ ॐ दुर्निरीक्ष्याय नमः ॥ ६९ ॥ ॐ चण्डांशवे नमः ॥ ७० ॥ ( ॐ कश्यपात्मजाय नमः ) ॥ एभिः सप्ततिसंख्याकैः पुण्यैः सूर्य्यस्य नामभिः ॥ प्रणवादिचतुर्थ्यंतैर्नमस्कारसमायुतैः ॥ १ ॥ प्रत्येकमुच्चरन्नाम दद्याद्दद्या दिवाकरम् ॥ एवं कुर्वन्नरो याति न दारिद्र्यं न शोकभाक् ॥ २ ॥ व्याधिभिर्मुच्यते घोरैरपि जन्मांतग

जितैः ॥ विनौषधैर्विना वैद्यैर्विना पथ्यपरिग्रहैः ॥ ३ ॥ कालेन निधनं प्राप्य सूर्य्यलोके महीयते ॥ इति सर्वव्याधिहरं श्रीसूर्य्या र्घ्यविधानम् ॥ ॥ अथ ज्वरस्तोत्रम् ॥ "विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् ॥ अभ्यपद्यत दाशार्ह दहन्निव दिशो दश ॥१॥ अथ नाराण्णो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् ॥ माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ॥२॥ माहेश्वरः समाक्रन्दन्वैष्णवेन बलार्दि तः ॥ अलब्ध्वाभयमन्यत्र भीतो माहेश्वरो ज्वरः ॥ ३ ॥ शरणार्थी हृषीकेशं तुष्टाव प्रयतांजलिः ॥ ज्वर उवाच ॥ नमामि त्वाऽनन्तशक्तिं परेशं सर्वात्मानं केवलं ज्ञप्तिमात्रम् ॥ विश्वोत्पत्तिस्थानसंरोधहेतुं यत्तद्ब्रह्म ब्रह्मलिङ्गं प्रशांतम् ॥ ४ ॥ कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः ॥ तत्संघातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥ ५ ॥ नानाभावै र्लीलयैवोपपन्नैर्देवान्साधूँल्लोकसेतून्बिभर्षि ॥ हंस्युन्मार्गान्हिंसया वर्तमानाञ्जन्मैतत्ते भारहाराय भूमेः ॥ ६ ॥ तप्तोहं ते तेजसा दुःसहेन शांतोग्रेणात्युल्बणेन ज्वरेण ॥ तावत्तापो देहिनां तेंघ्रिमूलं नो सेवेरन्यावदाशानुबद्धाः ॥ ७ ॥ श्रीभगवानुवाच ॥ त्रि शिरस्ते प्रसन्नोस्मि व्येतु ते मज्ज्वराद्भयम् ॥ यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम् ॥ ८ ॥ इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः ॥ बाणस्तु रथमारूढः प्रागाद्योत्स्यञ्जनार्दनम् ॥ ९ ॥ " इति श्रीमद्भागवते दशमस्कन्धे ज्वरकृतस्तोत्रम् ॥ अथ ज्वरतर्पणम् ॥ ( महार्णवे ) " योसौ सरस्वतीतीरे कुत्सगोत्रसमुद्भवः ॥ त्रिरात्रज्वरदाहेन मृतो गोविन्दसंज्ञकः ॥ १ ॥ ज्वरा पनुत्तये तस्मै ददाम्येतत्तिलोदकम् ॥ तथा-गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः ॥ रात्री ज्वरविनाशाय तस्मै दद्यात्तिलो दकम् ॥ २ ॥ इति मन्त्रद्वयेन तिलरक्ताक्षतरक्तपुष्पादियुतजलेन ज्वरानुसारेणाष्टोत्तरशतायुतं तर्पणं ज्वरमुद्दिश्य कर्त्तव्यम् । ॥ इति ज्वरतर्पणम् ॥ अथ सर्वरोगहरमच्युतानन्त गोविन्देति नामत्रयविधानम् ॥ ॐ अच्युतानंत गोविन्देति नामत्रयस्य वसि ष्ठकश्यपनारदा ऋषयः । उष्णिग्गायत्रीपुरुषप्रकृतीसुतलच्छंदांसि । महाविष्णुमहानृसिंहमहावराहा देवताः ।अमुकरोगशांतये जपे वि नियोगः ॥ अस्य मंत्रस्य रोगानुसारेण सहस्रमयुतं लक्षं वा जपं कृत्वा जपान्ते दशांशेन तिलपायसहोमं तद्दशांशेन तर्पणं तद्दशांशेन मार्जनं तद्दशांशेन शक्त्या वा ब्राह्मणभोजनं च कुर्य्यात् ॥ तथा च-( वीरसिंहावलोकने शंकरगीतावाक्यम् ) अच्युतानंत गोविन्देत्येतन्नामत्रयं द्विजः । अयुतत्रयसंख्याकं जपं कुर्य्याद्धि शांतये ॥ इति नामत्रयविधानम् ॥ अथ सर्वव्याधिहरंविष्णुसहस्र नामविधानम् ॥ तदुक्तम् ( महाभारते ) सहस्रनामस्तोत्रं च सर्वं वारत्रयं जपेत् ॥ मृत्युरोगप्रशांत्यर्थमात्मनश्च शुभाप्तये ॥ १ ॥ तत्र प्रयोगः । सुमुहूर्त्ते शिवालयादिषु कृतनित्यक्रियः स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य । देशकालौ संकीर्त्य । ममामुकव्याधेः समूलनाशद्वारा सद्य आरोग्यार्थं श्रीपरमेश्वरप्रीत्यर्थममुकसंख्यया विष्णुसहस्रनामजपं करिष्ये । इति संकल्प्य । गणेशस्मरणं कृत्वा स्वपुरतः । आधारे अन्यलिखितपुस्तकं संस्थाप्य गंधपुष्पादिभिः संपूज्य शापविमोचनं पठेत् । ॐ अस्य श्रीविष्णोः सहस्रनाम्नां रुद्रशापमोचनमंत्रस्य महादेव ऋषिः । अनुष्टुप् छंदः । श्रीरुद्रानुग्रहशक्तिर्देवता । सुरेशः शरणं शर्मेति बीजम् । अनंतो हुतभुग्भोक्तेति शक्तिः । सुरेश्वरायेति कीलकम् । रुद्रशापविमोचने विनियोगः । ॐ क्लीं ह्रां अङ्गुष्ठाभ्यां नमः ।

ॐ ह्रीं कनिष्ठिकाभ्यां नमः । ॐ ह्रः कर
ॐ ह्रीं तर्जनीभ्यां नमः । ॐ ह्रूं मध्यमाभ्यां नमः । ॐ ह्रैं अनामिकाभ्यां नमः । ॐ ह्रौं कनिष्ठिकाभ्यां नमः । ॐ ह्रः कर
तलकरपृष्ठाभ्यां नमः । इति करन्यासः ॥ एवमेव हृदयादिन्यासं कृत्वा ध्यायेत् । अथ ध्यानम् ॥ " तमालश्यामलतनुं पीतकौ
शेयवाससम् ॥ वर्णमूर्तिमयं देवं ध्यायेन्नारायणं विभुम् ॥ १ ॥ " इति ध्यात्वा । मानसोपचारैः संपूज्य । ॐ क्लींह्रांह्रींह्रूंह्रैंह्रौंह्रः
स्वाहा । इति मंत्रं शतवारं दशवारं वा जप्त्वा किंचिज्जलं क्षिप्त्वा प्रार्थयेत् ॥ ॐ श्रीविष्णोः सहस्रनामस्तवो रुद्रशापविमुक्तो भव
इति प्रार्थ्य । सततं तदनंतरं सहस्रनामपठनं कुर्य्यात् । विष्णोः सहस्रनाम्नां यो ह्यकृत्वा शापमोचनम् ॥ पठेच्छुभानि सर्वाणि
स्युस्तस्य निष्फलानि तु ॥ १ ॥ इत्यगस्तिसंहितायां रुद्रशापविमोचनम् ॥ अथ सहस्रनामस्तोत्रस्य न्यासध्यानादिप्रकारः ॥
ॐ अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमालामंत्रस्य श्रीभगवान् वेदव्यास ऋषिः । अनुष्टुप् छंदः । श्रीकृष्णः परमात्मा देवता ।
आत्मयोनिः स्वयं जात इति बीजम् । देवकीनंदनः स्रष्टेति शक्तिः । उद्भवः क्षोभणो देव इति परमो मंत्रः । शंखभृन्नन्दकी चक्रीति
कीलकम् । त्रिसामासामगः सामेति कवचम् । शार्ङ्गधन्वा गदाधर इत्यस्त्रम् । ॐ विश्वं विष्णुर्वषट्कार इति ध्यानम् । श्रीकृष्णप्री
त्यर्थे अमुकरोगनिवारणार्थे नामसहस्रपाठे विनियोगः । ॐ वेदव्यासऋषये नमः शिरसि ॥१॥ ॐ अनुष्टुप् छंदसे नमो मुखे ॥२॥
ॐ श्रीकृष्णपरमात्मदेवतायै नमः हृदये ॥ ३ ॥ ॐ आत्मयोनिः स्वयं जात इति बीजाय नमो गुह्ये ॥ ४ ॥ ॐ देवकीनंदनः
स्रष्टेति शक्तये नमः पादयोः ॥ ५ ॥ ॐ शंखभृन्नंदकी चक्रीति कीलकाय नमः सर्वांगे ॥ ६ ॥ इति ऋष्यादिन्यासः ॥ अथ
करन्यासः ॥ ॐ विश्वं विष्णुर्वषट्कार इत्यंगुष्ठाभ्यां नमः ॥ १ ॥ ॐ अमृतांशूद्भवो भानुरिति तर्जनीभ्यां नमः ॥ २ ॥ ॐ
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मेति मध्यमाभ्यां नमः ॥ ३ ॥ ॐ सुवर्णबिंदुरक्षोभ्य इत्यनामिकाभ्यां नमः ॥ ४ ॥ ॐ आदित्यो ज्योतिरादित्य
इति कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ शार्ङ्गधन्वा गदाधर इति करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ॥ एवमेव
हृदयादिषडंगन्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ " शांताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं
शुभांगम् ॥ लक्ष्मीकांतं कमलनयनं योगिभिर्ध्यानगम्यं वंदे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ १ ॥ " इति ध्यात्वा मानसोप
चारैः संपूज्य । ॐ नारायणाय नमः ॥ १ ॥ ॐ नराय नमः ॥ २ ॥ ॐ नरोत्तमाय नमः ॥३॥ ॐ देव्यै नमः ॥ ४ ॥ ॐ सरस्वत्यै
नमः ॥ ५ ॥ ॐ व्यासाय नमः ॥ ६ ॥ इति नमस्कृत्य स्पष्टपदाक्षरं स्तोत्रं पठेत् । अस्य पुरश्चरणं रोगानुसारेण सहस्रमयुतं
लक्षं वा जपदशांशतस्तिलपायसाज्यैर्होमः । होमस्तु सहस्रनामभिः स्वाहांतैः कार्य्यः । अन्यत्सर्वं यथाविधि कुर्य्यात् । सद्य
आरोग्यतासिद्धये अच्युतानंत गोविन्देति नामत्रयेण संपुटितस्य सहस्रनामस्तवस्य जपः कार्य्यः ॥ अथवा ॥ ॐ कृष्णाय वासु
देवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविन्दाय नमोनमः ॥ १ ॥ इत्यनेन । ॐ आपदामपहर्तारं दातारं सर्वसंपदाम् ॥
लोकाभिरामं श्रीरामं भूयोभूयो नमाम्यहम् ॥ २ ॥ इति मंत्रेण वा संपुटितस्य जपेन सर्वरोगनाशः ॥ इति ज्वरहराणि ॥ अथाति
सारग्रहणीशमनविधानम् ॥ अग्न्युपशमी अतिसारी भवति तडागभेत्ता च इति । सोऽग्निरस्मीत्यृचं दशसहस्र १०००० संख्यया जपेत्।

तिलाज्यद्रव्येण जुहुयात् हिरण्यं च दद्यात् । इत्यतिसारशमनम् ॥ अथ संग्रहणीशमनम् ॥ यः पुनःस्वीयां भार्यामनन्यगतिकां कारणमन्तरेण परित्यजति स जन्मान्तरे संग्रहणीरोगवान् भवति । तच्छांतये शिवसंकल्पसूक्तमष्टोत्तरसहस्रं जपेत् । मधु हिरण्यं च दद्यात् । तथा च-(शिवगीतायाम् ) साध्वीं भार्यां च यो मर्त्यः परित्यजति कामतः ॥ ग्रहणीरोगसंयुक्तः सदा भवति मानवः ॥ शिवसंकल्पसूक्तेन जपेदष्टोत्तरं शतमिति संग्रहण्युपशमनम् ॥ ॥ अथार्शोरोगशमनम् ॥ वेतनमादाय योऽध्यापयत्यर्चयति जुहोति जपति सोऽर्शोरोगवान् भवति । स कृच्छ्रातिकृच्छ्रचांद्रायणानि कृत्वा पुरुषसूक्तम् । उद्वन्नमृचम् । आदित्यहृदयं वा । अग्निवर्णमित्यादिसूक्तं व्याधिगुरुलघुभावेन वापेक्षयासहस्रमयुतं वा जपेत् ॥ सघृतं हिरण्यं च दद्यात् ॥ इत्यर्शोघ्नप्रतीकारः ॥ अथाजीर्णमन्दाग्निशमनम् ॥ ( ऋग्विधाने ) यस्य भुक्तं न जीर्येत न तिष्ठेद्वा कथंचन तस्यान्नस्यानुरोधत्वादग्निरस्मीत्यृचं जपेत् ॥ ( वृद्धपराशरः ) अग्निसूक्तं जपेन्नित्यं श्रीसूक्तं च विचक्षणः इति । जातवेदसे इति मंत्रजपं वा कुर्य्यात् ॥ अथवा मन्दाग्निशान्तये राजतं मेषं यथाविधि दद्यात् ॥ अथ विषूचिकोपशमनविधानम् ॥ ( योगवासिष्ठे ) उत्पत्तिप्रकरणे एकोनसप्ततितमे सर्गे ॥ "दुर्भोजना दुरारम्भा मूर्खा दुःस्थितयश्च ये ॥ दुर्देशवासिनो दुष्टास्तेषां हिंसां करिष्यसि ॥ १ ॥ प्रविश्यहृदयं प्राणैः पद्मप्लीहादिबाधनात् ॥ वातलेखात्मिका व्याधिर्भविष्यसि विषूचिका ॥ २ ॥ सगुणं निर्गुणं चैव जनमासादयिष्यसि ॥ गुणान्वितचिकित्सार्थं मन्त्रोयं तु मयोच्यते ॥ ३ ॥ ब्रह्मोवाच ॥ हिमाद्रेरुत्तरे पार्श्वे कर्कटी नाम राक्षसी ॥ विषूचिकाभिधाना सा नाम्नाप्यन्या यवाधिका ।४।। तस्या मन्त्रो यथा--"ॐ ह्रांह्रींरांरीं विष्णुशक्तये नमः ओं नमो भगवति विष्णुशक्तिमेनाम् ओं हरहर नयनय पचपच मथमथ उत्सादय दूरे कुरु स्वाहा हिमवन्तं गच्छ जीव सः सः सः चन्द्रमण्डलगतोसि स्वाहा ॥ ७२ ॥ इति मंत्री महामंत्रं न्यस्य वामकरोदरे ॥ मार्ज्जयेदातुराकारं तेन हस्तेन संयुतः ॥ ६ ॥ हिमशैलाभिमुख्येन विद्रुतांतां विचिन्तयेत् ॥ कर्कटीं कर्कशाक्रंदां मंत्रमुद्गरमर्दिताम् ॥ आतुरं चिंतयेच्चंद्रे रसायनहृदि स्थितम् ॥ अजरामरणं युक्तं मुक्तं सवाधिविभ्रमैः ॥ ७ ॥ साधको हि शुचिर्भूत्वा स्वाचांतः सुसमाहितः ॥ क्रमेणानेन सकलां प्रोच्छिनन्ति विषूचिकाम् ॥ ८ ॥ इति विषूचिकाप्रतीकारः ॥ अथ पांडुरोगोपशमनविधानम् । देवब्राह्मणद्रव्यापहारी पांडुरोगवान् भवति स कृच्छ्रातिकृच्छ्रचांद्रायणानि कुर्यात् कूष्मांडहोमं च कुर्यात् हिरण्यं वसुधां च दद्यात् ॥ अथवा पूर्वोक्तपृथिवीमन्त्रानुष्ठानं कुर्यादिति पांडुरोगोपशमनम् ॥ अथ रक्तपित्तोपशमनम् ॥ यः पूर्वजन्मनि वैद्यशास्त्रमदायुक्तौषधमन्यथा कृत्वा प्रयोजयति स शोणितपित्तव्याधिमान् भवति । स ॐ अग्निंदूतं वृणीमह इत्यादिना चरुघृताभ्यामष्टोत्तरायुतमग्नौ जुहुयात् । इति रक्तपित्तोपशमनम् ॥ अथ क्षयरोगोपशमनविधानम् ॥(महार्णवे)यः पूर्वजन्मनि साक्षाद्ब्रह्महा क्षयरोगवान् भवति। 'ब्रह्महा क्षयरोगी स्यात्' । इति शातातपोक्तेः । अस्य प्रायश्चित्तमसाध्यरोगोपसृष्टे षडब्दं व्रतमाचरेत् । रोगतारतम्याभावात्प्रायश्चित्ताभावो द्रष्टव्यः ( ऋग्विधाने ) " असाध्यव्याधिना ग्रस्त उग्रेण प्राणहारिणा ॥ आतेरौद्रेण सूक्तेन प्रत्यृचं वाग्यतः शुचिः ॥ पूर्वमाज्याहुतीर्हुत्वा उपस्थाय च शंक

रम् ॥ हविःशेषेण वर्तेत एकोत्तरशतं ततः ॥ पूर्णे मासे जयेन्मृत्युं रोगेभ्यश्च प्रमुच्यते । होमकर्मण्यशक्तानां जपस्तद्द्विगुणो भवेत्"
इति अथवा त्र्यंबकमंत्रपुरश्चरणं कुर्यात् ॥ इति क्षयोपशमनविधानम् ॥ अथ श्वासकासादिकफरोगोपशमनम् ॥ ( उमामहेश्वरसं
वादे ) "कृतघ्नो जायते मर्त्यः कफवाञ्श्वासकासवान् ॥ उष्णज्वरी च नित्यं हि पित्तरोगसमन्वितः ॥" इति । तच्छांतये पिपी
लिकामध्यानि यवमध्यानि वा त्रीणि चांद्रायणानि कुर्यात् ॥ यथेप्सितं पंचाशद्ब्राह्मणान् भोजयेत ॥ "तद्विष्णोरिति सूक्तेन जपं
कुर्याद्द्विजोत्तमः ॥ पूजयेद्भोजयेद्द्यात्तन्मना नान्यमानसः ॥ इति । अथवा । पुरुषसूक्तम् । सहस्रनामस्तोत्रम् । उद्यन्नित्यृचं वा
प्रत्यष्टोत्तरायुतं जपं कृत्वा चरुघृताभ्यां हुत्वा पञ्चाशद्ब्राह्मणान् भोजयेत् । ( महाभारते ) "हिरण्यं रक्तवासांसि पंचाशद्विप्रभोज
नम् ॥ सहस्रकलशस्नानं कुर्याद्रोगस्य शांतये" इति ॥ अथ अच्युतानंत गोविंदेति नामत्रयमष्टोत्तरायुतत्रयं जपेत् इति कफ
रोगोपशमनम् ॥ अथ वातव्याधिशमनविधानम् ॥ देवब्राह्मणस्वापहरणात् स्वामिद्रोहाद्वातरोगी भवति । अस्य प्रायश्चित्तं
कृच्छ्रातिकृच्छ्रचांद्रायणं कुर्यात् ( वीरसिंहावलोकने ) "वात आवातमंत्रोऽयं जप्यतेऽयुतसंख्यया ॥ अग्निरश्मीत्यृचं वापि जपेद्वा
जुहुयादपि ॥" इति । धनुर्वाते विशेषस्तत्रैव । यः पुनरक्षतयोनिमनिच्छंतीं परस्त्रियं बलादाक्रम्योपभुंक्ते स सर्वसंधिषु धनुर्वातरोग
वान वा विषमज्वरी वा तीव्रपीडावान् भवति । ( तच्छांतिर्ब्राह्मे ) "अपमृत्युप्रशांत्यर्थं प्रतिरूपं द्विजोत्तमे । प्रदद्यान्महिषीं कृष्णां
सवत्सां पूजयेत्ततः सहस्रनामस्तोत्रं वा सर्वं वारत्रयं जपेत् ॥ मृत्युरोगोपशांत्यर्थमात्मनश्च शुभाप्तये" ( शङ्करगीतायाम् ) "अ
च्युतानन्त गोविंदेत्येतन्नामत्रयद्द्विजः । अयुतत्रयसंख्याकं जपं कुर्याद्धि शान्तये ॥" इति । अथवा पुरुषसूक्तं जपेत् । पापक्षयाद्रोग
मोक्षो भवत्येव । इति वातरोगोपशमनविधानम् ॥ अथ शूलरोगोपशमनविधानम् । याचितारमकिंचनं ब्राह्मणं श्रुताध्यापनसंपन्नम
तिशांतमाहूय यो न प्रयच्छति स जठरशूलरोगवान् भवति कदाचिदाध्मानी भवति सकृच्छ्रातिकृच्छ्राणि कृत्वा वस्त्राणि दद्यात् ।
दाननिबंधोक्तं त्रिशूलदानं च कार्यम् । (महार्णवे शातातपः) "शूली परोपतापेन जायते वपुषा तनुः॥ सोऽन्नदानं प्रकुर्वीत तथा रुद्रं जपे
द्बुध" इति रुद्रविधानम् (शिवप्रकरणे) द्रष्टव्यम्॥ इति शूलोपशमनम्॥ अथ गुल्मरोगशमनम्॥ गुरुप्रत्यर्थी वातगुल्मवान् भवतितच्छा
न्तये मासमेकं पयोव्रतं कृत्वा । ॐ मुञ्चामीत्यनेन सूक्तेन प्रत्यृचं चरुघृताभ्यां जुहुयात् । ॐ वातआवातुभेषजमित्यस्य वातायन
उल ऋषिः । वायुर्देवता । गायत्री छंदः । विहितार्थे जपे विनियोगः। ॐ वात आवातु भेषजꣳशंभूर्मयोभूर्नोहृदेप्रखआयूꣳषितारिषव
॥ १ ॥ इति मंत्रेणायुतसंख्यया जपो होमश्च कार्य्यः ॥ इति गुल्मोपशमनम् ॥ अथोदररोगाणां शमनविधानम् ॥ ( महार्णवे )
"यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः । कुर्यात्स उरव्याधियुक्तो भवति मानवः ॥ कुर्यात्कृच्छ्रं चातिकृच्छ्रं चांद्रायणमथापरम् ।
सहस्रकलशस्नानमीश्वरस्य तु कारयेत् ॥ जपेदयुतसंख्याकमुद्यन्नद्येत्यृचं तथा । आतेपितरतः सूक्तान् घृतेन चरुणा पृथक् ॥
अष्टोत्तरसहस्रं हि जुहुयाच्च ततः परम् । मधुनाज्येन संयुक्तं हिरण्यं शक्तितो दिशेदिति ।" सहस्रकलशस्नानं महेशस्य शतरु
द्रेण तत्तु रुद्रप्रकरणे द्रष्टव्यम् ॥ उद्यन्नद्येत्यृचमपि पूर्वं प्रतिपादितमित्यर्थः । अथ जलोदरे विशेषस्तत्रैव । "सहस्रकलशस्नानं

महादेवस्य कारयेत् । भोजयेच्च शतं विप्रान्मुच्यते किल्बिषात्ततः ॥ प्लीहोदरे विशेषः । "भृतकाध्यापको यस्तु कन्यादूषणतत्परः । प्लीहवान् स भवेद्विप्रो जपेच्छ्रीसूक्तमंत्र हि ॥ अयुतत्रयसंख्याकं प्लीहोदरविमुक्तये । प्रत्यृचं च भवेद्धोमश्चरुणा सर्पिषा पृथक् ॥" इति । श्रीसूक्तं देवीमंत्रप्रकरणे ज्ञेयम् । अथ प्लीहरोगनाशकहनुमन्मंत्रः ( मंत्रमहोदधौ ) मन्त्रो यथा–"योयोहनूमंतफलफलित धगधगितआयुराषफूरुडाह" इति चतुर्विंशति२४वर्णो मंत्रः ॥ प्लीहयुक्तोदरे स्थाप्यं नागवल्लीदलं शुभम् । तदुपर्य्यष्टगुणितं वस्त्रमाच्छादयेत्ततः ॥ वंशजं शकलं तस्योपरि मुञ्चेत्कपिं स्मरन् । आरण्यप्रस्तरोत्पन्ने वह्नौ यष्टिं प्रतापयेत् ॥ बदरीतरुसंभूतां मन्त्रेणानेन सप्तशः । तया संताडयेद्वंशं शकलं जठरस्थितम् ॥ सप्तकृत्वः प्लीहरोगो नश्यत्येव नृणां क्षणात् । इत्युदररोगशमनप्रकारः । अथ मूत्रकृच्छ्रादिरोगहरप्रतीकारः ( महार्णवे ) " सहस्रनामस्तोत्रस्य सूक्तस्य पौरुषस्य च ॥ गायत्र्याश्च जपः कार्य्यः शक्त्या पापापनुत्तये ॥ अथ प्रमेहरोगोपशमनविधानम् ॥ ( महार्णवे ) " मातृगामी स्वसृगामी मधुमेही भवेन्नरः ॥ भ्रातृभार्याभिगामी च जलमेही नराधिप । यो गच्छेद्भगिनीं नित्यमिक्षुमेहीति निश्चितम् ॥ चांडालीगमनात्सर्वप्रमेहव्याधिमान्भवेत् । क्षुत्पिपासातुरश्चैव जायते तस्य निष्कृतिः ॥ चांद्रायणत्रयं कुर्याद्यवमध्यं तथापरम् ॥ तिर्यग्गामी स शूलेन प्रमेहेन युतो भवेत् ॥ कुर्य्यात्सांतपनादीनि प्रायश्चित्तं यथाविधि । पर्वव्यवायी मनुजः कन्यागामी तथैव च ॥ वातप्रमेहयुक्तः स्यात्कुर्याच्चांद्रायणत्रयम् ॥" इति अथ सर्वप्रमेहशमनप्रकारः । प्रोक्ताधिकं प्रायश्चित्तं प्रकल्प्य मात्रादीनामतिमात्रनिषिद्धत्वात् । यत्राशक्तः । तत्र कृच्छ्रत्रयं प्रतिदिनं चत्वारिंशद्ब्राह्मणभोजनं कारयेत् ॥ पुरुषसूक्तं सहस्रनामस्तोत्रं गायत्रीं वा जपेत् ॥ आतेरौद्रसूक्तेनाज्यहोमं जपं वा अष्टोत्तरसहस्रं कारयेत् । स्वर्णधेनुं च दद्यात् ॥ अथ श्वयथुरोगोपशमनम् ॥ ( महार्णवे ) "पर्वताग्रे नदीतीरं छायामारुह्य वा नरः॥मूत्रं पुरीषमथ वा यः प्रक्षिपति वा जले ॥ श्वयथुव्याधिमाप्नोति इत्याह भगवाञ्छिवः॥ 'सॐ इदंवोविश्वतःशरीर' इत्यादि अष्टोत्तरशतायुतत्रयं जपेत् । ॐ आपोहिष्ठामयोभुव इत्यनेन चरुघृताभ्यामष्टोत्तरायुतत्रयं होमं कुर्य्यात् ॥ अथ वृषणव्याधिशमनप्रकारः ॥ तत्र स्नुषागामी वातवृषणः । अपकृदज्ञानाद्गत्वा चांद्रायणत्रयाच्छुध्येत् । ज्ञानात्सकृद्गमने कृच्छ्राद्वा शुद्धिः । बुद्धिपूर्वकं बहुदिनेषु गत्वा अग्निं प्रविश्य मृतः शुध्येत् । स रुद्रसंहितामष्टोत्तरसहस्रं जपेत् । गां च दद्यात । तथा च ( महार्णवे–विष्णुः ) । "जायते वृषणे यस्य व्याधिः परमदारुणः । जपित्वा दशसाहस्रं मुच्यते रुद्रसंहिताम् ॥" अथ गण्डमालाशमनविधानम् ॥" गुरुद्वेषी परचित्तदुःखकारी गुल्मी गण्डमालाव्याधिमांश्च जायते। अस्य प्रायश्चित्त चांद्रायणं कृत्वा गंडमालागलगंडोपशांतये पुरुषसूक्तं सहस्रमयुतंवा व्याध्यनुसारेण जपेत् ॥ अथ कुष्ठरोगोपशमनविधानम् ॥ तत्र जन्तुघातकः कुष्ठरोगी वस्त्रहारी श्वेतकुष्ठी भवति सांतपनं कुर्य्यात् ॥ तदुक्तम् ( महार्णवे ) "यो नरो हन्ति वै जंतून्कुष्ठरोगी भवेत्तु सः ॥ स च सांतपनं कुर्याद्भगवानाह शंकरः॥" इति ॥ अन्यायदंडकारी च मुखकृष्णो भवति । असौ कृच्छ्रातिकृच्छ्रचांद्रायणं कुर्य्यात् । क्षुद्रप्राणिहिंसको विवर्णमुखः स चांद्रायणमतिकृच्छ्रं च कृत्वा राजतवृषभदानं कुर्य्यात् ॥'ब्रह्महा नरकस्यांते पाण्डुकुष्ठी प्रजायते । प्रायश्चित्तं प्रकुर्वीत यथोक्तमृषिभाषितम् ॥" (महाभारते

" हिरण्यं रक्तवासांसि पंचाशद्विप्रभोजनम् ॥ सहस्रकलशस्नानं तस्य रोगोपशांतये ॥" इति अत्र सहस्रकलशस्नानं शालग्रामोपरि कार्यम् ॥ पुरुषसूक्तं सहस्रनामस्तोत्रम् । उद्यन्नद्येत्यृचो जपेत्प्रत्यष्टोत्तरायुतं चरुघृताभ्यां जुहुयात् । अथवा सूर्याराधनम् । आदित्य हृदयजपं महाभारतश्रवणं च कुर्य्यात् ॥ अथ शिरोरोगशमनविधानम् ॥ गुरूपरोधी शिरोरोगी भवति । तच्छांतयेपंचाशद्ब्राह्मण भोजनं कार्यम् " उद्यन्नद्येत्यृचं जपेत् । कूष्मांडीभिश्च जुहुयात् । अथवा अक्षीभ्यामिति सूक्तमष्टोत्तरशतं जपेत् ॥ चरुघृताभ्यां दशांशेन जुहुयात् । अथवा वायुपुराणोक्तस्वर्णयज्ञोपवीतदानं कुर्य्यात् ॥ ॥ अथ नेत्ररोगशमनविधानम् ॥ ( महार्णवे ) " परदृष्टिविघातेन भिषग्मिथ्याचरेण च । कामात्परस्त्रियं दृष्ट्वा नेत्ररोगी भवेन्नरः ॥ चांद्रायणपराकं च पंचाशद्विप्रभोजनम् । कुर्याद्वयः सुपर्णेति चरुणा सर्पिषा तथा ॥ अष्टोत्तरसहस्रं तु जुहुयाद्रोगशान्तये । वर्चोदाअसि मंत्रं तु जपेदाज्यं सकांचनम् ॥ दद्याद्विप्राय विधिवन्नेत्ररोगः प्रशाम्यति " इति ॥ ( कर्मविपाकसंग्रहेपि ) " नग्नां परस्त्रियं दृष्ट्वा सूर्यं वास्तमयोदये । नेत्रशूली भवेत्सोपि नेक्षितुं क्षमते दृशा ॥ वर्चोमेदेहि मंत्रेण होमः स्यादष्ट चायुतम् ॥ वयः सुपर्णा मंत्रेण नेत्रे सिंचेच्च वारिणा ॥ अक्षीभ्यांत इति जपेन्नेत्रशूलं प्रशाम्यति " इति ॥ "ॐ वर्चोदा असि वर्चो मे देहि इति दशाक्षरो मंत्रः" होमकाले स्वाहांतः कर्त्तव्यः । अस्य मंत्रस्य प्राजापत्यपरमेष्ठीवामदेवा ऋषयः । अग्निर्देवता । अतिशक्वरीछंदः । विहितार्थे विनियोगः ॥ ॐ वर्चोदाअसिवर्चोमेदेहि ॥ १ ॥ ॐ वयः सुपर्णाउपसेदुरिंद्रंप्रियमेधाऋषयोनाधमानाः । अपध्वांतमूर्णुहिपूर्धिचक्षुर्मुमुग्ध्यस्मान्निधयेवबद्धान् ॥ २ ॥ एवं यथाशक्ति यथारोगं च जपसंख्यां प्रकल्प्य यावद्रोगविमुक्तिस्तावन्नेत्रसेचनं कृत्वा यथाशक्ति ब्राह्मणान् भोजयेत् ॥ सूर्यप्रीत्यर्थं सूर्यपूजा च कार्य्या । नेत्राधिदेवतात्वात्तस्येति ॥ सप्तुवर्णं साज्यं छायापात्रं दद्यात् ॥ नेत्रपूयहरमपि । तत्रैव-दंपतीभ्यां प्रवृत्तं तु मैथुनं यो निरीक्षते । स नेत्रपूययुक्तः स्यादक्षीभ्यामिति मंत्रतः ॥ जपहोमौ च कर्त्तव्यौ शक्त्या ब्राह्मणभोजनम् । सहस्रकलशस्नानं रवेः कुर्याद्द्विजोत्तमः ॥ इति । अत्रसहस्रकलशस्नानं सूर्यप्रतिमायां मंडले वा ॐ विभ्राडित्यादिसौरसूक्तेन कार्यम् । अथवा सर्वनेत्ररोगोपशमनार्थमादित्यहृदयं नेत्रोपनिषदं वा सहस्रमयुतं वा पठेत् । अथ नेत्रोपनिषत् ॥ अथातश्चाक्षुषीं पठितसिद्धविद्यां चक्षूरोगहरां व्याख्यास्यामो यथा चक्षूरोगाः सर्वतो नश्यन्ति चक्षुषो दीप्तिर्भवति । अस्याश्चाक्षुषविद्याया अहिर्बुध्न्य ऋषिः । गायत्री छन्दः । सविता देवता । चक्षूरोगनिवृत्तये जपे विनियोगः ॥ ॐ चक्षुश्चक्षुश्चक्षुस्तेजः । स्थिरो भव मां पाहि त्वरितं चक्षूरोगान् शमयशमय मम जातरूपं तेजो दर्शयदर्शय यथाहमंधो न स्यां तथा कृपया कल्याणं कुरुकुरु मम यानियानि पूर्वजन्मोपार्जितानि चक्षुःप्रतिरोधकदुष्कृतानि तानि सर्वाणि निर्मूलय निर्मूलय । ॐ नमश्चक्षुस्तेजोदात्रे दिव्यभास्कराय ॐ नमः करुणाकराय अमृताय ॥ ॐ नमो भगवते सूर्याय । अक्षितेजसे नमः । खेचराय नमः । महते नमः । रजसे नमः । तमसे नमः । असतो मां सद्गमय । तमसो मां ज्योतिर्गमय । मृत्योर्मामृतं गमय । उष्णो भगवान् शुचिरूपः हंसो भगवान् शुचिरप्रतिरूपः । य इमां चाक्षुष्मतीं विद्यां ब्राह्मणो नित्यमधीते । न तस्याक्षिरोगो भवति न तस्य कुलेंधो भवति । अष्टौ ब्राह्मणान् ग्राहयित्वा

विद्यासिद्धिर्भवति। ॐ विश्वरूपं घृणितंजातवेदसंहिरण्मयं ज्योतिरूपं ज्योतिरूपं तपंतं सहस्ररश्मिभिः शतधा वर्तमानः। पुरः प्रजातामुदयत्येषसूर्यः ॐ नमो भगवते आदित्याय अवाग्वादिने स्वाहा ॥ इति नेत्रोपनिषत्समाप्तिः ॥ अथ नेत्ररोगहरं तर्पणम् ॥ (महार्णवे) उद्यन्नद्येति त्र्यृचस्य कण्वः प्रस्कण्व ऋषिः। अनुष्टुप् छन्दः। सूर्यो देवता। तर्पणे विनियोगः। ॐ उद्यन्नद्यमित्रमहः ॥ ॐ सूर्यं तर्पयामि ॥ १ ॥ ॐ आरोहन्नुत्तरांदिवम् ॐ सूर्यं तर्पयामि ॥ २ ॥ ॐ हृद्रोगंममसूर्य ॐ सूर्यं तर्पयामि ॥ ३ ॥ ॐ हरिमाणं च नाशय ॐसूर्यं तर्पयामि। ॐ शुकेषुमेहरिमाणम् ॐ सूर्यं तर्पयामि ॥ ॐ रोपणाकासुदध्मसि ॐ सूर्यं तर्पयामि ॥ ॐ अथोहारिद्रवेषुमे ॐ सूर्यं तर्पयामि। ॐ हरिमाणंनिदध्मसि ॐ सूर्यं तर्पयामि ॥ ॐ उदगादयमादित्यः ॐ सूर्यं तर्पयामि ॥ ॐ विश्वेनसहसासह ॐ सूर्यं तर्पयामि। ॐ द्विषंतंमह्यंरंधयन् ॐ सूर्यं तर्पयामि। ॐ मोअहंद्विषतेरंधम् ॐ सूर्यं तर्पयामि (अथार्धर्चः) ॐ उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवम् ॐ सूर्यं तर्पयामि। ॐ हृद्रोगंममसूर्यहरिमाणंचनाशय ॐ सूर्यं तर्पयामि। ॐ शुकेषुमेहरिमाणं रोपणाकासुदध्मसि ॐ सूर्यं तर्पयामि। ॐ अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॐ सूर्यं तर्पयामि ॥ ॐ उदगादयमादित्योविश्वेन सहसासह ॐ सूर्यं तर्पयामि ॥ ॐ द्विषन्तंमह्यंरन्धयन्मोअहंद्विषतेरंधम ॐ सूर्यं तर्पयामि ॥ (अथ सर्वर्चः) ॐ उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवम्। हृद्रोगंममसूर्यहरिमाणंचनाशय ॐ सूर्यं तर्पयामि। ॐ शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ॥ अथोहारिद्रवेषुमे हरिमाणंनिदध्मसि। ॐ सूर्यं तर्पयामि ॥ ॐ उदगादयमादित्योविश्वेनसहसासह। द्विषन्तंमह्यंरन्धयन्मोअहंद्विषतेरंधम् ॐ सूर्यं तर्पयामि (अथ सार्द्धर्चशः) ॐउद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवम्। हृद्रोगंममसूर्यहरिमाणंचनाशय॥१॥शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ॐ सूर्यं तर्पयामि ॥ ॐ अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ २ ॥ ॐ उदगादयमादित्योविश्वेनसहसासह। द्विषन्तंमह्यंरन्धयन्मोअहंद्विषतेरंधम् ॥३॥ ॐ सूर्यं तर्पयामि ॥ (अथ त्र्यृचेन त्रिः) ॐ उद्यन्नद्य० १ ॐ शुकेषु० २ ॐ उदगादय० ३ ॐ सूर्यं तर्पयामि १ एवं त्र्यर्चेन पुनरपि द्विः। अस्य सकलस्यापि तर्पणप्रयोगस्य व्याध्यनुसारेणाष्टाविंशतिरष्टोत्तरशतमित्याद्यावृत्तिः कल्पनीया ॥ तत्र तर्पणे रक्ताक्षतरक्तपुष्पाणि ग्राह्याणि अयं च तर्पणप्रकारो न केवलनेत्ररोगहरः। अपि तु ज्वरादिरोगहरोपि ज्ञेयः। तथा च--(सायनभाष्ये--शौनकः) उद्यन्नद्येति मंत्रोयं सौरः पापप्रणाशनः। रोगघ्नश्च विषघ्नश्च भुक्तिमुक्तिफलप्रदः ॥ इति नेत्रादिरोगहरतर्पणम् ॥ अथ कर्णरोगोपशमनम् ॥ (महार्णवे) "मातृपितृगुरूणां च देवब्राह्मणयोस्तथा। शृणोति निंदां बुद्ध्या यः कर्णाभ्यां तस्य शोणितम् ॥ पूयं च प्रस्रवत्यस्य शांतिः कृच्छ्रचतुष्टयात्। हिरण्यरक्तवस्त्राणां दानाद्ब्राह्मणभोजनात् ॥

सौरमंत्रस्तु नेत्ररोगे
जपाद्धोमाच्च भवति सौरमंत्रेण शक्तित इति। अत्र जपे होमश्च। ॐउद्यन्नद्येतिसौरमंत्रेणाष्टोत्तरशतादिः कार्यः। सौरमंत्रस्तु नेत्ररोगे
पूर्वं कथितः ॥ अथ नासिकारोगहरविधानम् ।(महार्णवे) "लवणस्यापहर्ता तु शीर्णघ्राणांघ्रिपाणिकः॥घर्घरस्वरवांश्चैव जायते तस्य
निष्कृतिः ॥ उद्यन्नद्यत्र्यृचं सम्यक् जपेदष्टोत्तरायुतम् । जुहुयाच्चरुसर्पिर्भ्यां रक्तवासांसि काञ्चनम् ॥ दद्यादेवं द्विजगवां कुर्य्यात्पू
जां स्वशक्तितः ॥ अथ मुखरोगहराणि ॥ ( महार्णवे)" कूटसाक्षी भवेद्वक्ररोगी शोणितपित्तवान् । कृच्छ्रातिकृच्छ्रौ कुर्वीत चांद्रायण
मथापरम् ॥ कुर्यात्कूष्मांडहोमं च गायत्रीमयुतं जपेत् । दद्याद्धिरण्यं व्रीहींश्च मुखरोगस्य शांतये ॥ " इति मुखरोगोपशमनविधानं
समाप्तम् ॥ अथापस्मार ( मृगी) रोगोपशमनविधानम् ( महार्णवे)"गुरौ स्वामिनि वा यस्तु प्रतिकूलं समाचरेत् । सोऽपस्मारी भवे
त्तत्र कुर्याच्चांद्रायणं व्रतम् ॥ सदसस्पतिमन्त्रेण चर्वाज्यं जुहुयात्तथा । कयान इति सूक्तं तु जपेद्ब्राह्मणतर्पणम् ॥ कुर्याद्धिरण्यदानं
च शक्त्या रोगस्य शांतये ॥ सदसस्पतिमिति मंत्रस्य मेधातिथिर्ऋषिः । गायत्रीछंदः । सदसस्पतिर्देवता । होमे विनियोगः। ॐसदस
स्पतिमद्भुतंप्रियमिंद्रस्यकाम्यंसनिंमेधामयासिषम् ॥ १ ॥ कयान इति सूक्तं पञ्चदशर्चात्मकं ऋग्वेदीयं ज्ञातव्यम् "( शातातपः )
"धूर्त्तोपस्माररोगी स्यात्तत्तद्दोषोपशांतये ॥ ब्रह्मकूर्चत्रयं कृत्वा धेनुं दद्यात्सदक्षिणाम् ॥ " अथवा 'दाननिबंधोक्तं' गणपतिप्रतिमादानं
कुर्यात् ॥ इत्यपस्मारशमनम् ॥ अथ भगंदररोगोपशमनम् ॥ ( महार्णवे ) "यो गृहीत्वा द्विजो मोहान्नियुक्तो धर्म्मनिश्चये ॥ भगंदरो
भवेत्तस्य ह्यधर्म्मं वदतो मुखात् " (पद्मपुराणे विशेषः ) ' आचार्यभार्यागमने भगंदरयुतो भवेत् ' ( शातातपोपि ) " स्वगोत्रस्त्री
प्रसङ्गेन जायते च भगंदरी । तेनापि निष्कृतिः कार्या मेषदानेन यत्नतः ॥ " अत्र मेषदानं दानग्रंथोक्तं रजतमयमेषदानं बोध्यम्॥
इति भगंदरोपशमनम् ॥ अथ हृदयादिव्रणरोगोपशमनम् ॥ ( शातातपस्मृतौ ) "स्वजातिजायागमने जायते हृदयव्रणी ॥ तत्पा
तकविशुध्यर्थं प्राजापत्यव्रतं चरेत् ॥ जात्युत्तमस्त्रीगमनाज्जायते मस्तकव्रणी । तत्पातकविशुद्ध्यर्थं प्राजापत्यव्रतं चरेत् ॥ श्रोत्रि
यस्त्रीप्रसंगेन जायते नासिकाव्रणी । आचरेत् सर्वशुद्ध्यर्थं प्राजापत्यचतुष्टयम् ॥" ( महार्णवे) "जलाग्न्युद्बंधनप्रायनिमित्तेन म्रियेत
यः । भवेदुरसि दुष्टं हि व्रणं तस्यापि निष्कृतिः ॥ स दद्याद्गोद्वयं सम्यक्पंचाशद्विप्रभोजनम् । दक्षिणां च यथाशक्ति मुक्तो भवति
रोगतः ॥ ' भगव्रणे विशेषः ' ॥ मृते भर्तरि या नारी ब्रह्मचर्यविघातिनी । सा भवेद्व्रणदोषेण संभोक्तुं क्षमते न च ॥ संभोगानंतरं
तीव्रवेदना पुरुषस्य वा। स नीलवृषभान्दद्यान्मधुसर्प्पिस्तिलानपि ॥ ' स्तनस्फोटेपि विशेषः' । अवमन्य तु भर्तारं जारमालिङ्गते
नवम् । सार्द्धं क्रीडति या नारी तमेवानुस्मरत्यपि ॥ तस्यास्तु स्तनयोः स्फोटा जायंते जननांतरे । भगाच्च रक्तं स्रवति तद्रोगस्य
प्रशांतये ॥ दद्याद्गाः पञ्च लवणं हरिद्रां धान्यमेव च । उमामहेश्वरं चैव पूजयेच्च धने सति ॥ निष्कद्वादशकं दद्याज्जपेत्तामग्निसूक्त
कमिति [ तामग्निसूक्तं तामग्निवर्णां तपसा इत्यादि सप्तर्चसूक्तं ऋग्वेदे प्रसिद्धम् ] इति व्रणशमनम् ॥ अथ वातरक्तशमनम् (वृद्धबौ

धायनः ) "सवर्णागमने रक्तवातवाञ्जायते नरः । एतद्रोगनिवृत्त्यर्थं षडब्दं कृच्छ्रमाचरेत् ॥" ( शातातपोपि ) "रक्तवस्त्रप्रवालानां ह्वारी स्याद्रक्तवातवान् । सवस्त्रां महिषीं दद्यात्पद्मरागसमन्विताम् ॥ वस्त्रं रक्तमेव ॥ इति वातरक्तोपशमनम् ॥ अथ स्त्रीणां प्रदररोगस्योपायः ॥ ( महार्णवे 'स्रवद्गर्भा भवेत्सा तु बालकं हंति या पुरा' ॥ एतद्दोषविनाशार्थं वायुपुराणोक्तं कांचनयज्ञोपवीतं यथाविधि दद्यात् ॥ 'गर्भस्रावभवाद्दोषादेवं कृत्वा विमुच्यते' । पूर्वजन्मनि या पित्रा मात्रा गुरुणा वा सार्द्धं स्पर्धते सा प्रदररोगिणी भवति सा कृच्छ्रातिकृच्छ्रं कुर्य्याच्चांद्रायणानि च कुर्यात् । तद्विष्णोरिति मंत्रमयुतत्रयं जपेत् । आज्यसहितमधुमंडकान्नं दद्यात् । विप्रपादक्षालितोदकेन स्वांगं मार्जयेत् विप्रोच्छिष्टेनानुलिंपेत् । या इत्थमाचरति तस्या अवश्यं चिकित्सायां रोगो नश्यति । इति प्रदररोगहरो विधिः ॥ अथ गर्भिण्याः प्रतिमासं गर्भरक्षाप्रकारः ॥ ( वीरसिंहावलोकने ) प्रथमे मासे गर्भिण्या गर्भरक्षामुद्दिश्य ब्रह्मणे बलिं दद्यात् । पायसघृतश्वेतवस्त्रचंदनच्छत्राङ्गुलीयककवचरत्नगर्भगंधपुष्पधूपदीपहिरण्यसहितपूर्णकुम्भेन बलिं क्षिपेत् । बलिमन्त्रः "एह्येहि भगवन् ब्रह्मन् प्रजाकर्त्तः प्रजापते । प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥ १ ॥ इति मंत्रेण शुद्धात्मना बलिर्देयः बलिदात्रे दक्षिणां च दद्यादिति प्रथममासबलिदानविधानम् ॥ १ ॥ एवमेव सर्वत्र । द्वितीयमासे । पायसदध्यन्नलाजतिलपिण्याकवस्त्रहिरण्यजलपूर्णकुंभादिभिरलंकृत्य । ॐ अश्विनौ देवदेवेशौ प्रगृह्णीतं बलिं त्विमम् ॥ सापत्यां गर्भिणीं चेमां रक्षतं पूजयानया ॥ १ ॥ इति मन्त्रेणाश्विभ्यां बलिं दद्यात् ॥ इति द्वितीयमासबलिः ॥ २ ॥ तृतीये मासि । क्षीरान्नलाजध्वजहिरण्यवस्त्रगन्धादिभिर्बलिं संपाद्य ॐ रुद्राश्चैकादश प्रोक्ताः प्रगृह्णन्तु बलिं त्विमम् ॥ युष्माकं प्रीतये वृत्तं नित्यं रक्षत गर्भिणीम् ॥ १० ॥ इति मंत्रेण जलाशये एकादशरुद्रेभ्यो बलिं दद्यात् ॥ इति तृतीयमासबलिः ॥ ३ ॥ चतुर्थे मासि । रक्तान्नध्वजगंधपुष्पवस्त्रहिरण्यादिभिः पूर्ववद्बलिं संपाद्य । ॐ आदित्या द्वादश प्रोक्ताः प्रगृह्णीध्वं बलिं त्विमम् ॥ युष्माकं तेजसां वृद्ध्या नित्यं रक्षत गर्भिणीम् ॥ १ ॥ इति द्वादशादित्येभ्यो बलिं दद्यात् ॥ इति चतुर्थमासबलिः ॥ ४ ॥ पंचमे मासि । माध्वीपैष्टीघृतशर्करामधुमधुकेक्षुतिलपिष्टधूपलाजहिरण्यादिभिः सहकारमूले गर्भरक्षार्थे गोमयेन विनायकं कृत्वा । वस्त्रयुग्मेनावेष्ट्य संपूज्य । ॐ विनायक गणाध्यक्ष शिवपुत्र महाबल ॥ प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥१॥ इति मंत्रेण विनायकाय बलिं दद्यात् इति पंचममासबलिः ॥ ५ ॥ षष्ठे मासि । पायसघृतशर्करालाजहरिद्रान्नविशिष्टं बलिं प्रभातसमये नदीतीरे तदभावे तडागसमीपे ॐ स्कंद षण्मुख देवेश पुत्रप्रीतिविवर्धन । प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥ १ ॥ इति मंत्रेण स्कंदाय बलिं दद्यात्॥ ॥ ६ ॥ सप्तमे मासि । पायसलाजशर्कराघृतसहितं हरिद्राध्वजसर्वालङ्कारभूषितं बलिं रक्तवस्त्रद्वयवेष्टितशरीरो नदीतीरे । ॐ प्रभासः प्रभवः श्यामः प्रत्यूषो मारुतो नलः । ध्रुवो धराधरश्चैव वसवोऽष्टौ प्रकीर्तिताः॥ प्रगृह्णीध्वं बलिं चेमं नित्यं रक्षंतु गर्भिणीम् ॥१॥

इति मंत्रेणाष्टवसुभ्यो बलिं दद्यात् ॥ ७ ॥ अष्टमे मासि । दध्यन्नमुद्गकृसरान्नसाज्यपक्वापक्वमत्स्यमांससुरेक्षुरसगंधकृष्णवस्त्रकुक्कुट गन्धपुष्पधूपदीपहिरण्यसहितपूर्णकुंभेन नीलोत्पलसहितेन स्वयं रक्तवस्त्रेणालंकृत्य दक्षिणस्यां दिशि । ॐ पितृदेवि पितृज्येष्ठे बहुपुत्रि महाबले ॥ भूतश्रेष्ठे दिवावासे निर्वृते शौनकप्रिये ॥ प्रगृह्णीष्व बलिं चेमं सापत्यां रक्षगर्भिणीम् ॥ १॥ इति मंत्रेण दुर्गायै बलिं दद्यात् ॥ ८ ॥ नवमे मासि । दध्यन्नमुद्गकृसरान्नविशिष्टं पूर्ववत् प्रभातसमये । ॐ रक्ष रक्ष महादेव भक्तानुग्रहकारक ॥ पक्षिवाहन गोविंद सापत्यां रक्ष गर्भिणीम् ॥ १ ॥ इति मंत्रेण विष्णवे बलिं दद्यात् ॥९॥ दशमे मासि । पायसगुडापूपलाजपिष्टसक्तुभिः श्यामध्वजकृष्णगंधपुष्पधूपदीपहिरण्यसहितपूर्णकुंभेन नीलोत्पलसहितेन पूर्ववत् बलिहर्ता अलंकृत्यै वासुदेवालये अभ्यर्च्य वृक्षमूले । ॐ त्रिविक्रम क्रमाक्रांतभूरिभूतजगत्त्रय ॥ गोवर्द्धनमहाशैलसमुद्धरणगर्वित ॥ १ ॥ हिरण्यकशिपोर्वक्षोविदारणनखांकुर ॥ विक्रमेण सुरज्येष्ठ रक्तांगेन महोज्ज्वल ॥२॥ बलदेवानुज ज्येष्ठ कंसचाणूरकंदन ॥ गरुडध्वज दैत्यारेऽनन्ताच्युत चतुर्भुज ॥ ३ ॥ विधुंतुदप्राणहर आदित्यकृतचक्रभृत् ॥ भीषणाकार भुजगशयानेंदीवरच्छवे ॥ ४ ॥ पांचजन्यप्रभाव्यक्तकौस्तुभोद्योतभास्कर ॥ वाराहवपुषा पूर्वं सम्यग्धृतवसुंधर ॥ ५ ॥ शार्ङ्गज्याघातरुचिमत्किणांकितमहाभुज । अनाद्यंतासुररिपो धीर पद्मालयालय ॥६॥ प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥ एभिर्मंत्रैर्बलिं दद्यात् । इति दशममासबलिदानप्रकारः ॥१०॥ इति गर्भरक्षाविधानम्॥

अथ शीघ्रप्रसवोपायः ( संस्कारभास्करे ) "हिमवत्युत्तरे पार्श्वे शवरी नाम यक्षिणी ॥ तस्या नूपुरशब्देन विशल्या स्यात्तु गर्भिणी स्वाहा ॥ १ ॥ इति मंत्रेणैकविंशतिदूर्वांकुरैरेकपलं तिलतैलं प्रदक्षिणमावर्तयन्नष्टशतं मन्त्रयित्वा तत्तैलं किञ्चित्पाययेच्छेषमुदरे लेपयेदिति । ( अथ यंत्रप्रकारः ) गजाग्निवेदा उडुराट्शरांकाः सर्पर्षिपक्षा इति हि क्रमेण । लिखेत्प्रसूतेः समये गृहे वै सुखेन नार्यः सुवते हि शीघ्रमिति ॥

शीघ्रप्रसवकारकमिदम् ।

| | | |
|---|---|---|
| ८ | १ | ६ |
| ३ | ५ | ७ |
| ४ | ९ | २ |

अथ बालानां रोगशमनविधानम् ॥ ( वीरसिंहावलोकने ) बालानां सर्वरोगोपशांत्यर्थं व्याहृतिहोममन्नदानं च कुर्यात् ( तत्रैव ) ताडनतर्जनहासभयाद्वा निजजननीप्राकृतहितभावात् ॥ स्कंदमुखाः प्रथमा बलिहेतोः शिशुकममंगलमाशु विशंति ॥ १ ॥ स्तब्धविलोचनशोणितगंधः कुटिलमुखालपरवो लुलिताक्षः । स्तन्यपराङ्मुखगाढविमुष्टिश्चकितमनाः शिशुराकुलितस्तैः ॥ २ ॥ बालानां प्रायेण स्कंदमातृकादिबालघातकदेवदोषैरेव रोगा भवंति तस्मात्तेषां बलिदानादिना शांतिं कुर्यात् । तच्छांतिविधानं तु शांतिसारादौ ज्ञेयं ग्रंथविस्तरभयादत्र न लिख्यते ॥ इति सामान्यतो बालरोगशमनविधानम् ॥ अथ बालानां दुष्टदृष्टिदोषादौ रक्षाविधानम् ( कपिलसंहितायाम् । ) शिशुसंरक्षणार्थायाऽशुभग्रहनिवारिणीम् ॥ रक्षां संध्यासु कुर्वीत निंबसर्षपगुंजनैः ॥१॥ फलीकरणसंमिश्रैः करंजैरवलोकने ॥ वचोधरान्नदेशेषु बालग्रहविमुक्तये ॥२॥ वासुदेवो जगन्नाथः पूतनातर्जनो हरिः ॥ रक्षतु त्वरितो

बालं मुंचमुंच कुमारकम् ॥ ३ ॥ कृष्ण रक्ष शिशुं शंखमधुकैटभमर्दन ॥ प्रातः संगवमध्याह्नसायाह्नेषु च संध्ययोः ॥ ४ ॥ महानिशि सदा रक्ष कंसारिष्टनिषूदन ॥ यद्गोरजःपिशाचांश्च ग्रहान्मातृग्रहानपि ॥ ५ ॥ बालग्रहान् विशेषेण छिंधिछिंधि महाभयान् ॥ त्राहित्राहि हरे नित्यं त्वद्रक्षाभूषितं शिशुम् ॥ ६ ॥ इति भस्माभिमंत्र्यैव भूषयेत्तेन भस्मना ॥ शिरोललाटाद्यंगेषु रक्षां कुर्याद्यथाविधि ॥ ७ ॥ मंत्रसंरक्षणादेवं शिशुः संवर्धतेऽन्वहम् ॥ ( हरिवंशे ) "नदोंकमेनमारोप्य भूरेणुं परिगृह्य च ॥ शिरः प्रदक्षिणं कुर्वन्मंत्रमेनं जजाप ह ॥ १ ॥ विष्णुस्ते पूर्वतः पातु रुद्रो रक्षतु दक्षिणे ॥ ब्रह्मा च पश्चिमे पायाच्चन्द्रो रक्षत्वथोत्तरम् ॥ २ ॥ उपरिष्टात्तथा सूर्यः पायाच्चाधश्च वासुकिः ॥ पायादूर्द्धमधो वत्सं शिष्टाः काष्ठाः समीरणः ॥ ३ ॥ स्वस्ति करोतु भगवान् पिनाकी वृषभध्वजः ॥ गावो रक्षन्तु सर्वत्र भूमौ पातु सदाशिवः ॥ ४ ॥ एवमुच्चार्य नन्दस्तु कृष्णं स्पर्श सर्वतः ॥ एष मंत्रो हि बालानां रक्षार्थे परिकीर्तितः ॥ ५ ॥" इति स्खलनादौ बालरक्षाविधानम् ॥ ॥ अथ महामारी शमनविधानम् ( ब्रह्मवैवर्ते ) राजा च कुरुते पापं ब्रह्महत्यादि दारुणम् ॥ वंशजान्हंति सहसा स्त्रीवधं कुरुते भृशम्॥१॥ तेन राज्ञां हि सा पृथ्वी सनरा क्षयमाप्नुयात्॥कालस्फोटादयो रोगा वैद्याऽविज्ञातलक्षणाः ॥ २ ॥ प्रभवन्त्यौषधं नैव मंत्रतंत्राणि चैव हि ॥ आशु मृत्युकराश्चैव ज्वरदाहकरास्तथा॥३॥" ( हेमाद्रौ गर्गः ) "रुद्रप्रकोपजो यस्माज्जनमारः प्रवर्तते ॥ तस्मात्प्रसादयेद्यत्नादेवदेवं महेश्वरम् ॥ १ ॥ गाणपत्येन विधिना अथर्वशिरसा तथा ॥ यामलेन विधानेन कुर्याद्देवप्रसाधनम् ॥ २ ॥ शिवसूक्तमुपासूक्त जपेच्च शतरुद्रियम् ॥ बल्योपहारान् विविधांश्चत्वरेषु निवेदयेत् ॥ ३ ॥ आवाह्य च गणैस्सार्द्धं रुद्रं रात्रावहस्सु च ॥ ब्राह्मणान्भक्ष्यभोज्यैश्च दक्षिणाभिश्च तोषयेत् ॥ ४ ॥ प्रमादिते ततो रुद्रे जनमारो निवर्त्तते ॥ आत्मरक्षां स्वयं कृत्वा ततः शांतिं प्रयोजयेत् ॥५॥ " आत्मरक्षा कवचादिना कर्त्तव्या। ( नृसिंहपुराणे ) "अनावृष्टिमहामारीज्वररोगभये तथा ॥ नरसिंह समाराध्य ब्राह्मणैर्वेदपारगैः ॥१॥ कारयेल्लक्षहोमं तु ग्रामे यश्च नराधिपः" इति ( नृसिंहमन्त्रो विष्णुप्रकरणे द्रष्टव्यः )। ( सुश्रुते ) "स्थानत्यागाज्जपाद्धोमान्महामारी प्रशाम्यति ॥" इति। ( जपान्महामृत्युञ्जयनृसिंहशतचण्डीरुद्रविधानादिभिर्होमान्मृत्युञ्जयदुर्गाभैरवादिमंत्रैः पायसतिलाज्यमधुत्रयहोमादित्यर्थः ) अथ अनावृष्टिशमनविधानम्। तत्र तावद्वरुणमंत्रपुरश्चरणम् ( शारदातिलके ) मंत्रो यथा-" ॐ ध्रुवासुत्वासक्षितिषुक्षियंतो व्यस्मत्पावशंवरुणोमुमोचत्। अवोवन्वानाआदितेरुपस्थाद्यूयंपातस्वस्तिभिःसदानः ॥ द्विचत्वारिंशद्वर्णात्मक ऋग्वेदोक्तो मंत्रः। अस्य वरुणमंत्रस्य वसिष्ठ ऋषिः। त्रिष्टुप् छन्दः। वरुणो देवता। अनावृष्टिशमनार्थे जपे विनियोगः। ॐ वसिष्ठऋषये नमः शिरसि ॥ १ ॥ ॐ त्रिष्टुप्छन्दसे नमः मुखे ॥ २ ॥ ॐ वरुणदेवतायै नमः हृदये ॥ ३ ॥ इति ऋष्यादिन्यासः ॥ अथ षडंगन्यासः ॥ ध्रुवात्वासक्षितिषु हृदयाय नमः ॥ १ ॥ ॐ क्षियंतोव्यस्मत्पाशं शिरसे स्वाहा ॥ २ ॥ ॐ वरुणो मुमोचत शिखायै

वषट् ॥ ३ ॥ ॐ अवोवन्वाना अदिते कवचाय हुं ॥ ४ ॥ ॐ रुपस्थायूयंपात नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ स्वस्तिभिः सदान इत्यस्त्राय फट् ॥ ६ ॥ इति हृदयादिन्यासः । अथ मंत्रवर्णन्यासः । ॐ धुं नमः दक्षिणपादांगुल्यग्रे ॥ १ ॥ ॐ वां नमः दक्षिण पादांगुलिमूले ॥ २ ॥ ॐ सुं नमः दक्षिगुल्फे ॥ ३ ॥ ॐ त्वां नमः दक्षिणजानुनि ॥ ४ ॥ ॐ सं नमः दक्षपादमूले ॥ ५ ॥ ॐ क्षिं नमः वामपादांगुल्यग्रे ॥ ६ ॥ ॐ तिं नमः वामपादांगुलिमूले ॥ ७ ॥ ॐ षुं नमः वामगुल्फे ॥ ८ ॥ ॐ क्षिं नमः वामजानुनि ॥ ९ ॥ ॐ यं नमः वामपादमूले ॥ १० ॥ ॐ तों नमः गुदे ॥ ११ ॥ ॐ व्यं नमः लिंगे ॥ १२ ॥ ॐ स्मं नमः नाभौ ॥ १३ ॥ ॐ त्यां नमः कुक्षौ ॥ १४ ॥ ॐ शं नमः पृष्ठे ॥ १५ ॥ ॐ वं नमः हृदये ॥ १६ ॥ ॐ रुं नमः दक्षिण स्तने ॥ १७ ॥ ॐ णों नमः वामस्तने ॥ १८ ॥ ॐ मुं नमः गले ॥ १९ ॥ ॐ मों नमः दक्षिणहस्तांगुल्यग्रे ॥ २० ॥ ॐ चं नमः दक्षिणहस्तांगुलिमूले ॥ २१ ॥ ॐ अं नमः दक्षिणमणिबन्धे ॥ २२ ॥ ॐ वों नमः दक्षिणकूर्परे ॥ २३ ॥ ॐ वं नमः दक्षिणबाहुमूले ॥ २४ ॥ ॐ न्वां नमः वामहस्तांगुल्यग्रे ॥ २५ ॥ ॐ नां नमः वामहस्तांगुलिमूले ॥ २६ ॥ ॐ अं नमः वाममणिबंधे ॥ २७ ॥ ॐ दिं नमः वामकूर्परे ॥ २८ ॥ ॐ तें नमः वामबाहुमूले ॥ २९ ॥ ॐ रुं नमः वक्रे ॥ ३० ॥ ॐ पं नमः दक्षकपोले ॥ ३१ ॥ ॐ स्थां नमः वामकपोले ॥ ३२ ॥ ॐ यूं नमः दक्षिणनासिकायाम् ॥ ३३ ॥ ॐ यं नमः वामनासिकायाम ॥ ३४ ॥ ॐ पां नमः दक्षिणनेत्रे ॥ ३५ ॥ ॐ तं नमः वामनेत्रे ॥ ३६ ॥ ॐ स्वं नमः दक्षिणकर्णे ॥ ३७॥ ॐ स्तिं नमः वामकर्णे ॥ ३८॥ ॐ भिं नमः भ्रूमध्ये ॥ ३९ ॥ ॐ सं नमः मस्तके ॥ ४० ॥ ॐ दां नमः शिरसि ॥ ४१ ॥ ॐ नं नमः सर्वाङ्गे ॥ ४२ ॥ इति मंत्रवर्णन्यासः । एवं न्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् ॥ "चंद्रप्रभं पंकजसन्निषण्णं पाशां कुशाभीतिवरं दधानम् ॥ मुक्ताविभूषांचितसर्वगात्रं ध्यायेत्प्रसन्नं वरुणं विभूत्यै ॥ १ ॥" इति ध्यात्वा मानसोपचारैः संपूज्य । धर्मादिपरतत्त्वांतपीठदेवताः पूर्ववत्संपूज्य । मध्ये । मूलेन मूर्तिं प्रकल्प्य । आवाहनादिपुष्पांतैरुपचारैर्भगवन्तं वरुणं संपूज्य । आवरणपूजां कुर्यात् ॥ तद्यथा-(षट्कोणे) प्राचीक्रमेण आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च । ॐ ध्रुवासुत्वासक्षितिषु हृदयाय नमः ॥ १ ॥ ॐ क्षियन्तोऽव्यस्मत्याशं शिरसे स्वाहा ॥ २ ॥ ॐ वरुणो मुमोचत् शिखायै वषट् ॥ ३ ॥ ॐ अवोवन्वानाअदिते कवचाय हुम् ॥ ४ ॥ ॐ रुपस्थायूयम्पात नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ स्वस्तिभिः सदान इत्यस्त्राय फट् ॥ ६ ॥ इति षडंगानि पूजयेत् ॥ १ ॥ ततोऽष्टदलेषु प्राचीक्रमेण । ॐ शेषाय नमः ॥१॥ ॐ वासुकये नमः ॥२॥ ॐ तक्षकाय नमः ॥३॥ ॐ कर्कोटकाय नमः ॥४॥ ॐ पद्माय नमः ॥ ५ ॥ ॐ महापद्माय नमः ॥६॥ ॐ शंखपालाय नमः ॥ ७ ॥ ॐ कुलिकाय नमः ॥८॥ इति पूजयेत् ॥ २ ॥ तस्माद्बाह्ये चतुरस्त्रे भूपुरे पूर्वादिदशदिक्षु । ॐ लं इन्द्राय नमः ॥ १ ॥ ॐ रं अग्नये नमः ॥ २ ॥

ॐ मं यमाय नमः ॥ ३ ॥ ॐ क्षं निर्ऋतये नमः ॥ ४ ॥ ॐ वं वरुणाय नमः ॥ ५ ॥ ॐ यं वायवे नमः ॥ ६ ॥ ॐ सं सोमाय नमः ॥ ७ ॥ ॐ हं ईशानाय नमः ॥ ८ ॥ ईशानपूर्वयोर्मध्ये । ॐ आं ब्रह्मणे नमः ॥ ९ ॥ निर्ऋतिपश्चिमयोर्मध्ये । ॐ अं अनंताय नमः ॥ १० ॥ इति पूजयेत् ॥ ३ ॥ तद्बहिस्तत्तत्समीपे । ॐ वज्राय नमः ॥ १ ॥ ॐ शक्तये नमः ॥ २ ॥ ॐ दंडाय नमः ॥ ३ ॥ ॐ खड्गाय नमः ॥ ४ ॥ ॐ पाशाय नमः ॥ ५ ॥ ॐ अङ्कुशाय नमः ॥६॥ ॐ गदायै नमः ॥७॥ ॐ त्रिशूलाय नमः ॥ ८ ॥ ॐ पद्माय नमः ॥ ९ ॥ ॐ चक्राय नमः ॥ १० ॥ इत्यायुधानि पूजयेत् ॥ ४ ॥ एवमावरणपूजां कृत्वा । धूपदीप नैवेद्यतांबूलदक्षिणानीराजनप्रदक्षिणानमस्कारैः पूजां समाप्य । यथाविधि वाग्यतो जपं कुर्य्यात् ॥ अस्य पुरश्चरणं लक्षजपः । जपान्ते वृष्टिकामनया वेतसोत्थाभिः क्षीराक्ताभिः समिद्भिः पायसान्नेन सर्पिः सिक्तेन च दशांशहोमं कृत्वा तद्दशांशेन तर्पणं तद्दशांशेन मार्ज्जनं तद्दशांशतः यथाशक्ति वा पायसान्नेन ब्राह्मणभोजनं च कार्यम् ( शारदातिलके ) 'लक्षमेकं जपेन्मंत्रं पायसेन दशांशतः ॥ सर्पिः सिक्तेन जुहुयान्मंत्री मंत्रस्य सिद्धये ॥ १ ॥ ऋणमुक्त्यै जपेन्मंत्रं प्रत्यहं साष्टकं शतम् ॥ जपेनानेन लभते महती मव्ययां श्रियम् ॥२॥ शितेक्षुशकलैर्मंत्री जुहुयाद्घृतसंप्लुतैः ॥ चतुर्दिनं दशशतमृणमुक्त्यै महाश्रियै ॥३॥ समिद्भिर्वेतसोत्थाभिःक्षीराक्ताभिर्दिनत्रयम् ॥ जुहुयाद्वृष्टिसंसिद्धयै मंत्रविद्विजितेंद्रियः ॥ ४ ॥ अनेन विधिना मन्त्री सूर्ये शतभिषं गते । चतुःशतं घृतयुतं पायसं जुहुयाद्वशी ॥ ५ ॥ ऋणनाशाय संपत्यै वश्यारोग्याभिवृद्धये ॥ भृगुवारे कृतो होमः पायसेन च सर्पिषा ॥६॥ महती संपद कुर्यान्नाशयेत्सकलापदः ॥ शालिभिर्घृतसंसिक्तैः सरिदंतरितः सुधीः ॥ ७ ॥ त्र्यहं चतुःशतं हुत्वा स्तंभयेत्परसैन्यकम् ॥ सायं प्रत्यङ्मुखो वह्निमाराध्य प्रजपेन्मनुम् ॥ ८ ॥ चतुःशतं विमुच्येत मंत्री सर्वैरुपद्रवैः ॥ मंत्री प्रत्यङ्मुखो भूत्वा तर्पयेद्विमलै र्जलैः ॥ ९ ॥ सर्वोपद्रवनाशाय समस्ताभ्युदयाप्तये ॥ बहुना किमिहोक्तेन मन्त्रेणानेन साधकः ॥ १० ॥ साधयेत्सकलान्कामा न्जपहोमादितत्परः ॥ ''इति वृष्टिप्रदवारुणीऋग्विधानम् ॥ अथ वृष्टिप्रदविधानं द्वितीयम् ॥ ( बृहदृग्विधाने-शौनकः)" अच्छावदेति सूक्तं तु वृष्टिकामः प्रयोजयेत ॥ निराहारः क्लिन्नवासा अचिरेण प्रवर्षति ॥ १॥ हुत्वायुतं वैतसीनां क्षीराक्तानां हुताशने ॥ महद्वर्षमवाप्नोति सूक्तेनाच्छावदेन हि ॥२॥''अनेन सूक्तेन प्रत्यृचं वा दिश उपस्थेया ' इति सायणभाष्ये'॥अथ अच्छावदेति सूक्तं ऋ० अ० ४ अ० ४ वर्ग २७। ॐ अच्छांवदतवसंगीर्भिराभिः स्तुहिपर्जन्यंनमसाविंवास । कनिक्रदद्वृषभोजीरदानूरेतोदधात्योषधीषुगर्भम् ॥ १ ॥ विवृक्षान्हन्त्युतहन्तिरक्षसोविश्वंविभायभुवनंमहावधात् । उतानागाईषतेवृष्ण्यावतोयत्पर्जन्यः स्तनयन्हन्तिदुष्कृतः ॥ २ ॥ रथीवकशयाश्वांअभिक्षिपन्नाविर्दूतान्कृणुतेवर्ष्यां ३ अह । दूरात्सिंहस्यस्तनथाउदीरतेयत्पर्जन्यः कृणुते

वस्यै १ नभः ॥ ३ ॥ प्रवातावान्तिपतयन्तिविद्युतउदोषधीर्जिहतेपिन्वतेस्वः । इराविश्वस्मैभुवनायजायतेयत्पर्जन्यः पृथिवीरेतसावति ॥४॥ यस्यव्रतेपृथिवीनन्नमीतियस्यमीतियस्यव्रतेशफवज्भुरीति।यस्यव्रतओषधीर्विश्वरूपाः सनः पर्जन्यमहिशर्मयच्छ ॥५॥ अभिक्रंदस्तनयगर्भमाधाउदन्वता परिदीयारथेनदृतिंसुकर्षविषितन्यञ्चसमाभवन्तूद्वतोनिपादाः ॥ ७ ॥ महान्तंकोशमुदचानिषिञ्चस्यन्दन्तांकुल्याविषिताःपुरस्तात् ॥ घृतेनद्यावापृथिवीव्युन्धिसुप्रपाणंभवत्वघ्न्याभ्यः ॥ ८ ॥ यत्पर्जन्यकनिक्रदत्स्तनयन्हंसिदुष्कृतः प्रतीदंविश्वंमोदतेयत्किंचपृथिव्यामधि ॥ ९ ॥ अवर्षीर्वर्षमुदुषूगृभायाकर्धन्वान्यत्येतवाउ । अजीजनओषधीर्भोजनायकमुतप्रजाभ्योविमोदनीषाम् ॥१०॥" इति दशर्चं सूक्तम् ॥ अनेन सूक्तेन प्रत्यृचं वा अथुतवेतसीनां क्षीराक्तानां होमाच्छीघ्रं वर्षति । होमान्ते । इदं पर्जन्याय इति त्यागं कुर्यादितिपर्जन्यविधानम् ॥ अथ तिस्रो वाच इत्यादिसूक्तद्वयविधानम् ॥ ऋग्विधाने—शौनकः "आस्यदघ्नं विगाह्यापः प्राङ्मुखः प्रयतः शुचिः सूक्ताभ्यां तिस्र आदिभ्यामुपतिष्ठेत भास्करम् ॥ अनश्नतैतज्जप्तव्यं वृष्टिकामेन यत्नतः ॥ पंचरात्रेऽप्यतिक्रांते महतीं वृष्टिमाप्नुयात् ॥ २ ॥" इति ॐ तिस्रो वाच इत्यादिसूक्तस्य अग्निपुत्रः कुमार ऋषिः वसिष्ठो वा । त्रिष्टुप्छंदः । पर्जन्यो देवता । वृष्टिप्राप्त्यर्थे विनियोगः ॥ "ॐ तिस्रो वाचः प्रवदज्योतिरग्राया एतद्दुह्रेमधुदोघमूधः ॥ सवत्सं कृण्वन् गर्भमोषधीनां सद्योजातो वृषभो रोरवीति ॥ १ ॥ योवर्धनओषधीनांयोअपांयोविश्वस्यजगतोदेवईशे ॥ सत्रिधातुशरणं शर्मयंसत्त्रिवर्तुज्योतिः स्वभिष्ट्य १ स्मे ॥ २ ॥ स्तरीरुत्वद्भवतिसूतउत्वद्यथावशंतन्वंचक्रएषः । पितुःपयः प्रतिगृभ्णातिमातातेन पितावर्धतेतेनपुत्रः ॥ ३ ॥ यस्मिन्विश्वानिभुवनानितस्थुस्तिस्रोद्यावस्त्रेधासस्रुरापः ॥ त्रयः कोशासउपसेचनासोमध्वश्चोतन्त्यभितोविरप्शम् ॥ ४ ॥ इदं वचः पर्जन्यायस्वराजेहृदोअस्त्वन्तरंतज्जुजोषत् ॥ मयोभुवोवृष्टयः सन्त्वस्मेसुपिप्पलाओषधीर्देवगोपाः ॥ ५ ॥ पुरेतोधावृषभःशश्वतीनांतस्मिन्नात्माजगतस्तस्थुषश्च । तन्मऋतं पातु शतशारदाययूयंपातस्वस्तिभिः सदानः ॥ ६ ॥" इति प्रथमसूक्तम् ॥ "ॐ पर्जन्यायेति सूक्तस्य अग्निपुत्रः कुमार ऋषिः वसिष्ठो वा । गायत्री छन्दः । पर्जन्यो देवता । वृष्टिप्राप्त्यर्थे जपे विनियोगः । ॐ पर्जन्यायप्रगायतदिवस्पुत्रायमीढुषे । सनोयवसमिच्छतु ॥ १ ॥ योगर्भमोषधीनांगवांकृणोत्यर्वताम् ॥ पर्जन्यः पुरुषीणाम् ॥ २ ॥ तस्माइदास्येहविर्जुहोतामधुमत्तमम् ॥ इलांनः संयतं करत् ॥ ३ ॥" इति वृष्टिप्राप्तिकरविधानम् ॥अथ सर्वरोगनाशकधर्मराजमन्त्रविधानम् ॥ ( मन्त्रमहोदधौ ) मंत्रो यथा । "ॐ क्रौंह्रींआंवैंवैवस्वताय धर्मराजाय भक्तानुग्रहकृते नमः" इति चतुर्विंशतिवर्णो मन्त्रः । नास्य ऋष्यादिपूजाविधानं सिद्धमंत्रत्वादिति । ॐक्रौं ह्रीं हृदयाय नमः॥१॥ॐआं वैं शिरसे स्वाहा ॥२॥

ॐ वैवस्वताय वषट् ॥३॥ ॐ धर्मराजाय कवचाय हुं ॥४॥ ॐ भक्तानुग्रहकृते नेत्रत्रयाय वौषट् ॥५॥ ॐ नमः अस्त्राय फट् ॥६॥ इति षडंगन्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् " पाथःसंयुतमेघसन्निभतनुः प्रद्योतनस्यात्मजो नृणां पुण्यकृतां शुभावहवपुः पापीयसां दुःखकृत् ॥ श्रीमद्दक्षिणदिक्पतिर्महिषगोभूषाभरालंकृतो ध्येयः संयमनीपतिः पितृगणस्वामी यमो दंडभृत् ॥ १ ॥ " अभ्यस्तोयं सदा मंत्रः सकलापद्विनाशनः ॥ नरकप्राप्तिरोद्धा स्याद्रिपुभीतिनिवर्तकः ॥ २ ॥ इति धर्मराजमंत्रानुष्ठानम् ॥ अथ चित्रगुप्तमन्त्रानुष्ठानम् । ( तत्रैव ) मंत्रो यथा—ॐ नमोविचित्रायधर्मलेखकाययमवाहिकाधिकारिणेम्ल्व्र्यूंजन्मसंपत्प्रलयंकथय कथयस्वाहा"इत्यष्टात्रिंशदक्षरो मन्त्रः॥( अस्य ऋष्यादिन्यासपूजाऽभावः सिद्धमन्त्रत्वात् ) ॐ नमो विचित्राय हृदयाय नमः॥१॥ ॥ १ ॥ ॐ धर्मलेखकाय शिरसे स्वाहा ॥ २ ॥ ॐ यमवाहिकाधिकारिणे शिखायै वषट् ॥ ३ ॥ ॐ म्ल्व्र्यूंजन्मसपत्प्रलयंकवचाय हुं ॥ ४ ॥ ॐ कथयकथय नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐस्वाहा इत्यस्त्राय फट् ॥ ६ ॥ इति षडंगन्यासं कृत्वा ध्यायेत् । किरीटोज्ज्वलं वस्त्रभूषाभिरामं विचित्रासनासीनमिन्दुप्रभास्यम् ॥ नृणां पापपुण्यानि पत्रे लिखन्तं भजे चित्रगुप्तं सखायं यमस्य ॥ १ ॥ सिद्धमन्त्रमिमं पुंसां जपतां चित्रगुप्तकः ॥ प्रसन्नो गणयेत्पुण्यं नैव पापं कदाचन ॥ २ ॥ इति चित्रगुप्तमन्त्रविधानम् ॥ अथ ग्रंथालंकारः ॥ देशे मनोज्ञे हि मरौ बभूव वीकोजिनामा नृपतिः पुरा हि ॥ तस्यैव नाम्ना खलु राजधानी लोके विकानेर इति प्रथांगता ॥ १ ॥ तदन्तरे शक्रपुरोपमे पुरे श्रीरत्नदुर्गे सुजनैः सुसेविते ॥ आसीद्वसिष्ठान्वयगौडविप्रो माध्यंदिनीयो बुधजीवराजः॥ ॥ २ ॥ तस्यात्मजा बाणमितास्तु सद्गुणाः सुवेदविद्याऽध्ययने च नैपुणाः ॥ आयातयातद्विजशुद्धप्राङ्गणा वीर्येण संताडितवैरि दुर्गणाः ॥ ३ ॥ एतेषु मध्ये खलु रामकृष्णो ज्ञानेन स्वल्पीकृतसर्वतृष्णः ॥ स्वबुद्धितः खण्डितवैरिप्रश्नः सुभक्तिसंतर्पितदेव कृष्णः ॥ ४ ॥ तस्याऽभवन्नाममिताः सुपुत्राः स्वधर्म्मयायिस्वकलत्रमित्राः ॥ गृहेषु सलेखितरम्यचित्राः श्रीकान्तपूजानिरताः पवित्राः ॥ ५ ॥ इमानि नामानि भवन्ति तेषां चतुर्भुजाख्यो विबुधोऽयमाद्य ॥ कस्तूरिचन्द्राभिधसज्जनोऽपरीऽपरोगुणैर्मंडितजेष्ठरामः ॥ ६ ॥ स जेष्ठरामः खलुपंडिताग्र्यः षट्शास्त्रवेत्ता द्विजकर्म्मतत्परः ॥ त्यागी मनस्वी द्विजदेवभक्तो हुतावशिष्टान्नसदानुरक्तः ॥ ७ ॥ तत्रापि मध्यो निजवंशपालकः कस्तूरिचन्द्राख्यमहत्सुशीलः ॥ तस्मात्सुपुत्रावनवद्यवंद्यविद्यान्वितौ द्वौ नितरामभूताम् ॥ ८ ॥ चतुर्थिलालाख्यगुरूमुखाख्यौ सुज्ञौ गुणाढ्यौ निजधर्मतत्परौ ॥ ज्येष्ठस्तयोर्वै खलु पण्डिताग्रणीः षट्शास्त्रवेत्ता शिवपूजने रतः ॥९॥ षट्कर्माभिरतो नित्यं देवतातिथिपूजकः ॥ हुतशेषं तु भुञ्जानश्चतुर्थीलालपंडितः ॥ १० ॥ मातामहो यस्य बभूव पंडितः श्रीरामनामा प्रथितः स्वदेशे ॥ दाता वदान्यो धनिभिश्च वंद्यो भिषक्सुवृत्त्या परिपूर्णकोशः ॥ ११ ॥ एतादृशे शुद्धकुले विशाले चतुर्थिलालो हि बभूव चन्द्रमाः ॥ परोपकारी निजवंशकेतुः शिष्टानुरागी च निबन्धकर्त्ता ॥ १२ ॥

यस्य माता हरीवाई पिता कस्तूरिचन्द्रकः ॥ यथाऽनसूया साध्वी सा यथाऽत्रिस्स तथा खलु ॥ १३ ॥ सूत्रं कात्यायनं यस्य
शाखा माध्यंदिनीयिका ॥ श्रीवसिष्ठकुलं यस्य स चतुर्थ्याख्यपंडितः ॥ १४ ॥ तेनायं रचितो ग्रन्थो गौडानां प्रीतिदः सदा ॥
अनेन प्रीयतां शम्भुर्भवान्या सह सर्वदा ॥ १५ ॥ व्योमशास्त्राङ्कचन्द्रेब्दे १९६० विक्रमादित्यसंज्ञके ॥ फाल्गुने शुक्लपञ्चम्यां
ग्रन्थः पूर्णोऽभवच्छिवः ॥ १६ ॥ इति श्रीमन्महाराजाधिराजक्षत्रियकुलार्कमरुदेशाधिपतिराजेद्रश्रीगङ्गासिंहवर्मणो बीकानेर
राज्यान्तर्गत–श्रीरत्नगढनगरनिवासिना श्रीवसिष्ठगोत्रोद्भवगोडवंशावतंसपंडितश्रीरामकृष्णामरचन्द्रपौत्रेण श्रीकस्तूरिचन्द्रात्मजेन
श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तशुक्लयजुर्वेदीयमाध्यंदिनवाजसनेयिना पंडितश्रीचतुर्थीलालशर्मणा विरचिते अनुष्ठानप्रकाशे
अद्भुते महानिबन्धे पुरश्चरणकाण्डे रोगशमनविधानप्रकरणं षष्ठम् ॥

( ॥ समाप्तोऽयं महानिबंधः षष्ठः ॥



